पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतम्

# उपनिषद्भाष्यम् - २

(टीका-टिप्पणी-खण्डार्थविभूषितम्)

(तैत्तिरीय-मुण्डक-माण्डूक्योपनिषदः)

सम्पादकौ

डा. ए.वि. नागसम्पिगे        विद्वान् पि.वि. उपाध्यायः

पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतम्

# उपनिषद्भाष्यम् - २

(टीका-टिप्पणी-खण्डार्थविभूषितम्)

(तैत्तिरीय-मुण्डक-माण्डूक्योपनिषदः)

सम्पादकौ

डा. ए.वि. नागसम्पिगे विद्वान् पि.वि. उपाध्यायः

पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु




प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८



२०१०

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – ७९

# श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतम् उपनिषद्भाष्यम् - २

(टीका-टिप्पणी-खण्डार्थविभूषितम्)

**(तैत्तिरीय-मुण्डक-माण्डूक्योपनिषदः)**

ISBN : 978-81-910246-7-8

सम्पादकौ

डा. ए.वि. नागसम्पिगे

विद्वान् पि.वि. उपाध्यायः

प्रकाशनम् -

**पूर्णप्रज्ञसंशोधनमन्दिरम्**

पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन् रोड्, बेङ्गलूरु - २८

| | |
|---|---|
| पुटानि | : 62 + ६८० |
| प्रथममुद्रणम् | : २०१० |
| मुद्रितपुस्तकसङ्ख्या | : १००० |
| मूल्यम् | : २४० रूप्यकाणि |
| मुद्रणालयः | : लावण्य मुद्रणम्, बेङ्गलूरु |

**Poornaprajna Samshodhana Mandiram**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

**Śrīmadānandatīrthabhagavatpādācārya-praṇītam**

# UPANIṢADBHĀṢYAM

**Taittirīyopaniṣad, Mundakopaniṣad and Māṇḍūkyopaniṣad**

**(with commentaries)**

*Edited by*

**Dr. A.V. Nagasampige Vidwan P.V. Upadhyaya**
Poornaprajna Samshodhana Mandiram, Bangalore

*Published by*

**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

2010

Poornaprajna Samshodhana Mandira Granthamālā - 79

# Śrīmadānandatīrthabhagavatpādācāryapraṇītam-
# UPANIṢADBHĀṢYAM
## Taittirīyopaniṣad, Mundakopaniṣad and Māndūkyopaniṣad
(with commentaries)

ISBN : 978-81-910246-7-8

*Edited by* **Dr. A.V. Nagasampige**
**Vidwan P.V. Upadhyaya**

Published by **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road, Bangalore-28

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

First Edition : 2010

Copies : 1000

**Price : Rs. 240/-**

Pages : 62 +680

*Printed by :*
**LAVANYA MUDRANA,** Bangalore-560 050
Ph. 26610563

# अनुग्रहसन्देशः

भगवतः सर्वेश्वरस्य विष्णोः यथावत्स्वरूपं निरूपयन्त्य उपनिषदः सर्वैर्दार्शनिकैः परमादरेणाध्येष्यन्ते । अत्रेदानीं तैत्तिरीय-मुण्डक-माण्डूक्योपनिषदो भाष्य-टिप्पणी-खण्डार्थसमलङ्कृता विदुषां विद्यार्थिनां चाध्ययनसौकर्यार्थं संशोध्य प्रकाशिता इति नूनं सन्तुष्टा वयम् । पूर्णप्रज्ञ-संशोधनमन्दिरमिदम् ऐतरेय-छान्दोग्य-बृहदारण्यक-ईश-केन-कठ-प्रश्नोपनिषदां भाष्य-टिप्पणीः संशोध्य समर्पयदिति विदितचरमेव । अधुना अवशिष्टास्तिस्र उपनिषदो भाष्य-टिप्पणीसमलङ्कृताः प्रकाशिताः ।

तैत्तिरीयोपनिषदि, प्रपञ्चे सर्वत्र पञ्चरूपात्मना स्थितस्य भगवतो विष्णोर्माहात्म्यमुपवर्णितम् । अयं च प्रमेयविशेषो माध्वभाष्ये स्फुटमुपपादितः । अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयशब्दाः न केवलं कोशवाचका अपि तु नारायणादिपञ्चरूपप्रतिपादका (ब्रह्मपराः) इति माध्वभाष्ये सम्यक् प्रतिपादितम् । 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यत्रोपवर्ण्यमानम् आनन्दतारतम्यं न संसारिविषयकम्, अपि तु मुक्तावपि आनन्दतारतम्यमनुवर्तत इति समर्थितम् । श्रोत्रिय-अकामहतपदानि अत्र परिपूर्णतया श्रवणफलं प्राप्तस्य अप्रतिहतसकलकामनानुभवितुर्मुक्तस्यैव स्वरूपं वर्णयन्तीति मध्वाचार्यैर्निरूपितम् ।

आथर्वणोपनिषदि परापरविद्यास्वरूपमुपवर्णितम् । अपरविद्यास्तु ऋगादय उपवर्णिताः । 'यया तदक्षरमधिगम्यते' इत्यक्षराधिगतिसाधनमिह परविद्याशब्देनाभिहितम् । अत्र केचनोपनिषदः परविद्येति व्याचक्षते । साङ्गवेदोपनिषदाम् अपरविद्यात्वेनेह व्याख्यातत्वाद् उपनिषदां परविद्याशब्देन ग्रहणं नोपपद्यते । अपरे तु- उपनिषज्जन्यं ज्ञानं परविद्येति व्याचक्षते ।

अधिगतिसाधनमिह परविद्यात्वेनोक्तमिति उपनिषदध्येतॄणां स्पष्टम् । तस्मान्नात्र उपनिषज्जन्यं ज्ञानं परविद्याशब्देन स्वीकरणीयम् । अपि तु वेदोपनिषदो यदा भगवतो विष्णोर्विज्ञानमुत्पादयन्ति, तदा अक्षराधिगति-साधनत्वेन तासां परविद्यात्वम् । यदोपनिषदः कर्मदेवतास्वरूपप्रतिपादिका भवन्ति तद्म तासामेवापरविद्यात्वम् । यथैकस्यैव कर्मणः सकामनिष्काम-भेदेन द्वैविध्यं तथैव विष्णुप्रतिपादकत्व-तदभावदशाभेदेन एकस्यैव वैदिक-वाङ्मयस्य परत्वमपरत्वं चोपपद्यत इति भगवत्पादाचार्यैः प्रतिपादितम्-

'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥' इति ।

अत्रैवोपनिषदि भगवतः स्वरूपं 'यः सर्वज्ञः स सर्ववित्' इति सर्वज्ञत्वादि-गुणविशिष्टं प्रतिपादितं न विस्मर्तव्यम् । जगतः कारणं भवद् ब्रह्म नोपादानकारणं न वा विवर्तकारणमिति प्रत्यपीपदद् भगवती श्रुतिः-

'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति' इति ।

जीवब्रह्मणोः पारमार्थिक एव भेदो विद्यत इति स्फुटमुपपादितम्- 'द्वा सुपर्णा सयुजा सखाया' इति । एवमनेकेऽपूर्वा विषया अस्यामुपनिषदि उपवर्णिताः साधकैरनुसन्धेयाः ।

माण्डूक्योपनिषदि ओङ्कारस्य स्वरूपं विस्तरेणोपवर्णितम् । विश्व-तैजस-प्राज्ञ-तुरीयरूपाणि भगवतो विष्णोरेव कालभेदेन जीवनियामकानि भवन्तीति स्फुटमुपपादितं माध्वभाष्ये । नेयं भगवता क्रियमाणा सृष्टिः स्वप्नमायासरूपा, न वा भगवान् जगत उपादानकारणम् इत्यादयो विषया अत्र विमृष्टाः । सृष्टिरियं न कालात्, परमाणुभ्यः केवलया प्रकृत्या वा भवति, अपि तु भगवत इच्छामात्रादेव सृष्टिरियं प्रवृत्तेति स्फुटमत्रोपपादि-तम् । भगवत्कृतेयं सृष्टिः केवलं परप्रयोजनायैव इत्यपि समर्थितम्-

‘विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ।।
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिता ।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ।।
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहा ।।’ इति ।

एवमनेकप्रमेयविशेषोपबृंहितास्तिस्र उपनिषदो भाष्य-टिप्पणी-खण्डार्थसमलङ्कृताः संशोध्य प्रकाशिता विदुषां विद्यार्थिनां चोपकारका इति विश्वसिमः । एतेषां ग्रन्थानां संशोधने आदिष्टयोरस्मत्प्रियछात्रयोः ए.वि.नागसम्पिगे-पि.वि.उपाध्याययोरस्मदाराध्यः श्रीकृष्णः विमलां ज्ञानदृष्टिं वितीर्य, इतोऽपि समधिकां शास्त्रसेवां स्वीकरोत्विति सामोदम् आशीर्भिः समभिनन्दामः ।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**
श्रीपेजावर-अधोक्षजमठः, उडुपि

# भूमिका

तैत्तिरीय-मुण्ड-माण्डूक्योपनिषदः श्रीमदानन्दतीर्थभगवत्पादाचार्य-प्रणीतभाष्यालङ्कृता इह विदुषां करकमलयोः समर्प्यन्ते । यत्राप्रतिपत्तिः विप्रतिपत्तिर्वा तत्रैव भगवान् भाष्यकारः व्याख्यास्यतीति चिरन्तन-विद्वदग्रेसरवचनानुरोधेन भगवत्पादीयव्याख्यानस्य विशिष्टाः केचनांशाः सङ्क्षेपेणेह प्रस्तूयन्ते ।

## तैत्तिरीयोपनिषत्

**ऋषिपरम्परा**

अस्या उपनिषदः सूर्यमण्डलगः विष्णुः, चतुर्मुखः, वरुणः, भृगुश्चेति चत्वारः क्रमाद् ऋषयः । तदुक्तमाचार्यपादैः-

'आदित्यसंस्थिताद्विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् ।
तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः ॥
विष्णुमस्तौत् तथा प्राह शन्नोमित्रादिका श्रुतिः ।
यदुवाच हरिस्सूर्यमण्डलस्थः परः पुमान् ॥
ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु ।
शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ॥
भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् ।'

यद्यप्यत्र 'शन्नोमित्रः', 'नमस्ते वायो', 'त्वमेव प्रत्यक्षं ब्रह्म' इत्यादौ मित्रवाय्वादीनां प्रति सुखादिप्रार्थना श्रूयते । विष्णोः ऋषित्वेऽवराणां प्रार्थनं नैवोपपद्यत इतीमां स्वारसिकां शङ्कां सर्वत्र वैदिकवाङ्मये परिदृश्यमानां पराचक्षे भाष्यकारः-

'भृगुवाक्यतया वायुनमस्कारादिकं हरिः ।
प्रोवाच ब्रह्मणे चैवं वचस्सुबहुदर्शिषु ॥'

अयमाशयः- नात्र भगवान् विष्णुः स्वावरान् वायुमित्रादीन् प्रार्थयते। तथापि ब्रह्मविद्यामभ्यसन् भृगुर्विघ्नपरिहाराय 'नमस्ते वायो' इत्यादिरूपेण वायुनमस्कारादिकं प्रतिकल्पं करिष्यतीत्यादिरूपेण भृगुवाक्यानुवादरूपतया विष्णुर्ब्रह्मण उपदिशत इति विज्ञेयम्। उक्तं च छान्दोग्यभाष्ये-

'हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु।
रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः॥
यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु।
तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः।
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा॥'

उपपादितोऽयमर्थः ऐतरेयभाष्येऽपि-

'वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम्।
अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः॥' इति।

**सर्वत्र पञ्चरूपाणि**

अत्र पूर्वोत्तरार्णयोः सन्धौ सन्धाने च विद्यमानानि भगवद्रूपाणि भगवत्पादैरिह निरूपितानि। तथैव 'अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मं च' इति पञ्चसु प्रकरणेषु नारायण-वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपाणि अधिलोकादिप्रतिपादकवर्णजातेषु सन्निहितानीति समग्रस्यापि वाङ्मयस्य भगवत्परत्वमुपवर्णितं भगवत्पादाचार्यैः। एतादृशार्थानुसन्धाने उपनिषदां भगवत्प्रतिपादकत्वं नैव सङ्कटत इति निश्चप्रचम्। तदुक्तमाचार्यपादैः-

'नारायणादिरूपाणि लोकादिषु च पञ्चसु।
अनिरुद्धावसानानि ध्येयानि चतुरात्मना॥

वासुदेवादिकान्येव तानि पूर्वोत्तरार्णयोः ।
संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः ॥
यो वेदैतानि रूपाणि सर्वभोगसमन्वितः ।
प्राप्नोति वैष्णवं स्थानं मुक्तः स्वर्गाभिधं परम् ॥' इति ।

**ऋतं च स्वाध्यायप्रवचने च**

'ऋतं च स्वाध्यायप्रवचने च' इत्यादौ द्वादशनियमानाह भगवती श्रुतिः । तत्र यथार्थविज्ञानम् ऋतमित्युच्यते । तत्पूर्वकं यथार्थवचनं करणं च सत्यमित्युच्यते । तप-दम-शम-अग्न्युपासन-अग्निहोत्र-अतिथिपूजा-समुचितधर्माचरण-पुत्रोत्पत्त्यादिसकलकर्मणां पाठप्रवचनयुक्तत्व एव फलं भवतीति निरूपयन्तीयं श्रुतिः सच्छिष्याणां पाठप्रवचनस्य निरतिशयं महत्त्वं प्रत्यपीपदत् । अत एवोत्तरत्र 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः तद्धि तपः तद्धि तपः' इति पाठप्रवचनस्यैव महत्त्वं साक्षात्कारोपयोगित्वं च समर्थितम् । अत एवोक्तं भगवत्पादाचार्यैः-

'अज्ञस्य श्रवणं श्रेष्ठम् अयुक्तेर्मननं तथा ।
ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ॥
वरं दशगुणं प्रोक्तं व्याख्यैकस्य शतोत्तरा ।
अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा ॥' इति ।

(तं.सा.सं ४.१४१-१४२)

गुरुकुलवासं समाप्य गार्हस्थ्यस्वीकारार्थं जिगमिषूणां विद्यार्थिनां कथं वर्तितव्यमिति श्रुतिरियं शासयति- 'सत्यं वद धर्मं चर' इत्यादिना । ये चात्र नियमाः श्रुतौ निरूपिताः तेषामनुष्ठानं सर्वस्मिन्नपि काले समाजोपयोगीत्यत्र न सन्देहगन्धः ।

## अन्नमयादिप्रकरणे पञ्चरूपाणि अनुसन्धेयानि

उपनिषद आपातार्थपर्यालोचने अन्नमयादिकोशा एवात्र प्रतिपाद्यन्त इति प्रतीयते। तथाप्यत्र ब्रह्मशब्दसामानाधिकरण्यात् ब्रह्मलिङ्गानां श्रवणेन च पञ्चसु प्रकरणेष्वपि पञ्च भगवद्रूपाणि प्रतिपादितानीति श्रीमध्वाचार्याणामाशयः। अत एवोक्तं सूत्रकारेण- 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १.१.१२) इति। यद्यप्यत्र प्रथमप्राप्तान्नमयपरित्यागेन चरमश्रुताऽऽनन्दमयपर्यन्तानुधावने किं निदानमिति भवति सन्देहः। मनुष्योत्तमोपास्येषु सत्-चित्-आनन्द-आत्मेतिरूपचतुर्गुणेषु 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति सूत्रोक्तदिशा सर्वैरानन्दस्याभीप्सितत्वेन सर्वोपास्यत्वज्ञापनाय तत्पर्यान्तानुधावनमिति श्रीमध्वाचार्यैः समाहितम्। अत्र मताचार्याणाम् आशयविशेष अवश्यं विज्ञेय इति तेषां व्याख्यानप्रणाली सङ्क्षेपेणेह निरूप्यते। तैत्तिरीयगतमेतमेव विषयवाक्यजातमुपजीव्य 'आनन्दमयाधिकरणम्' प्रवृत्तं ब्रह्मसूत्रेषु। अतोऽत्र वेदार्थः (उपनिषदर्थः) आनन्दमयाधिकरणार्थश्च विमृश्यते।

## शङ्कराचार्याणामभिप्रायः

अन्नमयादयः पञ्चापि कोशा एव। आनन्दमयपुच्छत्वेन श्रुतं यद् ब्रह्म तदेव स्वप्राधान्येन जिज्ञास्यम्। तत्रैव 'असन्नेव स भवति असद् ब्रह्मेति वेद चेद् अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इति ब्रह्मशब्दाभ्यासः। न चासावानन्दमयविषयत्वेनाऽकर्षणीयः। न च 'ब्रह्म पुच्छं प्रतिष्ठा' इति आनन्दमयपुच्छत्वेन ब्रह्म प्रतिपाद्यते। अतोऽत्र आनन्दमयावयवभूतस्य ब्रह्मणः स्वप्राधान्येन जिज्ञासा कथम् इति वाच्यम्। नात्र पुच्छशब्दः लाङ्गूलपरोऽवयवपरो वा किन्तु आधारमात्रवाचकः।

प्रतिष्ठापदं च अधिष्ठानवाचकः । एवं च अन्नमयादय आनन्दमयान्ताः सर्वेऽपि कोशाः विकारार्थकमयट्प्रत्ययघटितशब्दसद्भावात् । एवं च निर्विशेषं ब्रह्मैव शाखाचन्द्रमसन्यायेन 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्राधान्येन निरूप्यते । एतच्च ब्रह्म सोपादानकस्य विश्वस्य मुख्यमधिष्ठानम् । अत एव प्रतिष्ठेत्युच्यते । पूर्वोक्तपृथिव्यादिषु पुच्छशब्देन यथाऽऽधारः विवक्षितः, तथैवेहापि सर्वाधारभूते ब्रह्मणि आधारलक्षकः पुच्छशब्दः । किञ्चानन्दमयस्य ब्रह्मत्ववादिनाम्-

'प्रायपाठपरित्यागः मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्, उत्तरे पक्षे प्रायपाठस्य बाधनम् ।।' (शां.भा. भामती)

इत्युक्तरीत्या मयट् विकार एव मुख्यः, ब्रह्मशब्दः परब्रह्मणि मुख्यः, अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थ एव मुख्यः, न मयडर्थे । एतत् त्रितयलङ्घनात् मयट्प्रत्ययस्य विकारार्थकत्वरूपप्रायपाठपरित्यागोऽप्यपरो दोषः । अद्वैतसिद्धान्ते तु पुच्छशब्दस्यावयवप्रायपाठस्यैव बाधनमिति अस्ति लाघवम् । शाखाचन्द्रमसन्यायेन पञ्चानामप्यमीषां ब्रह्मज्ञानद्वारतयैवोपदिष्टत्वात् न ब्रह्मत्वम् ।

एवं तर्हि कथम् 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १.१.१२) इति सूत्रकारो आनन्दमयस्य विष्णुत्वमसाधयदिति चेद्, उच्यते । सूत्रकारोऽप्यत्र मुग्ध एव । 'श्रुतिसूत्रयोर्विरोधे तु गुणे त्वन्याय्यकल्पना' इति न्यायेन सूत्रस्यैव गौणार्थत्वं वक्तव्यम् । न वेदस्य । ततश्चान्नमयाद्यारभ्य आनन्दमयान्ता सर्वेऽपि कोशा एव । आनन्दमयावयवतया श्रुतमेव ब्रह्म ब्रह्मशब्दाभ्यासविशिष्टमिति स्वप्राधान्येन जिज्ञास्यम् । मयटां सर्वत्रापि विकारार्थतैव इति ।

**भास्कराभिप्रायः**

आनन्दमयः किं जीवोऽथ ब्रह्मेति पूर्वपक्षिते ब्रह्मैवाऽनन्दमयः। यतोऽत्र 'यदेष आकाश आनन्दो न स्यात्' 'आनन्दं ब्रह्मेति व्यजानात्' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादौ आनन्दमये ब्रह्मशब्दाभ्यासाद् आनन्दमय एव ब्रह्म नान्नमयादयः। अन्नमयादयश्चत्वारः पुनः कोशा एव। तेषां ब्रह्मज्ञानद्वारतयोपदिष्टत्वात्। अन्नमयादीनामपि ब्रह्मत्वे प्रथमातिक्रमणे मानाभावाद् 'अन्नमयोऽभ्यासात्' इत्येव वक्तव्यं स्यात्। तस्माद् अन्नमयादयश्चत्वारः कोशा एव। आनन्दमये मयट् प्राचुर्यार्थः। अन्नमये विकारार्थः। प्राणादिषु त्रिषु विकारित्वासम्भवात् प्राण एव प्राणमय इत्येवंक्रमेण स्वार्थे मयट् इति।

**रामानुजाचार्याशयः**

'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति शारीरत्वेन जीव एवाऽनन्दमय इति प्राप्ते निरतिशयानन्दविशिष्ट एव ब्रह्मशब्दाभ्यासात् नानन्दमयो जीवः किन्तु ब्रह्मैवेति श्रीभाष्ये व्यवस्थापितम्। तन्मते मयटामनेकेऽर्थाः भवन्ति-

१. आनन्दमयेत्यत्र मयट् प्राचुर्यार्थः।

२. विज्ञानमयो जीवः। तत्र मयट् सम्बन्धार्थः। वैयर्थ्यादप्यमुख्यार्थस्य ज्यायस्त्वात्।

३. अन्नमयादित्रिकाणां कोशत्वेऽपि अन्नमये मयट् विकारार्थः।

४. प्राणमनोमयेषु स्वार्थिकः।

**मध्वाचार्याणामभिप्रायः**

श्रीमदानन्दतीर्थभगवत्पादाचार्याः तैत्तिरीयभाष्ये, ब्रह्मसूत्रभाष्ये,

अनुव्याख्याने च पञ्चस्वपि प्रकरणेषु अन्नमयादिशब्दैः नारायण-वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपाणि प्रतिपाद्यन्त इति व्याख्यास्यन्ति ।

यद्यप्यस्मिन् व्याख्याने 'ओषधीभ्योऽन्नम्' इत्यत्रान्नशब्दः प्रसिद्धान्नपर इत्यङ्गीकृत्य 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र तु अन्नशब्दः भगवत्परः व्याख्यायते । एकस्मिन्नेव प्रकरणे श्रुतेन एकेन शब्देन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगात् व्याख्यानमिदमनुपपन्नमिव भाति । तथापि 'ओषधीभ्योऽन्नम्' इत्यत्र प्रसिद्धान्नपरः 'स वा एषः' इत्यत्रान्नशब्दः रसशब्देन विशेषितत्वात् भगवत्परः भवितुमर्हति । दृष्टो हि एकस्मिन्नेव प्रकरणे श्रुतानां पदानां विशेषणान्तरसमभिव्याहारवशेन अर्थभेदः । 'अन्नस्यान्नम्' इत्यत्र अन्नस्यान्नत्वप्रदं भगवद्रूपमित्यर्थः । 'मध्यमः प्राणः' इत्यत्र प्राणशब्दः मध्यमविशेषणविशिष्टः, अवान्तरेश्वरभूतमुख्यप्राण-प्रतिपादकः । 'प्राणः स्थूणा' इत्यत्र प्राणशब्दः सर्वस्यापि जगतः आश्रयभूतं हरिं प्रतिपादयति । तद्वदिहापि 'अन्नरसमयः' इत्यत्र हरिरभिधेयः भवितुमर्हति ।

तेषामाशयोऽत्र सङ्क्षेपेण सङ्गृह्यते-

१. यदि पुच्छब्रह्मणि ब्रह्मशब्दाभ्यासात् तस्य ब्रह्मत्वमुररीक्रियते तर्हि ब्रह्मशब्दाभ्यासस्य अन्नमयादिपञ्चकेऽपि सत्त्वात् तेषामपि ब्रह्मत्वमङ्गीकार्यमेव ।

२. ब्रह्मप्रश्नोत्तरप्रकरणत्वात् कोशा अत्र प्रतिपादिता इति त्वसङ्गतम् ।

३. 'तरति शोकमात्मवित्' इत्यत्र भगवती श्रुतिः आत्मज्ञानस्य शोकतरणोपायत्वं ब्रवीति । आत्मज्ञानभिन्नस्य कोशज्ञानस्यानात्म-ज्ञानत्वान्मुक्तिहेतुत्वाभावाद् अनुपदेश्यत्वम् ।

४. न च 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र विकारार्थककोशपरत्वस्यैवोचितत्वम् । अन्नरसमय इत्यस्य अन्नमयः साररूपश्चेत्यर्थाङ्गीकारेऽनुपपत्त्यभावात् ।

५. न चात्रान्नमयशब्दः विकारार्थकः कोशवाचको वा । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति सर्वोपजीव्यत्वसर्वसंहर्तृत्वस्यैवान्नमयशब्दार्थत्वेन तादृशार्थस्यान्यत्र बाधितत्वेन परमात्मन्यबाधितत्वेन च स एवान्नमयः । एवं सर्वत्रापि प्राचुर्यार्थ एव मयट् । मयटः सर्वत्र एकार्थत्वे सम्भवति तत्र तत्रार्थान्तरकल्पनं प्रामादिकमेव ।

६. न चैवं मयटः प्राचुर्यार्थे दुःखाल्पत्वमपि स्यादिति न वाच्यम्, 'अन्नप्रचुरो मखः' इत्यत्र दुर्भिक्षाऽपि स्यात्, 'प्रकाशप्रचुरः सविता' इत्यत्रापि सवितर्यन्धकारलेशः स्यात् । एवं च प्रमाणान्तरेण यदि विरोधिसद्भावः प्रमितः तर्ह्येव तथाङ्गीकार उचितः । अन्यथा बहुविप्लवः स्यात् । प्रकृते च आनन्दमयशब्देन ब्रह्मणि पूर्णानन्दत्वप्रतिपादनेन प्रमाणान्तरेण च दुःखाद्यप्रतीतेः भगवान् आनन्दमय इत्युक्ते आनन्दघनः, पूर्णानन्द इत्येव वाऽर्थः ।

७. ननु कथमत्र ब्रह्मशब्दाभ्यासः । भृगुवल्ल्यां यद्यपि 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ ब्रह्मशब्दसद्भावेऽपि -

अ. मयट्प्रत्ययविशिष्टशब्दाश्रवणात्

आ. चक्षुः-श्रोत्र-वाचाम् आधिक्येन प्रतिपादनात्

इ. विज्ञानानन्दमययोः परित्यागात् ।

नैकं वस्त्वत्र उच्यत इति चेत्, उच्यते । उभयोरपि वल्ल्योः ब्रह्मावगतिजननार्थमेव प्रवृत्तत्वादेकप्रकरणत्वमस्त्येव । आवापोद्वापस्य शाखासु

बहुलं दृश्यमानत्वेन वाधूलशाखायामष्टरूपस्यापि ब्रह्मण उक्तत्वेन सङ्ख्यासाम्यादिसम्भवान्न कश्चिद्विरोधः ।

८. नन्वेवं तर्हि प्रथमातिक्रमणे मानाभावाद् अन्नमयोऽभ्यासादिति वक्तव्ये कुत आनन्दमयोऽभ्यासादित्युक्तमिति चेत्, मुमुक्षूपास्यगुणेषु 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति प्रधानफलस्य मोक्षस्यार्थे सत्-चित्-आनन्द-आत्मा इत्युपास्य इत्युक्तत्वेन, सर्वापेक्षितत्वाच्चानन्दस्यैव प्राधान्येन निर्देश उपपन्नतरः ।

९. रामानुजसिद्धान्तोऽप्ययुक्तः ।'तस्यैष एव शारीर आत्मा' इत्याद्यानन्दमयस्य जीवत्वप्रापकवचनस्य जीवतयाऽनङ्गीकृतप्राण-मयादिप्रकरणेऽपि जागृतत्त्वेन शारीरत्वेन जीवत्वशङ्काऽनुदयात् । आनन्दमयस्य ब्रह्मत्वे पुच्छत्वाद्यनुपपत्तीनामपरिहारात् ।

अस्मन्मते तु अवयवावयविनोरभेदस्याङ्गीकृतत्वेन 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः' इति बृहत्संहितोक्तेरनुपपत्तिलेशाभावात् ।

१०.एवं विज्ञानमस्य जीवत्वे 'विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' इत्यादेरयोगः । अत्र विज्ञानमयस्य स्फुटं ब्रह्मत्वावगमात् ।

११. ननु अभ्यासादित्यस्य ब्रह्मशब्दाभ्यासाद् इत्यर्थ उक्तः भाष्ये । "प्रकृते च 'एकविषयकासकृदुक्तिरभ्यासः' इति अभ्यासलक्षणस्वीकारे आनन्दमयविज्ञानमययोस्तस्य सत्त्वेऽपि प्राणमयादित्रिके 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते' इत्यत्र ब्रह्मशब्दश्रुतेः कथं ब्रह्म-शब्दाभ्यासोऽस्ति" इत्युक्तमिति चेद्- उच्यते । नात्र सर्वत्र मुख्याभ्यासो भाष्यकृदभिमतः । यत्र विज्ञानानन्दमययोस्तदस्ति तत्र

४. न च 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र विकारार्थककोशपरत्वस्यैवोचितत्वम् । अन्नरसमय इत्यस्य अन्नमयः साररूपश्चेत्यर्थाङ्गीकारेऽनुपपत्त्यभावात् ।

५. न चात्रान्नमयशब्दः विकारार्थकः कोशवाचको वा । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति सर्वोपजीव्यत्वसर्वसंहर्तृत्वस्यैवान्नमयशब्दार्थत्वेन तादृशार्थस्यान्यत्र बाधितत्वेन परमात्मन्यबाधितत्वेन च स एवान्नमयः । एवं सर्वत्रापि प्राचुर्यार्थ एव मयट् । मयटः सर्वत्र एकार्थत्वे सम्भवति तत्र तत्रार्थान्तरकल्पनं प्रामादिकमेव ।

६. न चैवं मयटः प्राचुर्यार्थे दुःखाल्पत्वमपि स्यादिति न वाच्यम्, 'अन्नप्रचुरो मखः' इत्यत्र दुर्भिक्षाऽपि स्यात्, 'प्रकाशप्रचुरः सविता' इत्यत्रापि सवितर्यन्धकारलेशः स्यात् । एवं च प्रमाणान्तरेण यदि विरोधिसद्भावः प्रमितः तर्ह्येव तथाङ्गीकार उचितः । अन्यथा बहुविप्लवः स्यात् । प्रकृते च आनन्दमयशब्देन ब्रह्मणि पूर्णानन्दत्वप्रतिपादनेन प्रमाणान्तरेण च दुःखाद्यप्रतीतेः भगवान् आनन्दमय इत्युक्ते आनन्दघनः, पूर्णानन्द इत्येव वाऽर्थः ।

७. ननु कथमत्र ब्रह्मशब्दाभ्यासः । भृगुवल्ल्यां यद्यपि 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ ब्रह्मशब्दसद्भावेऽपि -

अ. मयट्प्रत्ययविशिष्टशब्दाश्रवणात्

आ. चक्षुः-श्रोत्र-वाचाम् आधिक्येन प्रतिपादनात्

इ. विज्ञानानन्दमययोः परित्यागात् ।

नैकं वस्त्वत्र उच्यत इति चेत्, उच्यते । उभयोरपि वल्ल्योः ब्रह्मावगतिजननार्थमेव प्रवृत्तत्वादेकप्रकरणत्वमस्त्येव । आवापोद्वापस्य शाखासु

बहुलं दृश्यमानत्वेन वाधूलशाखायामष्टरूपस्यापि ब्रह्मण उक्तत्वेन सङ्ख्यासाम्यादिसम्भवान्न कश्चिद्विरोधः ।

८. नन्वेवं तर्हि प्रथमातिक्रमणे मानाभावाद् अन्नमयोऽभ्यासादिति वक्तव्ये कुत आनन्दमयोऽभ्यासादित्युक्तमिति चेत्, मुमुक्षूपास्यगुणेषु 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति प्रधानफलस्य मोक्षस्यार्थे सत्-चित्-आनन्द-आत्मा इत्युपास्य इत्युक्तत्वेन, सर्वापेक्षितत्वाच्चानन्दस्यैव प्राधान्येन निर्देश उपपन्नतरः ।

९. रामानुजसिद्धान्तोऽप्ययुक्तः ।'तस्यैष एव शारीर आत्मा' इत्याद्यानन्दमयस्य जीवत्वप्रापकवचनस्य जीवतयाऽनङ्गीकृतप्राणमयादिप्रकरणेऽपि जागृतत्त्वेन शारीरत्वेन जीवत्वशङ्काऽनुदयात् । आनन्दमयस्य ब्रह्मत्वे पुच्छत्वाद्यनुपपत्तीनामपरिहारात् ।

अस्मन्मते तु अवयवावयविनोरभेदस्याङ्गीकृतत्वेन 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः' इति बृहत्संहितोक्तेरनुपपत्तिलेशाभावात् ।

१०.एवं विज्ञानमस्य जीवत्वे 'विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' इत्यादेरयोगः । अत्र विज्ञानमयस्य स्फुटं ब्रह्मत्वावगमात् ।

११. ननु अभ्यासादित्यस्य ब्रह्मशब्दाभ्यासाद् इत्यर्थ उक्तः भाष्ये । ''प्रकृते च 'एकविषयकासकृदुक्तिरभ्यासः' इति अभ्यासलक्षणस्वीकारे आनन्दमयविज्ञानमययोस्तस्य सत्त्वेऽपि प्राणमयादित्रिके 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते' इत्यत्र ब्रह्मशब्दश्रुतेः कथं ब्रह्मशब्दाभ्यासोऽस्ति'' इत्युक्तमिति चेद्- उच्यते । नात्र सर्वत्र मुख्याभ्यासो भाष्यकृदभिमतः । यत्र विज्ञानानन्दमययोस्तदस्ति तत्र

मुख्य एवाभ्यासः । अन्यत्र तु ब्रह्मशब्दश्रवणमात्रं विवक्षितम् । अत एव तत्त्वप्रकाशिकायाम्- 'आनन्दमये ब्रह्मशब्दाभ्यासाद्' इत्युक्त्वा 'अन्नमयादीन् प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणाद्' इत्येवोक्तम् ।

सुधायां तु 'येऽन्नं ब्रह्मेत्यादिरूपाद् अभ्यासात् तैत्तिरीयके' इत्यनु-व्याख्यानानुसारेण एकविषयकासकृदुक्तिलक्षणमुख्याभ्यासाभावेऽपि असकृदुक्तिमात्रमस्ति । तथा चान्नमयादिविषयत्वेन श्रुतत्वाभिप्रायोऽ-भ्यासशब्द इत्युक्तम् ।

१२. यद्वा भाष्ये ब्रह्मशब्दाभ्यासाद् इत्यस्य ब्रह्मवाचकशब्दाभ्यासाद् इत्यर्थः । ततश्च 'अन्योऽन्तर आत्मा' 'एतमन्नमयमात्मानमुप-सङ्क्रामति' 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादौ ब्रह्मशब्द-समानार्थकात्मशब्दाभ्यासस्य मुख्यस्यैव सर्वत्र सत्वात् ब्रह्म-शब्दाभ्यासोऽस्तीत्युक्तमुपपन्नम् । एवमभिनवचन्द्रिकोक्तदिशा अन्तरशब्दाभ्यासोऽपि ग्राह्यः ।

१३. यद्वा 'अन्नं ब्रह्मेति व्यजानात्' इत्युत्तरानुवाकेऽप्यन्नमयादौ ब्रह्मशब्दस्यासकृदेव सत्वात् मुख्याभ्यास एवास्तीत्युक्तमुपपन्नम् ।

## आनन्दतारतम्यम्

'सैषानन्दस्य मीमांसा भवति' इत्यारभ्य 'स एको ब्रह्मण आनन्दः' इत्यन्तम् आनन्दतारतम्यमिह प्रतिपादितम् । मध्वभाष्यानुसारेण अयमभिप्रायोऽत्र अनुसन्धेयः । आनन्दतारतम्यनिरूपणावसरे आनन्दस्य स्वरूपमिह यथा बोद्धॄणां बुद्धिगोचरं भवेत् तथेह श्रुतावुपवर्णितम् । संसारदशायां त्रेतायुगे समस्तापीयं पृथिवी समृद्धा, एकस्य चक्रवर्तिनः

वशा च यदि भवेत् तदा यावानानन्दो भवति तावानानन्द एकानन्द इति इह भण्यते । यद्यप्यत्र श्रुतौ मनुष्योत्तमा न श्रूयन्ते तथापि तेषां मुक्तियोग्यत्वेन बृहद्भाष्योक्तदिशा ते स्वीकार्या भवन्ति । एवं च मनुष्योत्तमेभ्योऽपि मानुषचक्रवर्तिनां मुक्तौ शतगुणानन्द अधिकः भवति । तेभ्योऽपि शतगुणानन्दाधिक्यं मनुष्यगन्धर्वाणाम्, तेभ्यः देवगन्धर्वाणाम्, तेभ्योऽपि पितॄणाम्, तेभ्योऽप्याजानजदेवानाम्, तेभ्योऽपि कर्मजदेवानाम्, तेभ्यः तत्त्वाभिमानिनाम्, तेभ्यः दक्षस्य, ततोऽपि इन्द्रस्य, ततोऽपि शेषस्य, ततोऽपि ब्रह्मणः उत्तरोत्तरं शतगुणानन्दाधिक्यं विज्ञेयम् ।

अत्रैके व्याचक्षते- अत्रोक्तमानन्दतारतम्यं न मुक्तविषयम्, अपि तु संसारिविषयकमेवेति । तन्न मनोरमम् । 'श्रोत्रियस्य चाकामहतस्य' इत्यादिविशेषणैः भगवती श्रुतिरिह संसार्यानन्दं व्यावर्तयति । न हि क्वचन संसारी अकामहतो भवति । न वा मुख्यश्रोत्रियः । अभीप्सितसर्वलाभः मुक्तावेव भवतीति निश्चप्रचम् । तथैव श्रवणमननाद्युपासनालभ्यः पूर्ण आनन्दविशेषः मुक्तावेव लभ्यत इत्यत्र न सन्देहगन्धः । तस्मादत्र मौक्तजीवानन्द एव तारतम्यमुच्यत इति विज्ञेयम् । तदुक्तमाचार्यपादैः-

'यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते ॥
यस्य कामास्तु सत्याः स्युस्स हि कामैर्न हन्यते ।
न ह्यकामः क्वचित् कश्चित् दृश्यते श्रूयतेऽपि च ॥ इति ब्रह्माण्डे ।'

अत्रैके आक्षिपन्ति- यदि मुक्तौ आनन्दतारतम्यमुच्यते, तर्ह्यस्ति द्वेषेर्ष्यादीनां प्रसक्तिः । तस्मान्न तारतम्यमङ्गीकरणीयम् । 'परमं साम्यमुपैति' इति भगवती श्रुतिः 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू.

४.४.२२) इति भगवान् सूत्रकारश्च आनन्दसाम्यमेव प्रतिपादयति । तस्मात् समेषां जीवानां मुक्तौ समान एवानन्दोऽनुभूयत इत्यङ्गीकरणीयम् । तदुक्तं- 'यथेष्टभोगिनो अनवरतकैङ्कर्यरताः आविर्भूतगुणाष्टकाः (अप्राकृतशब्दस्पर्शरूपरस-गन्धज्ञानानन्दाः) उत्तरावधिरहित-ब्रह्मानुभववन्तः मुक्ताः' इति । (यतीन्द्रमतदीपिका पृ.७८) उक्तं च तत्त्वमुक्ताकलापे वेदान्तदेशिकमहाभागैः- 'नित्यानां मुक्तिभाजामपि भुवनकृता भोगमात्रं समानम्' (जीवसर.श्लो. ६६) इति । भगवद्रामानुजाचार्यैरपि जीवस्वरूपमेकरूपमेवेति वेदान्तसङ्ग्रहे प्रतिपादितम्- 'जीवात्मस्वरूपं देवमनुष्यादिप्रकृतिपरिणामविशेषरूप-नानाविधभेदरहितं ज्ञानानन्दैकगुणम् । तस्यैतस्य कर्मकृतदेवादिभेदे अपध्वस्ते स्वरूपभेदो वाचामगोचरः स्वसंवेद्यः ''ज्ञानस्वरूपम्'' इत्येतावदेव निर्देश्यम् । तच्च सर्वेषाम् आत्मनां समानम् ।' (वे.सं. पृ.५) इति ।

अत्र ब्रूमः- यदि मुक्तानाम् आनन्दतारतम्याङ्गीकारे द्वेषेर्ष्यादयः प्रसज्यन्ते, तर्हि आनन्दसाम्याङ्गीकारेऽपि न कथम् ? दृश्यन्ते हि लोके प्रतिविषयं शतमङ्कान् स्वीकृत्य सर्वजनादरभाजां विद्यार्थिनाम्, अनुत्तीर्णानां विद्यार्थिनां च समानसत्कारे द्वेषेर्ष्यादयः । एवं च बुद्धिमतां मन्दानां, गुणसम्पन्नानां दुराचाराणां च साम्यदृष्टौ लोके द्वेषेर्ष्यादयोऽनुभूयन्त एव । तथैव आनन्दसाम्याङ्गीकारेऽपि द्वेषेर्ष्यादयः भवन्त्येव । किञ्च शतकल्पपर्यन्तं साधनानुष्ठानवतः चतुर्मुखस्य, दिनकल्पपर्यन्तं साधयितुः मानुषोत्तमस्य च मुक्तौ समानानन्दप्रदाने भगवतोऽप्रेक्षावत्त्वप्रसङ्गः ।

अथोच्येत- 'अविद्याक्षेत्रमुत्तरेषाम्' (पा.२.सू. ४) इति पातञ्जल-योगसूत्रानुसारेण सर्वेषां दोषाणाम् अविद्यामूलकत्वात् निरस्ताविद्यानां

मुक्तानाम् आनन्दसाम्याङ्गीकारेऽपि न द्वेषादयः प्रभवन्तीति । सममेतत् समाधानम् आनन्दतारतम्याङ्गीकारेऽपि ।

जीवस्वरूपं सर्वेषां समानम् देवत्वर्षित्वादिकमौपाधिकमिति तु प्रमाणबहिर्भूतम् ।

'देवमानुषगन्धर्वाः पिशाचासुरराक्षसाः ।
सर्वे स्वभावतः सृष्टाः न क्रियाभ्यो न कारणात् ॥'

इति महाभारते (आश्व. ५२) 'स्वभावतः सृष्टाः' इति देवादिभावस्यानौपाधिकत्वोक्तेः ।

'त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥' (भ.गी. १७.२)

अत्रापि सात्त्विकादिभेदेन जीवत्रैविध्यस्य स्वाभाविकत्वकथनात् ।

'श्रद्धास्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः ।
उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक् पृथक् ॥' (गी.ता.)

श्रद्धाविभेदतः जीवेषु उत्तममध्यमाधमभावः श्रूयते । तस्मात् समेषां जीवानां स्वरूपं नैव समानमिति विज्ञायते ।

'परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरतस्तर्तरीति ॥' (श्रुतिः)

अत्र इन्द्रशब्दवाच्यः भगवान्, गुणशालिनां सख्यं दुर्जनानां पराभवं च विदधातीति जीवतारतम्यं स्फुटं निरूपितम् ।

'द्विविधो भूतसर्गोऽत्र दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुरः ॥' (विष्णुधर्मे)

'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।' (गी.अ. १६६)
'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥' (भ.गी.१६-२०)

दैव-आसुरजीवयोः स्वाभाविकभेदकधर्मनिरूपणपुरस्सरम् एकस्यासुरजीवस्यान्धंतमःप्राप्तिरूपफलकथनेन मुक्तावपि तेषां भेदः स्फुटमवगम्यते।

'य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवेधयत्यजः।
तत्प्रत्यनीकानसुरान् सुरद्विषो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः॥'
(भाग. स.१)

अत्र सत्त्वगुणोपेतानां सुराणामनुग्रहः, गुणद्वेषिणामसुराणां रजोगुणतमोगुणोपबृंहितानाम् च अधःपातनं श्रूयते। पूर्वोक्तप्रमाणवचनानां पर्यालोचने जीवेषु संसारावस्थायां मुक्तौ च स्वाभाविकयोग्यतानिमित्तक एव भेदः परमानन्द-परमदुःखादिभेदेन फलभेदश्च श्रूयते। तस्मात् जीवेषु स्वाभाविकभेद-तारतम्यप्रतिपादकश्रुतिस्मृतीनां बहुलमुपलम्भात् देवत्वादिकमनौपाधिकमेवेत्यङ्गीकार्यम्। अङ्गीकार्यं च जीवत्रैविध्यम्। त्रिविधजीवानां कर्मानुसारेण फलभेदश्च।

'ब्रह्मानन्दानुभवो मोक्षः' इति तु न साम्प्रतम्। 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतौ 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति भगवता बादरायणेन च स्वरूपाभिव्यक्तेरेव मोक्षत्वप्रतिपादनात्।

'मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित्।
बहिष्ठान् भुञ्जते नित्यं नाऽनन्दादीन् कदाचन॥'
(ब्र.सू.भा. ३, भविष्यत्पुराणवचनम्)

अत्र मुक्ताः बहिष्ठानेव भोगान् भुञ्जते । न ब्रह्मानन्दमनुभवन्ति इत्युक्तेः।

'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः ।
भुञ्जते स्वसुखान्येव न दुःखादीन् कदाचन ।।'

(ब्र.सू.भा. ३, ब्रह्मवैवर्तवचनम्)

इत्यादौ स्वयोग्याप्राकृतभोगस्यैव श्रुतेरश्रुतेश्च ब्रह्मानन्दानुभवस्य ।

नापि 'परमं साम्यमुपैति' इत्यादिश्रुतिविरोधः । दुःखाभावाप्राकृतत्वादिना परमं साम्यमिति उपपादयितुं शक्यत्वात् । तस्मात् न केवलं संसारावस्थायाम् अपि तु मुक्तावपि जीवेषु यथाप्रमाणं तारतम्यम् अङ्गीकरणीयमेव ।

न केवलमानन्दादिना मुक्तेषु तारतम्यम् अपि तु सर्वैर्गुणैः तारतम्यं तत्रावशिष्यत एवेति सप्रमाणमुपपादितं मध्वभाष्ये । न केवलं गुणेषु परिमाणाधिक्यमिहानुसन्धेयमपि तु स्फुटतायां वैचित्र्यं चानुसन्धेयम् । यथा अग्निज्वाला दीपादधिकप्रमाणापि न स्फुटतातिशयवती, यथा च परिमाणाधिक्येऽपि अग्नेः न सूर्य इव स्फुटता, यथैव चन्द्रमण्डले परिमाणाधिक्येऽपि न सूर्यमण्डलस्फुटता, एवमेव जीवेषु उत्तमेषु न केवलं परिमाणाधिक्यमपि तु सर्वैर्गुणैः स्फुटताधिक्यं च न विस्मर्तव्यम् । तदुक्तम्-

'यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ।
सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।।
अथवा सहस्रगुणिता अनन्तगुणितास्तथा ।
परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।।
यथा दीपात् शतगुणाऽप्यग्निज्वाला न दीपवत् ।
स्फुटीभवेत् यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।।

यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ॥
प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः ।
अतोऽस्पष्टरूपास्ते स्फुटरूपास्तथोत्तराः ॥'

(पृ. १६५-१६७) इति ।

## साक्षात्कारेऽपि तारतम्यम्

हरिवंशेऽपि विद्युद्वद् भगवद्रूपं पश्यन्ति हि मानुषोत्तमाः । सुराः पुनः सूर्यमण्डलवत् स्फुटं भगवद्रूपं पश्यन्ति । ततोऽपि स्फुटताधिक्येन प्रतिबिम्बवत् पश्यति गिरिशः । चतुर्मुखस्तु निरतिशयस्फुटतया भगवन्तं पश्यतीति साक्षात्कारेऽपि तारतम्यमुपपादितम्-

'विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत् सुराः ।
प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ॥
ब्रह्मा हि स्थिरचिद्रूपो बहुलात्मा विशेषतः ।
अन्ये क्रमादबहुलास्तथा चञ्चलचेतसः ।
तस्मात् सम्यङ् न पश्यन्ति हरिं ब्रह्मा तु पश्यति ॥'

(पृ. २४६) इति ।

एवमत्र संसारे मुक्तौ च जीवानां योग्यताभेदेन गुणतारतम्यं समर्थितम् ।

## भेदः धर्मिस्वरूपम्

'सापेक्षत्वात् सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावादसन्देहात् न रूपं वस्तुनो भिधा ॥'

इति चित्सुखाचार्योक्तां कारिकां हृदि निधाय भेदस्य धर्मिस्वरूपत्वाङ्गीकारे

ये चाक्षेपाः सम्भवन्ति ते सर्वेऽपि निराकृताः विष्णुतत्त्वविनिर्णये श्रीमध्वभगवत्पादाचार्यैः ।

अत्र तैत्तिरीयभाष्ये केचनापूर्वाः विषयाः निरूपिताः । तेऽत्र सङ्गृह्यन्ते-

ननु कथं भेदस्य धर्मिस्वरूपत्वमुच्यते । घटादेर्धर्मिणः नाशे भेदस्याप्यनित्यत्वमपरिहार्यमिति चेत्, उच्यते । घटादेर्नाशो नाम न निःशेषतया नाशो अस्मत्सिद्धान्तेऽङ्गीकृतः । 'घटो नष्टः' इत्यस्य कपालरूपेणावशिष्ट इत्येवार्थः । एवं तदवयवनाशेऽपि रूपान्तरेण अन्ते परमाण्वात्मना (प्रकृत्यात्मना) अवस्थितिः अनुभवसिद्धा । एवं च वस्तुनाशेऽपि तस्य रूपान्तरेण विद्यमानत्वात् भेदो न नश्यति इत्येव अस्माकमाशयः । उक्तोऽयमर्थः सन्न्यायरत्नावल्यां श्रीमन्न्यायसुधायां च । तथा हि-

(अ.) 'टीकाकारास्तु (पद्मनाभतीर्थाः) मन्यन्ते । भेदो नामान्योन्याभावः । स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्यापत्तेरेवाभावनिवर्तकत्वस्य प्रागभावे दृष्टत्वात् । न च कदापि पदार्थानामन्योन्यतादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य एवेत्याहुः' (प्रकृत्यधिकरणसुधा) इति ।

(आ.) प्रकृत्यधिकरणसन्न्यायरत्नावल्यामपि- 'विनाशिनो घटादेर्धर्मरूपो भेदः परवाद्युपगतघटत्वादिजातिवन्नित्योऽभ्युपगन्तव्यः । कालत्रयेऽपि वस्त्वन्तरतापत्त्यभावात्' इति ।

वस्तुनाशे भेदो नश्यति इत्यपि सिद्धान्तेऽङ्गीकृतम्-

अत्रेदं विचिन्त्यम्- घटनाशे रूपान्तरेण तस्य विद्यमानत्वेऽपि कम्बुग्रीवादिमत्वरूपाकारविशेषविशिष्टतया असत्त्वेन तदीयो भेदोऽपि

नष्ट इत्येव सुवचम् । प्राक् अनित्यपदार्थस्वरूपभूतस्य भेदस्य नित्यत्वोक्तिस्तु उपादानरूपेण सत्वमभिप्रेत्य । अतो न पूर्वोत्तर-विरोधः ।

'भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम् ।
नष्टानामपि वस्तूनां भेदो नैव विनश्यति ॥
अवस्तुनोऽपि रूपं स्वं भेद एव न चान्यथा ।
विशेषरूपनाशेन भेदमात्राऽवसायिता ॥
नाश इत्युच्यते सद्भिर्भेदो न हि विनश्यति ।
इत्याहुः केचिदज्ञानात् .............. ॥' (पृ. २१६)

अत्र 'अज्ञानात्' इत्यस्य स्थूलां दृष्टिमाश्रित्य इत्येवार्थः ।

**भेदनाशे वस्त्वन्तरतादात्म्यापत्तिनिराकरणम्**

ननु यदि घटे नष्टे घटनिष्ठो भेदः नश्यति, तर्हि घटस्य पटतादात्म्यं दुष्परिहरं स्यादिति चेत्, मैवम् । घटनाशात् घटस्वरूपभूतपटभेदनाशेऽपि पटस्य विद्यमानत्वेन पटस्वरूपभूतो घटभेदः विद्यत एव । एष घटभेदोऽपि घटपटैक्यविरोध्येव । एवं च घटधर्मिकपटप्रतियोगिकभेदवत् पटधर्मिक-घटप्रतियोगिकभेदस्यापि घटपटतादात्म्यविरोधित्वात् तस्य च घटनाशेऽपि सत्त्वात् नाभेदप्रसक्तिः ।

नन्वेवं घटपटयोः उभयोर्विनाशे तदात्मकभेदद्वयस्यापि नष्टत्वेन घटपटतादात्म्यमापाद्यते, मैवम् । यदा घटपटावेव नष्टौ धर्मिभूतौ, तदा तत्स्वरूपभूतः भेदः कुत्रावशिष्यते धर्मिण एवाभावात् । अन्यथा घटपटोभयनाशे तत्संयोगनाशेन विभागोऽप्यापाद्येत । न चैतदिष्टम् । धर्मिणोरेवाभावात् कस्य विभाग इति प्रश्नस्य अवशिष्टत्वात् ।

**भेदः सत्स्वरूपम्**

नन्वथापि न भेदस्य धर्मिस्वरूपत्वं युक्तम्। 'घटः नृशृङ्गं न' इति प्रतीत्यानुगुण्येन घटप्रतियोगिकभेदः नृशृङ्गे वक्तव्यः। तत्र भेदस्य धर्मि-स्वरूपत्वेन घटप्रतियोगिकान्योन्याभावस्य धर्मिस्वरूपत्वं वक्तव्यम्। प्रकृते च धर्मिणोऽत्यन्तासत्त्वात् प्रतीयमानः भेदः धर्मिभिन्न इत्येव वक्तव्यः। तथा च रिक्तं भेदस्य धर्मिस्वरूपत्ववचः।

अत्रोच्यते- भेदो हि भावपदार्थनिष्ठो धर्मः, सत्स्वरूप इति निर्गलितोऽर्थः। तथा च भावात् सतो घटादेः नृशृङ्गादेः भेदः नास्ति। कुतः ? नृशृङ्गादेः स्वरूपत एवासत्त्वात्।

एतेन शशशृङ्गादेः घटादितादात्म्यं दुष्परिहरम्। तदन्योन्याभावे तत्तादात्म्यस्य अवर्जनीयत्वाद् इति वचनमपि परास्तम्। सत्प्रतियोगिक-भेदस्य असत्यभावेऽपि असत्प्रतियोगिकाभावस्य सति विद्यमानत्वात् न तयोः तादात्म्यापत्तिः। यतः भावरूपस्य घटादेः स्वरूपं सन्नेव भवति। अत एव असत्प्रतियोगिकः भेदः सति भवितुमर्हति।

**धर्मिसत्वे भेदाभाव एव तादात्म्यापत्तिः**

न चैवं सर्वदाऽप्यविद्यमानयोः शशशृङ्ग-नृशृङ्गयोः तादात्म्यापत्ति-रिति वाच्यम्। सति धर्मिणि भेदाभाव एव तादात्म्यापत्तौ प्रयोजकः। प्रकृते च शशशृङ्ग-नृशृङ्गयोः कदाऽप्यभावात् नान्योन्यतादात्म्यापादनं युक्तम्।

एवं च धर्मिनाशे भेदो नश्यतीति पक्षोऽपि सिद्धान्तसम्मतः, एवं न नश्यतीत्यपि। उभावपि पक्षौ आकर एव व्यक्तौ। तदुक्तं वैशेषिक-नयसुधायाम्- ''प्रध्वस्तस्य घटादेर्भेदः प्रध्वस्तभेदः, 'नष्टानामपि वस्तूनां

भेदो नैव विनश्यति' इति यत्प्रध्वस्तभेदस्य सत्त्वमवगम्यते तत्तस्मात् कार्यस्य कारणाभेदात् प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव युज्यते । न ह्यत्यन्तासत्त्वमापन्नस्य स्वरूपभूतो भेदः सन्निति युज्यते'' इति ।

'................ तत्राऽहुः सूक्ष्मदर्शिनः ॥
सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः ।
तस्माद् वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित् ॥
अविनष्टस्य तस्मात्तु भेदोऽस्त्येव स्वरूपतः ।
एवं भावादभावस्य न भेदो भावरूपवान् ॥
अभावाद् भावरूपस्य स्वरूपं भाव इष्यते ।
नष्टभेदोऽप्यभावात्मा विद्यते च विनाशतः ॥
स्वरूपत्वात्तु भेदस्य भेदे शङ्का न कस्यचित् ।
सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते ॥
तस्माद् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते ।
प्रतियोगिता त्वभावस्याप्यस्त्यभावतया स्फुटम् ॥
न ह्यभावोऽप्यधर्मा स्यान्न तु स्याद् भावधर्मयुक् ।
अभावस्यास्तिता नाम स्यादेवाभावरूपिणी ॥
अभावताऽपि सैव स्यान्न तु स्यात् भावरूपिणी ।
अतः स सर्वव्यावृत्तस्वरूपो भगवान् परः ।
येन ज्ञातः स तु ज्ञानी मुच्यते नात्र संशयः ॥' इति तत्त्वनिर्णये ।

एवमनेकेऽपूर्वा विषयाः तैत्तिरीयोपनिषद्भाष्ये भगवत्पादाचार्यैरुपवर्णिताः सुधीभिरनुसन्धेयाः ।

# मुण्डकोपनिषत्

## ऋषिपरम्परा

सृष्टेरादौ भगवतः नारायणस्य चतुर्मुखः प्रथमः पुत्रः समजनि । सः भगवतोपदिष्टां ब्रह्मविद्याम् अथर्वाय ज्येष्ठपुत्रायोपदिदेश, इति भगवती उपनिषदाह- 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति । यद्यपि पुराणेषु चतुर्मुखस्य सनकादयः प्रथमजाः पुत्रा इति, भगवान् शिवश्च प्रथमज इत्यपि तत्र तत्र श्रूयते । अथर्वनामकस्य ज्येष्ठत्वं क्वापि न श्रूयते । अत्र व्याख्यातं भगवत्पादाचार्यैः-

'मनोर्वैवस्वतस्यादौ अथर्वा ब्रह्मणोऽजनि ।
मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च ॥
ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः ।
सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः ॥' (पृ. ३३२)
इति ब्रह्माण्डे ।' इति ।

अनेन स्फुटं समाधिः लब्धा- पूर्वपरार्धस्यान्तिमे कल्पे (पद्मकल्पे) शिवः ब्रह्मणः प्रथमजः सुतः, द्वितीयपरार्धस्य प्रथमे कल्पे (वाराहे) सनकाद्याः सुताः । तत्रापि ब्रह्मणः प्रथमे दिने सप्तमे वैवस्वतान्तरे अथर्वा ब्रह्मणः प्रथमजः सुतः । ततः मित्रः, वरुणः, प्रहेतिर्हेतिरिति च चत्वारोऽजनिषत । तत्र प्रहेतिर्हेतिश्चेत्युभौ राक्षसौ, सूर्यरथचक्रप्रेरणया नक्षत्रतिथीनां वृद्धिह्रासहेतुभूतौ । एवं च चतुर्मुखस्य अथर्वा ज्येष्ठपुत्र इत्युक्तम् उपपन्नतरम् । अयमथर्वा अङ्गिरे ब्रह्मविद्यां प्रोवाच । स च भरद्वाजपुत्राय सत्यवहाय प्राह । अयं च सत्यवहोऽङ्गिरसे ब्रह्मविद्याम् उपदिदेश । अङ्गिरसा शौनक इमां विद्याम् अधिजगौ । 'न ह वा अविदितार्षच्छन्दोदेवतादि' इति प्रमाणानुगुण्येन उपनिषदः

ऋषिदेवतापरम्पराऽवश्यमेव विज्ञेया। अन्यथा नरकप्राप्तिरूपानर्थः श्रूयत इति भगवत्या श्रुत्या इयमुपदिष्टा।

**परापरविद्याविचारः**

परापरविद्यास्वरूपविषये अस्ति वेदान्तिनां विप्रतिपत्तिः। तत्र आथर्वणोपनिषदि श्रूयते- 'द्वे वाव विद्ये वेदितव्ये परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः अथर्ववेदः शिक्षा व्याकरणं छन्दः निरुक्तं ज्योतिषमिति। अथ परा- यया तदक्षरमधिगम्यते' (आथ. १.४-५) इति। अत्र साङ्गान् वेदानपरविद्यात्वेनोक्त्वा अक्षराधिगतिकरणस्य परविद्यात्वमुक्तम्। 'वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः' (त.उ.पै.) इति वेदानामक्षराधिगतिकरणत्वस्याबाधितत्वेऽपि तेषामपरविद्यासु परिगणनं विवक्षाविशेषमनुरुध्येति भाति। स आशयविशेषः श्रीमध्वगुरुचरणैः प्रमाणोदाहरणपुरस्सरं निरूपितः-

'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः॥' इति (आ.भा. १)

अयमाशयः- वेदार्थनिर्णायकन्यायग्रथनात्मकब्रह्ममीमांसाशास्त्रानुपकृताः हि वेदादयः न परस्वरूपपरिचायकाः, अपि तु तदुपकृता एवेति वेदेन ईश्वरज्ञाने जननीये इतिकर्तव्यताभूतं मीमांसाशास्त्रम्, बीजनिष्ठाङ्कुरजननशक्त्युद्बोधकजलमिव अक्षराधिगतिकरणं भवति। यागीयहिंसाया इतिकर्तव्यताभूतायाः प्राबल्यमिव, भगवदपरोक्षज्ञानसाधनेषु श्रवणादिषु गुरुप्रसादस्येतिकर्तव्यताभूतस्य प्राबल्यमिव च, मीमांसाशास्त्रस्यापीतिकर्तव्यताभूतस्य प्राबल्यमव्याहतम्। श्रुति-युक्ति-आप्तिमूलकत्वाच्चास्य निरवधिकं प्रामाण्यम्।

एतेन उपनिषदः परविद्येति व्याख्यातारो निरस्ताः । ऋगादिग्रहणेन तासामपि गृहीतत्वात् । उपनिषज्जन्यं ज्ञानं परविद्येत्यप्यचारु । अक्षराधिगतिकरणत्वाभावात् ।

अपौरुषेयत्वेन सकलप्रमाणोपजीव्यानां वेदानामपरत्वं तदधीनप्रामाण्यकस्य ब्रह्ममीमांसाशास्त्रस्य तु कथं परत्वमिति शङ्का निपुणतरं निराकृता तारस्वरूपप्रकाशे-

'परापरत्वयोर्धर्मिविशेषाधीनत्वेनापरिनिष्ठितत्वात् प्रामाण्यस्थापकनिर्दोषतायाः स्वतःसिद्धत्वेन तेषामधिकं प्रामाण्यम्, सूत्राणामाप्तिमूलत्वेन निर्दोषत्वमिति तदमुख्यतया प्रामाण्यस्यामुख्यत्वमिति स्थितावपि, विद्यापदार्थतावच्छेदककोटिप्रविष्टस्य सूत्रसाध्यस्य यथार्थज्ञानस्य निश्चितप्रामाण्यकत्वेन प्रवृत्तिद्वारा पुरुषार्थोपयोगितयाऽधिकेन विद्यात्वेनास्य परत्वात् परविद्याशब्दमुख्यार्थत्वम्, सूत्राननुगृहीतवेदसाध्यज्ञानस्यानिर्धारणात्मकस्य प्रवृत्त्यादिद्वारा पुरुषार्थानुपयोगितया तज्जनकानां केवलवेदानामपरविद्यात्वं चोपपन्नमेव ।

यथा पित्रपेक्षया पुत्रस्य स्वभावतोऽवरत्वेन पितुः पुरः पूज्यत्वाभावेऽपि तपोज्ञानादिभिराधिक्ये तद्गुणप्रयुक्तश्रैष्ठ्येन पितुरपेक्षया श्रेष्ठत्वादि, तद्वत् इति ।

अत एव 'संहितापाठतः प्रोक्तं द्विगुणं पदपाठतः ।' इत्यारभ्य संहितापाठात् पदपाठस्य, ततः क्रमपाठस्य द्विगुणितफलहेतुत्वमुक्त्वा 'प्रत्यक्षरं तु लभते गायत्रीशतजं फलम्' इत्यनेनात्यन्तं ब्रह्मज्ञानहेतुभूतब्रह्मसूत्राणामतिशयितफलत्वोक्तिरपि वराहपुराणोक्ता सुष्ठूपपद्यते ।

एवमेव ब्रह्मसूत्राणामुत्तमत्वे पुराणान्तरवचनान्यप्यनुसन्धेयानि । यथा-

'व्यासोक्तब्रह्मसूत्राणां सकृदावर्तनात् नृप ।
गायत्र्याः सर्ववेदानां सहस्रावृत्तिपुण्यभाक् ।
अर्थतात्पर्यवचनं सूत्रपाठं पठन् द्विजः ।
दशसाहस्रगायत्रीजपपुण्यफलं लभेत् ।
स भवेत् सिद्धसङ्कल्पः परत्राप्यत्र किं पुनः ॥' इति ॥

एवं च वेदब्रह्ममीमांसाशास्त्रयोरुभयोरपि परविद्यात्वेऽपि श्रुतियुक्तिमूलत्वेन सर्वज्ञभगवद्बादरायणप्रणीतत्वेनाप्तमूलत्वेन च निरतिशयं प्रामाण्यं परविद्यात्वं च ब्रह्मसूत्राणामेवेति विज्ञेयम् ।

**कीदृशं कारणत्वम् ?**

ब्रह्म जगत्कारणमित्यत्र न वेदान्तिनो विवदन्ते । तथापि जगत्कारणत्वनिरूपणावसरेऽस्ति महती विप्रतिपत्तिः । भास्कराचार्यास्तु मन्यन्ते- 'यथा मृदेव घटात्मना परिणमते तथैव ब्रह्म विश्वात्मना परिणमते' इति । मायावादिनो मन्यन्ते- निर्गुणं निष्कलं ब्रह्मैव जगदारोपाधिष्ठानम् । एवं चात्र जगदारोपाधिष्ठानत्वमेव जगत्कारणत्वं ब्रह्मणः तटस्थं लक्षणं भवितुमर्हति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्युक्तं स्वरूपलक्षणम् इति । ब्रह्मणः जगत्कारणत्वमुपवर्णयन्तोऽपि रामानुजीया अभिन्ननिमित्तोपादानकारणमिति व्याचक्षते । विकारापर्यवसायि अवस्थान्तरयोगित्वमुपादानत्वमिति उपादानशब्दार्थः दर्शनेऽस्मिन्नभिहितः ।

भगवती श्रुतिस्तु ब्रह्मणः जगन्निमित्तत्वमात्रमाहेति स्फुटं विज्ञायते-

'यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।

यथा सतः पुरुषात् केशलोमानि
तथाक्षरात् सम्भवतीह विश्वम् ॥' (खं.१,मं.७) इति।

अनेनेदमुदितं भवति- नामरूपात्मकमिदं विश्वं प्रकृत्यात्मना निलीनं प्रलये भगवदुदरे निष्क्रियमेवावतिष्ठते। सृष्टिकाले भगवान्नारायणः स्वोदरस्थां प्रकृतिं बहिर्निधाय महत्तत्वाद्यात्मना परिणमय्यान्ते पञ्चमहाभूतांश्च ससर्ज। तानेव पञ्चमहाभूतानुपयुज्य ब्रह्माण्डं निर्ममे। एवं चात्र स्वोदरे विद्यमानस्य जडवस्तुनः बहिर्निक्षेपः तस्यैव विकसनं च सृष्टिरिति स्फुटं विज्ञायते। बहिर्निक्षिप्तस्यैव संहारकाले पुनर्जठरे निधानं संहार इति च गेगीयते। एष एवार्थ उपनिषदि निरवकाशं सोदाहरणं चोपपादितः। ऊर्णनाभिर्जन्तुविशेषः स्वोदरस्थं वस्तु बहिर्निष्कासयति स्थापयति च। कञ्चित्कालानन्तरं बहिर्निक्षिप्तमेव स्वोदरे स्थापयति। अनेनेदं स्फुटं विज्ञायते नोर्णनाभिर्जन्तुविशेष एव बहिःस्थितवस्त्वात्मना परिणमत इति। अनेन परिणामवादिनः भास्कराः निरस्ताः। नापि रज्जौ सर्प इव ब्रह्मणि नामरूपात्मकमिदं विश्वमारोपितम्। तथात्वे उपनिषदि रज्जुसर्पदृष्टान्त एव निरूप्येत। तथा च ब्रह्मणा स्वोदरस्थप्रकृत्यात्मकजगतः ज्ञानपूर्वं बहिःस्थापनमेव सृष्टिः, तथैव स्वोदरे स्थापनं संहार इति च विज्ञायते। स्फुटीकृतोऽयमर्थ उत्तरत्रोपनिषदि- 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इत्यादि। अथ च 'यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते।' इत्यत्र सृष्टेः ज्ञानपूर्वकत्वोपवर्णनेन ब्रह्मणः निमित्तत्वम्, सर्वज्ञत्वादिधर्मनिरूपणेन तस्य सगुणत्वं च सश्रद्धं प्रतिपादितम्। अनेन विवर्तवादिनो निरस्ताः।

यदि ब्रह्म जीवजडात्मकस्य समग्रस्यास्य विश्वस्य कारणं भवति तर्हि कार्यप्रपञ्चे नानाविधवैषम्यसद्भावाद् ब्रह्मणोऽपि वैषम्यादिदोषः। उच्यते-

नानाविधबीजानां जननयपि धरित्री यथा तत्तद्योग्यतानुसारेणाङ्कुरं जनयन्ती न वैषम्यादिदोषभाक् तथा ब्रह्म तत्तद्योग्यतानुसारेण अनादिकर्मानुसारेण च जीवानां सृष्टिं विदधत् न वैषम्यदोषभाक् ।

ननु कं प्रयोजनमुद्दिश्य विदधाति विश्वं ब्रह्म ? यदि न किमपि प्रयोजनं तर्हि 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायानुरोधेन प्रवृत्तिरेवानुपपन्ना । यदि किमपि प्रयोजनं प्रतीयते तर्हि प्राक् तस्याविद्य-मानत्वेन अपूर्णताप्राप्तिः । इयमाशङ्का श्रुत्यैव समाहिता- 'यथा सतः पुरुषात् केशलोमानि' इति । अयमाशयः-यथा निरोगस्य पुरुषस्य अना-यासेनैव केशलोमानि जायन्ते तथैव भगवताऽपि विश्वमिदं सृज्यते । अनायाससाध्यत्वादस्याः सृष्टेः न प्रयोजनप्रतीक्षा । दृश्यन्ते हि पर-प्रयोजनायैव नानाविधलोकसेवां कुर्वन्तः महान्तः । यद्यल्पमेधसां परार्थमेतादृशी प्रवृत्तिः तर्हि अनल्पचेतसः सर्वज्ञस्य पूर्णस्य भगवतः प्रवृत्तिरेतादृशीति किमस्ति प्रतिपादनीयम् । तदुक्तं भगवता सूत्रकारेण- 'न प्रयोजनवत्त्वात्' (ब्र.सू. २.१.३३) इति । सृष्ट्यादिना स्वस्य प्रयोजनाभावेऽपि परेषां तद्भावाद् अस्ति सार्थक्यमिति सूत्रार्थः । एवं चास्मिन् श्लोके सर्वज्ञं निर्विकारं ब्रह्म जगतः निमित्तकारणं भवत् परप्रयोजनायैव सृष्ट्यादिकं विधत्त इति विज्ञायते ।

### द्वा सुपर्णा सयुजा

अत्रैकस्मिन्नेव देहाख्ये वृक्षे जीव-परमात्मानौ पक्षिणाविव विहरतः, तत्र जीवः स्वानुष्ठितं कर्मफलमुपभुङ्क्ते दुःखी च प्रतिभातीति जीवस्वरूपमुप-वर्णितम् । ब्रह्म तु जीवेन कर्म कारयत् कुर्वदपि च निर्लेप एवावतिष्ठते । कर्मफलमभुञ्जन्नपि प्रकृष्टतया प्रकाशत इति ब्रह्मस्वरूपमुपवर्णितम् । एवं च विरुद्धधर्माधिकरणयोः जीवेश्वरयोः भेदोऽत्र कण्ठरवेणैव प्रतिपादितः।

अत्रैक आहुः- भगवती श्रुतिरियं प्रत्यक्षसिद्धमेव भेदमनुवदतीति न स्वार्थे तात्पर्यवती । श्रुतेस्तु निरस्तसमस्तभेदे निर्गुणे ब्रह्मण्येव तात्पर्यमिति । अत्रोच्यते- जीवेश्वरौ न प्रत्यक्षप्रमाणेन प्रतीयेते । ईश्वरस्तु सर्वथाऽप्रत्यक्षः । जीवस्तु अहमित्याकारकमानसप्रत्यक्षेण वा साक्षिप्रत्यक्षेण वा प्रतीयात् । तथापि स किं देहादिव्यतिरिक्तः न वेत्यत्र अस्ति महती विप्रतिपत्तिः । तत्स्वरूपस्य प्रत्यक्षवेद्यत्वेऽणुत्वमहत्वादिविषये देहेन्द्रियाद्यतिरिक्तत्वविषये च विप्रतिपत्तिर्नैव भायात् । तदेवमकामेनापि तत्स्वरूपं श्रुत्यैव सिद्ध्यतीति वक्तव्यम् । एवं च जीवस्याज्ञानबन्धनादिविकारान् बोधयन्ती श्रुतिः तद्विरुद्धधर्मवता ब्रह्मणा साकमभेदं कथं प्रतिपादयेत् । अथ च प्रत्यक्षसिद्धभेदमेव श्रुतिर्यद्यनुवदति तर्हि प्रत्यक्षानुमानसिद्धत्वादेव भेदस्य तद्विरुद्धार्थप्रतिपादकस्याऽगमस्य 'यजमानः प्रस्तरः' इत्यत्रेवार्थान्तरमुपवर्णनीयम् । अन्यथा आगमस्याप्रामाण्यं दुष्परिहरम् ।

अथैवमुच्येत- श्रुतिर्नानानिदर्शनैः जीवेश्वरस्वरूपं प्रतिपादयति । न कण्ठरवेण क्वापि भेदमिति । तन्न मनोरमम् । यदि विरुद्धधर्माधिकरणत्वेन श्रुतिर्जीवब्रह्मणी प्रतिपादयति किं ततोऽन्यद् भेदप्रतिपादनं नाम ? सिंहग्रामसिंहयोर्लक्षणे कथिते तादृशलक्षणविशिष्टपदार्थावगमे किं तयोर्न भेदः प्रतिभासते? वस्तुदर्शनमेव हि भेददर्शनम् । वस्तुस्वरूपत्वाद् भेदस्य । नाङ्गुलिद्वयवत् वस्तुभेदयोः प्रत्येकं प्रतिभासः । एवं च विरुद्धधर्माधिकरणत्वेन जीवेशयोः श्रुतौ प्रतिपादने भेदोऽपि स्फुटं प्रतीयत एव ।

एतेन प्रत्यक्षं वस्तुस्वरूपमात्रग्राहकमागमस्तु अभेदमवबोधयतीति वदन्तः परास्ताः । साक्षिप्रत्यक्षं हि अल्पज्ञत्वादिगुणविशिष्टत्वेनैव जीवं बोधयति । तद्विरुद्धस्वभावं चेश्वरम् । नाहमीश्वर इति सर्वेषां प्रतीतिसद्भावात् । एवं च प्रत्यक्षादिना प्रतीयमानो जीवः भिन्न एव प्रतीयत इति नागमः प्रत्यक्षविरुद्धमभेदं बोधयितुमलम् ।

**निरञ्जनः परमं साम्यमुपैति**

यदा जीवः विश्वकर्तारं रुग्मवर्णम् अनन्तकल्याणगुणपूर्णं ब्रह्म पश्यति तदा ब्रह्मणा परमं साम्यमुपैति, इति भगवती श्रुतिराह। अत्रोक्तं च साम्यं, समानानन्दरूपमेवेति केचन व्याचक्षते। तन्न मनोरमम्। प्रकृतिबन्ध-पापनिमित्तकसकलदुःखानाम् आत्यन्तिकनिवृत्तिरेवात्राभिहिता। एवं च निर्दुःखपूर्णानन्दत्वादिना साम्यमिह विवक्षितम्। अत एवाऽऽह भगवान्-

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥'(भ.गी.१४.२)इति।

अत्र दुःखाभावपरानन्दादिनैव साम्यमुपवर्णितमिति आनन्दसाम्यवादः प्रमाणबहिर्भूत एव।

**स वेदैतत् परमं ब्रह्मधाम**

अत्र भगवत्पादाचार्यैः अतिरोहितविज्ञानः, अज्ञानादिदोषानास्कन्दितः मुख्यप्राण एव ब्रह्मधामशब्देनाभिधीयत इति सप्रमाणं निरूपितम्। जीवस्य ब्रह्मसाक्षात्कारो नाम तारतम्यकक्ष्यान्तगकर्ममानिपुष्करान्तर्गत-ब्रह्मसाक्षात्कारपुरस्सरम्, अधिकार्युत्तमे सर्वेषां बिम्बभूते स्वहृदिस्थ-मुख्यप्राण एव स्वबिम्बरूपदर्शनम्। तच्च मुख्यप्राणप्रसादेन विना न कदापि सम्भवितुमर्हति। अतोऽच्छिन्नधर्मायं प्राणः सुधीभिः सदोपास्य इति उपनिषदाशयः विवृतः-

'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः।
उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम्॥
तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम्।
नित्यं प्राणे स्थितस्यैव विष्णोरावेश एव हि॥

....................................

मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।
ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु ॥' (पृ. ४२६) इति ।

**सर्व एकीभवन्ति**

अत्र जीवब्रह्मणोरभेद एव प्रतिपादित इव दृश्यते । न ह्यापातप्रतीत एव वाक्यार्थः । अपि तूपक्रमाद्यविरुद्धः युक्तिशुद्धश्चार्थः सर्वैरनुसन्धेयः । एवं च प्रकृते जीवब्रह्मणोः न स्वरूपैक्यमिह प्रतिपादितम्, अपि तु एकीभावशब्देन अविरोधः, अभिव्यक्ताप्राकृतज्ञानानन्दादिना सादृश्यं वैकुण्ठादिलोकस्थितिः (एकदेशस्थितिः) इह प्रतिपादिता । उक्तं भगवत्पादाचार्यैः-

'अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः ।
कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि ॥' (पृ. ४७४)

अत एवोत्तरत्र श्रुतिः- यथा स्यन्दमाना नद्यः समुद्रं प्राप्यादर्शनं गच्छन्ति, तथा जीवोऽपि ब्रह्म प्राप्याऽमुक्तैरज्ञेयः, अदृश्यश्च भवतीति व्याख्यास्यति । यद्यपि समुद्रं प्राप्तानां नदीनां स्वरूपनाश एव, न तत्र पार्थक्येन स्थितिरिति आपाततः प्रतीयते । परन्तु व्याख्यानतो विशेष-प्रतिपत्तिरिति न्यायेन पुराणेषु वेदव्याख्यानभूतेषु, समुद्रेषु पृथगेव विद्यमानानां नदीनां जलं मुख्यवायुः स्वीकृत्य मेघेषु संस्थाप्य यथाकालं प्रवर्षतीति श्रूयते-

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति ॥' (पृ. ४४३) इति ।

'सर्व एकीभवन्ति' इति वाक्यस्यापातप्रतीताभेदपरत्वे 'परेण' 'अव्ययेन' इति च तृतीया स्यात् न सप्तमी ।

'कर्माणि विज्ञानमयश्चात्मा' इत्यत्र कर्मणा ब्रह्मैक्यस्य श्रूयमाणत्वात् जीवेनेव कर्मणापि ब्रह्मैक्यमनभिप्रेतमङ्गीकरणीयं स्यात् ।

'रथ्याजलं गङ्गाजलेनैकीभूतम्', 'गोष्ठे गाव एकीभूताः', 'एकीभूता सेना' इत्यादाविवात्रापि एकत्वव्यवहार उपपादनीयः । तदुक्तं न्यायामृते-

'रथ्याजलं विष्णुपदीजलेनैकत्वमागतम् ।
इतस्ततो गता गावः सायमेकत्वमागताः ।
एकीभूता तु सा सेना पाण्डवानभ्यवर्तत ।
इत्यादिवद् भवेदेकीभवन्तीत्यादिवेदवाक् ।' इति ।

एवं चात्र एकस्थानस्थितत्व-अप्राकृतज्ञानानन्दादिरूपत्वादिधर्म-पुरस्कारेणैवैक्यवचनं प्रवृत्तमिति विज्ञेयम् ।

अपि च न जलस्य जलान्तरेणैकीभावः क्वचनानुभूयते । वृद्धेर्दर्शनात् । अतोऽत्र संश्लेष एवाभिमतः । अत एव 'तादृगेव' इति श्रुतिः सादृश्यमात्रं ब्रवीति ।

'नदीपाथःपरमाणूनां समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः' इति भामत्युक्तेः नदीसमुद्रदृष्टान्तेन जीवब्रह्मणोरभेदः वक्तुं न शक्यते । द्रवद्रव्यत्वेन अन्योन्यं व्यामिश्रणात्तु स्फुटं भेदाप्रतिभासः । तदुक्तं न्यायामृते-

'माषादिवच्च राश्यादौ सभादौ ब्राह्मणादिवत् ।
जले जलान्तरस्यापि संश्लेषो न त्वभिन्नता ॥' इति ।

### ब्रह्मविद् ब्रह्मैव भवति

अत्र भगवती श्रुतिः 'ब्रह्मविद् ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति' इत्याह । ब्रह्मविदां कुलेऽब्रह्मविदामपि जन्म पुराणेषु श्रूयते, अनुभूयते चाद्यापीति भगवत्पादैरस्या आशय उपवर्णितः । ब्रह्मविदां कुले ब्रह्मविदेव जायत इत्ययं नियमः देवसन्ततिविषयः । अपि च कृतयुगमात्रवर्ती । नराणां तु कचिज्ज्ञानिनामपि अज्ञानिनः जायन्त एव । ब्रह्मविदां ब्रह्मज्ञा जायन्त इत्ययं नियमः प्रायिक इति व्याख्यातम् । कलियुगे ब्रह्मज्ञानामपि कुलेऽब्रह्मविद एव प्रायः जायन्त इति कालस्य महती गतिः । तदुक्तम्-

'देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते ।
बलवद्धेतुतश्चान्ये यस्माद् ब्रह्मविदः सुराः ।
न सन्ततौ ब्रह्मविदो नराणां ज्ञानिनामपि ।
प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे ॥' इति ।

***

# माण्डूक्योपनिषत्

### उपनिषद आगतिक्रमः

सामशाखासम्बन्धिनीयमुपनिषत् भगवता वरुणदेवेन दृष्टा । अस्यामुपनिषदि उपनिषद अर्थविवरणात्मिकाः कारिकाः दृश्यन्ते । तत्रैते श्लोकाः भवन्ति-'बहिःप्रज्ञो विभुर्विश्वः' इत्यादिना । इमाः कारिकाः शङ्कराचार्याणां परमगुरुभिः श्रीमद्गौडपादाचार्यैः प्रणीताः । मध्वैर्माध्वैश्च श्रुतित्वेनान्यथैव गृहीता इति केषाञ्चन प्रवादः ।

वस्तुतस्तु इमाः कारिकाः ब्रह्मदृष्टा इति गारुडे श्रूयते । अत्र प्रमाणवचनानि -

'प्रमाणस्य प्रमाणं च बलवद्विद्यते मुने ।
ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ॥
अत्र श्लोका भवन्तीति चकारैव पृथक्पृथक् ।' इति ।

श्रीमद्भिः गौडपादाचार्यैः माण्डूक्यकारिकाः रचिताः । तत्र प्रथमं प्रकरणम् आगमप्रकरणम् । तत्र २९ श्लोकाः, द्वितीयं वैतथ्यप्रकरणम्, तत्र ३८ श्लोकाः, तृतीयमद्वैतप्रकरणम्, तत्र ४८ श्लोकाः, तुरीयम् अलातशान्तिप्रकरणम्, तत्र १०० श्लोकाः भवन्ति । तत्रादिमभागे आगमप्रकरणतया ये श्लोकाः व्यवह्रियन्ते ते तु ब्रह्मदृष्टाः । अद्वैतिनः माण्डूक्यकारिका इमा इति वदन्तोऽपि तत्रतत्र श्रुतित्वेन इमां कारिकाम् उदाहरन्तीति विशेषः । तत्र ब्रह्मसूत्रशाङ्करभाष्ये बृहदारण्यभाष्यवार्तिके नैष्कर्म्यसिद्धौ चेमाः कारिका इति उदाहृतमस्ति । तथा हि तद्वचनानि-

'मायामात्रं ह्येतद्यत्परमात्मनोऽवस्थात्रयमात्मनाऽवभासनं रज्वा इव सर्पादिभावेनेति । अत्रोक्तं वेदान्तार्थसम्प्रदायविद्भिराचार्यैः ''अनादि-मायया सुप्तः यदा जीवः प्रबुद्ध्यते । अजम् अनिद्रम् अस्वप्नम् अद्वैतं बुद्ध्यते तदा ॥'' (गौड.का. १.१६) इति ।' (ब्र.शां.भा. २.१.९, पृ. १९१)

'कार्यकारणबद्धौ तौ इष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥
विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥'

(सुरेश्वरीयबृहदारण्यकवार्तिकम्)

अस्यार्थस्य दृढिम्ने उदाहरणम्-

'कार्यकारणबद्धौ तौ ..... द्वौ तु तुर्ये न सिद्ध्यतः ॥' इति ।

(नैष्कर्म्यसिद्धौ सुरेश्वरीये, पृ. २८३)

तथैव भामत्यां कल्पतरौ गुरुचन्द्रिकायां केषुचिदद्वैतग्रन्थेषु च इमाः कारिका इति उदाहृताः ।

इमाः श्रुतय इत्यपि आनन्दगिरि-सायणाचार्य-अद्वैतानन्द-धर्मराजाध्वरि-मधुसूदनसरस्वती-कृष्णानन्दसरस्वती-अप्पयदीक्षितप्रभृतिभिः विद्वत्प्रवरैरुदाहृताः-

'अनादिमायया सुप्तः यदा जीवः प्रबुद्ध्यते' इत्यादिश्रुतिष्वेकवचनप्राप्तैकत्वविरोधेनोदाहृतश्रुतीनामेकत्वपरत्वाभावात् ।'

(अद्वैतसिद्धिः, सं.२, पृ. ३५१,एकजीवाज्ञानकल्पितत्वोपपत्तिवादः)

'न लीलादौ व्यभिचारः ।' (वेदान्तकल्पतरुः)

'...क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे । देवस्यैषः .. स्पृहा ।' इति माण्डूक्योपनिषदि तात्कालिकानन्दप्रयोजनलीलात्वमेव ।

(ब्र.शां.भा.क.परिमळे २.१.३२, पृ. ४८१)

(यद्यप्याप्तकामपदघटिता श्रुतिः बृहदारण्यके (६.४.६)उपलभ्यते । तस्याः श्रुतेः जीवन्मुक्तविषयकत्वं सर्वसम्मतम् । अत्रोदाहृता श्रुतिस्तु सृष्टिकर्तृविषयिणीति स्फुटमनयोर्भेदः ।)

बृहदारण्यकवार्तिकव्याख्यायाम् आनन्दगिरिनिर्मितायाम्-

'विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥

अत्रापि श्रुतिं पठति- विश्वो हीति ॥ इत्युदाहृतम् ।

'प्रमाणस्य प्रमाणं च बलवद्विद्यते मुने ।
ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ॥
अत्र श्लोका भवन्तीति चकारैच पृथक्पृथक् ।' इति ।

श्रीमद्भिः गौडपादाचार्यैः माण्डूक्यकारिकाः रचिताः । तत्र प्रथमं प्रकरणम् आगमप्रकरणम् । तत्र २९ श्लोकाः, द्वितीयं वैतथ्यप्रकरणम्, तत्र ३८ श्लोकाः, तृतीयमद्वैतप्रकरणम्, तत्र ४८ श्लोकाः, तुरीयम् अलातशान्तिप्रकरणम्, तत्र १०० श्लोकाः भवन्ति । तत्रादिमभागे आगमप्रकरणतया ये श्लोकाः व्यवह्रियन्ते ते तु ब्रह्मदृष्टाः । अद्वैतिनः माण्डूक्यकारिका इमा इति वदन्तोऽपि तत्रतत्र श्रुतित्वेन इमां कारिकाम् उदाहरन्तीति विशेषः । तत्र ब्रह्मसूत्रशाङ्करभाष्ये बृहदारण्यभाष्यवार्तिके नैष्कर्म्यसिद्धौ चेमाः कारिका इति उदाहृतमस्ति । तथा हि तद्वचनानि-

'मायामात्रं ह्येतद्यत्परमात्मनोऽवस्थात्रयमात्मनाऽवभासनं रज्ज्वा इव सर्पादिभावेनेति । अत्रोक्तं वेदान्तार्थसम्प्रदायविद्भिराचार्यैः ''अनादि-मायया सुप्तः यदा जीवः प्रबुद्ध्यते । अजम् अनिद्रम् अस्वप्नम् अद्वैतं बुद्ध्यते तदा ॥'' (गौड.का. १.१६) इति ।' (ब्र.शां.भा. २.१.९, पृ. १९१)

'कार्यकारणबद्धौ तौ इष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥
विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥'

(सुरेश्वरीयबृहदारण्यकवार्तिकम्)

अस्यार्थस्य दृढिम्ने उदाहरणम्-

'कार्यकारणबद्धौ तौ ..... द्वौ तु तुर्ये न सिद्ध्यतः ॥' इति ।

(नैष्कर्म्यसिद्धौ सुरेश्वरीये, पृ. २८३)

तथैव भामत्यां कल्पतरौ गुरुचन्द्रिकायां केषुचिदद्वैतग्रन्थेषु च इमाः कारिका इति उदाहृताः ।

इमाः श्रुतय इत्यपि आनन्दगिरि-सायणाचार्य-अद्वैतानन्द-धर्मराजाध्वरि-मधुसूदनसरस्वती-कृष्णानन्दसरस्वती-अप्पयदीक्षितप्रभृतिभिः विद्वत्प्रवरैरुदाहृताः -

'अनादिमायया सुप्तः यदा जीवः प्रबुद्ध्यते' इत्यादिश्रुतिष्वेकवचनप्राप्तैकत्वविरोधेनोदाहृतश्रुतीनामेकत्वपरत्वाभावात् ।'
(अद्वैतसिद्धिः, सं.२, पृ. ३५१,एकजीवाज्ञानकल्पितत्वोपपत्तिवादः)

'न लीलादौ व्यभिचारः ।' (वेदान्तकल्पतरुः)

'...क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे । देवस्यैषः .. स्पृहा ।' इति माण्डूक्योपनिषदि तात्कालिकानन्दप्रयोजनलीलात्वमेव ।

(ब्र.शां.भा.क.परिमळे २.१.३२, पृ. ४८१)

(यद्यप्याप्तकामपदघटिता श्रुतिः बृहदारण्यके (६.४.६)उपलभ्यते । तस्याः श्रुतेः जीवन्मुक्तविषयकत्वं सर्वसम्मतम् । अत्रोदाहृता श्रुतिस्तु सृष्टिकर्तृविषयिणीति स्फुटमनयोर्भेदः ।)

बृहदारण्यकवार्तिकव्याख्यायाम् आनन्दगिरिनिर्मितायाम्-

'विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥

अत्रापि श्रुतिं पठति- विश्वो हीति ॥ इत्युदाहृतम् ।

शाङ्करभाष्ये (२.१.३३)-

यदि नाम लोके लीलास्वपि किञ्चित्सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत तथापि नैवात्र किञ्चित्प्रयोजनमुत्प्रेक्षितुं शक्यते 'आत्मकामश्रुतेः'। (पृ. २१७)

विवेकचूडामणौ-

'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।'

इति ब्रूते श्रुतिः साक्षात् सुषुप्तावनुभूतये ॥ (शङ्कराचार्यः)

विष्णुसहस्रनामशाङ्करभाष्ये-

'एतद्वै सत्यकाम .... ............... ।

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।

ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥' इति ।

'ओं तद् ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तत्सत्यम् । (तै.उ. ४.२९) इत्यादिभ्यः श्रुतिभ्यः ।

(विष्णुसहस्रनामभाष्यम् पृ. १०७-१०८)

श्रीभाष्ये-

" 'अनृतेन हि प्रत्यूढाः' (छा ८.३.२) .... 'अनाद्यविद्यया सुप्तः यदा जीवः प्रबुद्ध्यते' (मां. २.२१) इत्यादिभिर्निर्विशेषं चिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते ।" इति उदाहृतकारिकाणां श्रुतित्वमेवोक्तम् ।

'ब्रह्मणि पुनः प्रयोजनवत्त्वं सम्भावयितुमपि न शक्यते । आप्तकाम-श्रुतिविरोधात् ।' इति वल्लभाचार्यैरपि श्रुतित्वमेव प्रतिपादितम् ।

एवं शङ्कर-रामानुज-भास्कर-वल्लभप्रभृतिभिः इमाः कारिकाः श्रुतित्वेनैव व्यवहृता इति इमाः श्रुतय एवेति द्वैतिनां व्यवहारः निर्दुष्ट इत्यवधेयम् ।

**उपनिषत्सारः**

परमपुरुषं श्रीमन्नारायणं ध्यायन् वरुण इमामुपनिषदं ददर्शेति प्रागेवाभिहितम् । 'ओमित्येतदक्षरमिदं सर्वम्' इत्यारभ्यमानेयमुपनिषत् जीवस्य जाग्रत्-स्वप्न-सुषुप्ति-मुक्तिरूपावस्थाचतुष्टये नियामकानि विश्व-तैजस-प्राज्ञ-तुरीयरूपाणि व्याख्यास्यति । तत्र भगवान् विश्वः समेषां जीवानां जाग्रदवस्थायां तत्तद्विषयदर्शनं प्रदाय अनुगृह्णाति । अयं तु सप्ताङ्गैकोनविंशतिमुखः स्थूलपदार्थभुक् । अस्योपासनया विनायकः गजमुखः सम्पन्नः ।

जाग्रत्पदार्थानुभवजन्यवासनोपादानकपदार्थान् स्वप्नावस्थायां प्रदर्शयन् जीवस्यानुग्राहको भवति तैजसः । सुषुप्त्यवस्थायाम् आत्म-काल-सुख-विज्ञानमन्तरा नान्यदवबोधकः भवति प्राज्ञः । तुरीयस्तु जीवन्मुक्त्यवस्थायां मुक्त्यवस्थायां चानुग्राहकः । तेषां रूपाणां स्थानानि च एवमुपवर्णितानि-

'दक्षिणाक्षिमुखे विश्वः मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञः त्रिधा देहे व्यवस्थितः ॥'

'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।'

'हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः ।
देवः स सर्वजीवानां गम्यत्वात् समुदीरितः ॥
भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः ।
ईशानामपि मुक्तानामीशानः सोऽननाच्छ्रुतः ॥'

**त्रीणि भगवद्रूपाणि**

अत्रैके, विश्व-तैजस-प्राज्ञरूपाणि अवस्थाविशेषेण जीवस्यैव भवन्ति । जाग्रदवस्थापन्नो जीवः विश्व इति, स्वप्ने तैजस इति,

सुषुप्त्यवस्थायां प्राज्ञ इति च व्यवह्रियत इति व्याचक्षते । तत्तु प्रमाणविरुद्धत्वादुपेक्ष्यम् । अत्र हि प्रमाणानि-

'न तत्र रथाः न रथयोगाः न पन्थानः भवन्त्यथ रथान् रथयोगान् पथः सृजत इति बृहदारण्यके उपक्रम्य, 'स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तान् अभिचाकशीति शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक-हंसः ।' इत्यादौ वासनामयपदार्थान् जीवस्य प्रदर्शयन् तस्यानन्द-मुत्पादयतीति श्रूयते । अत्र शारीरमिति स्फुटं जीवमभिधाय तन्नियामकतया तैजसोऽत्र भगवान् प्रतिपादितः ।

तथैव 'प्रियया स्त्रिया सम्परिष्वक्तः न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममकामं रूपं शोकान्तरम् ।' इति सुषुप्त्यवस्थायां नियामकतया भगवान् प्राज्ञः श्रूयते । वेदव्याख्यानात्मके श्रीमद्भागवते विश्व-तैजस-प्राज्ञ-तुरीयरूपाणि तु भगवत एवेति स्फुटं भाषितमस्ति-

'वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्ममूर्तिर्व्यूहोऽभिधीयते ।
स विश्वतैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ।
अर्थेन्द्रियाशयैर्ज्ञानैर्भगवान् परिभाष्यते ॥' (भाग.१२.११.२१-२२)

अत्र 'ब्रह्ममूर्तिर्व्यूहोऽभिधीयते' इत्युपक्रम्य 'सः' इति व्यूहमेव परामृश्य तस्यैवार्थेन्द्रियादिनियामकत्वेन विश्वतैजसादिरूपत्वं स्फुटं प्रतिपादितम् ।

**भगवान् बद्धः किम् ?**

यद्यपि माण्डूक्ये 'कार्यकारणबद्धौ तौ इष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु' इत्यादिना विश्वतैजसादिनामानि बद्धस्य जीवस्यैव भवन्तीति श्रूयते । तस्याशयस्तु मध्वाचार्यैरेवमुपवर्णितः- अत्र बद्धशब्दः

बन्धनस्वामित्वं प्रतिपादयति। उक्तं चानुव्याख्याने- 'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते' इति । श्रुतिरपि 'स बद्धः स दुःखी स बन्धयतीति दुःखयतीति' इत्यादिना बन्धस्वामित्वादेव बद्धादिशब्दसमन्वयं करोति। एवं च 'कार्यबद्धः विश्वः' इत्यस्यायमर्थः- 'कार्यं नाम अज्ञानकार्यभूतोऽहंममतादिभ्रमः । जीवनिष्ठभ्रम-रूपजाग्रत्कारणबन्धस्वामी विश्व इत्यर्थः । तैजसस्तु जीवनिष्ठभ्रम-तत्कारणाज्ञानस्वामित्वात् कारणबद्ध उच्यते। प्राज्ञस्तु तत्कारणाज्ञान-रूपसुप्तिबन्धस्वामित्वात् बद्ध उच्यते । तुरीये तु नैवंविधा व्यापारा भवन्तीति तत्स्वरूपमुपवर्णितम् ।

**स्थूलभोगः कथं भगवतः ?**

भगवान् जाग्रदवस्थायां जीवेषु स्थित्वा विषयपदार्थसम्बन्धेन तस्य सुखं जनयति । तत्तदिन्द्रियेषु नियामकतया स्थित्वा जीवेन्द्रियैः जीवभोग्यानेव पदार्थान् भुङ्क्ते। नाशुभं क्वापि पिबति जीव इव। तदुक्तम्-

'स एतैरिन्द्रियैर्विष्णुः भोगाननुभवत्यजः ।
स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः ।
भुङ्क्ते तदिन्द्रियैर्भोगान् क्षुरितैरिन्द्रियैः स्वकैः ॥' इति ।

तर्हि 'अनश्नन्न्यः' इत्याथर्वणश्रुतिविरोध इति चेन्न, अस्वाद्वेव । यथा जीवः स्वाद्विति विभावयन्नत्ति तथात्र भगवत अदनं प्रतिषिद्धम् । सारभोक्तृत्वं तु विद्यत एव ।

अथवा भुञ्जानोऽपि जीवः परतन्त्रदुःखरूपाशुभभोगानेव भुङ्क्ते । न तथा परमेश्वर इति ज्ञापयितुम् 'अनश्नन्' इत्युक्तम् ।

यद्वा जीववदुपजीवनार्थाशनं भगवतो नास्तीति सूचयितुम् 'अनश्नन्' इत्युक्तम् । तदुक्तम्- 'अन्यो निरन्नोऽपि बलेन भूयान्' (भाग.) इति ।

अथवा यद्यपि भगवान् अवतारेषु स्थूलमपि भुङ्क्ते भक्तानुग्रहार्थम् । तथापि आत्मान्तरात्मरूपैरदनाभावात् 'अनश्नन्' इत्युपपन्नमिति तत्त्वप्रकाशिकाभावदीपे (१.२.११) चतुर्धा समाधिरभिहिता ।

**तामसानां सुषुप्तौ सुखानुभवः ?**

सुषुप्तिकालावच्छेदेन भगवान् प्राज्ञः विषयसम्बन्धं विनैव जीवस्य स्वरूपगतमेव सुखमभिव्यञ्जयति । अत एव सर्वेषामनुभवः 'एतावन्तं कालमहं सुखमस्वाप्सम्' इति । तदुक्तं षट्प्रश्नभाष्ये-

'सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुखं भवेत् ।
सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत् ॥' इति ।

अत्र विशिष्य मुक्तियोग्यानामित्यनभिधाय सामान्यतः स्वसम्बन्धात् जीवानां सुषुप्तौ सर्वेषां सुखानुभवो भवतीति ज्ञायते । अथाप्यत्र विमर्शनीयमस्ति । तथा हि- भगवत्सम्बन्धात् सुषुप्तौ सज्जीवस्य स्वरूपे विद्यमानमेव सुखमभिव्यज्यत इत्युक्तौ न कोऽपि दोषः । 'सौषुप्तं तन्निदर्शनम्' इत्याद्युक्तेः । तथापि नित्यसंसारिणां तमोयोग्यानां च कथं सुषुप्तौ सुखानुभवः ? मिश्रजीवस्वरूपस्य मिश्रत्वात् तेषां दुःखस्यापि सुषुप्तावङ्गीकरणीयत्वात् । अथ तामसस्य दुःखैकरूपत्वात् सुषुप्ति-कालावच्छेदेन सुखाभावात् सुखानुभवः कथम् ? अतः कथं केवलसुखानुभव उच्यते ?

अत्रैके व्याचक्षते- मुक्तौ तामसानामपि प्राकृतसुखानुभवोऽस्ति । न च तदा मनस उपरतत्वेन तत्परिणामरूपस्य सुखस्य उत्पत्त्यसम्भव इति वाच्यम् । मनसः शक्तिद्वयमस्ति । ग्राहकशक्तिः परिणामशक्तिरिति । सुषुप्तौ ग्राहकशक्तेरुपरतत्वेऽपि परिणामशक्तेरनुपरतत्वात् । परमेश्वर-

सन्निधानरूपसामग्रीविशेषात् विनैव विषयसन्निधानं सुखोत्पत्तिर्भवतीति । अत्र च गारुडप्रमाणवचनमुदाहृतम्-

'सृजत्यनित्यसौख्यं तु स्वसङ्गात्तामसेष्वजः ।
सुप्तिकाले तु भगवान् तत्सुखं प्राकृतं स्मृतम् ॥' इति ।

अत एव षट्प्रश्नटीकायाम्- 'परमेश्वरसन्निधानसामर्थ्येनोद्भूतं सुखमात्मज्ञानेनानुभवति' इति त्रिविधजीवसाधारण्येनोक्तम् । एवं नित्यसंसारिस्वरूपस्य सुखदुःखोभयात्मकत्वेऽपि तामसजीवस्य दुःखैकरूपत्वेऽपि भगवत्सन्निधानविशेषात् सुखमुपपन्नम् । अत्रोपष्टम्भकतया वायुपुराणवचनमामनन्ति-

'सृतियोग्यस्वरूपस्य सुखदुःखात्मकत्वतः ।
ईशेशवशतस्तत्र सुखमात्रं प्रतीयते ॥' इति ।

अपरे त्वाहुः- सौषुप्तिकानुस्मृतिः सुखमुल्लिखन्त्यपि 'भारापगमे सुखी संवृत्तोऽहम्'इतिवद् दुःखाभावविषया । तामसानां स्वरूपे सुखाभावात् । ननु साक्षिणः नियतयथार्थरूपत्वेन सुखदुःखादीनां च साक्षिग्राह्यत्वेन, सुखादौ भ्रमानुपपत्तेश्च कथमेवं व्याख्यायते । अत एव 'दुःखे च सुखमानिनः' इत्यत्र सुखसाधने दुःखसाधने च लक्षणाऽऽश्रितेति चेत्, उच्यते । साक्षिणः याथार्थ्यनियमस्य सज्जीवविषयकत्वेनासज्जीवानां साक्षिण अयथार्थत्वेन दुःखाभावे सुखभ्रान्तिरुपपन्ना । न च 'साक्षिसिद्धे त्वसंशयात्' इत्युक्तेः अनवस्थापरिहारद्वारेण निश्शङ्कप्रवृत्तिहेतुभूते साक्षिणि कथं भ्रान्तिरिति वाच्यम् । तेषां साक्षिणः नियतयाथार्थ्यसमकक्ष्यस्य नियमेनासञ्जात-बाधभ्रमस्य सत्त्वेन तेषामपि साक्षिणि दोषशङ्काभावात् तत्र परीक्षाऽनपेक्षणेन अनवस्थाभाव इत्याहुः ।

केचन, तामसजीवस्यापि परमेश्वरसन्निधानसामर्थ्यात् भिन्नाभिन्नतया जातं सुखं स्वरूपज्ञानेनानुभूयते सुप्ताविति प्रतिपादयन्ति । अत एव टीकायाम्- 'परमेश्वरसन्निधानसामर्थ्यात्' इति सामान्येनोक्तम् । अत्र षट्प्रश्नटीकोपबृंहितं तत्त्वप्रकाशिकाभावबोधमुदाहरन्ति- 'सज्जीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्य अन्येषां परमात्मसम्बन्धलक्षण-निमित्तोत्पन्नसुखस्यानुभवात् । यथोक्तं षट्प्रश्नभाष्यटीकायाम्- 'यस्मादेवं परमेश्वरतेजसाभिभूतो भवति तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तस्मिन् शरीरे भवति' इति ।

## सृष्टिस्वरूपम्

चतूरूपो भगवान् समेषां जीवानां जडप्रपञ्चस्यापि स्रष्टेति श्रूयते । तदुक्तं 'प्रभवः सर्वभावानां सतामिति विनिश्चयः' इति । अत्र 'सतामिति विनिश्चयः' इति पदेन भगवतः जगज्जन्मादिकारणत्वं न काल्पनिकम् अपि तु सतामेतन्मतं श्रुतेश्चात्राभिप्रायो वरीवर्तीति प्रतिपादितम् । अस्मिन्नेव सन्दर्भे सृष्टिस्वरूपविषये काश्चन विप्रतिपत्तयोऽपि प्रदर्शिताः निराकृताश्चोपनिषदि ।

केचन, विश्वमिदं जीवजडात्मकं भगवत्परिणामभूतमिति वदन्ति । यथा घटः मृत्परिणामभूतः । अयं च वादः न समञ्जस इति 'सृष्टिचिन्तकाः' इति पदेन श्रुतिरवादीत् । न कोऽपि स्वस्थात्मा स्वाभाविकं ज्ञानानन्दादि-रूपं परित्यज्य जडात्मना परिणामं कामयते । तस्मादयं वादः नैव समी-चीनः ।

अपरे (विवर्तवादिनः)तु मन्यन्ते-सृष्टिरियं 'स्वप्नमायासरूपा'इति । यथा स्वाप्नपदार्थाः सुप्तात्मविवर्तभूताः, तथा सृष्टिरियमविद्यमानैव प्रतिभातीति अस्याः मिथ्यात्वं मनुते । अयं चाऽशयः न सम्मतः श्रुतेरिति

विज्ञापयितुं 'विकल्पिता' इत्युक्तम् । तर्हि सृष्टिस्वरूपविषये श्रुतेः कुत्रैदम्पर्यम् इत्याशङ्कायां भगवती श्रुतिराह- 'इच्छामात्रं प्रभोः सृष्टिः' इति । अनेन विज्ञायते सृष्टिरियं भगवतैव क्रियमाणा भगवत इव पारमार्थिकीति । अत्र 'इति सृष्टौ विनिश्चिताः' इति श्रुतिः स्वाभिप्रायं दृढयति । तथैव कालात् प्रकृतेः परमाणुभ्यः सृष्टिं पराकुरुते च- 'कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः' इति ।

अथ च सृष्टेः प्रयोजनं किमिति चिन्तयन्ती अनादिकालत एव विद्यमानान् अभिप्रायविशेषान् श्रुतिरनूद्य निराकरोति । केचन भगवतः भोगार्थमियं सृष्टिरिति व्याचक्षते । ते तु न वैदिकाः । तदुक्तं 'भोगार्थं सृष्टिरित्यन्ये' इति । अपरे तु ब्रुवते अनेन च भगवतः अपूर्वः कश्चनाऽनन्दो जायत इति । तदपि न मनोरमम् । तस्याप्तकामत्वात् । अत एवाह भगवती 'क्रीडार्थमिति चापरे' इति । तर्हि सृष्टिः किमर्थं भगवता कृतेत्यत्र 'देवस्यैषः स्वभावोऽयम्' इति व्याचष्टे ।

अनेनेदं विज्ञायते- केवलं परार्थं प्रवर्तयन्तः दृश्यन्तेऽद्यापि नैके महान्तः, येषां क्वचिदपि कदापि प्रयोजनं किमपि नापेक्ष्यते । आप्तकामस्य नित्य-पूर्णस्य भगवतः सृष्ट्यादिना किं प्रयोजनं भवितुमर्हति ? न किमपि । तर्हि परार्थेयं प्रवृत्तिरित्युक्तं भवति । या चेयं सृष्टिप्रक्रिया सा त्वत्यन्त-मनायाससाध्या । अत एव प्रयोजननिरपेक्षा । या च क्रिया बहुवित्त-व्ययायाससाध्या भवति तत्र प्रयोजनापेक्षा लोकेऽनुभूयते । भगवता क्रिय-माणा च सृष्टिः स्वभावभूतेति वदन्ती श्रुतिः आयासलेशं पराचकार । तदुक्तम् 'आप्तकामस्य का स्पृहा' इति । तदेतदुक्तं भगवता बादरायणेन 'न प्रयोजनवत्वात्' (ब्र.सू. २.१.३३) इति ।

यदि सृष्ट्यादिना किमपि प्रयोजनमस्ति भगवतः तर्हि सोऽपूर्णः सम्पन्नः।

यदि किमपि प्रयोजनं न विद्यते तर्हि प्रवृत्तिर्विफला न सम्भावयितुमपि शक्यते । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इत्यभियुक्तोक्तेः । तत्रोक्तं बादरायणेन 'न प्रयोजनवत्त्वात्' (ब्र.सू. २.१.३) इति ।

'न' सृष्ट्यादिना किमपि प्रयोजनं भगवतः नास्ति । 'प्रयोजनवत्वात्' तस्याऽप्तकामत्वादित्यर्थः । 'आप्तकामस्य का स्पृहा' इति श्रुत्यादिनेश्वरप्रयोजनस्य प्रतिषेधात् ।

तर्हि व्यर्थेयं सृष्टिः सम्पन्नेति चेत्, 'न' । नेयं सृष्टिः व्यर्था भवितुम् अर्हति । 'प्रयोजनवत्त्वात्' भगवतः प्रयोजनाभावेऽपि परेषां जीवानां प्रयोजनसद्भावात् सृष्टिरियमर्थवती ।

'प्रयोजनमनुद्दिश्य' इति न्यायेन स्वप्रयोजनाभावेन कथं भगवतः प्रवृत्तिरिति चेत्, तत्रापीदमेवोत्तरम् । अत्र नञ आवृत्तिः । 'न' सृष्टिर्न व्यर्था । 'नप्रयोजनवत्वात्' । न समासोऽयम् । सुखोद्रेकात् गानादाविव, व्याख्यानादौ हस्तचलनादिवच्च प्रयोजनराहित्येऽपि प्रवृत्तिः । सृष्टेरनायास-साध्यत्वान्न प्रयोजनापेक्षेति समुदितार्थः । बहुवित्तव्ययायासादिसाध्ये कर्मणि प्रयोजनापेक्षा, अन्यत्र तु नेति सार्वजनीनमेतत् । एवं च सृष्टिरियं पारमार्थिकी, न मिथ्या, अस्ति चास्याः निर्माता भगवान्नारायण इति सिद्धम् ।

**प्रपञ्चो यदि विद्येत**

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

आपातत इयं श्रुतिः- 'जीवजडात्मकोऽयं प्रपञ्चः यदि विद्येत तर्हि कदाचिन्निवर्तेत । अतोऽयं भेदप्रपञ्चः मायाकल्पित एव । ब्रह्म तु

पारमार्थिकमिति प्रतिपादयति' इति भाति । नैकप्रमाणोदाहरणेनास्याः श्रुतेराशयः श्रीमदाचार्यैरेवमुपवर्णितः- देहेन्द्रियगेहादिषु योऽयं स्वकीयत्व-स्वामित्वाद्यभिमानः जीवस्य प्रतिभाति, स त्वप्रामाणिक एव । सर्वस्यापि जगतः परमात्मस्वामिकत्वात् । अभिमानादेव सर्वमिदं मदीयं मत्स्वामिकमिति भाति । सोऽयं स्वामित्वादिभ्रमः यदि पारमार्थिकः स्यात् तर्हि ज्ञानेन न निवर्तेत । निवर्तते च परात्मज्ञानात् स्वामित्वादिभ्रमः । तेन ज्ञायते नायं स्वाभाविक इति । न तु मिथ्या । यद् ब्रह्म निर्गुणमिति, विश्वं जीवस्वामिकमिति च प्रतीयते तद् द्वैतमन्यथाज्ञानम् । वस्तु-स्वरूपानुगुणं यथार्थं हि ज्ञानम् अद्वैतमुच्यते । वस्तुस्वरूपविपरीतं द्वैतमुच्यते । तत्तु 'मायामात्रम्' ईश्वरेच्छया जीवकर्माद्यानुगुण्येन निर्मितम् ईश्वरप्रसादादेव निवर्तते च । तदुक्तं 'बन्धको भवपाशेन भवपाशाच्च मोचकः' इति । 'अद्वैतं परमार्थतः' इत्यस्य सर्वोत्कृष्टं ब्रह्म अद्वैतं समाधिक-रहितमित्यर्थः । तदेतत्प्रपञ्चितं ब्रह्मतर्के-

'तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।
वस्तुतोऽसौ न चैवास्ति परमस्य वशे यतः ॥
तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते ।
अतः स विद्यत इति ह्यङ्गीकारो भवेद्यदि ।
तथाऽपि भगवज्ज्ञानात् स निवर्तेदसंशयः ॥' इति ।

'परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा ।
तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा ।
जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च ॥
परमार्थात् पराद् विष्णोर्जातमिच्छावशादनु ।
मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम् ॥
उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरच्युतः ॥' इति च ।

एवमेव 'विकल्पः' शरीरगेहादिसम्बन्धः अज्ञानादिना स्वीयत्वेन कल्पितः उपदेशान्निवर्तते । परब्रह्मणि ज्ञाते द्वैतमन्यथाज्ञानं न तिष्ठतीत्युत्तरमन्त्रार्थः । एवं च नेमौ श्लोकौ विश्वमिथ्यात्वप्रतिपादकाविति श्रीमदाचार्याः प्रत्यपीपदन् ।

श्लोकद्वयस्य तत्त्वनिर्णये वर्णकान्तरमुक्तं भगवत्पादाचार्यैः । तत्र प्रपञ्चो नाम पञ्चविधः भेद उच्यते । जड-जडयोः, जीव-जीवयोः, जीव-जडयोः, जड-परमात्मनोः, जीव-परमात्मनोश्चेति पञ्चविधोऽयं भेदः प्रपञ्च-शब्देनोच्यते । यद्ययं भेदः 'विद्येत - भवेत' उत्पद्येत तर्हि निवर्तेत । न च निवर्तते । तस्मादनादिरेवायम् । 'मायामात्रमिदम्' इत्यत्र माया नाम भगवत्प्रज्ञा, तया ज्ञातत्वात् रक्षितत्वाच्च भेदोऽयं पारमार्थिकः । सर्वोत्तमत्वाद् भगवान् अद्वैत उच्यते । 'उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते ।' अज्ञाते अज्ञानावस्थायामेव अज्ञानिनां मते वा 'द्वैतं' भेदप्रपञ्चः न विद्यते । विज्ञानिनां तु भेदः पारमार्थिक एव । तदुक्तं परमश्रुतौ-

'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ।
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना ।
तस्मात्सत्यमिति प्रोक्तं परमो हरिरेव तु ।।'

तदियमुपनिषत् वाङ्मनसोरगोचरां चित्रातिचित्रामिमां सृष्टिं विष्णुकृतां

प्रबोधयन्ती सर्वज्ञत्वादिगुणविशिष्टं च तं परिचाययन्ती समेषां साधकानां ज्ञानाभिवृद्धिं वितनुत इत्यत्र न सन्देहगन्धः ।

प्रागस्मादेव संशोधनमन्दिरात् श्रीवादिराजतीर्थीय-राघवेन्द्रतीर्थीययुताः सप्तोपनिषदः संशोध्य मुद्रापिता आसन् । अधुना तु ईश-केन-कठ-प्रश्नोपनिषदः नानाव्याख्योपबृंहिताः प्रथमसम्पुटे संशोध्य प्रदत्ताः । द्वितीयेऽस्मिन् भागे तैत्तिरीय-मुण्ड-माण्डूक्योपनिषदः श्रीवादिराज-तीर्थीय-राघवेन्द्रतीर्थीयटिप्पणीभिः साकं भाष्य-व्याख्यानोपयोगि-श्रीनिवासतीर्थीयटिप्पणीं संयोज्य मुद्रापिताः । तालपत्राध्ययनपुरस्सरं नैकेषु स्थलेषु शुद्धपाठा अत्र समुपदर्शिता इति अस्त्यस्य सम्पुटस्य किञ्चिद्वैशिष्ट्यम् ।

**श्रीवादिराजतीर्थश्रीचरणाः**

पद-वाक्य-प्रमाणपारावारपारीणानां श्रीमद्वादिराजतीर्थश्रीचरणानां टिप्पण्यत्र समायोजिता । इयं च टिप्पणी उपनिषद्-भाष्यगत-रहस्यार्थाविष्करणपटीयसी परकीयव्याख्यानाकौशलप्रदर्शनपरा च राजतेतमाम् । युक्तिमल्लिकादिशताधिकप्रबन्धप्रणयनेन द्वैतसम्प्रदाये प्रथिता अमी सर्वयतिपुङ्गववन्द्याः विद्वज्जनाराधितकमनीयचरणाश्च ।

**श्रीराघवेन्द्रतीर्थाः**

माध्वसम्प्रदाये 'राघवेन्द्रतीर्थाः' 'परिमळाचार्याः' इत्यादिनाम्ना प्रसिद्धा अमी षड्दर्शनाचार्याः न्यायसुधापरिमळ-चन्द्रिकाप्रकाश-तर्कताण्डवभावदीपादि-पञ्चाशदधिकप्रबन्धप्रणेतारः । अमी उपनिषदां मृदुमधुरया शैल्या प्रतिश्लोकखण्डार्थप्रणयनेन विद्यार्थिजनान् विद्वज्जनांश्चान्वगृह्णन् । तत्रतत्र खण्डार्थे एतैर्विहितः परमतविमर्शो विद्वज्जनानन्दकरो भवति । एवमेषां व्याख्याऽप्यत्र समायोजिता ।

**श्रीश्रीनिवासतीर्थाः**

एते विद्वन्मूर्धन्याः श्रीमदुत्तरादिमठीयरघूत्तमस्वामिपादानां (१५४१-१६४६) विद्यासन्ततिप्रवर्तकाः'। एतेषां गुरुचरणाः श्रीमद्यादवाचार्याः सुतनिर्विशेषं श्रीनिवासस्य शास्त्ररहस्यमुपदिष्टवन्तः। श्रीनिवासतीर्थाणां गुरुभक्तिरसाधारणी। पश्यन्तु कोविदास्तेषां वचनप्रसूनमालाम्-

यत्पादस्मृतिमात्रेण पाण्डित्यं प्राप्यते नरैः।
तान् वन्दे यादवाचार्यान् वेदेशमुनिसेवकान्॥ -*अणुभाष्यटीका*

यैरहं शुकवत् सम्यक् शिक्षितोऽस्मि कृपालुभिः।
तान् वन्दे यादवाचार्यान् वेदेशमुनिसेवकान्॥ -*माण्डूक्यभाष्यटीका*

श्रीमध्वशास्त्रं समुदीर्य यस्मिन् विश्वासहेतोः समदर्शयन् ये।
प्रदानसूत्रप्रतिपाद्यभावं वन्दे गुरूंस्तान् यदुवर्यसञ्ज्ञान्॥
*आथर्वणोपनिषद्भाष्यविवृतिः*

**ग्रन्थसेवा**

सकलशास्त्रपारङ्गता एते पञ्चाशदधिकग्रन्थप्रणयनेन माध्ववेदान्तं प्रवृद्धमकार्षुः। न्यायामृतटिप्पणी-न्यायसुधाटिप्पणी-तत्त्वप्रकाशिका-टिप्पणी-दशप्रकरणटिप्पण्यादिग्रन्थाः श्रीनिवासतीर्थैर्विरचिताः।

सुस्पष्टा सरला मन्द-बुधजनोभयरञ्जिनी व्याख्यैतेषां मनोह्लादिका। अत एवैतेषां शास्त्रव्याख्याकौशलं पाठ-प्रवचनदीक्षां चासाधारणां समवलोक्य पद-वाक्य-प्रमाण-पारावारपारीणाः श्रीमद्राघवेन्द्रतीर्थ-श्रीमच्चरणाः यतिसम्बोद्ध्य-'तीर्थ' इत्युपाधिप्रदानेन अन्वगृह्णन् इति ऐतिह्यं प्राक्तनानां जागर्ति। यावद् बाधकप्रमाणं नोदेति तावदैतिह्यसत्यत्वं सर्ववादिसिद्धमेव। श्रीनिवासतीर्थीयव्याख्या, मातृकात्रयसाहाय्येनात्र

यथामति शोधिता । अत्र चानेकेऽपूर्वाः विषयाः विमृष्टाः विदुषां सुग्रहा एव ।

प्राङ्मुद्रितेभ्यः पुस्तकेभ्योऽधुना मुद्रिते ग्रन्थे नैकत्र शुद्धपाठः लब्धः। अत्र कानिचिन्निदर्शनानि-

| पृ./पं. | अशुद्धम् | शुद्धम् |
|---|---|---|
| १९ | परब्रह्मणो वरणादेव | परब्रह्मणो विष्णोर्वरणादेव |
| | सम्यक् चापि तं स्वरूपं तेजः | सम्यक् चायितं स्वरूपतेजः |
| | लौकिप्रजादिकमपि... | ब्रह्मचर्यम् ।' |
| | | लौकिकप्रजादिकमपि.... |
| २८ | प्रवचनेन मुक्तो | प्रवचनेन युक्तो |
| २९ | विविधाः | 'वि' विविधगोत्रोत्पन्नाः |
| ६४ | इति वाक्यं | इति ओङ्कारस्य |
| ६५ | देवशब्दोपमार्थे | देवशब्दपर्यायः |
| १३६ | यदुत्तरकालीना नासौ | यदुत्तरकालीना नासावसौ |
| १३६ | सत्यदादिशब्दादिशब्दवाच्यं | सत्यदादिशब्दवाच्यं |
| १८६ | उच्यमानत्वेन न | उच्यमानत्वेन |
| २०३ | नापि जागराद्यसङ्कल्पक | नापि जागराद्यसविकल्पकं |
| २०५ | पदार्थस्वरूपानुभावेऽपि | पदार्थस्वरूपानुभवेऽपि |
| २७१ | वेददुर्गमाः | देवदुर्गमाः |
| ३१० | अनन्तत्वाद्धेतोः | अनन्तत्वाद्धेतोः |
| | अवाच्यत्वात् | साकल्येन |
| | निर्वक्तुमशक्यत्वात् | निर्वक्तुमशक्यत्वाद् वा |

| | | |
|---|---|---|
| ३१२ | रसमेवेति आनन्दरूपमेव | रसमेव लब्ध्वा |
| ३२५ | अन्नाख्योऽयं भगवद्रूपम् | अन्नाख्यं भगवद्रूपम् |
| ३७५/१० | मद्गुरुणो | यद्गुरुणो |
| ३७५/१५ | तथाक्षरात् इति वाक्यं नास्ति | तथाक्षरात् ... चेत्यर्थः |
| ३७७/२३ | सा परमक्षरं | सा अपरमक्षरं |
| ३९०/५ | सामग्रीविनष्टत्वात् | सामग्रीनिविष्टत्वात् |
| ३९०/५ | पटोत्पत्त्यविनष्टत्वेन | पटोत्पत्त्या विनष्टत्वेन |
| ३९१/१७ | तेन स्तः | ते न स्तः |
| ४३८/७ | पञ्चदशकलादेव तदन्यपदेन । कर्म | पञ्चदशकलादेवतानां तदन्यकर्मविज्ञानमयात्मनां |

## कृतज्ञतासमर्पणम्

ग्रन्थस्यास्य यथामति शोधने पेजावरमठाधीशानां श्रीश्रीमद्विश्वेशतीर्थ-श्रीमच्चरणानां परमानुग्रह एव प्रधानं कारणम् । पूर्णप्रज्ञविद्यापीठे मादृशानाम् आश्रयप्रदानेन द्विविधवित्तप्रदानेन नैकविधमन्त्रोपदेशेन च अनुग्राहकाणां गुरुचरणानां प्रणतिततिभिरेव केवलाभिः कार्तज्ञ्यं व्याहरामि । तपःशरीराणां लोकानुग्रहतत्पराणां गुरुचरणानां सर्वदाऽनुग्रहं सादरं प्रार्थये ।

परःशतप्रबन्धप्रणयनेन विद्वन्मान्याः राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिपदमलङ्कुर्वाणाः श्रीमन्तः राधावल्लभत्रिपाठी-महाभागाः अस्मासु असाधारणां प्रीतिं प्रकाश्य ग्रन्थप्रकाशने उत्तेजनं प्राददुः । तेभ्यः प्रणतयः समर्प्यन्ते ।

तथैव विद्वत्प्रवराः प्रशासनकर्मण्यपि कुशलाः श्रीमन्तः रामानुज-

देवनाथन् महाभागाः समुचितमार्गदर्शनेनास्मान् सन्तोषयामासुः । तेभ्यः प्रणतयः विज्ञाप्यन्ते ।

श्री पि.एन्. वत्समहोदयाः वित्तविभागाधिकारिणः संशोधन-मन्दिरेऽस्मिन् विशिष्टां प्रीतिं प्रकटयन्तः समुचितवित्तप्रदानेन ग्रन्थ-प्रकाशनोत्साहमभिवर्धयन् । तेभ्यः प्रणतयः ।

विद्यापीठे अस्माकं न्यायवेदान्तशास्त्रग्रन्थपाठकाः विद्वत्प्रवराः श्रीमन्तः प्राचार्याः डि. प्रह्लादाचार्याः अधुना संशोधनमन्दिरस्यास्य अध्यक्षपीठे विराजमानाः मार्गदर्शनेन मामन्वगृह्णन् । तेभ्यः प्रणतयो विज्ञाप्यन्ते ।

अस्मिन् ग्रन्थे श्रीनिवासतीर्थीयव्याख्याने, भाष्यव्याख्यानानन्तरं खण्डार्थविवरणं च विहितमस्ति । भाष्य-व्याख्यानस्य खण्डार्थस्य च यत्र नैकपत्रैः व्यवधानं प्रतीयते तत्र अध्येतृसौकर्यार्थं पुनरपि उपनिषत्-संयोजनं कृतम् । आथर्वणोपनिषदः श्रीनिवासतीर्थीयव्याख्या-संयोजनावसरे लिप्यन्तरपरिवर्तने (Font conversion) श्रीमन्तः महिदासाचार्याः महान्तमुपकारमादधुः । तथैव श्रीमन्तः कड्डि बदरीनारायणाचार्याः भाष्यटङ्कनेन महान्तमुपकारं चक्रुः । उभयोर्विद्वत्प्रवरयोः अधमर्णोऽयं जनः ।

अज्ञानेन, अनवधानेन चात्र दोषाः सम्भाविताः । श्रीमदानन्दतीर्थ-भगवत्पादाचार्याणां यथायोग्यसेवा मया कर्तव्येति धिया प्रवृत्तोऽहमस्मि । हंसक्षीरन्यायेन विद्वांसः गुणग्रहणपराः भवेयुरिति विज्ञापयामि ।

इति विद्वज्जनविधेयः

**डा. ए.वि. नागसम्पिगे**

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गळूरु

| | | |
|---|---|---|
| ३१२ | रसमेवेति आनन्दरूपमेव | रसमेव लब्ध्वा |
| ३२५ | अन्नाख्योऽयं भगवद्रूपम् | अन्नाख्यं भगवद्रूपम् |
| ३७५/१० | मद्गुरुणो | यद्गुरुणो |
| ३७५/१५ | तथाक्षरात्<br>इति वाक्यं नास्ति | तथाक्षरात् ...<br>चेत्यर्थः |
| ३७७/२३ | सा परमक्षरं | सा अपरमक्षरं |
| ३९०/५ | सामग्रीविनष्टत्वात् | सामग्रीनिविष्टत्वात् |
| ३९०/५ | पटोत्पत्त्यविनष्टत्वेन | पटोत्पत्त्या विनष्टत्वेन |
| ३९१/१७ | तेन स्तः | ते न स्तः |
| ४३८/७ | पञ्चदशकलादेव<br>तदन्यपदेन । कर्म | पञ्चदशकलादेवतानां<br>तदन्यकर्मविज्ञानमयात्मनां |

## कृतज्ञतासमर्पणम्

ग्रन्थस्यास्य यथामति शोधने पेजावरमठाधीशानां श्रीश्रीमद्विश्वेशतीर्थ-श्रीमच्चरणानां परमानुग्रह एव प्रधानं कारणम्। पूर्णप्रज्ञविद्यापीठे मादृशानाम् आश्रयप्रदानेन द्विविधवित्तप्रदानेन नैकविधमन्त्रोपदेशेन च अनुग्राहकाणां गुरुचरणानां प्रणतिततिभिरेव केवलाभिः कार्तज्ञ्यं व्याहरामि। तपःशरीराणां लोकानुग्रहतत्पराणां गुरुचरणानां सर्वदाऽनुग्रहं सादरं प्रार्थये।

परःशतप्रबन्धप्रणयनेन विद्वन्मान्याः राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिपदमलङ्कुर्वाणाः श्रीमन्तः राधावल्लभत्रिपाठी-महाभागाः अस्मासु असाधारणां प्रीतिं प्रकाश्य ग्रन्थप्रकाशने उत्तेजनं प्राददुः। तेभ्यः प्रणतयः समर्प्यन्ते।

तथैव विद्वत्प्रवराः प्रशासनकर्मण्यपि कुशलाः श्रीमन्तः रामानुज-

देवनाथन् महाभागाः समुचितमार्गदर्शनेनास्मान् सन्तोषयामासुः । तेभ्यः प्रणतयः विज्ञाप्यन्ते ।

श्री पि.एन्. वत्समहोदयाः वित्तविभागाधिकारिणः संशोधन-मन्दिरेऽस्मिन् विशिष्टां प्रीतिं प्रकटयन्तः समुचितवित्तप्रदानेन ग्रन्थ-प्रकाशनोत्साहमभिवर्धयन् । तेभ्यः प्रणतयः ।

विद्यापीठे अस्माकं न्यायवेदान्तशास्त्रग्रन्थपाठकाः विद्वत्प्रवराः श्रीमन्तः प्राचार्याः डि. प्रह्लादाचार्याः अधुना संशोधनमन्दिरस्यास्य अध्यक्षपीठे विराजमानाः मार्गदर्शनेन मामन्वगृह्णन् । तेभ्यः प्रणतयो विज्ञाप्यन्ते ।

अस्मिन् ग्रन्थे श्रीनिवासतीर्थीयव्याख्याने, भाष्यव्याख्यानानन्तरं खण्डार्थविवरणं च विहितमस्ति । भाष्य-व्याख्यानस्य खण्डार्थस्य च यत्र नैकपत्रैः व्यवधानं प्रतीयते तत्र अध्येतृसौकर्यार्थं पुनरपि उपनिषत्-संयोजनं कृतम् । आथर्वणोपनिषदः श्रीनिवासतीर्थीयव्याख्या-संयोजनावसरे लिप्यन्तरपरिवर्तने (Font conversion) श्रीमन्तः महिदासाचार्याः महान्तमुपकारमादधुः । तथैव श्रीमन्तः कड्डि बदरीनारायणाचार्याः भाष्यटङ्कनेन महान्तमुपकारं चक्रुः । उभयोर्विद्वत्प्रवरयोः अधमर्णोऽयं जनः ।

अज्ञानेन, अनवधानेन चात्र दोषाः सम्भाविताः । श्रीमदानन्दतीर्थ-भगवत्पादाचार्याणां यथायोग्यसेवा मया कर्तव्येति धिया प्रवृत्तोऽहमस्मि । हंसक्षीरन्यायेन विद्वांसः गुणग्रहणपराः भवेयुरिति विज्ञापयामि ।

इति विद्वज्जनविधेयः

**डा. ए.वि. नागसम्पिगे**

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गळूरु

# विषयानुक्रमणिका

| विषयः | पृ.सं. |
|---|---|

## तैत्तिरीयोपनिषद्भाष्यम्


| | |
|---|---|
| मङ्गलाचरणम् | १ |
| उपनिषद ऋषिदेवतादिनिरूपणम् | ३ |
| सुबहुदर्शिषु परोक्तानुवादरूपमेव वचः | ५ |
| शान्तिर्मन्त्राः | ७ |
| ब्रह्मविद्याभ्यसनेच्छोरधिकारिणः पूर्वं शिक्षणीयाः विषयाः | ९ |
| लोकादिषु नारायणादिरूपाणि ध्येयानि | १२ |
| मेधादिप्रार्थनाविद्याः | २० |
| शिष्यसम्पत्तिप्रार्थना | २७ |
| व्याहृतिविद्यानिरूपणम् | ३१ |
| व्याहृतिवाच्यमूर्तीनामधिष्ठाननिरूपणम् | ३३ |
| जीवनियामकतया परमात्मनः स्थितिप्रकारनिरूपणम् | ५० |
| अनिरुद्धादेरग्न्याद्यधिष्ठाने उपास्तिप्रकारनिरूपणम् | ५२ |
| वासुदेवादिचतुर्मूर्तीनामधिभूतमध्यात्मं चोपास्तिनिरूपणम् | ५९ |
| ब्रह्मविद्यार्थिनः पूर्वभावियमनियमादिनिरूपणम् | ६८ |
| अन्तेवासिनां शिक्षणीयाः नियमाः | ७९ |
| विघ्नविघातार्थं शान्तिमन्त्राः | ८७ |
| ब्रह्मस्वरूपनिरूपणम् | ८७ |
| सर्वस्रष्टृत्वप्रपञ्चनम् | ९० |
| अन्नमयप्रकरणम् | ९० |
| प्राणमयप्रकरणम् | ९८ |

| विषयः | पृ.सं. |
|---|---|
| मनोमयप्रकरणम् | १०१ |
| विज्ञानमयप्रकरणम् | १०४ |
| आनन्दमयप्रकरणम् | १०६ |
| ज्ञानिनोऽखिलाः ब्रह्म प्राप्नुयुः | १२४ |
| विष्णोः स्वातन्त्र्यज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं च निरूपयति | १२९ |
| ब्रह्मैव सत्त्यदादिशब्दवाच्यम् | १३५ |
| 'अथातोऽनु' इत्यादिमन्त्रखण्डार्थः | १४९ |
| मुक्तावानन्दतारतम्यमस्तीति निरूपणम् | १५७ |
| नियामकभगवद्रूपेष्वभेदकथनम् | १७४ |
| 'सोऽश्नुते' इत्यादिमन्त्रखण्डापव्याख्याननिरसनम् | १८२ |
| अन्नमयादयः पञ्चापि ब्रह्मैव | १८४ |
| सैषानन्दस्येत्योक्तानन्दमीमांसा मुक्तिसम्बन्धिनी | १९० |
| मुक्तानां स्वरूपभूतकामोऽस्तीति प्रतिपादनम् | १९६ |
| भेदस्य धर्मिस्वरूपत्वसमर्थनम् | १९७ |
| वस्तुनाशे तत्स्वरूपभूतः भेदः न नश्यति | २१६ |
| विष्णुरेव चक्षुर्मयः श्रोत्रमयः वाङ्मयश्च | २२६ |
| विद्यार्थे वसतीच्छयाऽगतं स्वागतीकुर्यात् | २३० |
| सर्वदृष्टये पूर्वे वयसि ब्रह्मोपास्यम् | २३३ |
| अधिष्ठानविशेषे विष्णुरूपोपासनानिरूपणम् | २३६ |
| 'अन्नं न परिचक्षीत' इत्यादिमन्त्रार्थविमर्शः | २४४ |
| 'भृगुर्वै वारुणिः' इत्यादिमन्त्रखण्डार्थः | २४७ |
| स्वस्वरूपनिदेशपुरस्सरं भगवन्नमनम् | २६१ |

| विषयः | पृ.सं. |
|---|---|
| बळित्थासूक्तार्थकथनम् | २६२ |
| मङ्गलाशंसनम् | २७० |
| शान्तिमन्त्राः | २९५ |
| वागादौ वृष्ट्यादौ च स्थितरूपाणां न भेदः | ३२७ |

## मुण्डकोपनिषद्भाष्यम्

| | |
|---|---|
| आथर्वभाष्ये मङ्गलाचरणम् | ३३० |
| आथर्वणोपनिषद आगतिक्रमः | ३३२ |
| अपरविद्यास्वरूपम् | ३३५ |
| परविद्यास्वरूपम् | ३३५ |
| कृते समग्रमपि वैदिकवाङ्मयं विष्णुपरम् | ३३९ |
| ता एव परमा विद्याः | ३४३ |
| ब्रह्मस्वरूपम् | ३४६ |
| ब्रह्म जगतः नोपादानं न वा विवर्तकारणम् | ३४७ |
| ज्ञानपूर्विका विश्वसृष्टिः | ३४७ |
| यदा अक्षर(ब्रह्म)प्रतिपादकाः वेदाः तदा परविद्या उच्यन्ते | ३५२ |
| यज्ञानुष्ठानप्रकारनिरूपणम् | ३५४ |
| विहितयज्ञकर्माद्यननुष्ठाने प्रत्यवायः | ३५४ |
| होमाधिकरणनिरूपणम् | ३५५ |
| सम्यग्यज्ञादिकुर्वतां फलम् | ३५५ |
| भगवदविषयककर्मणां बन्धकत्वनिरूपणम् | ३६४ |
| विष्णुप्रीतयेऽनुष्ठितानि कर्माणि ज्ञानद्वारा मुक्तिफलकानि | ३७२ |
| विरक्तः गुरुमेव समाश्रयेत् | ३७३ |
| विश्वस्रष्टा विष्णुः | ३७५ |

| विषयः | पृ.सं. |
|---|---|
| विष्णुकृतायाः सृष्टेः निरूपणम् | ३७५ |
| विष्णुरेव विजिज्ञास्यः | ३९४ |
| प्रणवेन ब्रह्म विद्धि | ३९७ |
| विष्णुरेव मुक्तिप्रदः | ३९८ |
| विष्णुर्गुणपूर्ण इति ध्यायते | ४०० |
| हृदयाकाशे विष्णुर्विराजते | ४०० |
| अपरोक्षज्ञानमहिमा | ४०२ |
| सूर्यमण्डले विष्णुरुपास्यः | ४०३ |
| जीवेशाभेदप्रतिषेधः | ४०७ |
| अश्नन्नपि जीवः दुःखी ईशस्त्वनश्नन् नित्यसुखी | ४१२ |
| निर्दुःखत्वपूर्णानन्दत्वादिना साम्यम् | ४१४ |
| जीवन्मुक्तस्थितिः | ४१७ |
| हरिभक्तस्यैव तत्प्राप्तिः | ४१९ |
| प्राणप्रसादान्मुक्तिः | ४२१ |
| आत्मवेदिनः महिमा | ४२५ |
| ब्रह्मज्ञाः मुक्ताः भवन्ति | ४२६ |
| यं भक्तत्वेन भगवान् वृणुते तस्यैव स लभ्यः | ४३० |
| श्रवणाद्युपाया अनुष्ठेयाः | ४३० |
| अपरोक्षानन्तरमेव न मुक्तिः | ४३२ |
| एकीभावो न स्वरूपैक्यम् | ४३४ |
| मुक्तौ नामरूपादिनाऽविमुक्त एव ब्रह्मणा सह तिष्ठति | ४४२ |
| ब्रह्मविदः फलम् | ४४५ |
| उपनिषदध्ययने अधिकारिणः के ? | ४४९ |

| विषयः | पृ.सं. |
|---|---|
| उपनिषदध्ययने अधिकारिणः के ? | ४४९ |
| भाष्येऽन्तिममङ्गलाचरणम् | ४५२ |
| **माण्डूकोपनिषद्भाष्यम्** | |
| प्रणवप्रतिपाद्यं ब्रह्म | ४९१ |
| अकारप्रतिपाद्यः जाग्रदवस्थाप्रेरकः विश्वः | ५०५ |
| वासनामयवस्तुस्रष्टा उकारप्रतिपाद्यः तैजसः | ५०६ |
| सुषुप्तौ सुखदः प्राज्ञः | ५११ |
| ब्रह्मदृष्टमन्त्रसंवादः | ५१२ |
| सृष्टिः विष्णोरिच्छामात्रेण भवति | ५२२ |
| निरपेक्ष एव विष्णुः सृष्टिं विधास्यति | ५२३ |
| नादप्रतिपाद्यः तुर्यरूपी विष्णुः | ५३७ |
| ब्रह्मदृष्टमन्त्रसंवादनिरूपणम् | ५३८ |
| विश्व-तैजस-प्राज्ञ-तुर्यस्वरूपम् | ५३९ |
| भगवत्प्रसादेनापरोक्षधीः | ५५३ |
| बन्धः न स्वाभाविकः | ५५४ |
| भगवति विज्ञाते मिथ्याज्ञानं निवर्तते | ५५४ |
| विश्वादिरूपाणां प्रणवांशप्रतिपाद्यत्वनिरूपणम् | ५७३ |
| उक्तेऽर्थे ब्रह्मदृष्टश्लोकनिरूपणम् | ५८१ |
| तुरीयोपासकस्य फलम् | ५९३ |
| अन्यत्त्यागेन ब्रह्मज्ञानं सम्पाद्यमित्यत्र ब्रह्मदृष्टमन्त्रनिरूपणम् | ५९५ |
| उपनिषद्वाक्यकोशः | ६६७ |
| भाष्योदाहृतप्रमाणवचनानां वर्णानुक्रमणिका | ६६६ |
| एतद्ग्रन्थस्थव्याख्योदाहृतप्रमाणवचनानां सूची | ६७३ |

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तैत्तिरीयोपनिषद्भाष्यम्

(मङ्गलाचरणम्)

सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीड्यं विष्ण्वाख्यं सर्वदेमि सुप्रेष्ठम् ॥




श्री वादिराजयतिविरचितभाष्यप्रकाशिका

सुमतिभिरनुमेयं शुभ्रकायं सखायं
सुखमयमनपायं मुक्त्युपायं विमायम् ।
नृहयमहममेयं ध्येयमाम्नायगेयं
सदयमसदजेयं श्रीसहायं भजेयम् ॥

॥ श्री श्रीनिवासतीर्थविरचिततैत्तिरीयोपनिषद्भाष्यपदार्थदीपिका ॥

ज्ञानानन्दमुखैः सर्वगुणैः पूर्णमभीष्टदम् ।
गुर्वाराधितपादाब्जं भजेऽहं बादरायणम् ॥ १ ॥
श्रीमदानन्दतीर्थार्यचरणौ प्रणमाम्यहम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥ २ ॥
श्रुतिक्षीराब्धिमामथ्य धीमन्दरमहीभृता ।
प्राप्ता न्यायसुधा येन तं जयीन्द्रमहं भजे ॥ ३ ॥
येन वेदान्तभाष्याणि विवृतानि महात्मना ।
तं वन्दे व्यासतीर्थाख्यं जयराजनिषेवकम् ॥ ४ ॥
विद्याधिराजादिमुनीन् तथा वेदेशयोगिनः ।
छान्दोग्यभाष्यसट्टीकाकर्तॄन् वन्दे निरन्तरम् ॥ ५ ॥

श्रीमध्वशास्त्रं समुदीर्य मेऽस्मिन् विश्वासहेतोः समदर्शयन्ये ।
प्रदानसूत्रप्रतिपाद्यभावान् वन्दे गुरूंस्तान्यदुवर्यसञ्ज्ञान् ।। ६ ।।
अथैतत्कृपया श्रीनिवासाख्यायुतसूरिणा ।
तैत्तिरीयोपनिषदां भाष्यं व्याक्रियते मया ।।
बुधैरपि सुदुर्बोधे ग्रन्थे यन्मम साहसम् ।
तत्पारयन्तु निपुणाः गुरुपादरजःकणाः ।। ८ ।।

इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः आत्यन्तिकाऽनिष्टनिवृत्तीष्टप्राप्तिहेतुभूतभगवत्स्वरूपज्ञापनाय प्रवृत्तापीयं तैत्तिरीयोपनिषदन्यथाव्याख्यानावरुद्धत्वेन न तज्ज्ञापनासमर्थेति मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद् व्याचिख्यासुः स्वयमन्तरायविधुरोऽपि अनवरतमीश्वरप्रणवकायकरणवृत्तिरपि निरन्तरायप्रारिप्सितपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परावगतमेतदुपनिषत्प्रतिपाद्यगुणवद्भगवत्स्तुतिरूपं मङ्गलं शिष्यशिक्षणार्थं कुर्वन्नेव तच्छरणागतिं प्रार्थयते - **सत्यं ज्ञानमित्याद्यपद्येन ।।** एमीत्युत्तमपुरुषपदप्रयोगादेव अहमिति कर्ता लभ्यते । एमि प्राप्नुयाम् । इण् गताविति धातोः । शरणमिति शेषः । तथा च अहं सत्यत्वादिगुणोपेतं ब्रह्म शरणम् एमि इति क्रियाकारकसम्बन्धः । स्तुतिपदानां च विशेष्यप्रशंसैव प्रयोजनमिति सिद्धमेव । सत्यादिशब्दार्थस्तु वक्ष्यमाणरीत्यावगन्तव्यः । 'सर्वशक्ति' सर्वविषयशक्त्युपेतं 'एकं' स्वगुणरूपाद्यभिन्नम् । 'सर्वैर्देवैः' एतदुपनिषत्प्रवर्तकैर्ब्रह्मवरुणादिभिः 'ईड्यं' स्तुत्यम् । 'ईड स्तुतौ' इति धातोः । विष्ण्वाख्यं सर्वत्र प्रविष्टत्वेन विष्णुशब्दवाच्यम् । 'विष्णुः सर्वप्रवेशित्वात्' इति गीताभाष्योक्तेः । ब्रह्मेति विशेष्यनिर्देशः । न मम परब्रह्मशरणागतिप्रार्थनं विघ्नविरहादिप्रयोजनोद्देशेन कादाचित्कम् । किन्तु स्वभावादेवेत्याशयेन उक्तम्- **सर्वदेति ।।** अत्र 'सत्यं

ज्ञानमनन्तम्' इति सत्यत्वादित्रयं 'आनन्दो ब्रह्म' इत्यनेन 'को ह्येवान्यात्' इत्यादिना च आनन्दत्वं 'इदं सर्वमसृजत' इति सर्वसृष्ट्युक्त्याऽर्थात् सर्वशक्तित्वं 'आनन्दो ब्रह्मेति व्यजनात्' इत्यनेनैव गुणाभिन्नार्थकमेकत्वं 'स यश्चायं पुरुषे' इत्यादिना रूपाभेदार्थकं चैकत्वं 'तन्नम इत्युपासीत' इति सर्वदेवेड्यत्वं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति विष्णुत्वं चोक्तमिति ज्ञातव्यम् । अधिकार्युत्तमवाय्ववतारभूतस्य भगवत आनन्दतीर्थमुनेः परब्रह्म सुप्रेष्ठमिति प्रसिद्धमेवेति ज्ञातव्यम् । अधिकृतैव हि देवता स्वविषय-ग्रन्थप्रबोधादिकं सम्पादयतीति भावः ॥ १ ॥

## भाष्यम्

(उपनिषद ऋषिदेवतादिनिरूपणम्)

**'आदित्यसंस्थिताद् विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् ।**
**'तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः ॥**
**'विष्णुमस्तौत्तथा प्राह शन्नोमित्रादिका श्रुतिः ।**
**'यदुवाच हरिः सूर्यमण्डलस्थः परः पुमान् ॥**
**'ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु ।**
**'शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ॥**
**'भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् ।**
**'मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः ।**
**'सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम् ।'**

**इत्यादि यजुस्संहितायाम् ॥**

## पदार्थदीपिका

''यो ह वाऽविदितार्षेच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वा अधीते अध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवामीयते पापीयान्

भवति'' इति श्रुतौ ऋष्याद्यज्ञात्वा विद्याभ्यासिनोऽनर्थोक्तेस्तज्ज्ञानं तावदवश्यमपेक्षितम् । तत्र ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यति । प्रायश्छन्दोबद्धत्वं नास्त्येव । तदुपनिबद्धे त्वक्षरपरिगणनया तज्ज्ञानं सुशकमेवात ऋषिदेवते ज्ञापयन् आह- **आदित्यसंस्थितादिति** ।। आदित्याद् ब्रह्मा शुश्रावेति वचनान्तरगतिकथनाय आदित्यसंस्थितात् विष्णोरित्युक्तम् । आदित्यसंस्थितात् विष्णोः सकाशाद् आदौ ब्रह्मा भगवत्स्वरूपं शुश्रावेति ग्राह्यम् । श्रुत्वा च हरिं तुष्टाव । स ब्रह्मा यथा येन प्रकारेण हरिं तुष्टाव तं प्रकारं वरुणाय प्राहेति वक्तव्यम् । पश्चात् स वरुणः तेनैव प्रकारेण हरिं तुष्टावेति वर्तते । स वरुणो येन प्रकारेण हरिं तुष्टाव तं प्रकारं स्वपुत्राय भृगवे प्राहेति वक्तव्यम् । अनन्तरं स भृगुर्वरुणोक्तेनैव प्रकारेण विष्णुं अस्तौदिति योजना द्रष्टव्या । स प्रकारः क इत्यत आह- **तथेति** ।। तं प्रकारमित्यर्थः । अत्र 'तथा प्राह शन्नोमित्रादिकाश्रुतिः' इति वचनेन ब्रह्मादिभिर्दैवैः विष्ण्वादिभ्यः श्रुत्वा कृता स्तुतिरन्यैवास्ति । शन्नोमित्र इत्यादिका श्रुतिस्तु केवलं तत्समाख्यारूपैव नत्वेषैव विष्ण्वादिभिर्ब्रह्मादीन् प्रत्युपदिष्टा हरिं प्रति ब्रह्मादिकृतस्तुतिरूपा चेति प्रतीयते । अतस्तां प्रतीतिं यजुःसंहितायामेव स्थानान्तरगतवाक्योदाहरणेन वारयति- **यदुवाचेति** ।। 'सुपां सुलुक्' इत्यादिना बहुवचनस्यैकवचनादेशः । तथा च यत् यानि तत् तानीत्यर्थः । ब्रह्मण इति शेषः । सूर्यमण्डलमध्यस्थः सूर्योऽपि भवतीत्याशङ्कापरिहाराय 'परः पुमान् हरिः' इत्युक्तम् । वरुणे वरुणाय । शन्नोमित्रादिभिः 'शन्नो मित्रः शं वरुणः' इति प्रभृतिभिः । अन्नादिमयं पञ्चात्मकं अन्नमयादिरूपेण पञ्चात्मकमित्यर्थः । मयटो विकारार्थकत्वात् कथमन्नमयादीनां पञ्चानां विष्णुत्वमित्याशङ्क्य मयटां प्राचुर्यमेवार्थ इत्याशयेनोक्तम्- **पूर्णमिति** । तथा च प्रचुरान्नादिरूपमित्यर्थः । विस्तरस्तु 'महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत्' (ब्र.सू.अ. १.१.६. श्लो. २७७) इत्याद्यनुव्याख्यानोक्तप्रकारेण

द्रष्टव्यः । अच्युतं अन्नमयादिशब्दार्थभूतैर्गुणैः कदापि च्युतिरहितम् । मुक्तगीतावसानैः 'एतत्सामगायन् आस्ते' इत्यारभ्य 'य एवं वेद' इत्यन्तैः। तथा च सूर्यमण्डलस्थः 'परः पुमान् हरिः' 'यत्' यानि 'शन्नोमित्र' इत्यादिवाक्यानि ब्रह्मणे प्राह तत् तान्येव वाक्यानि ब्रह्मा वरुणे वरुणाय प्राह । स वरुणः तान्येव वाक्यानि भृगवे प्राह। स भृगुः तैः वरुणोपदिष्टैरेव 'शन्नोमित्र' इत्यादिभिर्मुक्तगीतावसानैर्वाक्यैः पूर्णमच्युतं अन्नमयादिपञ्चात्मकं हरिम् अस्तुवत्। अनन्तरं शन्नोमित्रादिभिर्मुक्तगीतावसानैर्वाक्यैः तेन भृगुणा स्तुतो जनार्दनः सुप्रीतः सन् ज्ञानं शाश्वतीं स्वात्मनि भक्तिं च प्रददौ इत्यादियोजना द्रष्टव्या। अनेनास्या उपनिषदो विष्णुब्रह्मवरुणभृगवः ऋषयः। अन्नमयादिरूपी हरिर्देवता यथासम्भवमनुष्टुबादि छन्द इत्युक्तं भवति ।

## भाष्यम्

(सुबहुदर्शिषु परोक्तानुवादरूपमेव वचः)

**'भृगुवाक्यतया वायुनमस्कारादिकं हरिः ।**
**'प्रोवाच ब्रह्मणे चैवं वचस्सुबहुदर्शिषु' इति च ॥**

## भाष्यप्रकाशिका

'एवं वचस्सुबहुदर्शिषु' इत्यत्र सुबहुदर्शिषु एवं वचः परोक्तानुवादरूपमेव वचः वर्तते। 'तं व्याससूनुमुपयामि गुरुं मुनीनाम्' इत्यादौ व्यासकृतभागवतग्रन्थे कृतस्तुत्यादिनमस्कारादीनां तत्र तत्राऽनुवाददर्शनादिति भावः ।

## पदार्थदीपिका

नन्वस्या उपनिषदो विष्णुः[१]ऋषिरित्ययुक्तम् । 'शन्नोमित्र' इत्यादिना विष्णोर्मित्रादिकं प्रति सुखप्रार्थनस्य नमस्ते वाय्विति वायुं प्रति नमस्कार-

---

१. ऋषिरित्युक्तम् क.

करणस्य चाऽयोगादित्यत आह- **भृगुवाक्यतयेति** ॥ आदिपदेन 'त्वमेव प्रत्यक्षम्' इति वायुं प्रति स्तुतिकरणं मित्रादिकं प्रति सुखप्रार्थनं च ग्राह्यम्। उत्तरत्र ब्रह्मविद्यामनुतिष्ठन् भृगुर्विघ्नपरिहाराय नमस्ते वाय्वित्यादिरूपेण 'वायुनमस्कारादिकं' करिष्यतीत्येवं भृगुवाक्यानुवादरूपेण हरिर्ब्रह्मणे प्रोवाच नतु स्ववाक्यतयाऽतो नोक्तदोषः। तथा ब्रह्मणोऽपि मित्रादिकं प्रति सुखप्रार्थनाऽयोगात् सोऽपि भृगुवाक्यतयैव वरुणाय प्रोवाचेति चशब्दार्थः। इमं प्रकारमन्यत्राप्यतिदिशति- **एवं वच इति** ॥ एवमित्यस्यावृत्तिः। चशब्दस्यात्राप्यन्वयः। स चात्रावधारणार्थः। तथाच 'सुबहुदर्शिषु' अतिबह्वर्थदर्शिषु सर्वज्ञेषु विष्ण्वादिषु ऋषित्वेन विवक्षितेषु सत्सु यत् 'एवं वचः' नीचान् प्रति प्रार्थनादिरूपं वचः तत् एवञ्च एवमेव परोक्तानुवादरूपत्वेनैव व्याख्येयं नतु सुबहुदर्शिविष्ण्वादिवाक्यतयैवेति ज्ञातव्यम्। यथा हयग्रीवमुखोद्गीर्णायां छान्दोग्योपनिषदि 'श्यामाच्छबलं प्रपद्ये शबलाच्छामं प्रपद्ये। धूत्वा शरीरं ब्रह्मलोकमभिसम्भवामि' इत्यादिकं न स्ववाक्यतया हयवदनो दृष्टवान् किन्त्वितरेषां वाक्यतयैव। यथोक्तं छान्दोग्यभाष्ये-

'हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु।
रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः।
यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु।
तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः।
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ॥' इति।

इदमुपलक्षणम्। अविघ्नत्वमभीप्सूनां शिष्याणां चार्थे दृष्टवान् इत्यपि द्रष्टव्यम्। यथोक्तमैतरेयभाष्ये- " 'वाङ्म' इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम्। अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः" इति ॥ तदनेन प्रबन्धेनैतदुपनिषदोऽधिकारिविषयप्रयोजनाभिसम्बन्धोऽपि दर्शितो भवति।

ब्रह्मादीनामधिकारिणां अन्नमयादिपञ्चरूपस्य विष्णोर्विषयस्य मोक्षस्य प्रधानस्य ज्ञानभक्त्यादेरवान्तरस्य च प्रयोजनस्य च सूचितत्वात् । अतो युक्तमेतद् उपनिषदो व्याख्यानं गहनार्थत्वात् चेति ॥

## श्रीतैत्तिरीयोपनिषत्

(शान्तिमन्त्राः)

**ओ३म् ॥ शं नों मित्रः शं वरुणः । शं नों भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वंदिष्यामि । सत्यं वंदिष्यामि । तन्मामंवतु । तद्वक्तारंमवतु । अवंतु माम् । अवंतु वक्तारंम् । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥**

### भाष्यप्रकाशिका

'शं नो मित्रः शं वरुण' इत्यत्र वरुणो मित्रो देवो नः शं प्रति भवति, तथा भवत्विति योजना । 'त्वमेव प्रत्यक्षं ब्रह्म' इति वदता साक्षात् परं ब्रह्माप्रत्यक्षमेव । श्रवणादिकं विना द्रष्टुमशक्यत्वस्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृह. ४.५.६) इत्यादिश्रुतौ निश्चितत्वात् । अतो ब्रह्मणः स्वयं मुख्यतः सन्निहितत्वेन तव विष्णोर्मुख्यतः प्रतिमात्वेन रङ्गनाथादिप्रतिमादौ त्वमेव रङ्गनाथ इत्युक्तिर्यथा तथा वायोरपि प्रत्यक्षब्रह्मत्वोक्तिः । न तु ब्रह्माभेदेन, प्रत्यक्षाप्रत्यक्षयोरैक्यायोगादिति सूचितम् । 'त्वमेव प्रत्यक्षं ब्रह्म', त्वमेव प्रत्यक्षं ब्रह्मेति वदिष्यामि । ऋतं 'ऋ गतौ' इति धातोः कर्तरि क्तप्रत्यये कृते गत्यर्थानां च ज्ञानार्थ-

त्वाद्यथार्थज्ञानवदित्यर्थः । सत्यं 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः सत् ज्ञानं श्रुतिनिर्दिष्टं, यं कर्तृत्वे प्रवर्तकत्वे च (कृतौ प्रवृत्तौ च) प्रवर्तकं यस्य तत् सत्यमित्यर्थः । ज्ञानस्येच्छाद्वारा प्रवृत्तिकारणत्वस्य सिद्धत्वादिति भावः । तादृशमहामहिम्नस्तव स्तुतिरूपवचनं मां इत्यध्येतारं मामवतु । मम प्रवक्तारं गुरुं मध्यवर्तिनमित्यर्थः । गुरोरर्थं च श्रुत्वा शिष्यस्यैव साक्षादध्येतृत्वाच्छिष्यः स्वकीयपाठेन गुरोरभिरक्षणमपि प्रार्थयते। 'वक्तुर्दशगुणं फलम्' इति वचनात् शिष्यप्रार्थनामात्रेणापि गुरोः फलं भवतीति भावः । द्विरुक्तिरादरार्था ।। १ ।।

## श्रीनिवासतीर्थीयखण्डार्थः

ततश्च 'शन्नोमित्र' इत्यादेरयमक्षरार्थः-

आदित्यसंस्थितो विष्णुः ब्रह्माणं प्रति ब्रह्मविद्यामनुतिष्ठन् भृगुर्विघ्नपरिहारार्थं एतद्विद्याप्रवर्तकत्वात् एतद्विद्याप्रतिपाद्यत्वाद् वा इन्द्रियादिप्रेरकत्वाद् वा मित्रादिदेवान् प्रार्थयत इत्याह- **शन्नोमित्र इत्यादिना** ।। मित्रो नः शं सुखमुद्दिश्य भवतु नः सुखप्रदो भवत्वित्यर्थः । एवं वरुणाद्याः देवाः नः शमुद्दिश्य भवन्त्वित्यर्थः । उरुक्रम इति विष्णोर्विशेषणम् । उरु उत्कृष्टः क्रमः पराक्रमो वा पादविक्षेपो वा यस्य स उरुक्रम इत्यर्थः । ब्रह्मणे चतुर्मुखाय नमः । हे वायो ते तुभ्यं नमः । वायोः ब्रह्मविद्याप्रवर्तकेषु मुख्यत्वात् परब्रह्मणो मुख्याधिष्ठानत्वात् वक्ष्यमाणसंहितापश्चाधिकरणमानित्वाच्च पुनः तं वायुं अपरोक्षतः प्रार्थयते- **त्वमेवेति** ।। त्वं प्रत्यक्षं, अक्षमक्षं प्रति प्रेरकतया स्थितत्वात् प्रत्यक्षशब्दवाच्योऽसि । यथोक्तं बृहद्भाष्ये- 'तमेताः सप्ताक्षितय उपतिष्ठन्ते' इत्यत्र 'दक्षिणाक्षिस्थितं वायुं सप्तदेवा उपासते' (ऐ.भा. २.६) इति । ब्रह्मा भाविब्रह्मपदयोग्यः । अथवा ब्रह्म परब्रह्माधिष्ठानभूतः । अधिकारिवर्गेषु पूर्णो वाऽसि । 'त्वामेव प्रत्यक्षं ब्रह्माऽवादिषम्' इत्यन्ते

वक्ष्यमाणत्वाद् अत्रापि त्वं त्वामित्यर्थः । तथाच प्रत्यक्षं ब्रह्मभूतश्च त्वं त्वां पश्चाधिकरणादिप्रतिपाद्यतया वदिष्यामि शिष्येषु उपदिशामि । 'ऋतं सत्यम्' इत्यत्र त्वामित्यनुवर्तते । 'ऋतं यथार्थविज्ञानं; सत्यं तत्पूर्विका कृतिः' इति वक्ष्यमाणरीत्या ऋतं यथार्थज्ञानवन्तं सत्यं यथार्थज्ञानपूर्वकं वक्तारं कर्तारं चेत्यर्थः । यद्वा ऋतं यथावत् सर्वाधिकारिवर्गेषु उत्तमतयाऽवगतं, सत्यं साधुगुणैस्ततं सर्वनियन्तारं त्वामित्यर्थः । यथोक्तम्- 'वाङ् मनसि' इति खण्डे ऐतरेयभाष्ये 'ऋतं यथावद् अवगतं, सत्यं साधुगुणैस्ततं सर्वनियन्तारम्' (बृ.भा. ४.२.२) इति । एवमपरोक्षतः प्रार्थयित्वा परोक्षतोऽपि प्रार्थयते- **तन्मामवत्विति** ॥ यथोक्तं 'वाङ्' इत्यत्रैव ऐतरेयभाष्ये 'तन्मामवत्विति तस्यैव परोक्षतः प्रार्थनम्' इति । तत् वायुरूपं ब्रह्म श्रोतारं मामवतु तत् वक्तारं विद्योपदेष्टारं चावतु । पुनः 'अवतु मामवतु वक्तारम्' इत्युक्तिराद-रार्था । उत्तरत्र प्रवर्तनीयायां विद्यायां प्रसक्तविघ्नानां शान्तिरस्त्वित्याह- **शान्तिरिति** ॥ आध्यात्मिकाधिदैविकविघ्नपरिहाराभिप्रायेण 'शान्ताधि-भौतिकपृथिवी शिवमन्तरिक्षम्' इत्यादि श्रुतेर्भौमान्तरिक्षदिव्यविघ्नपरिहारार्थं च त्रिवारं शान्त्युक्तिरिति द्रष्टव्यम् ॥ १ ॥

## उपनिषत्

(ब्रह्मविद्याभ्यसनेच्छोरधिकारिणः पूर्वं शिक्षणीयाः विषयाः)

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तश्शीक्षाध्यायः ॥ २ ॥**

## भाष्यम्

**वरणीयो वर्णः । स्वरतेस्तु स्वरः । मानात् त्राता मात्रा । बलरूपः । समश्च सर्वरूपेषु । सन्ततश्च ।**

'वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम्।
विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम्॥ २ ॥'

## ' प्रकाशिका

'शीक्षां व्याख्यास्यामः' इत्यत्र 'तृतीयोऽतिशये' इति वचनाच्छिक्षायाः सामञ्जस्यवचनाय शीक्षामित्युक्तम्। यद्यप्युदात्तानुदात्तस्वरितप्रचयाख्याः स्वरा अपि मात्रा एव। तथाऽपि वक्ष्यमाणधर्मान्तरविवक्षया मात्रायाः पृथग्ग्रहणम्। एकमात्रो ह्रस्वः। द्विमात्रो दीर्घः। त्रिमात्रः प्लुत इत्यर्थः। स्पृष्टेषत्स्पृष्टादिरूपः प्रयत्नः। बहुवर्णात्मकवाक्यं वर्णपरम्परारूपतया सन्तान इत्युच्यते। वर्णादिषट्कस्य तन्नियामकरूपषट्कस्य च ज्ञानाभावे वर्णोच्चारणं व्यर्थं स्यात्। मध्ये मध्ये स्खलनं च स्यात्। अत इयं शिक्षा प्राथमिकीति भावः॥ २॥

## पदार्थदीपिका

**अथ भाष्यार्थः-**

ब्रह्मविद्याभ्यसनेच्छोरधिकारिणः पूर्वं शिक्षणीयमर्थं प्रतिजानते ऋषयः॥ **शीक्षामिति**॥ तत्र 'वर्णः स्वरः' इत्यादौ वर्णाद्युच्चारणस्थानादीनि ज्ञातव्यानी-त्युक्त्या अस्या उपनिषदोऽब्रह्मविद्यात्वं प्रतीयते। अतस्तां निराकर्तुं वर्णादिशब्दषट्कम् भगवति निरुच्य दर्शयति- **वरणीय इत्यादिना**॥ वरणीयो भजनीयः सर्वभक्तैः स्वीकर्तव्यो वा। स्वरतेः स्वस्मिन् रमणात्। 'मानादिति ल्यब्लोपनिमित्ता पञ्चमी। मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते' इत्यभिधानात् मानं भक्तानामपमृतत्वादिरूपं लयं नाशं परिहृत्य भक्तानां त्राता। यद्वा मानात् ज्ञानं प्रदाय त्रातेत्यर्थः। सन्ततः सम्यक् देशतः कालतः गुणतश्च ततो व्याप्तः। वर्णादिशब्दवाच्यत्वे वरणीयत्वादिकं निमित्तमि-त्युक्तम्। तदुपलक्षणपरमित्यभिप्रेत्य उक्तार्थे प्रमाणमाह- **वर्णादिवाचक-**

**मिति** ॥ आदिपदेन स्वरमात्रादिग्रहणम् । तथा च वरणीयत्वादिनिमित्तेन वर्णादिकं वाचकं यस्य तत् वर्णादिवाचकमित्यर्थः । वर्णादिशब्दप्रतिपाद्यमिति यावत् । विष्णोः रूपमित्यन्वयः । वर्णादिनामकं 'वर्णः स्वरः' इत्यादिनामकं वर्णादिसंस्थं वरणीयत्वनिमित्तेन वर्णोदात्तादिस्वरसंस्थं नियामकतया यतोऽतः । अनेन निमित्तेन वर्णादिनामकमिति निमित्तान्तरकथनम् । निमित्तान्तरं चाह- **पुंस्विति** ॥ पुंसु स्थित्वा वर्णस्वराद्युच्चारणादिक्रियाप्रदं च यतोऽतो वर्णादिनामकमित्यर्थः ॥ २ ॥

**अथ खण्डार्थः-**

ब्रह्मविद्याभ्यसनेच्छोरधिकारिणः पूर्वं शिक्षणीयमर्थं प्रतिजानते ऋषयः- **शीक्षामिति** ॥ शिक्ष्यत इति शीक्षा शिक्षणीयमर्थमित्यर्थः । दीर्घस्तु शिक्षणीयार्थस्यावश्यकत्वद्योतकः । व्याख्यास्यामो विशेषेण वक्ष्यामः । तामेव शिक्षामाहुः वर्ण इत्यादिना । वर्णः ज्ञातव्य इति शेषः । वर्णः अकारादिवर्णानां उच्चारणस्थानं कण्ठादि ज्ञातव्यम् । स्वरः उदात्तानुदात्तस्वरितादिरूपो ज्ञातव्यः । मात्रा अकारादिरूप एकैको वर्णो ज्ञातव्यः । बलं वर्णोच्चारण-हेतुभूतः स्पृष्टेषत्स्पृष्टविवृतादिस्वरूपः प्रयत्नो ज्ञातव्यः । साम वर्णानां सन्धिर्ज्ञातव्यः । सन्तानो वर्णानां परम्परा पदवाक्यादिरूपो वर्णसमुदाय इति यावत् ज्ञातव्यः । उपसंहरति । **इत्युक्त इति** ॥ शीक्षाध्यायः शिक्षणीयानां अर्थानां अध्यायोऽध्ययनमुपदेशः । इत्येवमस्माभिरुक्तः कृत इत्यर्थः । अब्रह्मविद्यात्वपरिहाराय 'वर्णः स्वरः' इत्यादिकं भगवत्परत्वेनाऽपि योज्यम् । तथाहि- वरणीयत्वात् वर्णेषु स्थितत्वात् पुंसु वर्णोच्चारणक्रिया-प्रदत्वाच्च विष्णोरूपं वर्ण इत्युच्यते । तथा स्वरमणत्वात् स्वरे स्थितत्वात् स्वरोच्चारणक्रियाप्रदत्वाच्च स्वर इत्युच्यते । मानात् त्राणात् 'मात्रा' स्थितत्वात् मात्रोच्चारणक्रियाप्रदत्वाच्च 'मात्रा' इत्युच्यते । बलरूपत्वात् बले विवृतादिरूपे

प्रयत्ने स्थितत्वात् बलक्रियाप्रदत्वाच्च बलमित्युच्यते । सर्वरूपेषु समत्वात् साम्नि वर्णानां सन्धौ स्थितत्वात् सन्ध्युच्चारणक्रियाप्रदत्वाच्च सामेत्युच्यते । सन्ततत्वात् वर्णपरम्परायां स्थितत्वात् वर्णपरम्परोच्चारणक्रियाप्रदत्वाच्च सन्तान इत्युच्यत इत्यर्थो द्रष्टव्यः ॥ २ ॥

## उपनिषत्

(लोकादिषु नारायणादिरूपाणि ध्येयानि)

**स ह नौ यशः । स ह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते ॥ ३ ॥**

**अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ॥ ४ ॥**

**अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपस्सन्धिः । वैद्युतस्सन्धानम् । इत्यधिज्यौतिषम् ॥ ५ ॥**

**अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् । इत्यधिविद्यम् ॥ ६ ॥**

**अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ॥ ७ ॥**

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥**

इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ८ ॥

## भाष्यम्

'नारायणादिरूपाणि लोकादिषु च पञ्चसु ।
अनिरुद्धावसानानि ध्येयानि चतुरात्मना ॥
'वासुदेवादिकान्येव तानि पूर्वोत्तरार्णयोः ।
संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः ॥
'यो वेदैतानि रूपाणि सर्वभोगसमन्वितः ।
प्राप्नोति वैष्णवं स्थानं मुक्तस्स्वर्गाभिधं परम् ॥ ३-८ ॥

## प्रकाशिका

शं नो मित्र इत्युपनिषदारम्भे मङ्गलस्य कृतत्वात् पुनः 'स ह नौ यश' इति मङ्गलाचरणं किमर्थमिति चेत् सत्यम् । विद्यानां बाहुल्यात् 'प्रतिविद्यं मङ्गलाचरणं कार्यमिति सूचनाय अथातस्संहितायाः' इति विद्यारम्भेऽपि पुनर्मङ्गलं कृतमिति ज्ञेयम् । स ह मित्रादिर्नौ यशो दिशत्वित्यर्थः । हेत्यनेन यशोदानशक्तेः प्रसिद्धतामाह । 'अथातः सꣳहितायाः' इत्यत्र अथ अध्ययनाङ्गशिक्षानिरूपणानन्तरमतः संहितायाः 'अग्निमीळे पुरोहितम्' इत्यादावग्न्यादिवर्णद्वयात्मकसंहितायाः पूर्वोत्तरवर्णयोस्तत्सन्धित्सायाः सन्धेश्च ज्ञानस्यैकवर्णज्ञानादप्यधिकफलसाधनत्वात्तस्यास्संहिताया उप समीपे निषीदतीत्युपनिषदं तत्सम्बन्धिरहस्यविद्यां व्याख्यास्यामः । एवं ज्ञानेऽक्षरद्वयात्मकसंहितोच्चारणं स्पष्टमक्लिष्टं च भवतीत्यतोऽस्य विद्याया उत्तरविद्याङ्गत्वमिति भावः ।

'चतुरात्मना वासुदेवादिकान्येव' इत्यत्र 'चतुरात्मना' वासुदेवाद्यनिरुद्धान्तचतुरात्मना 'वासुदेवादिकान्येव च पूर्वोत्तरवर्णयोस्तत्सन्धौ सन्धाने च ध्येयानीति योजना। अत्रायं विवेकः- सन्धिदेवताज्ञाने सन्ध्यक्षरोच्चारणे सौष्ठवं भवति। अधिलोकादिसन्ध्यक्षरज्ञाने इह लोके परलोके च सुखं भवति। अधिज्यौतिषं सन्ध्यक्षरज्ञाने ब्रह्मवर्चसं भवति। अधिविद्यं सन्ध्यक्षरज्ञाने शिष्याचार्यादिघटना भवति। अधिप्रजं सन्ध्यक्षरज्ञाने सन्तानाभिवृद्धिर्भवति। अध्यात्मं सन्ध्यक्षरज्ञाने सुष्ठूच्चारणशक्तिर्भवति। अत इदमप्यवश्यं ज्ञातव्यमित्येतदेवाभिप्रेत्य श्रुतिः 'सन्धीयते प्रजया पशुभिः' इत्यादिना फलमप्याह॥ ३-८॥

## पदार्थदीपिका

**अथ भाष्यार्थः—**

''अथाधिलोकं पृथिवीपूर्वरूपं द्यौरुत्तररूपम्'' इत्यादि प्रकरणपञ्चके पृथिव्यादेः पूर्ववर्णत्वं द्याद्यादेश्चोत्तरवर्णत्वं च प्रतीयते तदयुक्तम्। लोकादीनां वर्णाद्यभेदस्य बाधितत्वात् पृथिव्यादिदेवतानां पूर्ववर्णादिप्रतिपाद्यत्वाभिप्राये त्वब्रह्मविद्यात्वापत्तेरतस्तदभिप्रायं प्रमाणेनैव दर्शयन् आदौ किञ्चिद् वक्तव्यं प्रमेयमाह- **नारायणादीति**॥ नारायणादीनि अनिरुद्धावसानानि रूपाणि लोकादिषु पञ्चसु ध्येयानि। तत्र लोके नारायणः, ज्योतिषि वासुदेवः, विद्यायां सङ्कर्षणः, प्रजायां प्रद्युम्नः, आत्मनि अनिरुद्ध इति विवेकः॥ एवमुपयुक्तमुक्त्वा पृथिवीपूर्वरूपमित्यादेरभिप्रायमाह- **चतुरात्मनेति**॥ चतुस्स्वरूपेण विद्यमानानि चतुःसङ्ख्याकानि इति यावत्। 'वासुदेवादिकानि' तान्येव अनिरुद्धान्तान्येव रूपाणि पूर्वोत्तरार्णयोः पूर्वार्णे उत्तरार्णे च तथा संहितायाः सन्धौ सन्निकर्षे सन्धाने सन्धिकार्यभूतसन्ध्यक्षरव्यवहरणरूपसन्धानक्रियायाञ्च सन्तीति ध्येयानीति सम्बन्धः। 'कृत्स्नशः' पूर्वोत्तरार्णयोरित्यादिसम्बन्धः।

समस्तपूर्वोत्तरार्णादावित्यर्थः । कृत्स्नशो यो वेद' इत्युत्तरत्र वा सम्बन्धः । 'य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः ब्रह्म-वर्चसेनान्नाद्येन सुवर्ग्येण लोकेन' इति फलवाक्ये स्वर्गशब्दस्य प्रसिद्ध-स्वर्गपरत्वप्रतीतिं निवारयन् व्याचष्टे- **यो वेदेति** ॥ अन्नाद्येन सन्धीयत इत्यस्यार्थः - **'सर्वभोगसमन्वितः'** इति ॥ इह लोकेऽपीति शेषः । सुवर्ग्येण लोकेन सन्धीयत इत्यस्यार्थः- **प्राप्नोतीत्यादि** ॥ तथा च सुवरोऽतिशयेनोत्तमो विष्णुः यत्र गतः व्यक्ततयावस्थितः सः विष्णुव्यक्तिस्थानभूतस्तेन लोकेन वैकुण्ठादिस्थानेन सन्धीयते तल्लोकं प्राप्नोतीति यावदित्यर्थ इत्युक्तो भवति ॥ ३-८ ॥

**स ह नौ यशः । स ह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोक-मधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते ॥ ३ ॥**

**अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ॥ ४ ॥**

**अथ खण्डार्थः-**

तथा च 'सहनौ यशः' इत्यादेरयमक्षरार्थः । 'शन्नोमित्रः' इत्यादिना आदौ देवताप्रार्थने कृतेऽपि प्रतिविद्यमभीष्टफलार्थं देवताप्रार्थनं कर्तव्यमित्याशयेन 'अथातः सꣳहिताया इति वक्ष्यमाणविद्याप्रवृत्त्यर्थं पुनर्मित्रादिदेवान् प्रति अभीष्टफलं प्रार्थयते ॥ **सहनौ यश इति** ॥ सः मित्रादिवाय्वन्तो देवसमुदायो नौ गुरुशिष्ययोर्निर्विघ्नविद्यासमाप्तिसम्पादनेन यशो यशस्करोऽस्तु । 'सहनौ ब्रह्मवर्चसम्' वेदाध्ययनजनितवर्चोविशेषकरश्च

भवतु । हेति मित्रादीनां यशादिदातृत्वं प्रसिद्धमिति दर्शयति- **सामेति** ॥ प्रकृतवर्णसन्धिनिष्ठब्रह्मविद्यां वक्तुं प्रतिजानते ऋषयः- **अथात इति** ॥ अथ वर्णादिशिक्षाव्याख्यानानन्तरं अतः सन्धीयते प्रजयेत्यादिना वक्ष्यमाण लौकिकाऽलौकिकफलसद्भावात् संहितायाः वर्णसन्धिसम्बन्धिनीमुपनिषदं तत्रत्य रहस्यभगवद्रूपविशेषोपास्तिप्रकारमिति यावत् । पञ्चसु अधिकरणेषु प्रकरणेषु व्याख्यास्यामः सम्यक् कथयामः । अधिकरणनामान्याह- **अधिलोकमित्यादिना** ॥ लोकमधिकृत्य प्रवर्तमानं अधिलोकं तन्नामकं प्रथमप्रकरणम् । ज्योतिषां समूहो ज्यौतिषं तदधिकृत्य वर्तमानं अधिज्योतिषं तन्नामकं द्वितीयं प्रकरणम् । विद्यामधिकृत्य वर्तमानं अधिविद्यं तन्नामकं तृतीयं प्रकरणम् । प्रजाः अधिकृत्य वर्तमानम् अधिप्रजं तन्नामकं चतुर्थप्रकरणम् । आत्मानं देहमधिकृत्य वर्तमानम् अध्यात्मं तन्नामकं पञ्चमप्रकरणम् । ताः एताः संहिताः भगवदधिष्ठितत्वेन महासंहिता इत्याचक्षते विद्वांसः । अत्र नारायणादीन्यनिरुद्धान्तानि भगवद्रूपाणि लोकादिषु पञ्चसु सन्तीति ग्राह्यम् ॥ ३ ॥

अथैवं प्रतिज्ञानन्तरं अधिलोकं लोकस्थं नारायणमधिकृत्य प्रवर्तमाना संहितानिष्ठा विद्या निरूप्यत इत्यर्थः । तदेव विवृणोति-**पृथिवीत्यादिना** ॥ सः नारायणो वासुदेवाद्यात्मना चतुर्विधः 'पृथिवी' पृथुत्वात् प्रथितत्वाद् वा पृथिवीनामकं पृथिवीसंस्थं नारायणस्य वासुदेवनामकं रूपं 'पूर्वरूपं' संहितापूर्ववर्णस्थितं तन्नामकञ्च । 'द्यौः' प्रकाशस्वरूपत्वात् तन्नामकं द्युस्थं नारायणस्य सङ्कर्षणनामकं रूपं 'उत्तररूपं' संहिताया उत्तरवर्णस्थितं तन्नामकं च । 'आकाशः' आसमन्तात् काशनात् आकाशनामकं आकाशसंस्थं नारायणस्य प्रद्युम्ननामकं रूपं 'सन्धिः' सन्धिस्थं तच्छब्दवाच्यं च । 'वायुः' ज्ञानादायुष्ट्वाच्च वायुनामकं तत्रस्थं नारायणस्यानिरुद्धनामकं रूपं 'सन्धानं'

सन्धिकार्यभूतसन्ध्यक्षरव्यवहरणरूपसन्धानक्रिया सन्धानशब्देनोच्यते। तत्रस्थं तन्नामकं चेत्यर्थः । उपसंहरति- **इत्यधिलोकमिति** ॥ इत्येवं प्रकारेण लोकान्तर्गतचतूरूपनारायणमधिकृत्य विद्यमाना संहिता निरूपितेत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या ॥ ४ ॥

**अथाधिज्यौतिषम्। अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपस्सन्धिः। वैद्युतस्सन्धानम्। इत्यधिज्यौतिषम्॥ ५ ॥**

**अथाधिविद्यम्। आचार्यः पूर्वरूपम्। अन्तेवास्युत्तररूपम्। विद्या सन्धिः। प्रवचनꣳ सन्धानम्। इत्यधिविद्यम्॥ ६ ॥**

**अथाधिप्रजम्। माता पूर्वरूपम्। पितोत्तररूपम्। प्रजा सन्धिः। प्रजननꣳ सन्धानम्। इत्यधिप्रजम्॥ ७ ॥**

**खण्डार्थः**

'अथ' अधिलोकनिरूपणानन्तरं 'अधिज्यौतिषं' ज्योतिषान्तर्गतवासुदेवमधिकृत्य संहितानिष्ठा विद्या निरूप्यत इत्यर्थः। एवमेवाथाधिविद्यमित्यादित्रयं योज्यम् । ज्योतिषान्तर्गतो वासुदेवोऽपि वासुदेवाद्यात्मना चतुर्विध इति ग्राह्यम् । 'अग्निः' अङ्गप्रणेतृत्वात्तन्नामा तत्स्थश्च वासुदेवः । 'आदित्यः' आदिकाले भवत्वात् आदानाद् वा आदित्यनामा तत्स्थश्च सङ्कर्षणः । 'आपः' बहुरूपत्वाद् बहुवचनम्। आपालनात् तन्नामा तत्संस्थश्च प्रद्युम्नः । 'वैद्युतः' विद्युत्सम्बन्धित्वात् वैद्युतनामा तत्संस्थश्च अनिरुद्धः ॥ ५ ॥

विद्यान्तर्गतः सङ्कर्षणः। सोऽपि वासुदेवाद्यात्मना चतुर्विधः। 'आचार्यः' सदाचारेण प्राप्यत्वात् आचार्यनामा आचार्यसंस्थश्च वासुदेवः। 'अन्तेवासी' सर्वेषां समीपे नियामकतया वसतीति वा अन्ते प्रलये वसतीति वा

अन्तेवासिनामा तत्संस्थश्च सङ्कर्षणः । 'विद्या' ज्ञानरूपत्वाद् विद्यानामा तत्संस्थश्च प्रद्युम्नः । 'प्रवचनं' प्रकर्षेण वक्तृत्वात् प्रवचननामा प्रवचन-क्रियासंस्थश्चानिरुद्धः ॥ ६ ॥

प्रजास्थः प्रद्युम्नः सोऽपि वासुदेवाद्यात्मना चतुर्विधः । 'माता' मातृत्वात् मातृनामा मातृसंस्थश्च वासुदेवः । 'पिता' पातृत्वात् पितृनामा तत्संस्थश्च सङ्कर्षणः । 'प्रजा' प्रकर्षेण जायते व्यक्तो भवतीति प्रजानामकः प्रजासंस्थश्च प्रद्युम्नः । 'प्रजननं' प्रकर्षेण जनयतीति वा प्रजननक्रियानियामकत्वाद् वा प्रजननशब्दवाच्यः प्रजननक्रियासंस्थश्चानिरुद्धः ॥ ७ ॥

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तर-रूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥ इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ८ ॥**

**खण्डार्थः**

आत्मसंस्थोऽनिरुद्धः । सोऽपि वासुदेवाद्यात्मना चतुर्विधः । 'अधराहनुः' हनुशब्दो ज्ञानवाची हन हिंसागत्योः । तथा चाऽधराणां नीचानां मनुष्योत्तमानां आ सम्यक् योग्यतानुसारेण ज्ञानप्रदत्वात् उत्कृष्टत्वाच्च अधराहनुशब्दवाच्यः तत्स्थश्च वासुदेवः । 'उत्तराहनुः' उत्तरेषां उत्तमानां देवादीनां सम्यक् ज्ञानप्रदत्वात् उत्कृष्टत्वाच्चोत्तराहनुशब्दवाच्यः तत्स्थश्च सङ्कर्षणः । वाक् वक्तृत्वाद् वाङ्नामा वाक्संस्थश्च प्रद्युम्नः । 'जिह्वा' ओहाक् त्यागे, वा गतिगन्धनयोः । तथा चान्तकाले सर्वान् जहाति योग्यान् मोक्षं गमयतीति

जिह्वानामकः । यथोक्तं बृहद्भाष्ये- 'जहाति गमयतीति जिह्वेति' जिह्वासंस्थश्चाऽनिरुद्धः । उपसंहरति- **इतीति** ।। इत्येवमिमाः महासंहिताः व्याख्याता इत्यर्थः । महासंहितावेत्तुः फलमाह- **य एवमिति** ।। 'यः' अधिकारी एवं पूर्वोक्तप्रकारेण 'एताः' व्याख्याताः महासंहिताः वेद सुवरः अतिशयेन उत्तमो विष्णुर्यत्र गतो व्यक्ततयाऽवस्थितः सः सुवर्गो विष्णुव्यक्तिस्थान-भूतः । तेन लोकेन वैकुण्ठादिस्थानेन सन्धीयते संयुक्तो भवति मुक्तो भवती-त्यर्थः । अनन्तरं तत्र 'प्रजया' प्रकृष्टत्वेन जननात् - नित्योदिततया स्थितत्वात् प्रजेति ज्ञानं तया, 'पशुभिः' पान्ति शंसाधनाश्चेति पशवो वेदास्तैः । 'ब्रह्म-वर्चसेन' ब्रह्मणो विष्णोः वरणादेव सम्यक् चायितं प्रापितं प्राप्तं अभिवृद्धं यत् स्वरूपतेजः ब्रह्मवर्चसं लौकिकप्रजादिकमपि तेन सन्धीयते । संसृतावल्पतेजो जीवस्वरूपं भगवान् मुक्तौ महत्करोतीति हि 'अल्प-तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोतीशो महत्तदा' इति प्रमाणप्रसिद्धम् । अन्नाद्येन तदुपलक्षितसर्वभोगेन च सन्धीयते युक्तो भवतीत्यर्थः । लौकिकफलेच्छूनां एतत् संहिताज्ञानादानुषङ्गिकं प्रसिद्धं प्रजादिकमपि फलं यथायोग्यं भवतीति व्याख्येयम् । 'प्रजया' पुत्रसन्तत्या 'पशुभिः' गवादिभिः 'ब्रह्मवर्चसेन' वेदाध्ययनजनितमुखगतवर्चोविशेषेण अन्नाद्येन तदुपलक्षितभोगेन सुवर्ग्येण लोकेन प्रसिद्धस्वर्गलोकेनेत्यर्थो द्रष्टव्यः। यथोक्तमैतरेयभाष्ये- ''अथातः संहिताया उपनिषदिति खण्डे । 'युक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा । नित्यायुषा च युक्तः स्यात् संहितारूपविद्वरेः' इति च । प्रकृष्टत्वेन जननात् प्रजेति ज्ञानं पान्ति शंसाधनाश्चेति पशवो वेदाः परब्रह्मणो विष्णोः वरणादेव सम्यक् चायितं स्वरूपतेजः ब्रह्मवर्चनम् । लौकिकप्रजादिकमपि तदिच्छूनां यथायोग्यं भवति'' इति ।। ८ ।।

अन्तेवासिनामा तत्संस्थश्च सङ्कर्षणः । 'विद्या' ज्ञानरूपत्वाद् विद्यानामा तत्संस्थश्च प्रद्युम्नः । 'प्रवचनं' प्रकर्षेण वक्तृत्वात् प्रवचननामा प्रवचनक्रियासंस्थश्चानिरुद्धः ॥ ६ ॥

प्रजास्थः प्रद्युम्नः सोऽपि वासुदेवाद्यात्मना चतुर्विधः । 'माता' मातृत्वात् मातृनामा मातृसंस्थश्च वासुदेवः । 'पिता' पातृत्वात् पितृनामा तत्संस्थश्च सङ्कर्षणः । 'प्रजा' प्रकर्षेण जायते व्यक्तो भवतीति प्रजानामकः प्रजासंस्थश्च प्रद्युम्नः । 'प्रजननं' प्रकर्षेण जनयतीति वा प्रजननक्रियानियामकत्वाद् वा प्रजननशब्दवाच्यः प्रजननक्रियासंस्थश्चानिरुद्धः ॥ ७ ॥

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥**

**इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ८ ॥**

### खण्डार्थः

आत्मसंस्थोऽनिरुद्धः । सोऽपि वासुदेवाद्यात्मना चतुर्विधः । 'अधराहनुः' हनुशब्दो ज्ञानवाची हन हिंसागत्योः । तथा चाऽधराणां नीचानां मनुष्योत्तमानां आ सम्यक् योग्यतानुसारेण ज्ञानप्रदत्वात् उत्कृष्टत्वाच्च अधराहनुशब्दवाच्यः तत्स्थश्च वासुदेवः । 'उत्तराहनुः' उत्तरेषां उत्तमानां देवादीनां सम्यक् ज्ञानप्रदत्वात् उत्कृष्टत्वाच्चोत्तराहनुशब्दवाच्यः तत्स्थश्च सङ्कर्षणः । वाक् वक्तृत्वाद् वाङ्नामा वाक्संस्थश्च प्रद्युम्नः । 'जिह्वा' ओहाक् त्यागे, वा गतिगन्धनयोः । तथा चान्तकाले सर्वान् जहाति योग्यान् मोक्षं गमयतीति

जिह्वानामकः । यथोक्तं बृहद्भाष्ये- 'जहाति गमयतीति जिह्वेति' जिह्वासंस्थश्चाऽनिरुद्धः । उपसंहरति- **इतीति** ॥ इत्येवमिमाः महासंहिताः व्याख्याता इत्यर्थः । महासंहितावेत्तुः फलमाह- **य एवमिति** ॥ 'यः' अधिकारी एवं पूर्वोक्तप्रकारेण 'एताः' व्याख्याताः महासंहिताः वेद सुवरः अतिशयेन उत्तमो विष्णुर्यत्र गतो व्यक्ततयाऽवस्थितः सः सुवर्गो विष्णुव्यक्तिस्थान-भूतः । तेन लोकेन वैकुण्ठादिस्थानेन सन्धीयते संयुक्तो भवति मुक्तो भवतीत्यर्थः । अनन्तरं तत्र 'प्रजया' प्रकृष्टत्वेन जननात् - नित्योदिततया स्थितत्वात् प्रजेति ज्ञानं तया, 'पशुभिः' पान्ति शंसाधनाश्चेति पशवो वेदास्तैः । 'ब्रह्म-वर्चसेन' ब्रह्मणो विष्णोः वरणादेव सम्यक् चायितं प्रापितं प्राप्तं अभिवृद्धं यत् स्वरूपतेजः ब्रह्मवर्चसं लौकिकप्रजादिकमपि तेन सन्धीयते । संसृतावल्पतेजो जीवस्वरूपं भगवान् मुक्तौ महत्करोतीति हि 'अल्प-तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोतीशो महत्तदा' इति प्रमाणप्रसिद्धम् । अन्नाद्येन तदुपलक्षितसर्वभोगेन च सन्धीयते युक्तो भवतीत्यर्थः । लौकिकफलेच्छूनां एतत् संहिताज्ञानादानुषङ्गिकं प्रसिद्धं प्रजादिकमपि फलं यथायोग्यं भवतीति व्याख्येयम् । 'प्रजया' पुत्रसन्तत्या 'पशुभिः' गवादिभिः 'ब्रह्मवर्चसेन' वेदाध्ययनजनितमुखगतवर्चोविशेषेण अन्नाद्येन तदुपलक्षितभोगेन सुवर्ग्येण लोकेन प्रसिद्धस्वर्गलोकेनेत्यर्थो द्रष्टव्यः। यथोक्तमैतरेयभाष्ये- ''अथातः संहिताया उपनिषदिति खण्डे । 'युक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा । नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः' इति च । प्रकृष्टत्वेन जननात् प्रजेति ज्ञानं पान्ति शंसाधनाश्चेति पशवो वेदाः परब्रह्मणो विष्णोः वरणादेव सम्यक् चायितं स्वरूपतेजः ब्रह्मवर्चनम् । लौकिकप्रजादिकमपि तदिच्छूनां यथायोग्यं भवति'' इति ॥ ८ ॥

## उपनिषत्

(मेधादिप्रार्थनाविद्याः)

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । समेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥ ९ ॥

आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमा वह । लोमशां पशुभिस्सह स्वाहा ॥ १० ॥

## भाष्यम्

'यो विश्वरूपो भगवान् छन्दसामधिपो हरिः ।
छन्दोभ्योऽमृतरूपेभ्यः सुव्यक्तस्तदुपासनात् ।
मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते ।' इति च ॥
'वेदावासत्वतो विष्णुः ब्रह्मकोश इति स्मृतः ।
भगः षड्गुणपूर्णत्वात् बहुरूपत्वतो विभुः ॥
'सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् ।
मुच्यते नात्र सन्देहः सर्वभोगैश्च पूज्यते'[1] इति प्रक्रुसे ॥
'आवहन्ती चिरं सर्वभोगान् या श्रीस्सनातनी ।
तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम् ।'

इति च ॥ ९-१० ॥

---

१. युज्यते क.

## प्रकाशिका

'छन्दोभ्योऽध्यमृतात्सम्बभूव' इत्यत्रामृतात् अमृतेभ्यो नित्येभ्यो वेदेभ्योऽधि अधिकतया सर्वोत्तमत्वेन सम्बभूव सम्यगाविर्बभूव । अमृतादित्येकवचनं छन्दसां भगवद्विषये एकवाक्यताद्योतनार्थम् । अत एव 'विश्वरूपः' इत्युक्तम् । विश्वस्मिन् इन्द्रादौ रूपमन्तर्यामिरूपं यस्येति विग्रहः । तथा चेन्द्रादिसूक्तान्यपि 'गुहाशयायैव न देहमानिने' (भा. ४.३.२२) इति स्मृतेरिन्द्राद्यन्तर्यामिविषयाणीत्येकवाक्यतेति भावः । स 'इन्द्रो मेधया' धारणया बुद्ध्या मा मां 'स्पृणोतु' सम्बध्नातु । 'स्पृ स्पर्शने' इति धातोः विकरणव्यत्ययात् वृणोत्वितिवत् स्पृणोत्विति रूपं भवतीति ज्ञेयम् । मेधाऽपि छन्दोविषयैव भवेदिति सूचनाय छान्दसप्रयोगः । अत एवाऽह श्रुतिः अमृतस्य धारणो धारको भूयासमिति । मे शरीरं विचर्षणं वि विशेषेण 'चर गतिभक्षणयोः' इति धातोर्गत्यर्थानां च ज्ञानार्थत्वात् चर्षणं ज्ञानानुकूलं भवतु । मेधावित्वेऽपि व्याध्यादिना शरीरदौर्बल्ये ज्ञानायोगादिदं प्रार्थनम् । मे जिह्वा मधुमत्तमा अतिशयेन मधुवचनवती भूयात् । गुर्वादिषु प्रियवचनाभावे ज्ञानायोगादिदं प्रार्थनम् । मयि छन्दसामभावे मां प्रति त्वया कथं छन्दोविषयकमेधाप्रार्थनं क्रियत ? इत्यत उक्तं 'ब्रह्मणः कोशोऽसि' इति । 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोः ब्रह्मणो वैदिक-शब्दराशेः कोशोऽसि । मेधया अपिहितः निगूहितोऽसि । व्याख्यानकाले मेधामाविर्भावयसि । अन्यदा निगूह्य कोशान्तस्स्थितधनवन्न प्रकाशयसीति भावः ।। ९ ।।

'क्षुधितानां दुर्भगानां कुतो योगसमाधयः' इति वचनादन्नाभावे चित्त-समाधानायोगादन्नदायिन्याः लक्ष्म्याः प्रार्थनप्रकारमाह - **आवहन्तीति** ।। चीरं चिरतरं मम वासांसि पटान्नपाने च सर्वदा आवहन्ती 'वह प्रापणे' इति

धातोः आ सम्यक् प्रापयन्ती, 'तनु विस्तारे' इति धातोर्वितन्वाना विशेषेण विस्तारयन्ती या महालक्ष्मीर्यतः एतादृशी ततः कारणात् लोमशां सुशिखण्डोपशोभितां तां श्रियं मे मयि आवह आधेहि । पशुभिरित्युपलक्षणम् । वासोभिरन्नपानादिभिश्च सहेत्यपि द्रष्टव्यम् । अनेनापि मन्त्रेणाऽहुतिः देयेति भावेन स्वाहेत्युक्तम् ॥ १० ॥

## पदार्थदीपिका

**अथ भाष्यार्थः–**

विद्याभ्यासिनः प्रज्ञापरपर्यायमेधादिना भाव्यम् । अतस्तत्प्राप्त्यर्थं विद्याः निरूप्यन्ते- **यच्छन्दसामृषभ इत्यादिना** ॥ अत्र प्रसिद्धेन्द्रस्यैव छन्दसामृषभत्वादिविशेषणमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **यो विश्वरूप इति** ॥ 'विश्वं समस्तं पूर्णञ्च' इति वचनाद्विश्वरूपः पूर्णरूपः । 'छन्दसामृषभ' इत्यस्यार्थः 'छन्दसामधिपः' इति । इदं रातीति व्युत्पत्त्या भक्ताभिलषितदातृत्वार्थकेन्द्रशब्दार्थो हरिरिति । भक्ताभिलषितमाहरतीति हरिरित्यर्थः । अयं च श्रीवेदव्यास एव । तस्यैव विद्याधीशवेदपतिशब्दवाच्यतायाः 'विद्याधीशः स्वयम्प्रभुः' इति 'वेदपतिर्जगौ' इति भगवत्पादैरुक्तत्वात् । अत्रापि छन्दसामृषभ इत्युक्तत्वात् । तथा 'वयः सुपर्णा उपसेदुरिन्द्रं प्रियम्' इति श्रुतिगतेन्द्रशब्दस्य, 'सुपर्णा ऋषयो व्यासं नाथमाना ययुः सुराः' इति एकादशस्कन्धतात्पर्ये भगवत्पादैर्वेदव्यासपरत्वेन व्याख्यातत्वेन अत्रापि इन्द्रशब्दस्य तत्परत्वमेवावगन्तव्यमिति सम्प्रदायविदः । अमृतादित्येकवचनं बहुवचनार्थे । तेन छन्दोभ्य इत्येतद्विशेषणत्वमेतस्योपपन्नमित्यभिप्रेत्योक्तम्- **अमृतरूपेभ्य इति** ॥ अपौरुषेयत्वेन नित्येभ्यो 'वयः सुपर्णा अतीदुशक्रओहत' इत्यादिभ्य इत्यर्थः । यद्वा जरामरणादिविध्वंसनहेतुतया प्रसिद्धामृतसरूपेभ्य इत्यर्थः । अधिसम्बभूवेत्यस्यार्थः सुव्यक्त इति । स्पष्टं प्रतिपाद्यतया ज्ञात

इत्यर्थः । मेधया स्पृणोत्विति प्रार्थनायाः तात्पर्यमाह- **तदुपासनात् मेधावी भूत्वेति ॥** तथा च स इन्द्रो मयोपासितः सन्मोक्षार्थकवेदविद्याभ्यासहेतुभूतया मेधया स्पृणोत्वित्यर्थ उक्तो भवति । 'अमृतस्य देवधारणो भूयासम्' इत्यस्य तात्पर्यम्- **तत्वविज्ञानी भूत्वेति ॥** केवलं स्वाध्यायाध्यनरूपवेदधारणायाः 'स्थाणुरयं केवलो भारवाहो योऽधीत्य वेदाननधीयतेऽर्थान्' 'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य भ्रमफलो ह्यधेनुमिव रक्षतः ॥' (भा. ११.११.१८) 'वित्तं त्वत्तीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी' (भा. ११.११.१९) इत्यादिश्रुतिस्मृतिभ्यामनर्थहेतुत्वावगमेनार्थज्ञानपर्यन्तत्वादेवमुक्तमिति ज्ञातव्यम् । यथोक्तम्– 'तस्मादेवं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इति । तथाचामृतस्य वेदस्य धारणो धारको भूयासं मोक्षार्थं वेदविद्याश्रवण-जनितज्ञानवान् भूयासमिति यावदित्यर्थ उक्तो भवति ।

'ब्रह्मणः कोशोसि' इति वाक्यं, हे इन्द्र त्वं ब्रह्मणश्चिन्मात्रस्य कोशोऽसि निधानमसि आधारोऽसीति यावत् । विशिष्टे 'विशेषणांशसद्भावात्' इति परेण व्याख्यातं तदप्रामाणिकमिति भावेन स्वयं ब्रह्मकोशशब्दार्थमाह- **वेदावासत्वत इति ॥** 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोः बृहतेर्मन्प्रत्यये अमागमे यणादेशे च सति निष्पन्नो ब्रह्मशब्दो वेदवाची कोशशब्दश्चाऽवासार्थक इति भावः । 'तं त्वा भग' इत्यादौ भगशब्देन तन्नामा आदित्यः प्रार्थ्यते इत्येतदपव्याख्यानमिति भावेन भगशब्दार्थमाह– **भगष्षड्गुणपूर्णत्वादिति ॥** 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । [1]ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा' इति वचनात् भगशब्देन षड्गुणा उच्यन्ते । तैः पूर्णत्वादित्यनेन अर्शाद्यजन्ततया भगशब्दो भगवद्वाचक इत्युक्तं

---

१. 'ज्ञानवैराग्ययोः' इति क.

भवति । अर्शाद्यजन्तत्वमनङ्गीकृत्य 'ऐश्वर्यादिवाचिभगशब्देनैव विशेषणात् तन्त्वाभगेत्यादौ' इति गीताभाष्योक्तं तु व्याख्यानान्तरमित्यविरोधः ।

'हे भग तन्नामकादित्य सहस्रशाखे यथेष्टकिरणे त्वयि' इत्येतदपव्याख्यान-मित्यभिप्रेत्याह- **बहुरूपत्वत इति** ।। सहस्रशाखे त्वयि मनसा प्रविष्ट इति शेष इत्यभिप्रेत्य तत्तात्पर्यमाह- **तमुपास्येति** ।। निमृज इत्यत्र पापमिति शेष इत्यभिप्रेत्य तस्य तात्पर्यमुक्तम्-**उच्यत इति** ।। अनेन प्रतिवेशोसीऽत्यस्यापि तात्पर्यमुक्तं ज्ञातव्यम् । सर्वभोगैश्चेत्यनेन प्रमा भाहीत्यस्य मेधादि सम्पन्न-स्याप्यन्नवस्त्राद्यभावे मनःक्षोभेण विद्या न सम्यक् प्रतिष्ठिता भवतीत्यतस्तदर्थं काचन विद्या निरूप्यते- **आवहन्ती वितन्वानेति** ।। अत्र स्वाहेति सम्बोध्य श्रियमावहेति कं प्रति प्रार्थ्यत इति न प्रतीयते इत्यतस्तं दर्शयन् तां विद्यां प्रमाणेन व्याचष्टे– **आवहन्तीति** ।। दात्रीत्यर्थः । धातूनामनेकार्थत्वात् । यद्वा 'वह–प्रापणे' इति धातोः सम्यक् प्रापयन्तीत्यर्थः । चीरमित्यस्यार्थ-श्चिरमिति । बहुकालमित्यर्थः । वासांसीत्यादेस्तात्पर्यम् । **सर्वभोगानिति** ।। वितन्वानेत्यस्यार्थः– **सनातनीति** ।। 'तनु विस्तारे' विस्तारश्च कालत इत्यभिप्रेत्येत्थं व्याख्यातम् । 'ततो मे श्रियमावह' इत्यत्र मे इति षष्ठी सप्तम्यर्थ इत्यभिप्रेत्य मयीत्युक्तम् । लोमशामित्यस्यार्थः- **सुशिखण्डोप-शोभितामिति** ।। शिखण्डा कपर्दा वेणीचतुष्टयोपशोभितामित्यर्थः । 'चतुष्क-पर्दा युवतिः सुपेशाः' (ऋ. १०.११४.३) इति श्रुतेरिति भावः । स्वाहेत्यस्य विशेष्यकथनं **गोविन्देति** । अनेन स्वाहेत्यनन्तरं गोविन्देति शेष इत्युक्तं भवति । वेदवेद्यः 'श्रीवेदव्यासः' इत्यर्थः ।। ९-१० ।।

## उपनिषत्

**यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । समेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं**

**मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥ ९ ॥**

**आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांᳫसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमा वह । लोमशां पशुभिस्सह स्वाहा ॥ १० ॥**

**अथ खण्डार्थः-**

ततश्च यश्छन्दसामृषभ इत्यादेरयमक्षरार्थः ॥

वेदविद्याभ्यासिनः प्रतिभाप्रज्ञापरपर्यायमेधादिना भाव्यम् । अतस्तत्प्राप्त्यर्थं विद्याः निरूप्यन्ते- **'यश्छन्दसामृषभो इत्यादिना** ॥ तत्रादौ मेधां प्रार्थयते– **यश्छन्दसामिति** ॥ 'यः छन्दसां' वेदानां 'ऋषभः' अधिपतिः 'विश्वरूपः' पूर्णरूपः यश्चामृतात् एकवचनं बहुवचनार्थे । अमृतेभ्योऽपौरुषेयत्वेन नित्येभ्यो जरामरणादिविध्वंसनहेतुतया प्रसिद्धामृतसमानेभ्यो वा 'छन्दोभ्यो' 'वयः सुपर्णा' इत्यादिवेदवाक्येभ्यः 'अधिसम्बभूव' सुव्यक्ततया प्रतिपाद्यः तदुक्तप्रकारेणोपास्त्या प्रकटो बभूवेति वा । 'स इन्द्रः' भक्ताभिलषितदाता वेदव्यासरूपो हरिर्मयोपासितः सन् 'मा' मां मेधया मोक्षार्थकवेद-विद्याभ्यासहेतुभूतया प्रज्ञया 'स्पृणोतु' बलयतु । प्रज्ञाबलयुक्तं करोतु । 'हे देव' वेदव्यास एवं मेधासम्पत्त्यनन्तरम् अहं त्वत्प्रसादादमृतस्य वेदस्य धारणो धारको भूयासं मोक्षार्थं वेदविद्याश्रवणजनिततत्त्वज्ञानवान् भूयासमिति यावदित्यर्थः ।

पुनः प्रार्थनीयान्तरमाह- **शरीरमिति** ॥ हे देव मे शरीरं विचर्षणं 'प्रजाश्चर्षणयस्स्मृताः' इति वचनात् बहुशिष्याख्यप्रजोपेतं तत्सेव्यमिति

यावत् । भवतु । सर्वेन्द्रियाणां भगवत्परत्वं प्रार्थयते - **जिह्वा मे इत्यादिना** ॥ हे देव मे मम जिह्वा मधुमत्तमा 'मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते' (छां. ३.१.१.) इति छान्दोग्योपनिषद्भाष्योक्तेर्मदो धीयते अस्मिन्निति मधु ब्रह्म । अतिशयेन तद्वती । तत्प्रतिपादिका भवतु । कर्णाभ्यां भूरि पूर्णं ब्रह्म विश्रुवं विशेषेण शृणुवानि । इदमुपलक्षणम् । चक्षुषा त्वद्रूपाणि पश्यामीत्यादिद्रष्टव्यम् । मम वेदतद्विषयमेधयोरभावात् तदुद्देशेन मां प्रति त्वदीयं तदुभयप्रार्थनं व्यर्थमित्यत आह- **ब्रह्मणः कोशोऽसीति** ॥ हे देव त्वं ब्रह्मणो वेदस्य कोश आवासो निधिरसि मेधया पिहितः आच्छादितोऽसि पूर्णोऽसीति यावत् । पुनः प्रार्थनीयान्तरमाह- **श्रुतमिति** ॥ हे देव मे मया श्रुतं दिव्यवेदार्थं गोपाय गोपय । अयोग्यं प्रत्युपदेशविषये बुद्धिमदत्वा रक्षस्वेत्यर्थः । 'गुपू रक्षणे' इति धातोः । यद्वा मदीयं श्रुतमर्थं गोपाय अविस्मृतं कुरु । श्रुतं मे मा प्रहासीरिति शाखान्तरोक्तेरयमर्थः ॥

मेधादिसम्पन्नस्याप्यन्नवस्त्राद्यभावे सति मनःक्षोभेण विद्या न सम्यक् प्रतिष्ठिता भवत्यतस्तदर्थं काञ्चन विद्यामाह- **आवहन्तीति** ॥ हे स्वाहा 'स्वीयं स्वीकुरुते यस्मात् स्वाहेत्युक्तो जनार्दनः' (ब्र.सू.अनु. १.४.१०) इति वचनात् स्वीयमेव हविरादिकं भ्रान्त्या जीवानां [1]स्वत्वेन प्रतीतं स्वीकुरुत इति स्वाहः सचासावश्चेति स्वाहेति सम्बुद्धिः । गोविन्देति शेषः । वेदवेद्य श्रीवेदव्यास या 'वितन्वाना' सनातनी आत्मनो जीवजातस्य 'चीरं' चिरं बहुकालम् अन्नवस्त्रादिरूपसर्वभोगान् 'आवहन्ती' दात्री । यद्वा आत्मनो जीवसमूहानन्नादिसर्वभोगान् 'आवहन्ती' प्रापयन्ती । 'अजां ग्राममनयत्' इतिवत् द्विकर्मता च । इदानीमिति शेषः । मम पशुभिः अश्वादिभिः सह वासांसि गावो गाः अन्नपाने च कुर्वाणा वर्तते यतोऽतः तां लोमशां

---

१. स्ववत्. क.

सुशिखण्डोपशोभितां श्रियं लक्ष्मीं मे मयि सर्वदा आवह स्थापय। उत्तरत्रापि निश्चलां कुर्वित्यर्थः ॥ ९-१० ॥

(शिष्यसम्पत्तिप्रार्थना)

## उपनिषत्

**आ मां यन्तु ब्रह्मचारिणः स्वाहां। वि मां यन्तु ब्रह्मचारिणः स्वाहां। प्रमां यन्तु ब्रह्मचारिणः स्वाहां। दमां यन्तु ब्रह्मचारिणः स्वाहां। शमां यन्तु ब्रह्मचारिणः स्वाहां। यशो जनेंऽसानि स्वाहां। श्रेयान् वस्यंसोऽसानि स्वाहां। तं त्वां भग प्रविंशानि स्वाहां। स मां भग प्रविंश स्वाहां। तस्मिंन् सहस्रंशाखे। नि भंगाहं त्वयिं मृजे स्वाहां॥ ११ ॥**

**यथाऽऽपः प्रवता यन्तिं। यथा मासां अहर्जरम्। एवं मां ब्रंह्मचारिणंः। धातरायंन्तु सर्वतः स्वाहां। प्रतिवेशोंऽसि प्र मां भाहि प्र मां पद्यस्व ॥ १२ ॥**

### भाष्यप्रकाशिका

ब्रह्मचार्यभावे व्याख्यानासम्भवात्तत्प्रार्थनप्रकारमाह-**आ मा यन्त्विति ॥** ब्रह्मचारिणो 'मा' मां प्रति 'आ' समन्तात् आयन्तु आगच्छन्तु। 'इण् गतौ' इति धातोर्लोटि प्रथमपुरुषवचनमिदम्। 'वि मा यन्तु' वि विशिष्टतया कुलगोत्रादिभिरन्योन्यं विशिष्टतया च आयन्तु।

**'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि।**
**अनार्यकायानृजवे शठाय न मां ब्रूया ऋजवे ब्रूहि नित्यम् ॥'**

इति श्रुतेरकुलीनेषु वेदोपदेशस्यानुचितत्वादेतत्प्रार्थनम्। 'शमो मन्निष्ठता

बुद्धेः' इति वचनाच्छमः विष्णुविषयकनिष्ठा । विष्णुविषयकनिष्ठाभावे तं प्रति वेदोपदेशायोगादिदं प्रार्थनम् । 'नाभक्ताय कदाचन' (भ.गी. १८.६७) इति गीतोक्तेः । 'दम इन्द्रियनिग्रहः' इति वचनात् 'दमा' इन्द्रियनिग्रहवन्तः । 'इदं ते नातपस्काय' (भ.गी. १९.६७) इति गीतायामेवोक्तत्वादिदं प्रार्थनम् । जने जनसमुदाये यशःकीर्तनात् यशो भवानि यशसि स्थितो भवानि । 'अस भुवि' इति धातोर्लोट्युत्तमपुरुषैकवचनमिदम् । 'वस्यसः' वस्तुं योग्यं वस्यः सुखं, तस्य वस्यसः । सुखविषये इत्यर्थः । 'श्रेयान्' श्रेष्ठः असानि अतिशयितसुखवानसानीति भावः । स्वस्य सुखाभावेऽप्युपदेशायोगादेतत्प्रार्थनम् । 'भग' षड्गुणपूर्ण 'तं त्वा' भगवन्तं त्वामहं प्रविशानि शिष्येषु प्रवचनेन युक्तो भवानीति भावः । त्वय्येवाऽविष्टचित्तो भवानीति वा । हे भग स त्वं मा मां प्रविश मयि सन्निहितो भव । 'न ऋते त्वत्क्रियते' इति श्रुतेः । निभग नितरां भाग्ययुक्त नारायण सहस्रशाखे सहस्रावतारे तस्मिन् त्वयि मृजे 'मृजू शुद्धौ' इति धातोर्दोषाणां प्रक्षालनवानसानीत्यर्थः । **एतैर्मन्त्रैः प्रत्येकमग्निमुखे आहुतिर्देयेति भावेन सर्वत्र स्वाहेत्युक्तम्** ॥ ११ ॥

शिष्या अप्यप्रयत्नेनाऽयन्त्विति भावेनाह - **यथाऽप इति** ॥ पर्वतोन्नतदेशेनाऽपः यथाऽऽयन्ति, मासाः अहानि जरयतीति अहर्जरः संवत्सरः तं यथाऽऽयन्ति, एकैकस्मिन् वत्सरे द्वादश द्वादश मासा अनायासेन गच्छन्ति, एवं हे धातर्ब्रह्मचारिणो मां सर्वतः अष्टदिग्भ्योऽप्यायन्तु । प्रतिवेशः प्रति मां प्रति वेशः विशत इति व्युत्पत्त्या वेशः प्रवेशयोग्योऽसि । मम योग्यजीवत्वात् तव दयालुत्वाच्च मां प्रविश्य नय नियमय नियन्तुं योग्ये मयि सतीति भावः । 'योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयति' इति स्मृतेः । 'प्र मा भाहि' प्र प्रकर्षेण मा मां भाहि । 'भा दीप्तौ' इति धातोः 'भासय' ब्रह्मवर्चसवन्तं कुर्विति भावः । 'उद्दीप्यस्व जातवेद' इति

श्रुतेः । 'प्र मा पद्यस्व' प्र प्रकर्षेण मा मां पद्यस्व आप्तो भव । इतरेभ्योऽधिकसन्निधानं कुर्वित्यर्थः ॥ १२ ॥

**आ मां यन्तु ब्रह्मचारिणः स्वाहा । वि मां यन्तु ब्रह्मचारिणः स्वाहा । प्रमां यन्तु ब्रह्मचारिणः स्वाहा । दमां यन्तु ब्रह्मचारिणः स्वाहा । शमां यन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यंसोऽसानि स्वाहा । तं त्वां भग प्रविशानि स्वाहा । स मां भग प्रविश स्वाहा । तस्मिंन् सहस्रंशाखे । नि भंगाहं त्वयिं मृजे स्वाहा ॥ ११ ॥**

**यथाऽऽपः प्रवता यन्तिं । यथा मासा अहर्जरम् । एवं मां ब्रंह्मचारिणंः । धातरायंन्तु सर्वतः स्वाहा । प्रतिवेशोंऽसि प्र मां भाहि प्र मां पद्यस्व ॥ १२ ॥**

**अथ खण्डार्थः-**

अभ्यस्ता च विद्या शिष्येभ्यो व्याख्यातैव ज्ञानाधिक्यसम्पादकतया सम्पूर्णा भवति नान्यथा । 'आचार्यात्पादमादत्ते पादं शिष्यःस्वबुद्धितः । पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात्' इति वचनात् । अतस्तदर्थं शिष्यसम्पत्तिं प्रार्थयते- **आमायन्त्विति** ॥ 'हे स्वाहा' 'मा' मां प्रति ब्रह्मचारिणः शिष्याः 'आ यन्तु' आयान्तु 'वि' विविधगोत्रोत्पन्नाः 'प्र' प्रकृष्टाः ज्ञानप्रकर्षवन्तः 'दमाः' इन्द्रियनिग्रहवन्तः शमाः भगवन्निष्ठबुद्धयः । व्याख्यातृयशः श्रुत्वैव हि दिग्भ्यः शिष्याः समायान्ति नान्यथा । अतस्तदर्थं यशः प्रार्थयते- **यश इति** ॥ 'जने' व्याख्यातृजनमध्ये शिष्यागमनार्थं 'यशो'

यशस्वी 'असानि' भवानि। 'वस्यस' इत्येतत्सकारान्तं सुखवाचि। तथा च वस्यस इति पञ्चमी सप्तम्यर्थे। शिष्यागमनजनितसुखनिमित्ताद् वा इतरव्याख्यात्रपेक्षया श्रेयान् श्रेष्ठ असानि। हे 'भग' षड्गुणपूर्ण स्वाहा तं 'त्वा' त्वां मनसा 'प्रविशानि' सदा त्वां उपासीनो भवानि। हे भग स्वाहा स त्वं 'मा' मां 'प्रविश' मदुपास्तिविषयो भव। किं तत इत्यत आह- **तस्मिन्निति** ॥ हे भग स्वाहा 'सहस्रशाखे' बहुरूपे तस्मिंस्त्वयि मनसा प्रविष्टोऽहं त्वामुपासीन इति यावत्। अपरोक्षज्ञानद्वारा पापमप्रारब्धं 'नि मृजे' प्रक्षालये ॥ ११ ॥

शिष्याश्च अयत्नेनैव आयान्त्विति सदृष्टान्तं प्रार्थयते - **यथाप इति** ॥ 'यथा आपः' उन्नतप्रदेशे वृष्टाः अनायासेन 'प्रवताः' निम्नभूमीः। 'प्रवतास्यान्निम्नभूमिः' इति वचनात्। निम्नप्रदेशानिति यांवत् उद्दिश्य यन्ति गच्छन्ति आयान्तीति यावत्। यथाचाहर्जरं अहानि जीर्णानि गतानीति यावत्। यत्र भवन्ति सोऽहर्जरः संवत्सरः तं प्रति मासाः यथा प्रयन्ति प्रपतन्ति तदन्तर्गता भवन्तीति यावत्। एवमेव स्वाहा 'धातः' सर्वजगद्धारक देव मां प्रति ब्रह्मचारिणः सर्वतो दिग्भ्यः 'आयन्तु' आयान्तु आगत्य च मदाज्ञायां यन्तु तिष्ठन्तु। मदाज्ञानुवर्तिनो भवन्त्विति यावदित्यर्थः। मोक्षं प्रार्थयते - **प्रतिवेशोऽसीति** ॥ हे धातस्त्वं आदौ मा मां प्रपद्यस्व 'पद्लृ गतौ' णिजन्तं 'प्रकर्षेण गमय त्वत्समीपं प्रापय। पश्चात्त्वं प्रतिवेशो मुक्तौ मया प्रवेष्टुं योग्योऽसि। मम त्वत्प्रवेशं देहीति यावत्। अनन्तरं 'मा' मां 'प्र' प्रकर्षेण भाहि 'भा दीप्तौ णिच्। दीपय प्रकाशय। आनन्दादिसर्वभोगदानेन मत्स्वरूपाविष्करणं कुर्विति यावदित्यर्थः। (प्रपद्यस्व प्राप्नुहि च।) 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुतेरिति भावः ॥ १२ ॥

## उपनिषत्

(व्याहृतिविद्यानिरूपणम्)

भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मै तां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः॥ १३॥

## भाष्यम्

'भूरादिव्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम्।
अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः॥'
'वासुदेवो महो नामा त्वनिरुद्धश्शिरो मतः।
भूर्नामाथ भुवो नामा बाहू प्रद्युम्न ईरितः॥'
'सङ्कर्षणस्सुवर्नामा पादौ तस्य महात्मनः।
'अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते।
निर्विशेषोऽपि भगवान् सङ्ख्यामात्रविशेषतः॥' १३॥

## भाष्यप्रकाशिका

इदानीं सकलविद्याभ्यासकाले शुद्ध्यर्थं प्रागवश्यं वक्तव्यां व्याहृतिविद्यामाह-**भूर्भुवःसुवरित्यादिना**॥ 'सव्याहृतिं सप्रणवम्' इति हि श्रुतिः। प्रतिपाद्यदेवताज्ञानपूर्वकं मन्त्रोऽभ्यसनीय इति भावेनाऽह भाष्याकारो - **भूरादिव्याहृतीभिरिति**॥ भूरित्यनेनानिरुद्धः कथ्यते । भुव इत्यनेन प्रद्युम्नः। सुवरित्यनेन संकर्षणः। मह इत्यनेन वासुदेव इति विवेकः। तासां मध्ये चतुर्थां 'मह' इति व्याहृतिं महत् चमसं चमत्कारो यस्य स महाचमसः परमात्मा तस्य सम्बन्धी माहाचमस्यः ब्रह्मा प्रवेदयते। इतिहासादितोऽप्युत्तमत्वात् महागुणप्रतिपादकत्वात् सर्वगुणपूर्णत्वप्रतिपादकत्वाच्च चतुर्थ्या

ब्रह्मैव सम्यगुपास्त इति भावः । मह इति व्याहृतिप्रतिपाद्यं ब्रह्म सर्वगुणपूर्णं परं ब्रह्म । स वासुदेव आत्मा मध्यदेहः । अङ्गी नारायणः । अन्या देवता अनिरुद्धप्रद्युम्नसङ्कर्षणाख्याः नारायणस्याङ्गानि शिरः पाणिपादाख्याङ्गानि । अनिरुद्धः शिरः, प्रद्युम्नो बाहू, संकषर्णः पादौ । एवं चतुर्मूर्त्यात्मको नारायण इत्यर्थः । प्रत्येकं मन्त्रार्था वासुदेवाद्या भगवदङ्गतया ध्येयाः समुदितमन्त्र-प्रतिपाद्यो नारायणस्त्वङ्गितया ध्येय इति भावः ॥ १३ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः–**

पूर्वं वेदविद्याभ्यासिनो मेधादिप्राप्त्यर्थं विद्याः निरूपिताः । इदानीं व्याहृतिनिष्ठां विद्यामाह- **भूर्भुवः सुवरिति वा इत्यादिना** ॥ अस्याः विद्यायाः ब्रह्मपरत्वाप्रतीतेस्तां प्रमाणेनैव सम्यक् व्याचष्टे- **भूरादिव्याहृती-भिस्त्वित्यादिना** ॥ तत्र भूर्भुवस्सुवरित्यादेस्तात्पर्यम्- **भूरादीति** । मह इत्यन्ताभिरित्यर्थः । 'स आत्मा अङ्गान्यन्या देवताः' इत्यस्यार्थमाह– **देहमध्यग इत्यादिना** ॥ महो नामा वासुदेवो देहमध्यगः मूलरूपस्य हरेः देहमध्यग इत्यादिना च आत्मशब्दोऽङ्गित्वार्थको मध्यदेहपर इत्युक्तं भवति । तस्य महात्मनो वासुदेवस्येत्येतत् 'अनिरुद्धः शिरो मतः' इत्यादावपि सम्बध्यते । नन्वनिरुद्धादिमूर्तीनां परस्परमत्यन्ताभिन्नत्वात् 'अन्या देवता' इति कथमन्यत्वोक्तिः । तथा हीनोच्चभावशून्यत्वात्स आत्मा अङ्गानी-त्यङ्गाङ्गिभावोक्तिश्चेत्यत आह- **अनन्योऽपीति** ॥ भेदशून्योऽपीत्यर्थः । चतुरात्मा भगवाननन्योऽपि श्रुतौ अन्यशब्देन प्रकीर्त्यते । तथा निर्विशेषोऽपि हीनोच्चभावरूपविशेषशून्योऽपि भगवान् स आत्मा अङ्गानीति च प्रकीर्त्यते इत्यध्याहारेण योज्यम् । ननु भेदाभावे कथमन्यत्वोक्तिरित्यत आह- **सङ्ख्येति** ॥ भेदाभावेऽपि विशेषबलेन केवलं द्वित्वादिसङ्ख्याविशेष-

युक्तत्वात् अन्यत्वोक्तिर्युक्तेत्यर्थः । यथोक्तं अनुव्याख्याने- 'अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः' इति ॥ भगवानिति वचनेन ऐश्वर्यादङ्गाङ्गि-भावोक्तिरपि युक्तेति सूचितमित्यपि द्रष्टव्यम् । यथोक्तं भाष्ये- 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः । ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने' इति ॥ १३ ॥

## उपनिषत्

(व्याहृतिवाच्यमूर्तीनामधिष्ठाननिरूपणम्)

**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते ॥ भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते ।**

## भाष्यम्

'लोकज्योतिःप्राणवेदेष्वेकः स पुरुषोत्तमः ।
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः ॥'
'महीयते महति च स्वयं स भगवान् हरिः ।
पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते ॥
नामप्रवृत्तिहेतुत्वात् नाम लोकादिकं हरेः ।'
'अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः ॥
ईक्षणादन्तरिक्षं चादित्यस्थोऽदितेःसुतः ।
अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् ॥
चन्द्र आह्लादरूपत्वात् .......'

## भाष्यप्रकाशिका

इदानीं भूरादिवाच्याऽनिरुद्धादिदेवतानां सकलजगदाधारत्वद्योतनाय चतुर्धा चतुर्धा स्थानान्याह- **भूरिति वा अयं लोक इत्यादिना ॥** भूर्नामकोऽनिरुद्धः 'अयं लोको वै' एतल्लोकस्थितत्वात् 'लोकृ दर्शने' इत्यस्माद्धातोः सर्वज्ञत्वात्समीपगतत्वाच्च अयं लोकशब्दाभ्यां वाच्यो वै । 'भुवः' भुवर्नाम प्रद्युम्नस्वरूपम् अन्तरिक्षस्थितत्वादन्तरिक्षम् । सुवर्नाम सङ्कर्षणस्वरूपं प्राणे स्थितत्वात् प्रकाशरूपत्वादसौ लोकः । मह इति वासुदेवः आदित्य-स्थितत्वादादित्यः । एवं रूपचतुष्टयैर्लोकत्रयभासकमादित्यं च प्रवर्तयति । एवं ध्यात्वा त्रिलोक्यामैहिकं सुखं लब्ध्वा परलोकगमनसमये सूर्ये च सङ्गत्य स सुखी भवतीति । एवं भूरिति शब्दवाच्योऽनिरुद्धः अग्निः अग्निस्थित-त्वादङ्गभूतजगन्नेतृत्वाच्चाग्निशब्दवाच्यः । भुवः भुवश्शब्दवाच्यः प्रद्युम्नो वायुः 'वय गतौ' इति धातोर्जगत्प्रवर्तकत्वाद्वायुगतत्वाच्च वायुशब्दवाच्यः । सुवः सुवश्शब्दवाच्यः सङ्कर्षणः आदित्यः आदित्यप्रवर्तकत्वाद् अदितिसुत-त्वाच्चाऽदित्यशब्दवाच्यः । महः महश्शब्दवाच्यो वासुदेवः चन्द्रमाः । चन्द्र-गतत्वात् 'चदि आह्लादने' इति धातोः सुखकरत्वाच्चन्द्रमाः चन्द्रमश्शब्द-वाच्यः । एवं ध्यातुरग्निवाय्वादयस्सर्वे अनुकूला भवन्तीति भावः ।

## पदार्थदीपिका

भूरादिव्याहृतिवाच्यानां अनिरुद्धादिमूर्तीनां उपास्त्यर्थमधिष्ठानान्याह- **भूरिति वा अयं लोक इत्यादिना** ॥ तत्र भूरादिशब्दवाच्यभगवन्मूर्तीनां लोकाद्यभेद उच्यते इत्यन्यथाप्रतीतिनिरासाय तदभिप्रायमाह- **लोकेति** ॥ लोकशब्देन भूम्यन्तरिक्षासौ लोकानां ग्रहणम् । 'मह इत्यादित्य' इत्युक्ता-दित्यस्यापि लोकप्रकाशकत्वात् लोकशब्देन ग्रहणमिति मन्तव्यम् । ज्योतिःशब्देनाग्निवाय्वादित्यचन्द्रमसां ग्रहणम् । प्राणवेदेत्यत्र क्रमो न विवक्षितः।

प्राणेत्यनेन प्राणापानव्यानानां सङ्ग्रहः । तदाप्यायकत्वाद् अन्यस्यापि प्राणशब्देनैव ग्रहणम् । वेदशब्देन ऋक्सामयजुषां ब्रह्मेत्युक्तवेदसमुदायस्य च ग्रहणम् । तथा चानिरुद्धादिरूपो भगवान् लोकादिषु तिष्ठतीति श्रुत्यर्थो द्रष्टव्यः । 'सप्तसु प्रथमा' इति सूत्रादिति भावः । 'तावा एताश्चतस्रश्चतुर्धा' इत्यस्यार्थः- **प्रत्येकश इति** ।। 'आदित्येन वाव सर्वे लोका महीयन्ते चन्द्रमसा वाव सर्वाणि ज्योतींषि महीयन्ते । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । अन्नेन वाव सर्वे प्राणा महीयन्ते ' इति वाक्यचतुष्टयाभिप्रायमाह- **महीयत इति** ।। पूज्यत इत्यर्थः । मह पूजायामिति धातोः । महति पूजयति । अत्र पूज्यपूजकभावोक्त्या भेदः प्रतीयते । अत आह- **पूज्येति** ।। अत्र भगवद्रूप-समुदाये अपिशब्दो यद्यपि तथापीत्यर्थे । तथा च यद्यपि अत्र भगवद्रूपसमुदाये पूज्यपूजकसमुदाये पूज्यपूजकभेदो नैवेष्यते । तथापि क्रीडयैव पूज्यपूजकभाव इत्यभिप्रायः । यथोक्तं - 'सोर्चन्नचरत्' इत्यत्र बृहद्भाष्ये । 'सोऽत्मानमर्चन्नचरत् क्रीडया तत्तदात्मकम्' इत्यादि । एवं 'भूरिति वा अयं लोक' इत्यादावयं लोक इत्यादिकं सप्तम्यन्तमित्यङ्गीकृत्य व्याख्यातम् । इदानीं तत्प्रथमान्तमङ्गीकृत्यापि व्याख्याति- **नामेति** ।। हेतुत्त्वात् हेतुमत्त्वात् लोकादिकं लोक इत्यादिकम् । तथाचायं लोक इत्यादिनाम्नां प्रवृत्तिहेतुभूताः ये धर्मास्तद्वत्त्वात् भूरादिशब्दवाच्यस्य हरेर्लोकादिकं अयं लोक इत्यादि-शब्दजातं नाम अतोऽयं लोक इति सामानाधिकरण्यं युक्तमित्यर्थः । अयं लोकइत्यादि नामप्रवृत्तिहेतुभूतधर्मवत्त्वमेव दर्शयति- **अयमित्यादिना** ।। तुशब्दश्चशब्दार्थः । तेनोत्तरत्र च लोकः प्रकाशरूपत्वादिति लोकशब्द-व्याख्यानसङ्ग्रहः । अतो न न्यूनतेति ज्ञातव्यम् । असुशब्दस्य सप्तमी असाविति न भवति किन्तु अदस्शब्दस्य प्रथमैकवचनमेव । स च स्वर्गलोकवाची । 'भूरिति वा अयं लोकः' इति लोकप्रकरणात् । तथा च

असावित्यनन्तरं परोक्षत्वादिति शेषः । यथोक्तं षट्प्रश्नभाष्ये - 'असौ विष्णुपरोक्षत्वात्' इति । स्वर्गलोकेऽपि असौशब्दप्रयोगे इदमेव निमित्तम् । ततश्च परोक्षत्वाद् हरिः असावित्युच्यत इत्यर्थः । कथं परोक्षत्वं हरेरित्यतस्तदुपपादयति - **प्राणे स्थितत्वत इति** ॥ प्राणस्य परोक्षत्वेन तत्र स्थितस्य हरेरपि परोक्षत्वं युक्तमिति भावः । तस्यार्थः 'प्राणे स्थितत्वत' इति । तथा च प्राणे स्थितत्वादसुशब्दवाच्य इत्यर्थः । ईक्षणादित्यतः पूर्वं अन्तरिति शेषः । अन्तःस्थित्वा ईक्षणात् अन्तरिक्षमित्यर्थः । यथोक्तं छान्दोग्यभाष्ये- '......अन्तरीक्षणयोगतः । अभावाद् व्यवधानस्य ह्यन्त-रिक्षमितीर्यते' इति - **अदितेः सुत इति** ॥ वामनरूपेणेति भावः । चाथशब्दावन्योन्यसमुच्चये । **वयतीति** ॥ 'वय-श्रेष्ठत्वे' इति धातोः । यद्यस्मात् जगत्प्रतिवयति श्रेष्ठो भवति तस्मात् वायुरित्यर्थः । यद्वा वय बन्धन इति धातोः यद्यस्माज्जगद्वयति विधिनिषेधाभ्यां बध्नाति तस्मात् वायुरित्यर्थः । आह्लादरूपत्वात् सुखरूपत्वादित्यर्थः । 'चदि आह्लादने' इति धातोः ।

## उपनिषत्

**भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते ।**

## भाष्यम्

**..............ऋगर्च्यत्वाज्जनार्दनः ।**
**'यजुर्याज्यस्वरूपत्वात् साम चासौ समत्वतः ॥**
**बृहत्त्वाद् ब्रह्म वेदानां समुदायेऽखिले स्थितः ।**
**'तत्सम्बन्धाद् वेदराशिर्ब्रह्मशब्देन कीर्तितः ।'**

## भाष्यप्रकाशिका

भूर्भूश्शब्दवाच्योऽनिरुद्धः ऋग्वेदगतत्वात् 'ऋ पूजायाम्' इति धातोरर्च्यत्वाच्च ऋक्शब्दवाच्यः। प्रत्यृचं बहुरूपत्वादृच इति बहुवचनम्। भुवः भुवश्शब्दवाच्यः प्रद्युम्नः सामवेदगतत्वात् सर्वरूपेषु समत्वाच्च सामशब्दवाच्यः। साम्नां ऋगधिरूढत्वाद् 'ऋचस्सामानि' इति श्रुतेः क्रमोल्लङ्घनम्। प्रतिसाम बहुरूपत्वाद् बहुवचनम्। सुवस्सङ्कर्षणो यजूंषि यजुर्वेदस्थित्वाद् इज्यत्वाच्च यजुश्शब्दवाच्यः। बहुवचनं तु पूर्ववद्द्रष्टव्यम्। महः वासुदेवः ब्रह्म वेदसमुदाये स्थितत्वाद् गुणबृंहितत्वाच्च ब्रह्मशब्द-वाच्यः। एवं ध्यातुर्वेदाः फलप्रदा भवन्तीति भावः।

## पदार्थदीपिका

अर्च्यत्वात् पूज्यत्वात्। याज्यस्वरूपत्वात् पूज्यस्वरूपत्वात्। समत्वतः सर्वरूपेष्विति शेषः। 'मह इति ब्रह्म' इत्यनेन किमधिष्ठानमुक्तमिति न प्रतीयते अत आह- **वेदानामिति**॥ तन्निर्वक्ति- **बृहत्त्वादिति**॥ तथा च अखिलवेदानां समुदाये प्रतिपाद्यतयाऽवस्थितो भगवान् बृहत्त्वात् पूर्णत्वात् ब्रह्मेत्युच्यत इत्यर्थः। ननु तर्हि ब्रह्मशब्दस्य बृह जातिजीवकमलासन-शब्दराशिष्विति वेदरूपशब्दराशिषु प्रसिद्धिविरोध इत्यत आह- **तत्सम्बन्धा-दिति**॥ स्वप्रतिपाद्यतयाऽवस्थितब्रह्मशब्दवाच्यभगवत्सम्बन्धादित्यर्थः।

## उपनिषत्

**भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति॥ १४॥**

## भाष्यम्

प्रकृष्टनयनात् प्राणोऽपानोऽवाङ्नयनाद्धरिः।
'विविधं नयनाद् व्यानः सोऽन्नं सर्वोपजीव्यतः॥
एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः।
'महाचमसनामासौ यस्मादतिचमत्कृतिः॥
माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः।
'एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः।
स एव ब्रह्मवित्तस्मात् पूज्यते मुक्तिगोऽपि सन्।
सर्वदेवैरतितरां यस्सम्यक् षोडशात्मवित्' ॥

इति व्याहृतितत्त्वे ॥

## भाष्यप्रकाशिका

एवं भूःशब्दवाच्योऽनिरुद्धः प्राणे स्थितत्वात् 'णीञ् प्रापणे' इति धातोः प्रकृष्टान् ब्रह्मादीन् आ समन्तान्नयतीति व्युत्पत्त्या च प्राणशब्दवाच्यः। भुवर्नामकप्रद्युम्नः अपानः अपानवायुगतत्वात् सर्वजगदयं स्वस्याधस्तादा सम्यक् नयतीति व्युत्पत्त्या चापानशब्दवाच्यः। सुवर्नामकस्सङ्कर्षणो व्यानाख्यवायुगतत्वाद्विविधतया जगदासमन्तान्नयतीति व्युत्पत्त्या च व्यान-शब्दवाच्य इत्यर्थः। महःशब्दवाच्यो वासुदेवोऽन्नगतत्वात् 'अद्यतेऽत्ति च' इति श्रुतेस्सर्वोपजीव्यत्वाच्चाऽन्ननामेत्यर्थः। एवं ध्यायन् चिरं जीवो यथेष्टान्न-वान् लोकोपजीव्यश्च भवतीति भावः। ता एता अनिरुद्धादिदेवताः पुनश्चतस्रः पुनश्चतुर्धा। पुनश्चतस्रः पुनश्चतस्र इति षोडशधा भूत्वा सर्वं जगत् प्रवर्तयन्ति। यो ब्रह्मा ताः व्याहृतिप्रतिपाद्यदेवताः वेद अविच्छिन्नतया वेद स एव ब्रह्म वेद। अस्मै मुक्ताय ब्रह्मणे सर्वे देवा बलिं पूजामावहन्ती-त्यर्थः। अनेनैतदुपनिषद्विद्योक्तोपास्तौ ब्रह्मण एव मुख्याधिकारित्वमिति सूचितम्॥ १४ ॥

## पदार्थदीपिका

**प्रकृष्टनयनादिति** ।। प्रकृष्टं प्रकर्षेण ऊर्ध्वलोकं प्रति देवानां आ सम्यगित्यपि ग्राह्यम् । नयनादित्यर्थः । अपेत्यस्यार्थोऽवागिति । अवाक् अधो दैत्यानां असम्यगित्यपि ग्राह्यम् । नयनात् हरिरपान इत्यर्थः । वीत्यस्यार्थो विविधमिति । विविधं यथा स्यात् तथा अनेकप्रकारेण सत्ताप्रतीतिप्रवृत्तिदानेनेति यावत् । आ सम्यगित्यपि ग्राह्यम् । नयनात् प्रेरणादित्यर्थः । सर्वोपजीव्यतः 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति श्रुतेरद्यत्वमेवान्नत्वम् । अद्यत्वं च न चर्व्यत्वं किन्तूपजीव्यत्वमेवेति भावेनैतदुक्तम् । यथोक्तं भाष्ये- 'उपजीव्यत्वमेवाद्यत्वम्' इति । 'तावा एता' इति वाक्यं 'प्रत्येकशः' इति पूर्वं 'चतुरात्मा असौ भगवान्' 'एवं भूरिति वा अयं लोकः' इत्यादिप्रकारेण व्याख्यातम् । इदानीं तदुपसंहारपरमिति सूचयन् उपसंहरति- **एवमिति** ।। अनिरुद्धादिरूपेण षोडशात्मा षोडशरूपी सन् व्यवस्थित इत्यर्थः । अनेन पूर्वं प्रत्येकश इति पदद्वयाध्याहार उक्तो भवति । तथा च 'तावा एता' इति वाक्यं 'तावा एताश्चतस्रः' अनिरुद्धादिमूर्तयः एवं भूरिति वा अयं लोक इति प्रकारेण प्रत्येकशश्चतुर्धा । तथाच भगवन्मूर्तयः षोडशसङ्ख्याकाः सम्भवन्तीति व्याख्यातं भवतीति ज्ञातव्यम् । 'ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इत्यत्र व्याहृतिवेत्तुः सर्वदेवतापूज्यत्वरूपं फलमुक्तं तत्सर्वं तद्वेत्तृसाधारणमिति प्रतीयते तदयुक्तं 'माहाचमस्यः प्रवेदयते' इत्युपक्रमविरोधादिति भावेन महाचमसशब्दार्थकथनपूर्वकं माहाचमस्यशब्दार्थमाह– **महाचमसनामासाविति** ।। असौ भगवान् अतिचमत्कृतिः अतिशीघ्रं कर्ता । येत्यस्यार्थमाह– **तज्ज्ञानीति** । यातेर्गत्यर्थत्वात् तज्ज्ञानस्य सर्वसाधारण्यात् समित्युक्तम् । तथाच सं सम्यक् तज्ज्ञानीति सम्बन्धः । स परिकीर्तित इत्यपि क्वचित्पाठः । तथा च महाचमसं भगवन्तं समग्याति जानातीति माहाचमस्यो ब्रह्मेत्युक्तं भवति । 'स वेद ब्रह्म' इत्येतत्साधारणमित्यभिप्रेत्य

व्याचष्टे- **स एवेति** ॥ ब्रह्मवित् षोडशात्मपरब्रह्मज्ञानी । सर्वेऽस्मै देवा बलिमावहन्तीत्यस्यार्थमाह– **तस्मादिति** ॥ अनेन 'सर्वेऽस्मा' इत्यतः पूर्वं तस्मादिति शेष इत्युक्तं भवति । **मुक्तिगोऽपीति** ॥ न केवलं संसारग इत्यर्थः । अनेन बलिमावहन्तीति संसारे मुक्तौ चेति शेषः । कार्य इति सूचितं भवति । 'सर्वे देवा बलिमावहन्ति' इत्यस्य तात्पर्यतो व्याख्यानम्- **सर्वदेवैरतितरां पूज्यत इति** ॥ आङोऽर्थोऽतितरामिति । पूज्यत इत्युक्त्या बलिं पूजां वहन्ति 'वह प्रापण' इति धातोः प्रापयन्ति कुर्वन्तीति यावत् । तस्मादित्युक्तं हेतुं व्यनक्ति - **यस्सम्यगिति** ॥

## भाष्यम्

**'तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । सुवरिति प्रतिष्ठा । द्वे प्रतिष्ठे । द्वे एते अक्षरे' (बृह. ७७.१) इत्यादि श्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यः चतुर्थीत्वेनैतां प्रवेदयत इति विशेषः ।**

**'भूर्नामा स्फूर्तिरूपत्वात् भूरिवीर्यत्वतो भुवः ।**
**सुवः सुबलरूपत्वान्महः पूर्णत्वतो विभुः ॥'**
**'तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् ।**
**स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः ॥'**
**'तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः ।**
**वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः ॥'**
**'स एव सर्ववेदोक्तः सर्वविद्यासु चेश्वरः ।**
**प्रणवार्था व्याहृतयो .....'**

## पदार्थदीपिका

'स आत्मा । अङ्गान्यन्यादेवता' इति भूरादिशब्दवाच्याऽनिरुद्धादि-

मूर्तित्रयाणां महःशब्दवाच्यवासुदेवाङ्गत्वमुक्तम् । तत्र बृहदारण्यकवाक्यं प्रमाणयति- **तस्य भूरिति शिर इति** ।। 'य एष एतस्मिन् मण्डले पुरुषः' इति पूर्ववाक्यमप्यत्र ग्राह्यम् । इत्यादीत्यादिपदेन योऽयं दक्षिणेऽक्षन् पुरुषः 'तस्य भूरिति शिरः' इत्युत्तरखण्डस्थवाक्यग्रहणम् । तथा च योऽयम् एतस्मिन् सूर्यमण्डले दक्षिणेऽक्षन् अक्षणि च पुरुषो वासुदेवस्तस्य भूर्नामानिरुद्धःशिर इत्यर्थः । भूरित्यस्य शिरस्त्वे युक्तिमाह- **एकं शिर इत्यादि** ।। शिर एकम् एतदक्षरं भूरित्येतदक्षरमप्येकं अतः तद्वाच्योऽनिरुद्धः शिर इत्यर्थः । एवमुत्तरत्रापि योज्यम् । प्रतितिष्ठति आभ्यामिति प्रतिष्ठे पादौ । यथोक्तं बृहद्भाष्ये- 'स वासुदेवो भगवानादित्यस्थो जनार्दनः । स एव दक्षिणाक्षिस्थश्च' इत्यादि । ननु 'चतस्रश्चतस्रो व्याहृतयः ता यो वेद' इत्येतदेवं षोडशरूपाणां 'ज्ञानयोग्यश्चतुर्मुखः' इति प्रमाणेन सर्वव्याहृतिवेत्ता ब्रह्मेति व्याख्यातम् । तदयुक्तं 'तासामुहस्मैतां चतुर्थीं माहाचमस्यः प्रवेदयते' इत्युपक्रमे तासां तिसृणां व्याहृतीनां मह इत्येतां व्याहृतिं माहाचमस्यो ब्रह्मा चतुर्थीं चतुर्थीत्वेन वेदयते जानातीति ब्रह्मणो विशिष्य चतुर्थव्याहृतिज्ञानवत्त्वोक्तिविरोधादित्यतः 'तासामुहस्मैतां चतुर्थीं' इति वाक्यं अध्याहारपूर्वकं सम्यग् व्याचष्टे- **सर्वव्याहृतीनामिति** ।। भूरादिचतसृणां व्याहृतीनां प्रवेत्ताऽपीत्यध्याहार-करणादुक्तशङ्कानिरास इति ज्ञेयम् । रुद्रादीनामपि व्याहृतिवेत्तृत्वात् प्रेत्युप-सर्गः । चतुर्थीमित्यस्यार्थश्चतुर्थीत्वेनेति । 'एतां' मह इति व्याहृतिम् । 'विशेषः' विशिष्यवचनं युक्त इति शेषः । अनिरुद्धादिचतसृषु मूर्तिषु भूरादि-शब्दचतुष्टयप्रवृत्तौ निमित्तं दर्शयति- **भूर्नामेति** ।। स्फूर्तिरूपत्वात् स्वप्रकाश-स्वरूपत्वादित्यर्थः । भूशब्दः पूर्णार्थकभूरिवाची । वशब्दः पराक्रमापर-पर्यायवीर्यवाचीत्यभिप्रायेण भूरिवीर्यत्वत इत्युक्तम् । वशब्दः शरीरबल-वाचीत्यभिप्रेत्य सुबलरूपत्वादित्युक्तम् । 'तद्ब्रह्म' इत्यत्राव्यवधानेन प्रकृतस्य महोनामकव्याहृतिप्रतिपाद्यस्य वासुदेवस्यैव गुणपूर्णत्वमुच्यत

इत्यन्यथाप्रतीतिनिरासाय तद्वाक्यं व्याचष्टे- **तदेतदिति** ।। चतुराकारं भूरादिशब्दचतुष्टयेनाक्रियमाणं तदेतदनिरुद्धादिमूर्तिचतुष्टयमपि गुण-बृंहणाद्धेतोर्ब्रह्मेत्युक्तमित्यर्थः । 'तदेतत् चतुराकारम्' इति श्रौततच्छब्दार्थ इत्यवधेयम् । तथा च अयं तच्छब्दः पूर्वप्रकृतमूर्तिचतुष्टयपरामर्शक एव नाव्यवहितवासुदेवमात्रपरामर्शक इति भावः । 'स आत्मा' 'अङ्गा-न्यन्यादेवता' इतिवाक्यं प्रकारान्तरेण प्रमाणेन व्याचष्टे- **स आत्मेति** ।। स इत्यनूद्य 'चतुरात्मा जनार्दनः' इति व्याख्यानम् । सर्वदेवानामात्मा स्वामी-त्यर्थः । अङ्गमिति समुदायापेक्षमेकवचनम् । तस्यार्थमाह- **आगन्तुकत्वत इति** ।। भगवता जातत्वादिति भावः । तथा चाङ्गानि अप्रधानानि परिवारतया सेवका इति यावदित्यर्थ उक्तो भवति । 'तावा एताश्चतस्रः' इति वाक्यम् 'एवं षोडशरूपोऽसौ' इति प्रमाणेन व्याख्यातम् । तत्रैव प्रमाणान्तरमाह- **वासुदेवादीति** ।। वासुदेवादिरूपोऽसौ जनार्दनो यतःचतुश्चतुः चतुर्गुणित-चतुःसङ्ख्यया युक्तोऽतः षोडशात्मेत्यर्थः । मह इति ब्रह्मेत्यस्यार्थः – **स एवेति** ।। वासुदेवरूपी जनार्दन एवेत्यर्थः । 'सर्ववेदोक्तः' इत्यनेन पूर्वोदाहृत-प्रमाणे 'वेदानां समुदायेऽखिले स्थितः' इत्येतत्प्रतिपाद्यतया स्थित इति व्याख्येयमिति सूचितं भवतीति ज्ञातव्यम् । ननु 'स एव सर्ववेदोक्तः' इति कथं, ब्रह्मादीनामपि तत्तद्विद्योक्तत्वादित्यत आह- **सर्वविद्यास्विति** ।। सर्वविद्यासु च सर्वविद्यास्वपि अयमेवेश्वरो मुख्यप्रतिपाद्य इत्यर्थः । ब्रह्मादीनां चामुख्यप्रतिपाद्यत्वाद्युक्तमवधारणमिति भावः । यद्वा 'सर्वविद्यासु चोक्त' इति बुद्ध्या विवेकेन योज्यम् । तथाच स एवेश्वरः सर्ववेदोक्तो यतोऽ-तस्तदन्तर्गतासु सर्वविद्यासु चोक्तः प्रतिपाद्य इत्यर्थः । ननु सर्वस्यापि वेदस्येश्वरविषयता कुत इति चेत् तद्व्याख्येयप्रणववाच्यत्वादिति वदामः । तथाहि । ओङ्कारस्तावत् भगवतः ईश्वरस्य वाचकः 'ओमिति ब्रह्म' इति श्रुतेः । किमेतावता, नहि प्रणव एव वेद इतिचेत् , प्रणवार्थतया तावत्

परमेश्वरस्य व्याहृत्यर्थतावगम्यते । कुत इत्यत आह- **प्रणवार्था व्याहृतय इति** ।। तिस्रो व्याहृतयो वर्णत्रयात्मकोङ्कारार्थप्रतिपादिकाः तद्व्याख्यानरूपा इति यावत् । तथा च व्याख्यानव्याख्येययोश्चैकविषयता सुप्रसिद्धेति । अनेन व्याहृतीनामग्निवायुसूर्यदेवताकत्वप्रसिद्ध्या तत्प्रतिपादकत्वभ्रान्तिरपि अपास्ता । अग्न्यादीनामभिमानिदेवतात्वेनापि प्रसिद्ध्युपपत्तेः । अन्यथा भगवत्परप्रणवव्याख्यानरूपतानुपपत्तिप्रसङ्ग इति भावः ।

## भाष्यम्

**व्याहृत्यर्था ऋगादयः ।।**

**'इतिहासः पुराणं च पञ्चरात्रं च सर्वशः ।**
**सम्यग् व्याहरणाद् विष्णोः श्रुता व्याहृतयस्त्विति ।'**
**'सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु ।**
**विशेषेणाऽहरन्तीमं विष्णुमित्यथवा स्मृताः'**

**इति व्याहृतिसारे ।। १४ ।।**

## पदार्थदीपिका

किमतो नहि व्याहृतय एव वेद इति चेन्न । व्याहृत्यर्थतया परमेश्वरस्य गायत्रीप्रतिपाद्यताऽवगम्यते । त्रिपदाया गायत्र्या व्याहृतित्रयव्याख्यान-रूपत्वस्याऽगमसिद्धत्वादित्याशयेनाह- **व्याहृत्यर्थेति** ।। अत्र व्याहृत्यर्थेति पदं छेद्यम् । गायत्रीति शेषः । ननु गायत्र्यां यो भर्गो नोऽस्माकं धियः प्रचोदयात् प्रेरयेत्तस्य सवितुर्देवस्य तत् वरेण्यं रूपं धीमहीति भर्गनामकः सविता प्रतिपाद्यो दृश्यते तत्कथं भगवत्परमिति चेन्न । भरणगमनयोगेन जगत्प्रसवहेतुत्वेन च भगवानेव भर्गसवितृशब्दयोरर्थो न सूर्यः । तथात्वे गायत्र्याः भगवत्परव्याहृत्यर्थतानुपपत्तेः । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारा-यणः' इत्याद्यागमविरुद्धत्वाच्चेति भावः । अस्तु गायत्र्यर्थो नारायणः

किमेतावताऽपि । नहि गायत्र्येव वेद इति चेन्न । गायत्र्यर्थत्वात् पुरुष-सूक्तार्थोऽपि स एवेति सिध्यति । वर्गत्रयात्मकस्य तस्य त्रिपदागायत्री-व्याख्यानरूपतायाः 'तद्वेदः' पौरुषं सूक्तम् इत्याद्यागमसिद्धत्वादि-त्याशयेनाह- **व्याहृत्यर्था इति** ॥ नारायणस्य सम्यग् व्याहरणात् व्याहृतिः गायत्री । तदर्थाः पुरुषसूक्तगतास्त्रयो वर्गा इति शेषः । पुरुषसूक्ते च न पुरुषपशोर्हिरण्यगर्भस्य वा प्रतिपाद्यत्वं शङ्क्यम् । पूर्णत्वादिना निमित्तेन तस्यैव परमेश्वरस्य पुरुषशब्दवाच्यत्वात् । 'यथैव पौरुषं सूक्तं विष्णोरेवाभि-धायकम् । सर्वतः पौरुषे सूक्ते गुणाः विष्णोरुदीरिताः' इत्याद्यागमाच्च । अन्यथा नारायणपरगायत्रीव्याख्यानरूपताया अनुपपत्तिप्रसङ्गादिति भावः। नन्वेवं सिद्धे विष्णोःपुरुषसूक्तार्थत्वे किं स्यात् नहि पुरुषसूक्तमेव वेद इतिचेत् पुरुषसूक्तार्थत्वेन भगवतः सर्ववेदार्थत्वमेव सिद्धम् । 'वेदाःपुरुषसूक्तगाः' इत्यागमेन वेदानां पुरुषसूक्तार्थताया अवगतत्वादित्याह - **व्याहृत्यर्था ऋगादय इति** ॥ सर्ववेदोक्तसर्वस्वव्याहृतेर्हेतोः व्याहृतिशब्देन वर्गत्रयात्मकं पुरुषसूक्तं ग्राह्यम् । इतिहासपुराणं चेति द्वन्द्वैकवद्भावः । 'इतिहासः पुराणं च' इत्यपि क्वचित् पाठः । न सर्वमपि पञ्चरात्रं प्रमाणं 'वासुदेवात् सङ्कर्षणोनाम जीवो जायते' इत्यादिनाऽसम्भाविताया एव जीवोत्पत्तेस्तत्राभिधानात् एतेषां जीवजननादिप्रतिपादकवाक्यानामप्रामाण्यमेवेति केचित् । तन्निरासाय 'सर्वशः' इत्युक्तम् । तथा च यथा जीवजननादिप्रतिपादकवाक्यत्वं नास्ति तत्प्रकारकश्च 'जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु' (ब्र.सू.अनु. २.२.४२) इत्यनुव्याख्यानोक्तरीत्या द्रष्टव्यः । तथा च 'ऋगादयश्चत्वार इतिहासपुराणं च सर्वशः, समस्तं पञ्चरात्रं च' इत्येते सर्वे ग्रन्था व्याहृत्यर्थ-पुरुषसूक्तार्थास्तद्व्याख्यानरूपा इत्यर्थः । ननु सर्ववेदानां कार्यपरत्वोक्तेः कथमीश्वरपरत्वमिति चेन्न । इष्टेष्टसाधनताऽतिरिक्तकार्यत्वस्याप्रामाणिक-त्वात् । भगवत एवेष्टत्वादिष्टसाधनत्वाच्च । यथोक्तमनुव्याख्याने- 'तदिष्टं

साधनं तथा। कार्यं साधनमिष्टस्य भगवानिष्टदेवता। मुख्येष्टं वा सुमनसाम्' (ब्र.सू. अनु. १.१.१) इति। अन्यथा भगवत्परपुरुषसूक्तव्याख्यानरूपताऽनुपपत्तिरिति भावः। 'सर्वे वेदा यत्पदमाममन्ति' इत्यादिश्रुतिसिद्धमपि भगवतः ईश्वरस्य सर्ववेदार्थत्वं न्यायेनोपपादयितुं प्रमाणकर्तुः प्रयत्नः। अनेनेश्वरः सर्ववेदार्थो भवितुमर्हति सर्ववेदव्याख्येयपुरुषसूक्तव्याख्येय गायत्रीव्याख्येयव्याहृतिव्याख्येयोङ्कारार्थत्वात्। यो यद्व्याख्येयार्थः स तदर्थो यथा सम्प्रतिपन्न इत्यनुमानमुक्तं भवतीति द्रष्टव्यम्।

स्यादेतत्। 'ईश्वरः सर्ववेदार्थस्तद्व्याख्येयोङ्कारार्थत्वात् यो यद् व्याख्येयार्थः स तदर्थो यथा सम्प्रतिपन्नः' इति वा 'सर्वो वेद ईश्वरपरः तत्परोङ्कारव्याख्यानरूपत्वात्' इति वा [1]साक्षादेवानुमानं किं न क्रियते। 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णा' इत्यादिश्रुत्या हेत्वर्थसमर्थनं भविष्यति। किमनेन परम्पराश्रयणेन। सत्यम्। तथापि 'तद्यथा' इति वाक्यान्तरबलेनापि न सर्वा वागोङ्कारव्याख्यानं साक्षात् किन्नामोक्तप्रकारेण परम्परयैवेति ज्ञापयितुमेवमुक्तम्। प्रसङ्गात् भूरादिचतुर्णां व्याहृतिशब्दवाच्यत्वं कुत इत्याशङ्कायां तेषु व्याहृतिशब्दं निर्वक्ति - **सम्यगिति** ॥ विष्णोः सम्यग्व्याहरणात् प्रतिपादनात् व्याहृतयस्त्विति श्रुताःश्रुत्युक्ताः भूरादय इति शेषः। प्रकारान्तरेणार्थमाह- **सर्वेति ॥** उशब्द एवार्थे। सर्ववेदोक्तं यत्सर्वस्वं स्फूर्तिरूपत्वभूरिवीर्यत्वसुबलरूपत्वपूर्णत्वरूपं तस्य व्याहृतेरेव भूरादीनां व्याहृतित्वं व्याहृतिशब्दवाच्यत्वमित्यर्थः। अनभिमतव्यावृत्त्यर्थमवधारणम्। तेन नोक्तवक्ष्यमाणनिर्वचनविरोध इति ज्ञेयम्। पुनरपि प्रकारान्तरेण निर्वक्ति- **विशेषेणेति** ॥ अथवा भक्तं प्रति इमं अनिरुद्धादिरूपिणं विष्णुं विशेषेण

---

१. 'अनुमानहेतुः' इति क्वचित्।

इतरमन्त्रापेक्षयाऽतिशयेनाऽहरन्ति अभीष्टदातारं कुर्वन्तीति यावत्। इति व्युत्पत्त्या भूरादयो व्याहृतिशब्दवाच्याः स्मृता इत्यर्थः ॥१४॥

## उपनिषत्

**भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मै तां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः॥ १३॥**

**अथ खण्डार्थः**

तथा च 'भूर्भुवःसुवरितिवा' इत्यादेरित्थमक्षरयोजना॥

पूर्वं वेदविद्याभ्यासिनो मेधादिप्राप्त्यर्थं विद्या निरूपिताः। इदानीं व्याहृतिनिष्ठां विद्यामाह- **भूर्भुवःसुवरिति वा इत्यादिना॥** भूर्भुवः सुवरित्येताः वै प्रसिद्धाः तिस्रो व्याहृतयः विष्णोः सम्यक् व्याहरणात् सर्ववेदोक्तसर्वस्वव्याहृतेर्वा विशेषेणाऽहरन्ति भक्तं प्रति अनिरुद्धादिरूपिणं विष्णुमिति वा व्याहृतिशब्दवाच्याः। तथा व्याहृतयो व्याहृतिवाच्याः भूर्भुवःसुवरित्येताः तिस्रोऽनिरुद्धादिमूर्तयो वै प्रसिद्धाः। तत्र स्फूर्ति-रूपत्वादनिरुद्धो भूर्नामा, भूरिवीर्यत्वतः प्रद्युम्नो भुवर्नामा, सुबलरूपत्वात् सुवर्नामा सङ्कर्षणः, माहाचमस्यः अतिचमत्कृतित्वात् महाचमसनामा विष्णुस्तं याति जानातीति माहाचमस्यो ब्रह्मा समस्तव्याहृतीनां प्रवेत्ताऽपि मह इति एतां व्याहृतिं पूर्णत्वतस्तत्प्रतिपाद्यां वासुदेवाख्यां मूर्तिं उ एव तासां तिसृणां व्याहृतीनां तत्प्रतिपाद्यानां अनिरुद्धादिमूर्तीनां चतुर्थी चतुर्थीत्वेन प्रवेदयते जानाति इत्येतत् ह स्म प्रसिद्धमित्यर्थः। तत् व्याहृतिचतुष्टयप्रतिपाद्यं अनिरुद्धादिरूपचतुष्टयं गुणबृंहणाद् 'ब्रह्म' इत्युच्यते। सः मह इति व्याहृतिप्रतिपाद्यस्तन्नामा वासुदेव आत्मा अङ्गी मध्यदेहः मूलरूपस्य

हरेर्मध्यदेहग इति यावत्। तस्य वासुदेवस्य भूरादिव्याहृतिप्रतिपाद्यास्तन्नामिकाः अन्याः विशेषबलेनैवान्यत्वादिव्यवहारभाजिन्यो देवताः अनिरुद्धादिमूर्तयः अङ्गानि । तत्र भूर्नामाऽनिरुद्धः शिरः भुवो नामा प्रद्युम्नो बाहू । सुवर्नामा सङ्कर्षणः पादाविति विवेकः। यद्वा सः अनिरुद्धादिचतुरात्मा जनार्दनः आत्मा ब्रह्मादिसर्वदेवानां स्वामी । अन्या देवताः ब्रह्माद्या अङ्गानि तेनैव जातत्वादागन्तुकानि अप्रधानानि परिवारतया सेविका इति यावत् ।। १३ ।।

## उपनिषत्

**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते ।। भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।। १४ ।।**

**अथ खण्डार्थः-**

भूरादिव्याहृतिवाच्यानां तन्नामकानिरुद्धादिमूर्तीनामुपास्त्यर्थमधिष्ठानानि नामान्तराणि चाह- **भूरिति वा इत्यादिना** ।। भूरिति व्याहृतिवाच्योऽनिरुद्धः अयं अपरोक्षः लोकः । भूलोकः तत्र स्थितः । तथा समीपस्थत्वात् प्रकाशरूपत्वाच्चायं लोकशब्दवाच्यः इत्येतत् वै प्रसिद्धम् । भुव इति व्याहृति-

वाच्यःप्रद्युम्नः अन्तरिक्षं अन्तरिक्षलोकस्थितः । अन्तरीक्षणादन्तरिक्ष-शब्दवाच्यश्च । सुवरिति व्याहृतिवाच्यः सङ्कर्षणः असौ परोक्षः इन्द्रियागोचर इति यावत् । लोकः स्वर्गलोकः तत्र स्थितः तथा प्राणे स्थितत्वादसुशब्दवाच्यः प्रकाशरूपत्वाल्लोकः असुश्चासौ लोकश्चेत्यसुलोक इति भाष्ये छान्दसं समासे विभक्त्यलोपमङ्गीकृत्यासौ लोक इत्युक्तम् । 'विशेषणं विशेष्येण बहुलम्' इत्यत्र बहुलग्रहणाद्विशेषणयोरेव समासः । तथा च पूर्वयोजनायां पदद्वयम् । अत्रत्वेकं पदमिति द्रष्टव्यम् । मह इति व्याहृतिवाच्यो वासुदेवः आदित्यः आदित्यस्थवामनरूपेणादितेःसुतत्वादादित्यशब्दवाच्यश्च । महशब्दोऽयमकारान्तः । तथात्वे महरित्यादित्य इत्यादिप्रयोगोपपत्तेरिति ज्ञातव्यम् । आदित्यस्य महत्वमुपपादयति- **आदित्येन वावेति** ।। प्रसिद्धादित्येन सर्वे लोकाः भूम्यन्तरिक्षासौ लोकाः महीयन्ते प्रकाशदानेन पूज्यन्ते प्रकाश्यन्त इति यावत् । इत्येतत् वाव प्रसिद्धम् । तथा आदित्येन तत्रस्थेन तन्नामकेन वासुदेवेन सर्वे लोकाः अयं लोकान्तरिक्षासौलोक-शब्दवाच्या अनिरुद्धप्रद्युम्नसङ्कर्षणा महीयन्ते पूज्यन्ते स्वेच्छयेत्यर्थः । भूः अनिरुद्धः अग्निः अग्न्यन्तर्गतः अग्नौ स्थितत्वादग्निशब्दवाच्यश्च । भुवःप्रद्युम्नो वायुः वाय्वन्तर्गतः । जगद्बन्धकत्वात् जगच्चेष्टकत्वात् वा वायुशब्दवाच्यश्च । सुवः सङ्कर्षणः आदित्यः तत्रस्थः वामनरूपेणादितेःसुतत्वात् तच्छब्द-वाच्यश्च । महो वासुदेवः चन्द्रमाःतत्रस्थितः आह्लादकत्वात् चन्द्रमश्शब्द-वाच्यश्च । तस्य महत्त्वमुपपादयति- **चन्द्रमसेति** ।। सर्वाणि ज्योतींषि अग्निवाय्वादित्याख्यानि चन्द्रमसा महीयन्ते पूज्यन्ते । अलं क्रियन्त इति यावत् । तथा चन्द्रमसा तत्रस्थेन तन्नामकेन वासुदेवेन सर्वाणि ज्योतींषि अग्निवाय्वादित्यसञ्ज्ञकानि अनिरुद्धादीनि महीयन्त इत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या । ऋचः ऋग्वेदान्तर्गतः अर्च्यत्वात् तच्छब्दवाच्यश्च । सामानि सामवेदान्तर्गतः सर्वरूपेषु समत्वात् सामशब्दवाच्यश्च । यजूंषि यजुर्वेदान्तर्गतः

याज्यत्वाद् यजुःशब्दवाच्यश्च । अत्रानिरुद्धादीनां बहुरूपत्वाद् ऋच इत्यादि बहुवचनान्तशब्दवाच्यत्वं युक्तमिति द्रष्टव्यम् । ब्रह्म अखिलवेदे प्रतिपाद्यतया स्थितत्वात् बृहत्त्वाद् ब्रह्मशब्दवाच्यश्च । ब्रह्मणा प्रतिपाद्येन निमित्तेन सर्वे वेदाः ऋगाद्याः महीयन्ते शोभन्ते । तथा ब्रह्मणा वेदप्रतिपाद्येन बृहत्त्वात् तच्छब्दवाच्येन च वासुदेवेन सर्वे वेदा ऋगादिशब्दवाच्या अनिरुद्धाद्याः । प्राणः प्राणान्तर्गतः प्रकर्षेण आ सम्यक् ऊर्ध्वलोकं प्रति देवानां नयनात् तच्छब्दवाच्यश्च । अपानः तदन्तर्गतः अप अवाक् आ सम्यक् दैत्यानां नयनात् तच्छब्दवाच्यश्च । व्यानस्तदन्तर्गतः विविधं यथा स्यात् तथा अनेकप्रकारेणेति यावत् । सत्ताप्रतीतिप्रवृत्तिदानेन आसम्यक् नयनात्प्रेरणात् तच्छब्दवाच्यश्च । अन्नमन्नस्थः अद्यत्वेन सर्वोपजीव्यत्वेनान्नशब्दवाच्यश्च । अन्नेन प्रसिद्धेन सर्वे प्राणाद्याः महीयन्ते पूज्यन्ते आप्यायिताः भवन्ति । तथान्नेन तत्रस्थेन तच्छब्दवाच्येन वासुदेवेन सर्वे प्राणाः प्राणादिशब्दवाच्या अनिरुद्धाद्याः महीयन्ते इत्यर्थः । उपसंहरति- **ता वा एता इति** ॥ अत्रैवं प्रत्येकश इति पदद्वयमध्याहार्यम् । तथा च ता वा एताश्चतस्रोऽनिरुद्धादिमूर्तयः एवं 'भूरिति वा अयं लोकः' इत्यादिप्रकारेण प्रत्येकशश्चतुर्धा । एवं सति षोडशमूर्तयःसम्पन्ना इत्यर्थः । एवं षोडशमूर्तिवेत्तुः फलमाह – **चतस्रश्चतस्र इति** ॥ या इति शेषः । याश्चतस्रः व्याहृतयो भूरादिव्याहृतिचतुष्टयप्रतिपाद्या अनिरुद्धादिमूर्तयः याश्च प्रत्येकशश्चतस्रः भूरिति वा अयं लोक इत्यादिप्रकारेण षोडशमूर्तयः इति यावत् । ताः यो माहाचमस्यनामा चतुर्मुखो वेद सः सावधारणमेतत् । स एव ब्रह्म वेद सम्यक् परब्रह्मज्ञानी तस्यैव सम्यक् षोडशात्मस्वरूपवित्त्वादिति भावः । तस्मादिति शेषः । अस्यैव सम्यक् षोडशात्मवित्त्वात् अस्मै सम्यक् षोडशात्मविदे चतुर्मुखाय अमुक्तिगाय मुक्तिगाय च सर्वे देवाः शेषगरुडाद्याः अमुक्ताः मुक्ताश्च बलिं पूजाञ्च आ अतितरां वहन्ति प्रापयन्ति कुर्वन्तीति यावदित्यर्थः ॥ १४ ॥

## उपनिषत्

(जीवनियामकतया परमात्मनः स्थितिप्रकारनिरूपणम्)

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्ते वि वर्तते । व्यपो ह्य शीर्षकपाले ॥ १५ ॥**

## भाष्यम्

'य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः ।
प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः ॥'
'व्याख्यः सुपर्णरूपत्वात् केशान्ते वर्तते तु यः ।
सङ्कर्षणः सुपर्णात्मा वासुदेवो व्यपः स्मृतः ॥'
'यस्माद् व्यपगतस्थाता जगति प्रलये विभुः ।
अशीर्षककपालोऽसौ कपालादुपरि स्थितः ॥' १५ ॥

## प्रकाशिका

अधुना प्रकारान्तरेण जीवनियामकतया परमात्मनः स्थितिप्रकारमाह- **स य एषोऽन्तर्हृदय आकाश इति ॥** अन्तर्हृदये प्रसिद्धः स एष आकाशोऽस्ति । मनोमयो ज्ञानमयः । हिरण्मयः हिनोति भजकमिति व्युत्पत्त्या हिरुक् सुखं, तन्मयः । अमृतः जीवमरणेऽपि मरणरहितः । अयमनिरुद्धः तस्मिन् हृदयाकाशे जीवप्रेरकतया तिष्ठति । तालुके उत्तराधरतालुके अन्तरेण मध्ये य एष धातुविशेषेण स्तन इवावलम्बते सा इन्द्रस्य इन्द्रनामकप्रद्युम्नस्य योनिः स्थानम् । भुक्तान्नस्योदरान्तः प्रेषणाय प्रद्युम्नस्तत्र तिष्ठतीति भावः । यत्र केशान्तः केशमूलप्रदेशः वर्तते तत्र विशब्दवाच्यपक्षिसदृशरूपवत्त्वात्

विनामकसङ्कर्षणस्तिष्ठतीति । शिरसि व्याप्तकेशोज्जीवनाय स्वपक्षौ विस्तार्य पक्षिरूपेण तिष्ठतीति भावः । व्यपः विनामकपक्षिरूपत्वादपगतदोषत्वाच्च व्यपनामको वासुदेवः अशीर्षकपाले शीर्षभागकपालभिन्ने, तद्यत् कपालोपरिगतस्थानं तत्र पूर्ववत् सकलरक्षणाय तिष्ठतीत्यर्थः ॥ १५ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः** ॥ एवं भूरादिनामिनोऽनिरुद्धादेर्लोकादावुपास्तिमभिधाय देहे चोपास्तिमधिष्ठानकथनपूर्वकमाह- **स य एषोन्तर्हृदय इत्यादिना** ॥ अत्र मनोमयेन्द्रयोनिविव्यपशब्दान् कोशादिपरताप्रतीतिवारणाय प्रमाणेनैव अनिरुद्धादिरूपचतुष्टयपरतया व्याचष्टे- **य एष इत्यादिना** ॥ 'मनोमयः पुरुषः' इत्यस्यार्थोऽनिरुद्ध इति । 'अन्तरेण तालुके' इत्यादेरर्थः 'प्रद्युम्न' इत्यादि 'तालुके अन्तरेण' इत्यस्यार्थः 'तालुमध्यस्थ' इति । 'य एषस्तन इवावलम्बते' इत्यस्यार्थो 'लम्बिन्याम्' इति । इन्द्रनामकः प्रद्युम्नः तालुमध्यस्थः । किं तत्तालुमध्यमित्यत उक्तम् - **लम्बिन्यामिति** ॥ अजागलस्तनवल्लम्बमानायां अणुजिह्वायामित्यर्थः । यत्रासौ केशान्तो वर्तते इत्येतद् व्याचष्टे- **व्याख्य इति** ॥ य इति श्रवणात्स इति लभ्यते । यः सङ्कर्षणः सुपर्णात्मा सुपर्णस्वरूपः । अतः सुपर्णरूपत्वादेव सः व्याख्यः वीति आख्या यस्यासौ तथोक्तः । 'विःपक्षिपरमात्मनोः' इत्यभिधानात् विशब्दस्य विष्णुवाचित्वात् । सः केशान्ते केशानां मूलभागे वर्तत इत्यर्थः । अनेन केशान्त इति प्रथमा सप्तम्यर्थ इत्युक्तं भवति । 'व्यपो ह्यशीर्षकपाल' इत्यस्यार्थमाह- **वासुदेव इति** ॥ हीत्यस्याभिप्रायः 'स्मृत' इति । वासुदेवस्य व्यपशब्दवाच्यत्वे निमित्तमाह- **यस्मादिति** ॥ विभुरपरिच्छिन्नो वासुदेवः प्रलयकाले जगति व्यपगते नष्टे सति यतः स्थाता तस्माद् वासुदेवो व्यपः स्मृत इत्यर्थः । अशीर्षकपाले इत्यत्र नञ्पर्युदासार्थः । तथा च शीर्षसम्बन्धिनीये

## उपनिषत्

(जीवनियामकतया परमात्मनः स्थितिप्रकारनिरूपणम्)

**स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एषस्तन इवाव-लम्बते। सेन्द्रयोनिः। यत्रासौ केशान्ते वि वर्तते। व्यपो ह्य शीर्षकपाले॥ १५॥**

## भाष्यम्

'य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः।
प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः॥'
'व्याख्यः सुपर्णरूपत्वात् केशान्ते वर्तते तु यः।
सङ्कर्षणः सुपर्णात्मा वासुदेवो व्यपः स्मृतः॥'
'यस्माद् व्यपगतस्थाता जगति प्रलये विभुः।
अशीर्षककपालोऽसौ कपालादुपरि स्थितः॥' १५॥

## प्रकाशिका

अधुना प्रकारान्तरेण जीवनियामकतया परमात्मनः स्थितिप्रकारमाह- **स य एषोऽन्तर्हृदय आकाश इति॥** अन्तर्हृदये प्रसिद्धः स एष आकाशोऽस्ति। मनोमयो ज्ञानमयः। हिरण्मयः हिनोति भजकमिति व्युत्पत्त्या हिरुक् सुखं, तन्मयः। अमृतः जीवमरणेऽपि मरणरहितः। अयमनिरुद्धः तस्मिन् हृदयाकाशे जीवप्रेरकतया तिष्ठति। तालुके उत्तराधरतालुके अन्तरेण मध्ये य एष धातुविशेषेण स्तन इवावलम्बते सा इन्द्रस्य इन्द्रनामकप्रद्युम्नस्य योनिः स्थानम्। भुक्तान्नस्योदरान्तः प्रेषणाय प्रद्युम्नस्तत्र तिष्ठतीति भावः। यत्र केशान्तः केशमूलप्रदेशः वर्तते तत्र विशब्दवाच्यपक्षिसदृशरूपवत्त्वात्

विनामकसङ्कर्षणस्तिष्ठतीति । शिरसि व्याप्तकेशोज्जीवनाय स्वपक्षौ विस्तार्य पक्षिरूपेण तिष्ठतीति भावः । व्यपः विनामकपक्षिरूपत्वादपगतदोषत्वाच्च व्यपनामको वासुदेवः अशीर्षकपाले शीर्षभागकपालभिन्ने, तद्यत् कपालोपरिगतस्थानं तत्र पूर्ववत् सकलरक्षणाय तिष्ठतीत्यर्थः ॥ १५ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः** ॥ एवं भूरादिनामिनोऽनिरुद्धादेर्लोकादावुपास्तिमभिधाय देहे चोपास्तिमधिष्ठानकथनपूर्वकमाह- **स य एषोन्तर्हृदय इत्यादिना** ॥ अत्र मनोमयेन्द्रयोनिविव्यपशब्दान् कोशादिपरताप्रतीतिवारणाय प्रमाणेनैव अनिरुद्धादिरूपचतुष्टयपरतया व्याचष्टे- **य एष इत्यादिना** ॥ 'मनोमयः पुरुषः' इत्यस्यार्थोऽनिरुद्ध इति । 'अन्तरेण तालुके' इत्यादेरर्थः 'प्रद्युम्न' इत्यादि 'तालुके अन्तरेण' इत्यस्यार्थः 'तालुमध्यस्थ' इति । 'य एषस्तन इवावलम्बते' इत्यस्यार्थो 'लम्बिन्याम्' इति । इन्द्रनामकः प्रद्युम्नः तालुमध्यस्थः । किं तत्तालुमध्यमित्यत उक्तम् - **लम्बिन्यामिति** ॥ अजागलस्तनवल्लम्बमानायां अणुजिह्वायामित्यर्थः । यत्रासौ केशान्तो वर्तते इत्येतद् व्याचष्टे- **व्याख्य इति** ॥ य इति श्रवणात्स इति लभ्यते । यः सङ्कर्षणः सुपर्णात्मा सुपर्णस्वरूपः । अतः सुपर्णरूपत्वादेव सः व्याख्यः वीति आख्या यस्यासौ तथोक्तः । 'विःपक्षिपरमात्मनोः' इत्यभिधानात् विशब्दस्य विष्णुवाचित्वात् । सः केशान्ते केशानां मूलभागे वर्तत इत्यर्थः । अनेन केशान्त इति प्रथमा सप्तम्यर्थ इत्युक्तं भवति । 'व्यपो ह्यशीर्षकपाल' इत्यस्यार्थमाह- **वासुदेव इति** ॥ हीत्यस्याभिप्रायः 'स्मृत' इति । वासुदेवस्य व्यपशब्दवाच्यत्वे निमित्तमाह- **यस्मादिति** ॥ विभुरपरिच्छिन्नो वासुदेवः प्रलयकाले जगति व्यपगते नष्टे सति यतः स्थाता तस्माद् वासुदेवो व्यपः स्मृत इत्यर्थः । अशीर्षकपाले इत्यत्र नञ्पर्युदासार्थः । तथा च शीर्षसम्बन्धिनीये

कपाले उभयपार्श्वभागाविति यावत् ॥ ताभ्यां भिन्ने स्थाने कपालादुपरिगतस्थान इति यावदित्यर्थमभिप्रेत्याह- **अशीर्षकपाले असाविति** ॥ १५ ॥

## उपनिषत्

(अनिरुद्धादेरग्न्याद्यधिष्ठाने उपास्तिप्रकारनिरूपणम्)

**भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति ॥ १६ ॥**

## भाष्यम्

**'अनिरुद्धस्तु भूर्नामा हुताशे [1] संव्यवस्थितः ।**
**प्रद्युम्नो भगवान् वायौ भुव इत्येव कीर्तितः ॥'**
**'सङ्कर्षणः सुवर्नामा सूर्ये तिष्ठति केशवः ।**
**महोनामा वासुदेवो ब्रह्मणिस्थश्चतुर्मुखे ॥'**
**'स वासुदेवः स्वाराज्यं व्याप्यास्मिन् मनसस्पतौ ।**
**अनिरुद्धे च संव्याप्तस्ततो वागादिनां पतिः ।'**
**'वागादिषु स्थितो नित्यं भवत्येव जनार्दनः ॥' १६ ॥**

## भाष्यप्रकाशिका

भूरिति वा अग्निरित्यादिनोक्ताग्न्यादिषोडशाधिष्ठानेषु सामानाधिकरण्येनोक्त्या ऐक्यशङ्कां निवारयन् चतुर्णां स्थानान्तरेऽप्युपास्तिमाह- **भूरित्यग्नौ प्रतितिष्ठतीति** ॥ 'भूर्नामा हुताशे संव्यवस्थितः' इति भाष्योक्तेः।

---

१. 'सुव्यवस्थितः' इत्यपि क्वचित् ।

प्रागुक्ताग्निर्गार्हपत्यः । अत्रोक्ताग्निस्त्वाहवनीयः । वायुश्चतुर्मुखपङ्क्तौ पठितत्वान्मुख्यवायुः । प्रागुक्तस्त्वमुख्यः । अतो न पौनरुक्त्यम् । अत्र स्पष्टमधिकरणत्वोक्त्या 'सप्तसु प्रथमा' इत्यनुशासनात् प्रागुक्तप्रथमा सप्तम्यर्थ इति सूचितम् । ब्रह्मा चतुर्मुखः आदित्यो द्वादशादित्येष्वेकः । अतो न पौनरुक्त्यम् । परिच्छिन्नब्रह्मादिस्थितत्वेन वासुदेवादेरपि परिच्छिन्नत्व-भ्रमनिवारणाय तस्य महिमानमाह - **आप्नोतीति** ॥ स्वाराज्यं स्वराट् चक्रवर्ती तत्सम्बन्धि जगत् स्वाराज्यं आप्नोति व्याप्नोति । मनसस्पतिं मनोऽभि-मानिनमनिरुद्धं च व्याप्नोति । एवं प्रधानेन्द्रियमनोभिमानिव्याप्तत्वात्, वाक्पतिः वागिन्द्रियस्यापि पतिः, चक्षुष्पतिः चक्षुरिन्द्रियस्यापि पतिः, श्रोत्रेन्द्रियस्यापि पतिः । न केवलमेतावत्, किन्तु विज्ञानपतिश्च । विज्ञानतत्त्वाभि-मानिनोस्सरस्वती-ब्रह्मणोरपि पतिरित्यर्थः ॥ १६ ॥

## पदार्थदीपिका

पुनरपि भूरादिनामिन अनिरुद्धादेरधिदैवमग्न्यादावधिष्ठाने उपास्ति-प्रकारमाह- **भूरित्यग्नावित्यादिना** । तत्र भूरित्यादिशब्दः अग्न्यादौ विषये तद्वाचकत्वेनेति यावत् । प्रतितिष्ठतीत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति- **अनिरुद्धस्त्विति** ॥ भूर्नामाऽनिरुद्धो हुतमश्नातीति हुताशे अग्नौ संव्यवस्थित इत्यर्थः । भुव इति कीर्तितो भगवान् प्रद्युम्नो वायौ संव्यवस्थित इति तिष्ठतीति वा सम्बन्धः । सुवर्नामा सङ्कर्षण इत्यन्वयः । ब्रह्मशब्द-स्यानेकार्थत्वात् ब्रह्मणीत्यनूद्य चतुर्मुखे स्थ इति व्याख्यातम् । वासुदेवस्य परिच्छिन्ने चतुर्मुखाद्यधिष्ठाने स्थितत्वोक्त्या प्राप्तपरिच्छिन्नत्वशङ्कां वारयितुं तन्महिमानं वक्तुं प्रवृत्तं 'आप्नोति स्वाराज्यं' इत्यादिवाक्यं व्याचष्टे- **स वासुदेव इत्यादिना** ॥ स्वाराज्यं स्वस्याधीनतया आसमन्तात् विद्यमानं राज्यं अव्याकृताकाशादिकं जगत् व्याप्नोतीति शेषः । आप्नोति

मनसस्पतिमित्यस्यार्थः स्वाराज्यं व्याप्य स्थितत्वादेवास्मिन् देहस्थिते मनसस्पतौ अनिरुद्धे स्वकीये परिच्छिन्ने रूपे च संव्याप्त इति । आप्नोति मनसस्पतिं वाक्पतिरित्यादेर्हेतुहेतुमद्भावमभिप्रेत्यार्थमाह- **तत इति** । मनसस्पतित्वादेव वागादीनां पतिः इत्यर्थः । नामिदीर्घाभावश्छान्दसः । न राजादिवत् बाह्यत एवास्य वासुदेवस्य वागादिपतित्वमित्यभिप्रेत्य प्रवृत्तस्यैतत्ततो भवतीति वाक्यस्यार्थमाह- **वागादिष्विति** ।। तथा च एष वासुदेवरूपी जनार्दन एतदेतेषु वागादिषु ततो नित्यं स्थित इति वाक्यार्थ उक्तो भवति । अयं भावः । मनोऽनधिष्ठितेन्द्रियाणां स्वकार्य-जननाक्षमत्वान्मनोऽधिष्ठितत्वं तावदिन्द्रियाणामपेक्षितम् । मनसि चानिरुद्धस्य सत्त्वेन तेषां तद्व्याप्तत्वप्राप्तौ मनोनामकानिरुद्धे च वासुदेवस्य व्याप्ततयाऽवस्थितत्वेन वागादीन्द्रियेषु वासुदेवस्तिष्ठतीति प्राप्त्या भवति वासुदेवो वागादिपतिरिति ।। १६ ।।

## उपनिषत्

**आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मन आनन्दम् । शान्ति-समृद्धममृतम् । इति प्राचीनयोग्योपास्व ।। १७ ।।**

## भाष्यम्

'स्वव्यापी च जगद्व्यापी नित्यैश्वर्यात् स ईश्वरः ।।
आकाशवद् व्याप्तदेहः सत्यात्मा गुणपूर्तितः ।'
'वायोर्विशेषरमको बलानन्दस्वरूपवान् ।।'
'ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः ।'
'अन्तगत्वात् स्वतः पूर्तेः समृद्धं तत् प्रकीर्तितम् ।
इत्युपास्व प्राथमिको योग्यस्त्वं मदुपासने ।
प्राधन्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखम् ।।' इति ब्रह्मसारे ।। १७ ।।

## भाष्यप्रकाशिका

'स्वव्यापी च जगद्व्यापी' इत्यत्र एतेष्विन्द्रियेष्वाविष्टस्वांशव्यापित्वमप्यस्तीति भावेन 'स्वव्यापी' इत्युक्तम्। तद् ब्रह्म आकाशशरीरम् आकाशवद् व्याप्तशरीरम् । 'सत्यात्म' सत्यः साधुपूर्णगुण एव आत्मा देहो यस्य तत् 'सत्यात्म' । प्राणं मुख्यप्राणम् आ सम्यम् रमयतीति 'प्राणारामम्' । एतद्घटनायार्थान्तरमप्याह- **'बलानन्दस्वरूपवान्' इति ॥** प्र प्रकर्षेण अनं चेष्टा बलं वा यस्मात् प्राणम्, आ सम्यक् रमणमानन्दो यस्येति 'प्राणारामम्' इत्युक्तं भवति । एवं च स्वयं बलवत्त्वादानन्दवत्त्वाच्च, प्राणस्यापि बलं दत्त्वा सर्वेभ्योऽपराजितं च कृत्वाऽऽनन्दयतीति भावः । शान्तिः सुखस्यान्तः । सर्वेषां सुखगणनायां 'यतो वाचो निवर्तन्ते' इत्यन्तिमवाक्योक्तनिरवधिकत्वमस्यास्तीति शान्तीत्यर्थः । शत्रून् शमयतीति व्युत्पत्त्या च शान्तिशब्दवाच्यं परं ब्रह्मैवेति भावेनाऽऽह - **'अन्तगत्वात्' इति ॥** सं सम्यक् परनिरपेक्षया ऋद्धं पूर्णं समृद्धम्। अमृतं मरणरहितम्। 'प्राचीनयोग्य अधिकारिषु प्रथमयोग्य ब्रह्मन् इत्युपास्व' इति ब्रह्माणं प्रति भगवानुपदिशतीत्यर्थः ॥ १७ ॥

## पदार्थदीपिका

ननु भगवतः इतरत्रादृष्टं जगद्व्यापकत्वं कथं युक्तम् । अनिरुद्धाख्यस्वरूपव्याप्तत्वं च सुतरामयुक्तम्। व्याप्यव्याप्तृभावस्य भेदनियतत्वाद् भगवति च तदभावादित्याशङ्कायामाह- **स्वव्यापी चेति** ॥ सः वासुदेवरूपी स्वकीयानिरुद्धादिरूपव्यापी । नित्यैश्वर्योपपादनायैव 'ईश्वर' इत्युक्तम् । प्रकृतस्यैव वासुदेवस्य महिमानं वक्तुं 'आकाशशरीरं ब्रह्म' इत्यादि प्रवृत्तम्। तत्राकाशस्यैव साक्षात् शरीरत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **आकाशवदिति** ॥ मध्यमपदलोपीसमास इत्यभिप्रेत्य 'आकाशवत्'

इत्युक्तम्। 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुत्यनुसारेण वत्यर्थभूतं सादृश्यं व्याप्तेति विवृतम्- **गुणपूर्तित इति**॥ निर्दोषगुणपूर्णस्वरूपत्वादित्यर्थः। यथोक्तम्- 'निर्दोषगुणपूर्णत्वाद्यमाहुः सत्यमच्युतम्' इति। 'प्राणारामम्' इत्यस्यार्थमाह- **वायोरिति**॥ आङोऽर्थो विशेषेति। तथा च प्राणस्याधिकारिवर्गेषु आसम्यक् विशेषत इति यावत्। रामं रमकं सुखकारीति व्याख्यातं भवति। 'प्राणारामम्' इत्यस्यैवार्थान्तरमाह- **बलेति**॥ तथा च प्राणं बलरूपं च तत् आराममानन्दरूपं चेति 'प्राणारामम्' इति व्याख्यातं भवति। 'मन आनन्दम्' इत्यस्यार्थमाह- **ज्ञानेति**॥ 'मन अवबोधने' इति धातोर्मनो ज्ञानरूपं च तत् आनन्दरूपं चेति 'मन आनन्दम्' इति व्याख्यातं भवति। शान्तिशब्दार्थमाह- **शान्तिनामेति**॥ तथा च शस्य सुखस्य सुखोन्नति-परम्पराया इति यावत्। अन्ति अन्ते स्थितं निरवधिकसुखोन्नतियुक्तमित्यर्थ उक्तो भवति। 'समृद्धम्' इत्यस्यार्थमाह- **स्वतः पूर्तेरिति**॥ तथा च सम्यक् स्वतः अन्यप्रसादमन्तरेणेति यावत्। ऋद्धं पूर्णं 'समृद्धम्' इत्यर्थ उक्तो भवति। 'इति प्राचीनयोग्योपास्व' इत्येतदप्रतीतेर्व्याचष्टे- **इत्युपास्वेति**॥ प्राचीनशब्दार्थः प्राथमिक इति॥ प्राथमिको योग्यो मुख्याधिकारीत्यर्थः॥ तत्र हेतुमाह- **प्राधान्यादिति**॥ अधिकार्युत्तमत्वादित्यर्थः। 'इति प्राचीन-योग्योपास्व' इति कं प्रति को विधत्ते इत्यत आह- **इति पूर्वं हीति**॥ अनेन मदुपासने त्वं योग्य इत्यस्मद्युष्मच्छब्दविषयोऽपि दर्शितो भवति॥ १७॥

## उपनिषत्

**स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एषस्तन इवाव-लम्बते। सैन्द्रयोनिः। यत्रासौ केशान्ते वि वर्तते। व्यपो ह्य शीर्षकपाले॥ १८॥**

**अथ खण्डार्थः-**

एवं भूरादिनामिनोऽनिरुद्धादेर्लोकादावुपास्तिमभिधाय देहे चोपास्तिमधिष्ठानकथनपूर्वकमाह- **स य एष इत्यादिना** ।। य एषः प्रसिद्धः हृदयेऽन्तराकाशो वर्तते 'तस्मिन्' दहराकाशे सोऽयं 'मनोमयः' मनःप्रधानो मनस्पतिरिरिति यावत् । पुरुषोऽनिरुद्धोऽस्ति । सःकीदृश इत्यत आह- **अमृत इत्यादि** ।। 'अमृतो' देहनाशेऽपि नाशशून्यः 'हिरण्मयः' । हिरण्यं बाह्यसुखविलक्षणं सुखं 'हिरुक्सुखं हिरण्यं स्यात्' इति स्मृतेः । छान्दसो यकारलोपः । मयट् चाधिक्यार्थे । तथा चेतरविलक्षणपूर्णानन्दस्वरूप इत्यर्थः । यथोक्तं 'स एव च हिरण्मयः । हिरुक् सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग्यतः । आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः' इति । यद्वा मयट् पूर्णत्वार्थकः । तथा च पूर्णौ हि हितौ निहितौ रश्च णश्च रणौ रत्यानन्दौ यस्मिन् स 'हिरण्मयः' । 'रत्यानन्दौ पूर्णनित्यौ हितौ तेन हिरण्मय' इति वचनात् । अथवा सुवर्णवर्णत्वात् 'हिरण्मयः' । 'स्वर्णवर्णतया वापि हिरण्मय इतीरितः' इत्युक्तेः । प्रद्युम्नस्य स्थानमाह- **अन्तरेणेति** ।। 'तालुके' तालुकस्य 'अन्तरेण' मध्ये 'य एषः' प्रसिद्धः 'स्तन इव' अजागलस्तन इवावलम्बते सा इन्द्रस्य तन्नामकस्य प्रद्युम्नस्य 'योनिः' आवासस्थानम् । योनिशब्दापेक्षया 'सा' इति स्त्रीलिङ्गम् । योनिष्ठ इन्द्रनिषदे अकारीति प्रयोगेण योनिशब्दस्य स्थानार्थत्वावगमात् । सङ्कर्षणस्थानमाह- **यत्रासाविति** ।। यत्र यः वि सुपर्णरूपत्वात् विनामकः सङ्कर्षणः । असौ यत्र देहे केशान्तः प्रथमा सप्तम्यर्थे । 'केशान्ते' केशमूले वर्तते । वासुदेवस्थानमाह- **व्यपो हीति** ।। जगति व्यपगते सति प्रलयकाले स्थातृत्वेन 'व्यपः' व्यपशब्दवाच्यः हि तथात्वेन स्मृत्यादिप्रसिद्धः वासुदेवः । अशीर्षकपाले नञ्पर्युदासार्थः । तथा च शीर्षसम्बन्धिनीये कपाले उभयपार्श्वभागाविति यावत् । ताभ्यां भिन्ने स्थाने कपालादुपरिगतस्थान इति यावत् । तिष्ठतीत्यर्थः ।। १५ ।।

## उपनिषत्

**भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति ॥ १६ ॥**

**आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्रचीनयोग्योपास्व ॥ १७ ॥**

**अथ खण्डार्थः-**

पुनरपि भूरादिनामिनोऽनिरुद्धादेरधिदैवमग्न्यादावधिष्ठाने उपास्तिप्रकारमाह- **भूरित्यग्नावित्यादिना** ॥ भूरिति नामाऽनिरुद्धोऽग्नौ प्रतितिष्ठति 'संव्यवस्थितः' । 'भुव' इति कीर्तितः 'प्रद्युम्नो' वायौ तिष्ठति । सुवरिति नामा सङ्कर्षणः आदित्ये 'सूर्ये' तिष्ठति । मह इति नामा 'वासुदेवो ब्रह्मणि चतुर्मुखे' तिष्ठति । वासुदेवस्य परिच्छिन्ने चतुर्मुखाख्याधिष्ठाने स्थितत्वोक्त्या प्राप्तपरिच्छिन्नत्वशङ्कां परिहरति- **आप्नोतीति** ॥ प्रकृतः चतुर्मुखस्थो वासुदेवः 'स्वाराज्यं' स्वस्याधीनतया आसमन्ताद्भिद्यमानं यद्राज्यं अव्याकृताकाशादिकं जगत् तत् आप्नोति । तथा 'मनसस्पतिं' स्वकीयमनिरुद्धाख्यं रूपं च नित्यैश्वर्ययुक्तत्वादाप्नोति । अत एव वाक्पतिरित्यादि विज्ञानपतिः बुद्धिरूपेन्द्रियपतिः । न राजादिवत् बाह्यत एवास्य वागादिपतित्वमित्याह- **एतदिति** ॥ एतत् एतेषु वागादीन्द्रियेषु ततो नित्यं स्थित इत्यर्थः । मनोऽनधिष्ठितेन्द्रियाणां स्वकार्यजननाक्षमत्वात् मनोऽधिष्ठितत्वं तावदिन्द्रियाणामपेक्षितं मनसि च अनिरुद्धस्य सत्त्वेन तेषां तद्व्याप्तत्वप्राप्तौ

मनोनामकानिरुद्धे च वासुदेवस्य व्याप्ततयाऽवस्थितत्वेन वागादीन्द्रियेषु वासुदेवस्तिष्ठतीति प्राप्त्या भवति वासुदेवो वागादिपतिरिति भावः ॥ १६ ॥

प्रकृतस्यैव वासुदेवस्य महिमानमाह- **आकाशेति** ॥ वासुदेवाख्यं ब्रह्म 'आकाशशरीरं' आकाशवत् व्याप्तशरीरं 'सत्यात्म' निर्दोषगुणस्वरूपं 'प्राणारामं' प्राणस्य अधिकारिवर्गे आसम्यक् विशेषत इति यावत् । रामं रमकं सुखकारि । यद्वा प्राणं बलरूपं च तत् आराममानन्दरूपं चेति 'प्राणारामं' 'मन आनन्दं' 'मन अवबोधन' इति धातोः मनोज्ञानरूपं च तत् आनन्दं आनन्दरूपं चेति तथोक्तम् । 'शान्ति' शस्य सुखस्य तदुन्नति-परम्पराया इति यावत् । 'अन्ति' अन्तेस्थितम् । निरवधिकसुखोन्नतियुक्तमि-त्यर्थः । 'समृद्धं' सं सम्यक् स्वतः अन्यप्रसादमन्तरेण ऋद्धं पूर्णम् । 'अमृतं' नित्यमुक्तम् । हे प्राचीनयोग्य अधिकारिवर्गेषु प्राधान्यात् प्राथमिक-योग्यमुख्याधिकारिन्निति यावत् । इति पूर्वोक्तप्रकारेण । अनिरुद्धादिरूपिणं मामुपास्व ममोपास्तिं कुर्विति चतुर्मुखं प्रति विष्णोर्वचनम् ॥ १७ ॥

## उपनिषत्

(वासुदेवादिचतुर्मूर्तीनामधिभूतमध्यात्मं चोपास्तिनिरूपणम्)

**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳस्नावाऽस्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥ १८ ॥**

## भाष्यम्

'पृथिव्याद्यं पाङ्क्तं षट्कं पाङ्क्तेनैव स्वयं हरिः ।
नारायणादिरूपेण बलयत्यञ्जसा प्रभुः ।
इत्युवाच स्वयं विष्णुः वेदद्रष्टा गुणाधिकः' ॥

इति तत्त्वसंहितायाम् ॥

**आत्मा अहङ्कारतत्त्वम् ॥ १८ ॥**

## प्रकाशिका

'प्राग्व्यस्तव्याहृतीनां महसश्च प्रतिपाद्यानां वासुदेवादिचतुर्मूर्तीनामुपास्तिप्रकार उक्तः । अधुना समस्तव्याहृत्या सह पञ्चानां प्रतिपाद्यदेवतानां वासुदेवादिचतुर्मूर्तीनां मूलरूपनारायणस्य चाधिभूतमध्यात्मं च षड्विधपञ्चस्थानेषूपास्तिप्रकारमाह - **पृथिव्यन्तरिक्षमित्यादिना** ॥ विद्यासार्थक्याय मूलमूर्त्या सहोपास्तेरावश्यकत्वात् पृथगारम्भः । अत एवोक्तं 'पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्' (म.ता.नि. १.१०) इत्यादि । एतत्पञ्चकं पञ्चकमधिविधाय अधिकफलवत्त्वेन पृथगुपास्यतया विधाय ऋषिर्मन्त्रद्रष्टा विष्णुरवोचत् । उक्तं सर्वमिदं पाङ्क्तं पञ्चत्वसङ्ख्या युक्तम् । एतद्भगवान् पाङ्क्तेन नारायणादिरूपपञ्चकेन स्पृणोति व्याप्य तिष्ठतीति । सा व्याप्तिस्तत्प्रवर्तयतीति भावेन 'बलयति' इत्युक्तं भाष्ये । 'आकाश आत्मा' इत्यत्र आत्मशब्दार्थमाह- **आत्मा अहङ्कारतत्त्वमिति** ॥ १८ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः-**

वेदविद्याप्राप्त्यर्थं पूर्वभावि विद्यान्तरमाह- **पृथिवीत्यादिना** ॥ तत्र 'पाङ्क्तेनैव पाङ्क्तं स्पृणोति' इत्येतत् व्याचष्टे- **पृथिव्याद्यमिति** ॥ तत्र पाङ्क्तमित्यस्यार्थः पृथिव्याद्यं पाङ्क्तं षट्कमिति । पाङ्क्तेनैवेत्यनूद्य नारायणादिरूपेणेति व्याख्या-

तम् । प्रविष्टः सन्निति शेषः । 'स्पृणोति' इत्यस्यार्थो 'बलयति' इति । स्वस्वकार्यक्षमङ्करोतीत्यर्थः । इति 'ऋषिरवोचत्' इत्यत्रोक्तऋषिः क इत्यपेक्षायां तं दर्शयति- **इत्युवाचेति** ॥ 'आकाश आत्मा' इत्यत्रात्मा जीव इत्यसत् । तस्याधिभूतत्वाभावादित्यभिप्रेत्यात्मशब्दार्थमाह- **आत्मा अहङ्कारतत्त्वमिति** ॥ तस्य भूतोपादानत्वेनाधिभूतत्त्वमुपपन्नमिति भावः ॥१८॥

**अथ खण्डार्थः–**

दिशः प्राच्याद्याः । अवान्तरदिशाः आग्नेयाद्याः कोणाः । 'टापं चापि हलन्तानां यथा वाचा निशा दिशा' इति भागुरिवचनात् अवान्तरदिशा इति आकारान्तत्वं युक्तम् । ओषधयः फलपाकान्ताः व्रीह्यादयः । वनस्पतयः अश्वत्थाद्याः । 'आत्मा अहङ्कारतत्त्वम् ।' 'इत्यधिभूतम् ।' भूतसम्बन्धिपाङ्क्तं इति निरूपितमित्यर्थः । अत्र पृथिव्यग्निवाय्वाकाशानां भूतत्वात् पृथिव्यग्न्यादिशब्दोक्तानामेव देवानां भूताभिमानित्वादन्तरिक्षद्युलोकयोरोषध्यादीनां च भूतकार्यत्वात् आत्मशब्दोक्तस्याहङ्कारतत्वस्य च भूतोपादानत्वात् पृथिव्यादीनामधिभूतत्वं युक्तमित्याशयेन 'इत्यधिभूतम्' इत्येवोक्तमिति द्रष्टव्यम् । अव्याकृताकाशभागभूतानां दिशान्तु भूतसम्बन्धित्वाभावात् तत्राधिभूतत्वं छत्रिन्यायेनेति वा भूताकाशेऽव्याकृताकाशस्यापि सत्त्वाद् वेति द्रष्टव्यम् । 'अथाध्यात्मम्' । अत्मानं देहमधिकृत्य विद्यमानम् । तत्सम्बन्धीति यावत् । पाङ्क्तं निरूप्यत इत्यर्थः । स्नावेन सहितं अस्थि स्नावास्थि । स्नावेत्यविभक्तिकनिर्देशो वा । एतत् पृथिव्यादिपाङ्क्तषट्कम् अधिविधायाधिकृत्य ऋषिर्मुख्यतो वेदद्रष्टा विष्णुरवोचत् । किमवोचदित्यतस्तदेव दर्शयति- **पाङ्क्तं वा इदमिति** ॥ इदं सर्वं पृथिव्यग्निवाय्वादिकं पाङ्क्तं पञ्चत्वसङ्ख्ययोपेतम् । तथा चेदं पाङ्क्तं पृथिव्याद्यं

पाङ्क्तषट्कं स्वयं हरिः पाङ्क्तेनैव पञ्चत्वसङ्ख्ययोपेतेन नारायणादिरूपेण प्रविष्टः सन्निति शेषः । सृणोति बलयति स्वस्वकार्यक्षमङ्करोतीत्यर्थः । इति 'ऋषिरवोचत्' इति सम्बन्धः । तत्र पृथिव्यग्न्यप्प्राणचक्षुश्चर्मसु नारायणः अन्तरिक्षवाय्वोषधिषु व्यानः श्रोत्रमांसेषु वासुदेवः द्व्यादित्यवनस्पत्यपान-मनःस्नावेषु सङ्कर्षणः । दिक् चन्द्राकाशोदानवागस्थिषु प्रद्युम्नः । अवान्तर-दिङ्नक्षत्रात्मसमानत्वङ्मज्जासु अनिरुद्धस्तिष्ठतीति विवेको द्रष्टव्यः ॥१८॥

## उपनिषत्

**ओमिति ब्रह्म । ओमितीद॑ँ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओ॑ँ शोमिति शस्त्राणि श॑ँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनु-जानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्रवानीति । ब्रह्मैवोपाप्नोति ॥ १९ ॥**

## भाष्यम्

'ओन्नामा भगवान् विष्णुः अधिकोच्चगुणत्वतः ।
यद्यद्रूपं भगवतस्तदिदं सर्वमेव च ॥'
'ओमेवाधिकपूर्णत्वात् तस्माद् यज्ञेषु चर्त्विजः ।
ओमित्येव स्वकर्माणि कुर्वन्त्युद्दिश्य केशवम् ॥'
'अधिकोच्च शृणुष्वेति हरिमध्वर्युराह हि ।
अधिकोच्च महाधाम सूच्च देवेति चाऽदरात् ॥'
'प्रति प्रति गृणात्येवं शंरूपात्युच्च शावन ।
इत्याह होता शस्त्रेषु तथैवान्येऽपि चर्त्विजः ॥'

**'एवं स्वाध्यायकृच्चाऽह ब्रह्मप्राप्त्यर्थमञ्जसा ।**
**एवं जानन्त एते तु प्राप्नुवन्त्येव तत्परम् ॥' इति च ॥ १९ ॥**

## प्रकाशिका

अधुना वेदविद्यायामोङ्कारस्यात्यन्तरङ्गत्वात् तन्निष्ठविद्यामाह - **ओमिति ब्रह्मेति** ॥ ब्रह्म परमात्मा । अधिकोच्चगुणत्वादोमित्युच्यते । एवं चाकारोकाराभ्यामधिकोच्चत्वं ज्ञानवाचकेन मकारेण चोपलक्षणतया सर्वे गुणा गृह्यन्त इति कृत्वाऽधिकगुणोच्चत्वं सिद्ध्यतीति ज्ञेयम् । न केवलं मूलरूपमोङ्कारप्रतिपाद्यं किन्तु मत्स्याद्यनन्तावताररूपं च प्रागुक्तव्युत्पत्त्या ओङ्कारप्रतिपाद्यम् । भगवत ओङ्कारप्रतिपाद्यत्वमनुभवारूढं करोति - **ओमिति** ॥ कृतिं कृतिं कर्म कर्म अनुसृत्य अनुकृति ओमित्युच्चार्य कुर्वति[1] । ह स्म वै इत्यव्ययत्रयेण कर्मसु कर्मसु प्रसिद्धिं द्योतयति । तदेव दर्शयति - **ओ श्रावयेति** ॥ ओमितिशब्दसम्बुद्धिः ओ इति । तथा च हे 'ओ' हे अधिकोच्च नारायण 'श्रावय', अस्माभिरुच्चार्यमाणं मन्त्रं श्रावय श्रुणु । स्वार्थिको णिच् । स्वतन्त्रत्वात् स्वेच्छयैव श्रवणं, न तु परप्रेरणयेति सूचनाय स्वार्थिकणिजन्तप्रयोगः । इति इत्युक्त्वा श्रावयन्ति । पुनः साम-गानाख्यकर्मण्यपि ओमित्युच्चार्य गायन्ति । शस्त्राणि गानरहितमन्त्रान् । ओम् अत्युच्चसुखरूप। ओशब्देनात्युच्चसुखं तत्सुखमिति भावेन आवृत्त्या योजना कृता । 'अव रक्षणे' इति धातोः 'च्छ्वोः शूडनुनासिके च' इति वकारस्य उकारे कृते ओमिति शब्दनिष्पत्तिर्भवतीति भावेनाकारोपरिगतवकार-स्थानापन्नोकारस्यार्थमाह- **अवनेति** ॥ रक्षकेत्यर्थः । इति शंसन्ति पठन्ति । 'ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति' इत्यस्य वाक्यस्य धाम ओ देवेति प्रैषोच्चारणपूर्वकमर्थमाह - **अधिकोच्च महाधामेति** ॥ अध्वर्युः प्रतिगरं

---

१. 'कुर्वन्ति' इति भाव्यम्

'गॄ निगरणे' इति धातोर्गरो मन्त्रः प्रतिमन्त्रमित्यर्थः । ओम् हे अत्युच्च ओधाम हे महाधाम ओदेव अत्युच्चदेव' इत्युच्चार्य प्रतिगृणाति प्रति प्रतिमुखः सन् निगरणं करोति । 'ओमिति ब्रह्मा प्रसौति' । 'सु प्रसवे' इति धातोः सोमलताया रसप्रसवं करोति । अग्निहोत्रकर्ता भवदनुज्ञयाऽग्निहोत्रं करोमीति वृद्धान् प्रति प्रार्थयते । ओं तथाऽस्त्वित्यग्निहोत्रमनुजानाति । प्रवक्ष्यन् प्रवचनं करिष्यन् ब्राह्मणोऽपि ओङ्कारवाच्यब्रह्मैव उपाप्नुवानीति मत्वा प्रागोमित्याह । एवं प्रणवमुच्चार्य स्वस्वकर्माणि कुर्वन् सर्वोऽपि जनः ब्रह्मैवाऽप्नोति ब्रह्मसमीपं गच्छति ॥१९॥

## पदार्थदीपिका

**अथ भाष्यार्थः -**

वेदविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह- **ओमिति ब्रह्मेतीत्यादिना** ॥ तत्रोङ्काररूपाक्षरत्वं ब्रह्मादेः कथ्यत इति प्रतीतिनिवारणाय प्रमाणेनैव तद्व्याव्याचष्टे- **ओंनामेति** ॥ विष्णुर्मूलरूपी । 'अधिकोच्चगुणत्वत' इति अकारोकारमकाराख्यवर्णत्रयात्मकोङ्कारस्य व्याख्यानम् । 'ओमितीदं सर्वम्' [१]इति ओङ्कारस्य सर्वजगदभेदः कथ्यत इति प्रतीतिवारणाय व्याचष्टे- **यद्यद् रूपमिति** ॥ अधिकपूर्णत्वादधिकपूर्णगुणत्वात् । ओङ्कारस्य भगवद्वाचकत्वोपपादनाय प्रवृत्तस्य 'अप्योश्रावय' इत्यादि वाक्यजातस्य तात्पर्यमाह- **तस्मादिति** ॥ अपिशब्दार्थोऽयम् । तस्मादेवेति सम्बन्धः । अधिकपूर्णगुणत्वेनोङ्कारस्य भगवद्वाचकत्वादेव इत्यर्थः । ओमित्युच्चार्य केशवमुद्दिश्य स्वकर्माणि कुर्वन्तीति सम्बन्धः । ऋत्विजः अध्वर्यूद्गातृहोतृब्रह्माणः । अन्यथा तन्न स्यादिति भावः । इदमुपलक्षणम् । अग्निहोत्रकर्तृब्राह्मणावपि ग्राह्यौ । तदेव विवृणोति- **अधिकोच्चेति** ॥ 'आश्रावय'

१. 'इति वाक्यम्' इति मुद्रिते

इति मन्त्रं कर्त्रप्रतीतेस्तं दर्शयन् व्याचष्टे- **अधिकोच्चेति** ॥ 'ओम्' इत्यस्यार्थः अधिकोच्चेति । 'श्रावय' इति स्वार्थे णिजिति भावेनोक्तम्- **शृणुष्वेति** ॥ 'श्रावय' इति मन्त्रानुसारेण 'शृणुष्व' इत्यस्यापि मूलरूपं 'श्रावय' इत्यर्थ इत्यप्याहुः । 'आश्रावयन्ति' इत्यस्य तात्पर्यमाह- **हीति** ॥ आश्रावमन्त्रं पठन्तीत्यर्थः । 'ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति' इत्यत्रोक्तः प्रतिगरमन्त्रः क इत्यपेक्षायां ओधामो देवेति प्रतिगरमन्त्रमर्थतोऽनुवदति-**अधिकोच्चेति** ॥ ओधाम ओ देवेति पदच्छेदः । तत्र 'ओ' इत्यस्य **अधिकोच्चेति** । धामेत्यस्यार्थः **महाधामेति** । 'तेजःस्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इति वचनात् धाम-शब्दस्तेज आद्यर्थः । ओ देवेत्यस्यार्थः सूच्चदेवेति । [1]देवशब्दपर्यायो दैव-शब्दः । तथा चाधिकोच्चदेवेत्यर्थः । अत्राद्यमोमितिपदं भगवदधिकोच्चत्ववाचि द्वितीयं तु देवशब्दोक्तक्रीडादिगुणानामिति द्रष्टव्यम् । 'ओ' इति द्विवारपठनाभिप्रायः- **आदरादिति** ॥ एनं प्रतीति ॥ हरिमुद्दिश्येत्यर्थः । 'प्रतिगृणाति' प्रतिगरमन्त्रं पठति । अध्वर्युरिति वर्तते । 'ओ शोमिति शस्त्राणि शंसन्ति' इत्यत्र कर्त्रप्रतीतेस्तं दर्शयन् किं तच्छस्त्रमित्यपेक्षायां 'ओ शों शाव' इति मन्त्रमर्थतोऽनुवदति - **शंरूपेति** ॥ ओंश ओंश अवेति पदच्छेदः । तत्राद्यस्य ओमित्यस्य अधिकोच्चेत्युक्त एवार्थो द्रष्टव्यः । अवशिष्टपदार्थमाह- **शं रूपेति** ॥ शं रूप अत्युच्चशावनेति भाष्ये पदच्छेदः । तत्रत्य शस्यार्थः शंरूपेति । सुखरूपेत्यर्थः । आद्यमोमिति पदं भगवतः अधिकोच्चत्ववाचि । द्वितीयं तु सुखस्येति ज्ञातव्यम् । अवन रक्षकेत्यर्थः । शस्त्रेषु मन्त्रेषु मन्त्रविशेषेषु इत्याह इति भगवन्तं सम्बोधयतीत्यर्थः । अनेन शंसतीत्यस्य तात्पर्यमुक्तम्- 'ओमिति सामानि गायन्ति, ओमिति ब्रह्मप्रसौति' इति वाक्यद्वयाभिप्रायमाह- **तथैवान्येऽपीति** ॥ अन्ये ऋत्विजः उद्गातारो ब्रह्माणश्च । 'ओमिति ब्राह्मण' इति वाक्याभिप्रायमाह- **एव-**

---

१. 'देवशब्दोपमार्थे' इति मुद्रिते ।

**मिति** ।। अध्वर्य्वादिवदित्यर्थः । प्रवक्ष्यन्नित्यस्यार्थो 'अञ्जसा स्वाध्यायकृत्' इति आह । ओमित्युच्चार्य स्वाध्यायं करोतीत्यर्थः । 'ब्रह्मोपाप्नवानि' इत्यस्यार्थो ब्रह्मप्राप्त्यर्थमिति । स्वाध्यायकृदिति सम्बन्धः । चशब्दादोमित्युच्चार्य भगवदुद्देशेनैवाग्निहोत्रमनुजानाति करोति यजमान इत्यस्य सङ्ग्रहः । 'ब्रह्मैवोपाप्नोति' इति वाक्यमेकवचनात् सन्निहितप्रवचनकर्तुः ब्राह्मणस्यैव फलकथनपरमिति प्रतीतिं वारयन् एकवचनं बहुवचनार्थ इत्यभिप्रेत्य व्याचष्टे- **एवं जानन्त इति** ।। ओङ्कारस्य भगवद्वाचकत्वं ज्ञात्वा ओमित्युच्चार्य कर्म कुर्वन्ति इत्यर्थः । एते अध्वर्य्वाद्याः । ब्रह्मशब्दस्यानेकार्थत्वादत्र विवक्षितमर्थमाह- **तत्परमिति** ।। ब्रह्मेति बुध्या विविक्तमनुवर्तते । तत् ओङ्काकारवाच्यं परब्रह्मैव प्राप्नुवन्तीत्यर्थः ।। १९ ।।

## उपनिषत्

**ओमिति ब्रह्म । ओमितीद९ँ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओ९ँ शोमिति शस्त्राणि श९ँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ।। १९ ।।**

**अथ खण्डार्थः–**

वेदविद्याभ्यासिनः पूर्वभाविनीं प्रणवविद्यामाह- **ओमिति ब्रह्मेत्यादिना** ।। ब्रह्म भगवान् विष्णुर्मूलरूपी अधिकोच्चगुणत्वतः ओमितिनामा ओङ्कारवाच्यः । न केवलं मूलरूपमेवाधिकोच्चगुणत्वेनोङ्कारवाच्यं किन्नाम यद्यद्भगवतो रूपं मत्स्यादिकं तदिदं सर्वं ओम्' इति शब्देनोच्यते ।

अधिकपूर्णगुणत्वादोङ्कारवाच्यमेवेत्यर्थः । समस्तरूपसहितस्य भगवतः ओङ्कारवाच्यत्वं कुतः सिद्धमिति चेत् भगवन्तमुद्दिश्य कर्मकर्तृभिः अध्वर्य्वादिभिर्नियमेन तदादावुच्चार्यमाणत्वादित्यभिप्रेत्याह- **अप्यो-श्रावयेत्यादिना** ।। 'अपि' तस्मादोङ्कारस्य भगवद्वाचकत्वादेव भगवदुद्देशेन कर्मकर्तारोऽध्वर्यवः 'ओ श्रावय' इत्याश्रावयन्ति ओ इत्युच्चार्य आश्रावयेत्याश्रावं मन्त्रं पठन्ति । अन्यथा तन्न स्यादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । यथोक्तं छान्दोग्ये- 'ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गा-यत्येतस्यैवाक्षरस्यापचित्या' इति । ननु भगवदुद्देशेन कर्मकर्तृभिरध्वर्युभिः ओ इत्युच्चार्याश्रावमन्त्रपठनेन ओ इत्यस्यैव भगवद्वाचकत्वं प्राप्तं नत्वोङ्कार-स्येत्यत उक्तम्- **ओमित्येतदनुकृतीति** ।। ओ इत्येतत् 'ओमित्येतदनुकृति' ओमित्येतदक्षरसरूपम् । ओङ्कारोकारयोरेकार्थत्वमेवेत्यर्थः । 'ह स्म वा' इति निपातत्रयेणेदमतिसुप्रसिद्धमिति द्योतयति । तथा भगवदुद्देशेन कर्मकर्तारः उद्गातारः ओमित्युच्चार्य 'सामानि गायन्ति' उद्गानमन्त्रान् पठन्ति । तथा भगवदुद्देशेन कर्मकर्तारो होतारः ओमित्युच्चार्य 'ओ९शोम् शावेति शस्त्राणि शंसन्ति' मन्त्रविशेषान् पठन्ति । तथा भगवदुद्देशेन कर्मकर्ताऽध्वर्युरोमित्युच्चार्य ओधामो दैवेति 'प्रतिगरं प्रतिगृणाति ।' प्रतिगरसञ्ज्ञमन्त्रविशेषं पठति । तथा भगवदुद्देशेन कर्मकर्ता ब्रह्माख्यऋत्विक् ओमित्युच्चार्य 'प्रसौति' सोमस्य प्रकर्षेण सवनं कण्डनं करोति । तथा भगवदुद्देशेन कर्मकर्ता यजमानः ओमित्युच्चार्य 'अग्निहोत्रमनुजानाति अनुतिष्ठतीति यावत् । तथाऽहं ब्रह्म परं 'ब्रह्मोपाप्नवानि' प्राप्नुयामित्यभिप्रेत्य प्रवक्ष्यन् अञ्जसा स्वाध्यायकृत् ब्राह्मणः ओमित्याह । ओमित्युच्चार्य स्वाध्यायं करोतीत्यर्थः । एवमोङ्कारस्य भगवद्वाचकत्वं ज्ञात्वा ओमित्युच्चार्य आश्रवादिमन्त्रपाठपूर्वकं कर्मकर्तॄणा-मध्वर्य्वादीनां फलमाह- **ब्रह्मैवेति** ।। एवं जानन्त एते अध्वर्य्वाद्याः ओङ्कार-वाच्यं परब्रह्मैवोपाप्नोति । एकवचनं बहुवचनार्थे । उपाऽप्नुवन्तीत्यर्थः ।।१९।।

## उपनिषत्

(ब्रह्मविद्यार्थिनः पूर्वभावियमनियमादिनिरूपणम्)

**ऋतं च स्वाध्यायप्रवंचने च । सत्यं च स्वाध्यायप्रवंचने च । तपश्च स्वाध्यायप्रवंचने च । दमश्च स्वाध्यायप्रवंचने च । शमश्च स्वाध्यायप्रवंचने च । अग्नयश्च स्वाध्यायप्रवंचने च । अग्निहोत्रं च स्वाध्यायप्रवंचने च । अतिथयश्च स्वाध्यायप्रवंचने च । मानुषं च स्वाध्यायप्रवंचने च । प्रजा च स्वाध्यायप्रवंचने च । प्रजनश्च स्वाध्यायप्रवंचने च । प्रजातिश्च स्वाध्याय-प्रवंचने च ॥ २० ॥**

## भाष्यम्

'ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि' । प्रवचनं व्याख्यानम् । यथार्थज्ञानं ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् ।

'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका[1] कृतिः ।
ध्यानसत्ये[2] पूज्यपूजा तप इत्यभिधीयते' ॥ इति शब्दनिर्णये ॥

सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात्तयोः सर्वत्रानुषङ्गः ।

'मन्त्रो मन्त्रार्थवचनं अन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ यतः'[3] ॥

इति कर्मतत्त्वे ॥

१. 'तत्पूर्वका' इत्यपि पाठः । २. 'ध्यानं सत्ये' इत्यपि पाठः ।
३. 'ततः' इत्यपि पाठः

आत्मनश्चेन्मनसैवार्थवचनम् ।
'मानुषं मानुषो धर्मो देवा अपि हि मानुषे ।
मनुष्यवत् प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः' ॥ इति च
'प्रजाया रक्षणं चैव पुनः प्रजननं तथा ।
प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः'॥ इति च ॥ २० ॥

## भाष्यप्रकाशिका

'ऋतं' वाक्येषु यथार्थज्ञानम् । 'सत्यं' यथार्थज्ञानपूर्वं कर्म चेत्यर्थः । यः कोऽपि नियमः स्वाध्यायप्रवचने विना न फलतीति भावेन श्रुतिः प्रत्येकं नियमेषु तयोरावृत्तिमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः - **मन्त्रो मन्त्रार्थवचनमिति** ॥ मन्त्रोऽध्ययनं मन्त्रार्थवचनमित्यर्थः । 'ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते' इत्यनुशासनादत्र तपो ध्यानम् । 'दम इन्द्रिय-निग्रहः' । 'शमः' शान्तिः । अग्नयस्त्रेताग्नयः सेव्या इत्यर्थः । अतिथयश्च पूज्याः । मानुषं वेदाधिकारिणामपेक्षितं स्नानसन्ध्यावन्दनादिनित्यनैमित्तिकं कर्म । 'प्रजा' प्रजारक्षणम् । तदाऽपि स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । 'प्रजननं' प्रजोत्पत्तिः । तदाऽपि जातकर्मकरणसमये स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । 'प्रजातिः' उपनयनादिना प्रकृष्टजातिकरणम् ।

## पदार्थदीपिका

ब्रह्मविद्यामर्थयमानस्य तत्प्राप्त्यर्थं तत्पूर्वभाविनो यमनियमानाह- **ऋतं चेत्यादिना** ॥ 'ऋतं च' इत्यादेर्वाक्यस्य साकाङ्क्षत्वादध्याहारेण तावन्निराकाङ्क्षतां दर्शयति - **ऋतं चेत्यादिना** ॥ 'सत्यं च' इत्यादावप्येवमेव निराकाङ्क्षता द्रष्टव्येति भावः । '' 'प्रवचनं' प्रकृष्टवचनम् । साधुभाषणमिति यावत् इति व्याख्यानमसदिति भावेन प्रवचनशब्दार्थमाह- **प्रवचनमिति** ॥ ऋतसत्यशब्दयोः पौनरुक्त्यपरिहारायार्थभेदमाह- **यथार्थेति** ॥ 'तत्पूर्वकं'

## उपनिषत्

(ब्रह्मविद्यार्थिनः पूर्वभावियमनियमादिनिरूपणम्)

ऋतं च स्वाध्यायप्रवंचने च । सत्यं च स्वाध्यायप्रवंचने च । तपश्च स्वाध्यायप्रवंचने च । दमश्च स्वाध्यायप्रवंचने च । शमश्च स्वाध्यायप्रवंचने च । अग्नयश्च स्वाध्यायप्रवंचने च । अग्निहोत्रं च स्वाध्यायप्रवंचने च । अतिथयश्च स्वाध्यायप्रवंचने च । मानुषं च स्वाध्यायप्रवंचने च । प्रजा च स्वाध्यायप्रवंचने च । प्रजनश्च स्वाध्यायप्रवंचने च । प्रजातिश्च स्वाध्याय-प्रवंचने च ॥ २० ॥

## भाष्यम्

'ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि' । प्रवचनं व्याख्यानम् । यथार्थज्ञानं ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् ।

'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका[1] कृतिः ।
ध्यानसत्ये[2] पूज्यपूजा तप इत्यभिधीयते' ॥ इति शब्दनिर्णये ॥

सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात्तयोः सर्वत्रानुषङ्गः ।

'मन्त्रो मन्त्रार्थवचनं अन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ यतः'[3] ॥

इति कर्मतत्त्वे ॥

---

१.'तत्पूर्वका' इत्यपि पाठः । २.'ध्यानं सत्ये' इत्यपि पाठः ।

३. .'ततः' इत्यपि पाठः

आत्मनश्चेन्मनसैवार्थवचनम् ।

'मानुषं मानुषो धर्मो देवा अपि हि मानुषे ।
मनुष्यवत् प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः' ॥ इति च
'प्रजाया रक्षणं चैव पुनः प्रजननं तथा ।
प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः'॥ इति च ॥ २० ॥

## भाष्यप्रकाशिका

'ऋतं' वाक्येषु यथार्थज्ञानम् । 'सत्यं' यथार्थज्ञानपूर्वं कर्म चेत्यर्थः । यः कोऽपि नियमः स्वाध्यायप्रवचने विना न फलतीति भावेन श्रुतिः प्रत्येकं नियमेषु तयोरावृत्तिमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः - **मन्त्रो मन्त्रार्थवचनमिति ॥** मन्त्रोऽध्ययनं मन्त्रार्थवचनमित्यर्थः । 'ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते' इत्यनुशासनादत्र तपो ध्यानम् । 'दम इन्द्रिय-निग्रहः' । 'शमः' शान्तिः । अग्रयस्त्रेताग्नयः सेव्या इत्यर्थः । अतिथयश्च पूज्याः । मानुषं वेदाधिकारिणामपेक्षितं स्नानसन्ध्यावन्दनादिनित्यनैमित्तिकं कर्म । 'प्रजा' प्रजारक्षणम् । तदाऽपि स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । 'प्रजननं' प्रजोत्पत्तिः । तदाऽपि जातकर्मकरणसमये स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । 'प्रजातिः' उपनयनादिना प्रकृष्टजातिकरणम् ।

## पदार्थदीपिका

ब्रह्मविद्यामर्थयमानस्य तत्प्राप्त्यर्थं तत्पूर्वभाविनो यमनियमानाह- **ऋतं चेत्यादिना** ॥ 'ऋतं च' इत्यादेर्वाक्यस्य साकाङ्क्षत्वादध्याहारेण तावन्निराकाङ्क्षतां दर्शयति - **ऋतं चेत्यादिना** ॥ 'सत्यं च' इत्यादावप्येवमेव निराकाङ्क्षता द्रष्टव्येति भावः । '' 'प्रवचनं' प्रकृष्टवचनम् । साधुभाषणमिति यावत् इति व्याख्यानमसदिति भावेन प्रवचनशब्दार्थमाह- **प्रवचनमिति** ॥ ऋतसत्यशब्दयोः पौनरुक्त्यपरिहारायार्थभेदमाह- **यथार्थेति** ॥ 'तत्पूर्वकं'

यथार्थज्ञानपूर्वकं 'यथार्थवचनं' सत्यम् । तथा 'तत्पूर्वकं' यथार्थज्ञानपूर्वकं 'करणं' कर्मकरणं च 'सत्यम्' इत्यर्थः । अत्र प्रमाणमाह- **ऋतमिति** ।। 'तत्पूर्विका' यथार्थज्ञानपूर्विको कृतिः कर्मकृतिः । इदमुपलक्षणम् । 'तत्पूर्वकं यथार्थवचनं' चेत्यपि ग्राह्यम् । 'तपः' शब्दस्य सन्तापार्थताप्रतीतिवारणाय तपःशब्दार्थं प्रमाणशेषेण दर्शयति- **ध्यानसत्ये इति** ।। पूज्यानां गुर्वादीनां पूजा । तथा च ध्यानेत्यनेन मानसं तपः, सत्येत्यनेन वाचनिकं तपः, 'पूज्यपूजा' इत्यनेन शारीरं तपः इत्येवं त्रिविधं तपः तपःशब्देन विवक्षितमिति भावः । ननु सत्यं चेत्यादौ सत्यादिभिः सह पुनः स्वाध्यायप्रवचनयोः कर्तव्यत्वोक्तिरयुक्ता । ऋतं च स्वाध्यायप्रवचने चेत्यनेनैव वाक्येन तयोः कर्तव्यतायाः उक्तत्वादित्यतः सत्यादौ सर्वत्र स्वाध्यायप्रवचनयोरनुषङ्गे कारणमाह- **सर्वकर्मेति** ।। सत्यशब्दार्थानुवादोऽयम् । 'सत्यं तत्पूर्विका कृतिः' इत्युक्तत्वात् । इदमुपलक्षणम् । तथा सत्यतपआद्यनुष्ठान-कालेष्वपीत्यर्थः । सर्वत्र सत्यादौ । सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वे प्रमाणं चाह - **मन्त्र इति** ।। मन्त्रो वेदाध्ययनं अन्यस्य स्वात्मन इति कर्मणि षष्ठ्यौ । सर्वकर्मसु सर्वकर्मकृतिकालेषु । मन्त्रार्थवचनं मन्त्रश्चेतीमौ कर्तव्यौ । ततः सर्वकर्मसु कर्तव्यत्वात् सर्वकर्मात्मकौ सर्वकर्मप्रधानौ । तत एव सत्यादिष्वनुषक्तावित्यर्थः । ननु स्वात्मनो मन्त्रार्थवचनमिति प्रमाणोक्त-मयुक्तम् । प्रवचनस्य शिष्यसापेक्षत्वेन स्वात्मानं प्रत्येव प्रवचना-योगादित्यतस्तदभिप्रायमाह- **आत्मनश्चेदिति** ।। 'आत्मनश्चेन्मन्त्रार्थवचनं' विवक्षितं तदा मनसैवार्थवचनं युक्तिभिरनुचिन्तनात्मकं मननं ध्यानं वा तदर्थतया विवक्षितमित्यर्थः । मानुषं चेत्यत्रोक्तमानुषस्य कर्तव्यत्वमप्रतीतेः प्रमाणेनैव व्याचष्टे- **मानुषमिति** ।। ज्ञानाद्यतिशयेऽपि न मानुषो धर्मस्त्याज्य इति भावः ।। एतदेवाचारेण समर्थयते - **देवा अपीति** ।। मानुषे मानुषदेहप्राप्ति-दशायाम् । अन्यैः प्रवर्तितव्यमिति किमु वक्तव्यमित्यपिशब्दार्थः । ऐश्वर्य

ज्ञानादि हीति देवत्वे देववच्चेष्टा मानुषत्वे च मानुषीत्यादिप्रमाणप्रसिद्धिं दर्शयति । उक्तं चान्यत्र भगवत्पादैः -

**'प्रजायते हि यत्कुले यथा युगं यथा वयः ।**
**तथा प्रवर्तनं भवेत् दिवौकसां समुद्भवे ।'** (म.ता.नि. १३.९)

**'धर्मो हि सर्वविदुषामपि देवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः ।**
**ज्ञानादिगूहनमुताध्ययनादिरत्र ॥'** (म.ता.नि. १४.४)इति ।

प्रजा-प्रजनन-प्रजातिशब्दान् एकार्थत्वप्रतीतिं वारयन् प्रमाणेनैव व्याचष्टे- **प्रजाया इति ॥** पुत्रशिष्यादिरूपप्रजाया इत्यर्थः । तथा च प्रजाशब्देन प्रजारक्षणं ग्राह्यमिति भावः । रक्षणं चात्रान्नज्ञानादिदानेन भयादिनिवारणेन च द्रष्टव्यम् । पुनः प्रजननं पुत्ररूपेण सन्ततिकृतिः । पुरुषस्य स्वपितुः सकाशाज्जन्म प्रथमं जननं पुत्ररूपेणजननं च पुनः प्रजननम् । पुत्रदेहस्य स्वदेहांशत्वात् **'आत्मा वै पुत्र नामाऽसि'** इति श्रुतेः । तथा च प्रजननशब्देन पुनः प्रजननमेव विवक्षितमिति भावः । प्रजातिशब्दार्थः प्रकृष्टेति । पितुः कर्तरि षष्ठी । पित्रा तनये उपनयनादिकर्मभिः ब्राह्मणत्वाख्यप्रकृष्टजाति-करणमित्यर्थः । प्रमाणशेषेणान्वयो द्रष्टव्यः ॥ २० ॥

## उपनिषत्

**सत्यमिति सत्यवचा राथीतरः । तप इति तपोनिष्ठः**
**पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः ।**
**तद्धि तपस्तद्धि तपः ॥ २१ ॥**

## भाष्यम्

'सत्ये तपसि वा चीर्णे सर्वकर्म कृतं भवेत् ।
स्वाध्याये च प्रवचने ह्यन्तर्भावो विशेषतः' ॥ इति च ।

'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति' इति च श्रुतिः ।
'जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते'।। इति भारते ।
'सम्यग् ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च ।
न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः'।।

इति कर्मतत्त्वे ।। २१ ।।

## भाष्यप्रकाशिका

उक्तेषु सर्वेषु साधारणनियमेषु एकैकस्य एकैकत्र निष्ठाविशेषोऽप्यस्तीत्याह - **सत्यमितीति** ।। 'सत्यवचा राथीतरः' रथीतरपुत्रः ऋषिरुक्तधर्मेषु सत्यमधिकमिति मन्यते । तप एव नित्यं यस्य स तपोनित्यः पुरुशिष्टस्यापत्यं पुमान् 'पौरुशिष्टिः' तप एवाधिकमिति मन्यते । अत एव 'सत्यवचाः' 'तपोनित्य' इति च तयोर्विशेषणद्वयम् । 'मौद्गल्यो' मुद्गलपुत्रो, नामतो नाकः कश्चन ऋषिः स्वाध्यायप्रवचने एवाधिकमिति मन्यते । श्रुतिरप्येषु त्रिषु मतेष्वन्तिमपक्षमेव स्तौति - **तद्धि तप इति** ।। तत् स्वाध्यायप्रवचनकरणं 'तपो' 'हि' । आदराद् द्विरुक्तिः ।

## पदार्थदीपिका

अत्र कर्तव्यतयोक्तानां ऋतस्वाध्यायप्रवचनसत्यादीनां परस्परं साम्यमुत तत्रैकस्याधिक्यमिति शङ्कायां तत्र ऋषिमतान्याह- **सत्यमित्यादिना** ।। तत्र ऋषिमतत्रयमपि किं समानमित्यपेक्षायां आद्यमतद्वयं समं तृतीय-मतमेवाधिकमिति प्रमाणेनैव दर्शयति- **'सत्ये तपसि' इति** ।। 'सत्ये' यथार्थज्ञानपूर्वकयथार्थवचनादिरूपे । 'तपसि' ध्यानादिरूपे । 'चीर्णे' कृते सति । तथा च 'सत्ये' 'चीर्णे' तपआदिसर्वकर्म कृतं भवतीति 'सत्ये' ऋत तपआदीनामन्तर्भावमभिप्रेत्य 'राथीतरः' सत्यस्यैव कर्तव्यत्वमाह । तथा

तपसि चीर्णे ऋतसत्यादिसर्वकर्म कृतं भवतीति तपसि ऋतसत्यादीनामन्तर्भावमभिप्रेत्य 'पौरुशिष्टिः' तपस एव कर्तव्यत्वमाहेति भावः। नैवं नाकमतमित्याह- **स्वाध्याय इति** ॥ अन्तर्भावः। ऋतसत्यतपःशमदमादीनां सर्वेषामिति शेषः। विशेषत इति वचनेन न पूर्वमतद्वय इवान्तर्भावोक्तिरौपचारिकीत्युक्तं भवति। अनेन 'तद्धि तप' इति वाक्यतात्पर्यमुक्तं वेदितव्यम्। अतो नाकमतमेवाधिकम्। अत एव स्वाध्यायप्रवचनयोः सर्वत्रानुषङ्ग उक्त इति भावः। ऋतसत्यादेः सर्वस्य स्वाध्यायप्रवचनयोरन्तर्भाव उक्तस्तत्र श्रुतिं चाह- **यं यं क्रतुमिति** ॥ 'क्रतुस्तु निश्चितं ज्ञानम्' इति छान्दोग्यभाष्यवचनादत्र निश्चितज्ञानकरणीभूतं शास्त्रं क्रतुशब्देन ग्राह्यम्। अधीते अध्यापयति चेत्यपि द्रष्टव्यम्। तथा च 'यं यं क्रतुं' वेदभारतादिरूपं सच्छास्त्रं स्वयम् 'अधीते' अध्यापयति प्रवक्ति चान्यान् प्रति तेन तेनाधीतेन शास्त्रेण शास्त्राध्ययनप्रवचनाभ्यामिति यावत्। अस्य प्रवचनादिकर्तुः इष्टं सत्यादिशब्दोक्तं यजनादिकं सर्वं कर्म कृतं भवतीति श्रुत्यर्थः। अत्रैव स्मृतिद्वयं चाह- **जप्येनैवेत्यादिना** ॥ 'जप्येन' वेदादिशास्त्ररूपपाठव्याख्यानरूपजपेनैव। तथा च ब्राह्मणः अन्यत्सत्यादि-शब्दोक्तं कर्म यद्यपि कुर्यान्न वा कुर्यात्। तथापि वेदादिपाठव्याख्यानरूपजपेनैव संसिध्येत् अपरोक्षज्ञानादिना मोक्षरूपसंसिद्धिं प्राप्नुयात्। ननु सत्यादिशब्दोक्तकर्माकरणे कथं ब्राह्मण इत्यत उक्तं- **मैत्र इति** ॥ 'कुर्यात्' इत्यादेरत्राप्यन्वयः। 'मैत्रः' मित्वा त्रातीति मित्रनामकसवितृमण्डलमध्यवर्तिनारायणदेवताकगायत्रीजापको मैत्रः। स एव 'ब्राह्मण' इत्यर्थः। तथा चात्र सत्यादिशब्दोक्तकर्मणामनावश्यकत्वमभिधाय व्याख्यानादिरूपजपस्यैवाऽवश्यकत्वोक्त्या तत्रैव सर्वस्यान्तर्भावसिद्धिरिति भावः। 'जपेत' अधीयीत। तस्य तेन किञ्चिदकृतं कर्तव्यं नास्ति। सर्वमपि सत्यादिशब्दोक्तं कर्तव्यं कृतमेव भवतीत्यर्थः। नैतावदेव, किन्तु संसारान्मुच्यते च स इत्याह- **मुच्यते चेति** ॥ २१ ॥

## उपनिषत्

ऋतं च स्वाध्यायप्रवंचने च। सत्यं च स्वाध्यायप्रवंचने च। तपश्च स्वाध्यायप्रवंचने च। दमश्च स्वाध्यायप्रवंचने च। शमश्च स्वाध्यायप्रवंचने च। अग्नयश्च स्वाध्यायप्रवंचने च। अग्निहोत्रं च स्वाध्यायप्रवंचने च। अतिथयश्च स्वाध्यायप्रवंचने च। मानुषं च स्वाध्यायप्रवंचने च। प्रजा च स्वाध्यायप्रवंचने च। प्रजनश्च स्वाध्यायप्रवंचने च। प्रजातिश्च स्वाध्यायप्रवंचने च॥ २०॥

सत्यमिति सत्यवचा राथीतरः। तप इति तपोनिष्ठः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः॥ २१॥

**अथ खण्डार्थः—**

'ऋतं' यथार्थज्ञानम्। 'स्वाध्यायप्रवचने च' इत्येतानि कर्तव्यानीति शेषः। एवमुत्तरत्रापि कर्तव्यपदानुवृत्तिर्द्रष्टव्या। ऋतस्य कर्तव्यत्वं नाम सम्पाद्यत्वम्। 'सत्यं' यथार्थज्ञानपूर्वकं यथार्थवचनं तत्पूर्वकं सत्कर्मकरणं च। तपः ध्यानसत्यपूज्यपूजारूपम्। 'दमः इन्द्रियनिग्रहः'। 'शमो' बुद्धेः भगवन्निष्ठता। 'अग्नयः' अग्नीनां पूजा अग्नीनामाधानं वा। 'अग्निहोत्रं' तन्नामकं कर्म। 'अतिथयः' अतिथीनां पूजा। 'मानुषं' स्वस्य ज्ञानाधिक्येऽपि मानुषधर्मप्रवर्तनमेव कार्यं, न तु ज्ञानाद्यैश्वर्यप्रकटनमयोग्येषु कार्यमित्यर्थः। प्रजा शिष्यपुत्रादिरूपा। प्रजारक्षणमन्नज्ञानादिदानेन प्राप्तभयादिनिवारणेन च कर्तव्यमित्यर्थः। 'प्रजनः' पुनः प्रजननं पुत्ररूपेण सन्ततिकृतिः। 'प्रजातिः' उत्पन्ने तनये उपनयनादिकर्मभिर्ब्राह्मण्यरूपप्रकृष्टजातिकरणम्। अत्र सर्वत्र

सत्यादिभिः सह पुनः स्वाध्यायप्रवचनयोः कर्तव्यत्वोक्तिः सत्याद्यपेक्षया-प्यत्यावश्यकत्वज्ञापनार्थेति द्रष्टव्यम् ॥ २० ॥

अत्र कर्तव्यतयोक्तानां ऋतस्वाध्यायप्रवचनसत्यादीनां किं परस्परं साम्यमुत तत्रैकस्याधिक्यमिति शङ्कायां तत्र ऋषिमतान्याह- **सत्यमितीत्यादिना** ॥ 'सत्यवचाः' सत्यवचन एव निरतो रथीतरस्यापत्यं 'राथीतरः' तन्नामा ऋषिः सत्यमिति निरुक्तं सत्यमेव श्रेयःसाधनमिति तदेव सम्पाद्यम् । तत्रैव तपआदेः सर्वस्यान्तर्भावादित्याह । तपोनित्यः तपोनिष्ठः पुरुशिष्टेरपत्यं पुमान् 'पौरुशिष्टिः' तन्नाम कश्चिद् ऋषिः तप इति ध्यानादिरूपं तप एव श्रेयःसाधनमिति तदेव कर्तव्यम् । तत्रैव ऋतसत्यादीनामन्तर्भावादित्याह । मुद्गलस्यापत्यं तद्गोत्रापत्यं वा 'मौद्गल्यो' 'नाको' नामतः स्वाध्यायप्रवचने एव कर्तव्ये इत्याह । कुत इत्यत ऋत सत्य तप आदीनां सर्वेषामपि स्वाध्यायप्रवचनयोरेव विशेषतोऽन्तर्भावेण तयोरेव मोक्षसाधनेषु प्राधान्यादित्यभिप्रेत्याह- **तद्धीति** ॥ तत् स्वाध्यायप्रवचनकरणमेव तपः । इदमुपलक्षणम् । तद्धि सत्यमपि द्रष्टव्यम् । हि शब्देन प्राणायामा-दयस्तुष्टिपर्यन्ता द्विगुणाधिकाः । स्वाध्यायोऽतःकोटिगुणः । तप आद्याः क्रमात् सर्वे उत्तरोत्तरतोऽधिकाः । 'अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा । ध्यानं निश्चिततत्वस्य तस्माच्छास्त्रावमर्शनम् । वरं दशगुणं तस्मात् व्याख्यैकस्य शतोत्तर' इति प्रमाणप्रसिद्धिं दर्शयति । अतः इदमेव मतं पूर्वमतद्वयापेक्षयाधिकमिति भावः । द्विरुक्तिस्तात्पर्यद्योतनार्था ॥ २१ ॥

## उपनिषत्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥ २२ ॥**

## भाष्यम्

'संसारवृक्षच्छेत्ताऽहं मत्कीर्तिः पर्वतोपमा।
अत्युत्कृष्टेन हरिणा पावितोऽस्मि यतः स्फुटम् ॥
'वाजिरूपश्च नेता च वाजिनीस्सूर्य उच्यते।
तत्रस्थो भगवान् विष्णुः सम्प्रोक्तो वाजिनीवसुः ॥
'तेनामृतोऽस्मि द्रविणं नित्यानन्दस्वरूपतः।
तेनामृतेन सिक्तोऽहं तेन व्याप्तो यतः सदा।
इत्याह मन्त्रदृक् पूर्वं त्रिशङ्कुर्मानवो नृपः ॥'

इति यजुर्विवेके ॥ २२ ॥

## भाष्यप्रकाशिका

ऋतादिनियमसमुदायात् स्वाध्यायप्रवचनयोः सर्वत्रानुस्यूतत्वोक्त्या, 'तद्धि तपस्तद्धि तपः' इति प्रशंसया चाऽधिक्यमुक्तम् । तदाख्यायिकया समर्थयते- **अहं वृक्षस्येति** ॥ 'अहं' नियमेन स्वाध्यायप्रवचनयोः करणाद् 'वृक्षस्य' संसाराख्यवृक्षस्य 'रेरिवा' 'रीङ् क्षये' इति धातोः 'छेत्ताऽस्मि' । 'गिरेः' रजताद्रेः पृष्ठमिव 'कीर्तिः' कीर्तिमानासम् । कीर्तेरुत्तुङ्गत्वे श्रेष्ठत्वे च दृष्टान्ततया गिरिपृष्ठस्योक्तिरिति भावः । ऊर्ध्वेन सर्वोत्तमेन नारायणेन पवित्रोऽस्मि। तत्र वाजिरूपः सन्नयतीति 'वाजिनीः सूर्य्यः' तत्र वसनशीलो वसुर्नारायणस्तेनामृतमस्मि मुक्तिं प्राप्तोऽस्मि । अमृतो यथा भवति तथाऽमृतमिति वाऽर्थः । द्रविणं द्रवत्यनेन चित्तमिति 'द्रविणं' सुखं तद्रूपोऽस्मीत्यर्थः। अत एव सुवर्चसं शोभनकान्तिमन्तं वदन्ति। 'सुमेधाः' शोभनबुद्धिमानस्मि। अमृतेन नारायणेन 'उक्षितः' सिञ्चितः करचरणादिषु तेन व्याप्तोऽस्मीत्यर्थः । इति त्रिशङ्कोर्वेदानुवचनं वेदस्यानुवचनम् । स्वाध्यायप्रवचनाख्यमनुकूलवचनं मूलं यस्य वाक्यस्य तद्वेदानुवचन-

मित्यर्थः । वेदस्य स्वाध्यायप्रवचनयोरतिशयेन करणादनु अनन्तरं विद्यमानं वचनमिति वा ।

## पदार्थदीपिका

**अथ भाष्यार्थः-**

पूर्वं ऋतादेः सर्वस्मात् स्वाध्यायप्रवचनयोराधिक्यमुक्तम् । इदानीं तत्फलमाख्यायिकया निरूपयति - **अहं वृक्षस्येत्यादिना** ।। यथाश्रुतप्रतीत्यादिपरिहाराय प्रमाणेनैव व्याचष्टे- **संसारेति** ।। संसरत्यनेनेति संसारः लिङ्गदेहः । 'रेरिवा' इत्यस्यार्थः छेत्तेति । 'रीङ् क्षय' इति धातोः । 'कीर्तिः पृष्ठङ्गिरेरिव' इत्येतद् व्याचष्टे- **मत्कीर्तिरिति** ।। पर्वतोपमा पर्वतपृष्ठोपमा विस्तारेणेति शेषः । यथा पर्वताधोभाग ऊर्ध्वभागापेक्षया विस्तृतो भवत्येवं मत्कीर्तिरपि सर्वत्र विस्तृतेत्यर्थः । 'ऊर्ध्वपवित्र'इत्यस्यार्थमाह- **अत्युत्कृष्टेनेति** ।। 'उन्नतो ह्यूर्ध्व उच्यते' इति वचनात् ऊर्ध्वशब्दस्योन्नतत्ववाचित्वात् उन्नतत्वं चात्युत्कृष्टत्वम् । अत्युत्कृष्टश्च हरिरेवेत्याशयेनैवं व्याख्यातम् । 'वाजिनीवस्वमृतमस्मि' इत्येतद्व्याख्यातुं आदौ तावद्वाजिनीवसुशब्दार्थमाह- **वाजिरूपश्चेति** ।। एवं पदार्थमुक्त्वा वाक्यार्थमाह- **तेनामृतोऽस्मीति** ।। 'तेन' वाजिनीवसुना विष्णुना । 'अमृतं' प्रारब्धकर्मशेषनिर्मुक्तोऽस्मि । 'स तेजसि सूर्ये सम्पन्न' इति श्रुतेरित्यर्थः । द्रविणमस्मीति सम्बन्धः । प्रसिद्धधनाभेदस्य बाधितत्वात् कथमस्य द्रविणत्वमित्यतस्तत्र हेतुमाह- **नित्यानन्देति** ।। तथा च नित्यसुखस्यैव महाद्रविणत्वात्तदभेदकथनं युक्तमेवेत्यर्थः । सुमेधाश्चास्मीति ग्राह्यम् । तेन समस्तपदव्याख्यानलाभान्न न्यूनता । 'अमृतोक्षितः' इत्येतत् प्रसिद्धामृतेन सिक्त इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **तेनामृतेनेति** ।। मरणशून्यतयाऽमृतशब्दवाच्येन विष्णुनेत्यर्थः । तत्सिक्तत्वं नाम कीदृशमित्यत आह- **तेन व्याप्त इति** ।। तेनामृतशब्दवाच्येन विष्णुना विशेषेणाप्तः प्राप्तः तत्सन्निधान-

विशेषयुक्त इत्यर्थः 'इति त्रिशङ्कोर्वेदानुवचनं' इत्यादेरर्थमाह- **इत्याहेति** ।। मानवः वैवस्वतमनुवंशोत्पन्नः । नाम्ना त्रिशङ्कुः हरिश्चन्द्रस्य पिता ।। २२ ।।

## उपनिषत्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ।। २२ ।।**

**अथ खण्डार्थः–**

'**आदौ तावदहमूर्ध्वेन विष्णुना**' इत्यादिगीताभाष्यटीकायां ऊर्ध्वमूलाध्याये टीकाकारैर्व्याख्याततत्वात् तदनुसारेण 'ऊर्ध्वपवित्र' इत्यादिकमादौ योज्यम् । तथा च स्वाध्यायप्रवचनादिसम्पत्त्याऽपरोक्षज्ञानानन्तरमहमादौ तावदूर्ध्वेनात्युत्कृष्टेन विष्णुना 'पवित्रः' पावितोऽप्रारब्धसमस्तपापरहितोऽस्मि । 'तद्यथैषीकातूलम्' (छा. ५.२४.३) इति श्रुतेः । तदनन्तरं प्रारब्धकर्मणां भोगेन क्षये चरमदेहपातानन्तरं अर्चिरादिद्वारेण सूर्यलोकं प्राप्य तत्र 'वाजिरूपश्च नेता च वाजिनीः सूर्यः ।' तत्र वसतीति वाजिनीवसु तेन वाजिनीवसुना विष्णुना । अमृतं प्रारब्धकर्मशेषनिर्मुक्तश्चास्मि । अधिकारिविशेषाणां तत्र प्रारब्धकर्मशेषमोक्षस्य प्रमितत्वात् । 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुच्यते' इति श्रुतेः। 'वैश्वानरे द्युनद्यां वा देहे वा सूर्य एव वा । विधूय सर्वपापानि याति किंस्तुघ्नकेशवम्' (भाग.ता. २.३.२५) इति श्रुतेश्च । अनन्तरं सान्तानिकलोके स्थित्वा साधनसम्पूर्त्यनन्तरं कार्यात्यये तदध्यक्षेण सह विरजां प्राप्य तत्र 'अहं' लिङ्गशरीराख्यवृक्षस्य 'रेरिवा' च्छेत्ता अस्मि । अनन्तरं अभिव्यक्तबहुतरानन्दमनुभवन्नेव भगवदुदरे प्रलये स्थित्वा पुनःसृष्ट्यनन्तरं श्वेतद्वीपप्रादुर्भावे सति तत्र स्थितं अनन्तशयनं श्रीनारायणं

दृष्ट्वा तदिच्छाऽवरकापगमानन्तरं तदनुज्ञया योग्यस्थानं प्राप्य तदनुग्रहेणैव सवर्चसं सप्रभं अनुभूयमानमिति यावत् । 'द्रविणं' धनं सुखं चास्मि । सुखस्यैव महाधनत्वात् । योग्याशेषानन्दानुभववान् अस्मीति यावत् । वर्चसशब्दोऽकारान्तोऽप्यस्ति । ब्रह्महस्तिभ्यां 'वर्चस' इत्यत्र योगविभागात् समासान्तो वा । सवर्चसं द्रविणं सुवर्णमिवाहं जात इति पूर्वटीकाकाराः । न केवलं सवर्चसं द्रविणमस्मि । किन्नाम 'सुमेधाः' सुष्ठ्वभिव्यक्तं मेधा ज्ञानं यस्यासौ सुमेधाश्चास्मि । 'अमृतेन' मरणरहितेन विष्णुना 'उक्षितः' 'सिक्तो' व्याप्तः । तत्सन्निधानविशेषयुक्तश्चास्मीत्येवं मे 'कीर्तिः' स्वाध्यायप्रवचन-जन्ययशोलक्षणा गिरेःपृष्ठमिव पर्वताधोभागवत् विस्तृता । दिगन्तविश्रान्ता जातेत्यर्थः । कस्येदं वचनमित्यप्रतीतेः श्रुतिः स्वयमाह- **इतीति** ॥ इत्येवं वैवस्वतमनुवंशोत्पन्नस्य हरिश्चन्द्रपितुः त्रिशङ्कोस्तन्नाम्नो राज्ञो वेदानुवचनं वेदप्रवचनजन्यं फलं निरूपितमित्यर्थः । तथा च 'अहं वृक्षस्य' इत्यादौ अहं अस्मीत्युक्तास्मच्छब्दविषयो दर्शित इति ज्ञातव्यम् ॥ २२ ॥

## उपनिषत्

(अन्तेवासिनां शिक्षणीयाः नियमाः)

**वेदमनूच्याऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि**

**सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयासने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥ २३ ॥**

## भाष्यप्रकाशिका

अधुना वेदाभ्यासानन्तरं गुरोराज्ञया कर्तव्यनियमानाह-**वेदमनूच्येति** ॥ आचार्यो वेदं शिष्यान् 'अनूच्य' व्याख्याय तम् 'अन्तेवासिनमनुशास्ति' इत्यर्थः । 'ये के चास्मच्छ्रेयांसः' अस्मद्भ्यच्छ्रेयांसश्च ये केचन 'ब्राह्मणाः' सन्ति तेषामासने स्थित्वा न प्रश्वसितव्यम् । श्वासवायुमोचनं न कर्तव्यम् । श्वासमोचनं यावत्कालेन भवति तावत्कालमपि तेषामासने न स्थातव्यमिति भावः । सत्पात्रं चेत् 'श्रद्धया' आस्तिक्यबुद्ध्या देयम् । असत्पात्रं चेत् तत्रापि 'अश्रद्धया' कीर्त्यै देयम् । 'अ इति ब्रह्म' इति श्रुतेः एतदन्तर्यामिणि नारायणे श्रद्धया देयम् । 'गुहाशयायैव न देहमानिने' इति स्मृतेः । 'श्रिया' निमित्तेन 'देयम्' । बहुधनसम्पत्तौ सत्यां तद्रक्षणायानुकूलेभ्यः सर्वेभ्योऽपि देयमित्यर्थः । 'ह्रिया देयं' स्वस्य दातृत्वाभावेऽप्यन्यो ददातीति 'ह्रिया देयम्' । दूषयिष्यन्तीति 'भिया देयम्' । वस्तुगत्या तु 'संविदा' समीचीनेन ज्ञानेन 'देयम्' ॥ २३ ॥

**अथ खण्डार्थः-**

ब्रह्मविद्याव्याख्यानानन्तरं आचार्येणान्तेवासिनं प्रति शिक्षणीयान्नियमानाह- **वेदमनूच्येत्यादिना** ॥ आचार्यो 'वेदमनूच्य' व्याख्याय 'अन्ते' समीप एव वसतीत्यन्तेवासी शिष्यस्तं अनुशास्ति शिक्षयति ।

शिक्षाप्रकारमेवाह- **सत्यंवदेति** ।। सत्यवचननिष्ठो भव । धारकत्वात् 'धर्मं' भगवन्तं 'चर' जानीहि । 'चर गतिभक्षणयोः' गत्यर्थाश्चावगत्यर्थाः । यद्वा धर्ममेव 'चर' आचर । 'स्वाध्यायात्' अधीतात् वेदादिशास्त्रात् 'मा प्रमदः' प्रमादयुक्तो मा भूः । तद्विस्मृतिमान् माभूरिति यावत् । यद्वा अनध्यायातिरिक्तदिवसेषु व्याख्यानविषये प्रमादयुक्तो माभूरित्यर्थः । आचार्यकुले वेदाध्ययनानन्तरं 'प्रियं' तदभिलषितं यद्धनं तत् 'आचार्याय' 'आहृत्य' दक्षिणात्वेन दत्वा 'प्रजातन्तुं' प्रजासन्ततिं 'मा व्यवच्छेत्सीः' मा छेदय गृहस्थाश्रमस्वीकारं कुर्विति यावत् । सत्योक्तौ धर्माचरणे च तात्पर्यद्योतनाय तदुभयविषये प्रमादो मास्त्वित्याह- **सत्यादित्यादिना** ।। 'कुशलात्' उक्तवक्ष्यमाणातिरिक्तात् कुशलरूपात् व्यापारात् । 'भूत्यै' ज्ञानमोक्षाख्यैश्वर्यविषय इति यावत् । 'न प्रमदितव्यम्' । यद्वा 'भूत्यै' भूत्या । दैवान्महैश्वर्यप्राप्त्या । तत्प्राप्तावपीति यावत् । उक्तसत्यादिविषये 'न प्रमदितव्यम्' इत्यर्थः । देवतोद्देशेन क्रियमाणं कर्तव्यं देवकार्यं समाराधनादि । पितॄनुद्दिश्य क्रियमाणं कर्तव्यं पितृकार्यं श्राद्धादि ताभ्यां 'न प्रमदितव्यम् ।' माता देववत् पूज्या यस्यासौ 'मातृदेवः' स 'भव' । पिता देववत् पूज्यो यस्यासौ तथोक्तः । आचार्यो देववत् पूज्यो यस्यासौ तथोक्तः । अतिथयो देववत्पूज्याः यस्यासौ तथोक्तः । तथा च देवपूजादिवत् मात्रादिपूजायां निरतो भवेत्यर्थः । 'अनवद्यानि' निर्दुष्टानि यानि तान्येव । 'इतराणि' सावद्यानि । 'यान्यस्माकं सुचरितानि' तानि अस्माभिराचर्यमाणानि समीचीनकर्माणि तान्येव तत्सदृशान्येव 'त्वयोपास्यानि' सेव्यानि कर्तव्यानीति यावत् । 'नो इतराणि' दैवादस्माभिर्देहादौ प्रतिबन्धकवशेन कदाचित् स्नानादिकर्तव्यं प्ररित्यक्तं चेत् त्वया न परित्याज्यमिति भावः । 'ये के च ब्राह्मणाः अस्मच्छ्रेयांसः' अस्मदपेक्षया ज्ञानादिना अधिकास्तेषां आसने त्वया न प्रश्वसितव्यं नासितव्यं नोपवेष्टव्यम् । यद्वा तेषां सतां

तत्समक्षमिति यावत्। त्वया आसने न प्रश्वसितव्यमित्यर्थः। ज्ञानधनादिकं 'श्रद्धया' आस्तिक्यबुद्धिपूर्वकं देयम्। 'अश्रद्धया' अपि देयमेव। 'गुणभूत-श्रद्धाभावे प्रधानं दानं न परित्याज्यम्। गुणप्रधानयोर्विरोधे गुणे त्वन्याय-कल्पनम्' इति न्यायात्। मृगभयात् बीजानावापादर्शनाच्चेति भावः। 'श्रिया' ऐश्वर्यानुसारेण। 'ह्रिया' स्वस्य सम्पत्तौ सत्यामप्यदाने लोका हसिष्यन्तीति लज्जया वा देयमित्यर्थः। 'भिया' अदाने गुर्वादीनां दण्डभयेन परलोके यमदण्डभयेन वा। 'संविदा' 'अनादिनिधनो विष्णुः पात्रस्थः परमेश्वरः' इति ज्ञानपूर्वकं सत्पात्रे देयमित्यर्थः। यद्वा पात्रापात्रविचारेणेत्यर्थः ॥२३॥

**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥ २४॥**

## भाष्यप्रकाशिका

कर्मणि यज्ञादिकर्मणि विचिकित्सा संशयः वृत्ते सन्ध्यावन्दनाद्याचारे 'विचिकित्सा' संशयो वा यदि स्यात्, 'ये तत्र ब्राह्मणाः संमर्शिनो' विचारवन्तः, 'युक्ता' युक्तिमन्तः, आ युक्ता आ समन्ताज्ज्ञानैर्युक्ताः, अलूक्षाः रलयोरभेदादरूक्षाः शान्ताः 'धर्मकामाः' ये स्युः ते यथा तत्र सन्दिग्धकार्ये वर्तेरन् तथा त्वमपि तस्मिन् कार्ये वर्तेथाः। अथाभ्याख्यातेषु

निन्दितशिवलिङ्गधारणादिकार्येषु प्राप्तेषु सत्सु ये समदर्शिगुणयुक्ताः ते शिष्टा यथा तेषु निन्दितकार्येषु ते वर्तेरन् तत्र तथा त्वमपि वर्तेथाः । शिष्टास्तावत् तानि त्यजन्ति अतस्त्वमपि त्यज । शिष्टानतिक्रम्य वित्ताद्याशया पाषण्डिनामाचारं न कदाऽप्याश्रय । बलिनः शिष्टान् ग्रामाद्बहिष्कुर्वन्ति चेत् त्वमपि शिष्टैः सहितः सन् बहिष्ठो भवेति भावः । 'एष आदेशः' मन्त्रोपदेशवदवश्यमनुष्ठेयः । 'एषा वेदोपनिषत्' वेदरहस्यम् । एतद्धरेर्गुरूणां चानुशासनम् अकरणे शिक्षासहितमनुशासनम् । एतदननुष्ठाने यद्यपि शिष्टैः शिक्षा न क्रियते तथाऽपि शक्तो हरिः तदाज्ञाकारिणो यमादयश्च शिक्षां करिष्यन्ति । अतः सर्वथाऽनुष्ठेयमिति भावः । एतदेवमुपासितव्यम् उपास्यमेव । दार्ढ्याय पुनः सावधारणोक्तिः ॥ २४ ॥

**अथ खण्डार्थः** -

मां विहाय देशान्तरगतस्य ते यदि कर्मविचिकित्सा वेदादिविहितयज्ञादिकर्मविषये सन्देहः । वृत्तं तदङ्गभूतः सदाचारस्तद्विषये वा 'विचिकित्सा' संशयः स्यात् तत्र तदा तत्र देशे ये ब्राह्मणाः तत्र कर्मणि तदङ्गे च सम्मर्शिनो विचारशीलाः 'युक्ताः' ज्ञानाद्युपाययुक्ताः 'आयुक्ताः' स्वधर्माचरणे आग्रहयुक्ताः । 'अलूक्षाः' अरूक्षाः प्रश्ने कृते सति कोपरहिताः । 'धर्मकामाः' धर्माचरण एव कामवन्तः 'स्युः' भवेयुः । ते ब्राह्मणाः तत्र कर्मादौ यथा 'वर्तेरन्' त्वमपि तत्र कर्मादौ तत्करणविषये तथैव तदनुसारेणैव वर्तेथाः नतु तद्विरोधेनेत्यर्थः । अथानन्तरं अभ्याख्यातेषु प्रत्याख्यातेषु वेदनिन्दितेषु अधर्मेषु तद्विषय इति यावत् । यदि विचिकित्सा स्यादिति वर्तते । 'ये तत्र' इत्यादिकमुक्तार्थम् । एवमाचार्योऽन्तेवासिनं प्रति धर्मान् उद्दिश्य श्रद्धोत्पादनायाह- **एष इति** ॥ एषः 'सत्यं वद' इत्यादिः । 'आदेशः' हरेराज्ञा । न केवलं राजाज्ञावत् हरेराज्ञामात्रमिदम् किन्नाम एषः तस्य

हरेरुपदेशः ब्रह्मादिपरम्पराप्राप्तः । नायमुपदेशो विरोचनं प्रति ब्रह्मोपदेशवत् । किन्नाम 'एषा वेदोपनिषत्' 'सत्यं वद' इत्यादिः वेदानां रहस्यम् । एषा' इत्युपनिषच्छब्दापेक्षया स्त्रीलिङ्गम् । उपसंहरति- **एतदिति** ॥ एतदनुशासनं शिक्षणं मया त्वां प्रति कृतमित्यर्थः । एवं मच्छिक्षितप्रकारेण त्वया सत्यवचनादिकमुपासितव्यमनुष्ठेयम् । तात्पर्यातिशयद्योतनाय पुनः स्वोक्तमवधारयति- **एवमुचेति** ॥ 'उ'चशब्दावेवार्थौ । एवमु एवमेव मदुक्तप्रकारेणैव एतत् सत्यवचनादिकमुपास्यं अनुष्ठेयमेव न कदाचिदपि आलस्यादिभीरुणा परित्याज्यमित्यर्थः ॥ २४ ॥

## उपनिषत्

**शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्माऽवादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ॥ २५ ॥**

**॥ इति प्रथमा वल्ली सम्पूर्णा ॥**

## भाष्यम्

संहिताया पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य वायोरपि भवति । पृथिव्यन्तरिक्षमित्युक्तपाङ्क्त्वं च । अत उपक्रमोपसंहारयोः 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' 'त्वामेव प्रत्यक्षं ब्रह्माऽवादिषं' इति युज्यते ॥ २५ ॥

॥ इति तैत्तिरीयोपनिषद्भाष्ये शिक्षावल्ली सम्पूर्णा ॥

## भाष्यप्रकाशिका

अध्ययनारम्भेऽपि शान्तिः पाठ्याऽयुश्च प्रार्थ्यम् । उपसंहारेऽपि सा पाठ्येति शिष्यशिक्षणाय तदनुकूलमन्तेऽपि पठति- **शन्नो मित्र इति ॥** अत एवाऽरम्भकालीनशान्तित्वाद् 'वदिष्यामि' इत्युक्तम् । नौ गुरुशिष्यौ सहावतु रक्षतु । नौ गुरुशिष्यौ सह भुनक्तु भोजयतु । आवां गुरुशिष्यौ द्वावपि वीर्यं दुर्मतनिराकरणादिवीर्यं सह 'करवावहै' । नौ आवयोरधीतमध्ययनं तेजस्वि अस्तु । आवां गुरुशिष्यौ कदाऽपि 'मा विद्विषावहै' द्वेषवन्तौ न भवावः । उत्तरविद्यारम्भशान्तिस्तु पूर्वविद्यारम्भशान्तिवदेव द्रष्टव्या । ननु नमस्ते वायो इति वायोः पृथक् प्रार्थनं प्रागपि कृतम् । अन्तेऽपि 'नमस्ते वायो' इति पृथग्वायुप्रार्थनं क्रियते । तदिदं वायोर्मध्ये प्रतिपाद्यत्वाभावेऽनुपपन्नमिव भवति । अतो मध्येऽपि वायोः प्रस्तावोऽस्तीत्याह भाष्यकारः- **संहिताया इति ॥** संहितायाः पूर्वोत्तरवर्णसन्धिरूपसंहितायाश्चतुस्स्थानकथनाय 'अधि-लोकमधिविद्यमधिज्यौतिषमधिप्रजमध्यात्मम्' इति यानि पञ्चाधिकरणा-न्युक्तानि तेषां पञ्चाधिकरणानां पञ्चरूपो वायुरभिमानी । एवं पञ्चरूपवायोः पञ्चाधिकरणाभिमानित्वमस्ति । 'पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः' इत्यादिना अधिभूतमध्यात्ममिति यत् पाङ्क्तषट्कं कथितं तस्य पाङ्क्तषट्कस्य पञ्चरूपो वायुः प्रत्येकमभिमानी । तथा च पाङ्क्तत्वं पाङ्क्तषट्काभिमानित्वं च वायोरस्ति । अतो विद्यामध्येऽपि बहुवारं पञ्चरूपवायोः प्रस्तावसद्भावादा-द्यन्तयोरपि तस्य पार्थक्येन प्रार्थनं युक्तमिति भावः । इत्येवोपनिषदर्थः॥२४॥

## पदार्थदीपिका

विघ्नपरिहाराय आदौ यां शान्तिं पठित्वा विद्या उपक्रान्ता समापिता च । तामेव शान्तिं ब्रह्मा विघ्नपरिहारायान्तेऽपि पठति- **'शं नो मित्र' इत्यादिना** ॥ अक्षारार्थस्तूक्त एव । नन्वत्रोपक्रमे 'नमस्ते वायो । त्वमेव

प्रत्यक्षं ब्रह्म वदिष्यामि' इत्युक्तिः उपसंहारे च 'त्वामेव प्रत्यक्षं ब्रह्मावादिषम्' इत्युक्तिर्न युज्यते। पूर्वोक्तविद्यासु कुत्रापि वायोरप्रतिपादितत्वादित्यत आह- **संहिताया इति** ॥ संहितायाः यानि पञ्चाधिकरणानि अधिलोकाधि-ज्यौतिषाधिविद्याधिप्रजाध्यात्मसञ्ज्ञकानि तदभिमानित्वं तदभिमानिदेवतात्वं प्राणापानादिपञ्चरूपस्य वायोरपि भवति। तथा 'पृथिव्यन्तरिक्षं द्यौर्दिशोऽ-वान्तरदिशाः' इत्यादिनोक्तपाङ्क्तत्वं पाङ्क्षट्काभिमानित्वं च प्राणादिपञ्च-रूपस्य वायोरपि भवति। अतः पञ्चरूपस्य वायोः पञ्चाधिकरणाभिमानित्वेन पाङ्क्षट्काभिमानित्वेन च पूर्वं प्रतिपादितत्वादुपक्रमे 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्युक्तिरुपसंहारे 'त्वामेव प्रत्यक्षं ब्रह्माऽवादिषम्' इत्युक्तिश्च युज्यत इत्यर्थः ॥ २५ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तैत्तिरीयोपनिषद्भाष्यस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां पदार्थदीपिकायां शीक्षा समाप्ता ॥**

## ॥ अथ ब्रह्मवल्ली ॥

### उपनिषत्

(विघ्नविघातार्थं शान्तिमन्त्राः)

**ॐ ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥**

### खण्डार्थः

यद् ब्रह्मविद्याप्राप्त्यर्थं पूर्वसम्पादनीया विद्या निरूपिता । तामेव विद्यां वरुणाय वक्तुं तत्र प्रसक्तविघ्नपरिहाराय ब्रह्मा शान्तिं पठति- **सहनाववत्वित्यादिना** ॥ सः मित्रादिः । 'नौ' गुरुशिष्यौ । 'अवतु' रक्षतु । विघ्नान् परिहृत्येति शेषः । हेति मित्रादेः रक्षणे सामर्थ्यमस्तीति प्रसिद्धमिति दर्शयति । यद्वा 'नौ' आवां सह मिलित्वा 'अवतु' रक्षत्वित्यर्थः । 'स' मित्रादिर्नौ गुरुशिष्यौ 'भुनक्तु' अन्नादिदानेन पालयतु । व्याख्यानादि-जनितमौक्तानन्दं भोजयत्विति वा । 'भुज पालनाभ्यवहारयोः' इति धातोः। हेति मित्रादेः भोजनदाने सामर्थ्यप्रसिद्धिमाह । 'नौ' आवां सह मिलित्वा भोजयत्विति वा । आवां गुरुशिष्यौ सह मिलित्वा 'वीर्यं' व्याख्यानविषये प्रयत्नं 'करवावहै' कुर्वः । लोडुत्तमपुरुषद्विवचनमिदम् । 'नौ' आवाभ्यां अधीतं तेजस्वि वीर्यवत्तममस्तु । आवां 'तेजस्विनौ' भवाव । आधीतं फल-प्रदमस्तु इत्यर्थ इत्यप्याहुः । गुरुशिष्यौ आवां 'मा विद्विषावहै' विद्वेषं न करवावहै । न कुर्वः शान्तिरिति त्रिरुक्तेः प्रयोजनं पूर्वमेवोक्तमनुसन्धेयम् ॥१॥

### उपनिषत्

(ब्रह्मस्वरूपनिरूपणम्)

**ॐ ॥ ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं**

ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥ २ ॥

## भाष्यम्

'स्वयोग्यं ब्रह्मविद् भुङ्क्ते विरिञ्चेन परेण च ।
ब्रह्मणा सह तद्वश्यः सुखमेव न दुष्कृतम्' ॥ इति च ॥ २ ॥

## भाष्यप्रकाशिका

यदर्थं नियमा उक्ता अधुना तामेव ब्रह्मविद्यामाह- **ब्रह्मविदित्यादिना** ॥ 'परं ब्रह्मवित्' परं ब्रह्माऽप्नोतीति पूर्वोक्तब्रह्मपरशब्दयोरन्योन्यानुषङ्गेन योजना । उपास्यप्राप्ययोरैकविध्यावश्यम्भावात् । न ह्यन्योपास्त्याऽन्यप्राप्तिर्भवति । तत् प्रागुक्तं ब्रह्म अभि प्रति एषा स्वरूपलक्षणवेदनप्रकारफलनिरूपणपरा विद्या उक्ता वेदान्तविद्याकोविदैर्मुनिभिरुक्तेत्यर्थः । किं लक्षणकं ब्रह्म? कथं च तद्वेदनं ? सर्वदा विद्यमानस्येदानीमपि प्राप्तिसद्भावात् का च तत्प्राप्तिः ? इति शङ्कात्रयपरिहारायाऽह- **'सत्यम्'** इत्यादिना ॥ अत्र सत्यत्वं न पारमार्थिकत्वमात्रम् । ज्ञानत्वं च न ज्ञानत्वमात्रम् । अनन्तत्वं च नान्ताभावमात्रम् । कुलाले जीवज्ञाने आकाशे चातिव्याप्तेः । 'जन्माद्यस्य यतः' इति वेदनिर्णायकव्याससूत्राननुगुणत्वाच्च । अतः सत्त्वं प्रागसतः सत्तारूपजनिं, सत्त्वं सद्भावरूपस्थितिं, 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः सत्त्वमवसादनरूपसंहारं यापयतीति व्युत्पत्त्या, विशेषानुक्तेः संकोचे कारणाभावाच्च सकलजगत्स्रष्टृत्वं सकलजगत्पालकत्वं सकलजगत्संहर्तृत्वं चेति व्याससूत्रोक्तलक्षणत्रयं सत्यपदेन सङ्गृहीतम् । ज्ञानपदेन कर्तर्यपि ल्यटोऽनुशासनाद्विशेषानुक्तेः संकोचे कारणाभावान्निरवधिकसर्वज्ञातृत्वरूपं सृष्ट्याद्युपयोगितया सूत्रकृत एवाभिप्रेतं लक्षणान्तरमुदितम् । अनन्तपदेन च सृष्ट्युपयुक्ततया 'को ह्येवान्यात्कः

प्राण्यात्' इति श्रुत्युक्तं 'आनन्दमयोऽभ्यासात्' इति सूत्रोक्तं चाऽनन्देनान्तरहितत्वाख्यमानन्दपूर्णत्वं च पञ्चमं लक्षणमुदितम् । एवं च शक्त्यादिगुणाभावे सृष्ट्ययोगात् सार्वदैशिकसार्वकालिकसृष्टेः देशकालव्याप्त्यभावे अयोगेन च सूत्रश्रुत्युक्तानन्दपदस्य सृष्ट्युपयुक्तसर्वगुणोपलक्षणत्वसम्भवाच्च देशतः कालतो गुणतोऽन्तराहित्यं सर्वशक्त्यादिगुणैरनन्तत्वे पर्यवस्यति ॥ अतो 'महद्गुणत्वाद्यमनन्तमाहुः' इति स्मृतिरप्यनुकूलैवाऽसीदिति ज्ञेयम् । गुहायां जीवहृदयगुहायां परमे व्योमन् व्योम्नि निहितं वेद, न तु जीवतादात्म्येनेति वेदनप्रकार उक्तः । स ज्ञानी ब्रह्मणा विरिञ्चेन ब्रह्मणा परब्रह्मणा च सह काम्यन्त इति कामाः स्वयोग्यसुखानि तानश्नुत इति फलनिरूपणम् ॥ एवं च प्राप्तिमात्रस्य पूर्वं विद्यमानत्वेऽपि स्वोचितसकलसुखानुभवानुकूलप्राप्तेः प्रागभावादपूर्वतया फलवत्त्वोपपत्तिः ॥ ब्रह्मणैकीभवतीति परकीयदुराशाखण्डनाय सहेत्युक्तम् । ब्रह्मणा ब्रह्मभावेन सह युगपत् सर्वान् कामानश्नुत इति व्याख्यानम् तु सहशब्दस्य यौगपद्यार्थे अनुशासनाभावेन श्रुतहान्यश्रुतकल्पनारूपत्वात् तूष्णीं भावप्रधानपरत्वकरणे कारणाभावात् तन्मते मुक्तौ सर्वकामाभावाच्चानुपपन्नम् । यदत्रोक्तं परेण सर्वजीवात्मकब्रह्मभावे सर्वजीवयोग्यकामानामपि सत्वात् सर्वकामाशनोपपत्तेरिति, तदतितुच्छम् । सर्वजीवैर्नरकादिष्वनुभूयमानानन्तानन्तदुःखानामप्यनुभवप्रसङ्गेन मुक्तेः संसारादप्यतिनीचत्वप्रसङ्गात् ॥ ब्रह्मणा सहेत्युक्त्या ब्रह्मणोऽप्राधान्यशङ्कापरिहाराय 'तद्वश्यः' इत्युक्तम् ॥ यज्ज्ञानात्स्वयं मुक्तोऽभूत् तदप्राधान्यस्य शङ्कितुमशक्यत्वात् ॥ सहेति प्रयोगस्तु भृत्यैःसह राजाऽऽगत इतिवत् तद्वश्यतामेवाऽहेति भावः । न हि 'पत्या सहधर्मिणी' 'भार्या पत्या सह शेते' 'पत्या सह भुङ्क्ते' इत्यादौ पत्युरप्राधान्यं क्वापि दृष्टमिति भावः ॥२॥

## पदार्थदीपिका

**अथ भाष्यार्थः-**

यदर्थं विघ्नपरिहारिणी शान्तिः पठिता तामेव ब्रह्मविद्यामाह- **ब्रह्मविदाप्नोति परमित्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासायाऽदौ तावत् ब्रह्मवल्लीं प्रमाणेनैव सम्यग्व्याचष्टे- **स्वयोग्यमित्यादिना** ॥ तत्रादौ 'सोऽश्नुते' इति वाक्यं व्याचष्टे- **स्वयोग्यमिति** ॥ 'स' इत्यस्यार्थः ब्रह्मविदिति । 'सर्वान् कामान्' इत्यस्यार्थः स्वयोग्यं सुखमेवेति । तद्व्यावर्त्यं प्रदर्शनं नेति । 'अश्नुत' इत्यस्यार्थः भुङ्क्ते इति । 'ब्रह्मणा' इत्यनूद्य तस्य विरिञ्चेन परेण चेत्यर्थद्वयकथनम् । 'सह' इत्यनूद्य तस्याभिप्राय उक्तस्तद्वश्य इति ।

(सर्वस्रष्टृत्वप्रपञ्चनम्)

**तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ॥ ३ ॥**

(अन्नमयप्रकरणम्)

**स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ॥ ४ ॥**

## भाष्यम्

**'य एष भगवान् विष्णुः भूतस्रष्टा गुणाधिकः ।**
**स एवान्नात् (पुनर्जातो) पूर्वजातो ह्यजातोऽपि यतो विभुः ॥'**
**'अन्नात्मनि शरीरेऽसौ व्यज्यते सुविवेकिभिः ।**
**अन्नस्य सारभूतोऽयं शरीरस्य च केशवः ॥'**

'अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः।
अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः।
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः॥' ३-४॥

## भाष्यप्रकाशिका

क्रमेणोक्तलक्षणप्रपञ्चनार्थमुत्तरो ग्रन्थः। तत्र सर्वस्रष्टृत्वरूपं प्राथमिकं लक्षणं प्रपञ्चयति- **आत्मन** इति॥ अत्र सर्वत्रापि आकाशादिपदैराकाशादयोऽपि ग्राह्याः। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः तेषामन्तर्नियामकभगवद्रूपाण्यपि ग्राह्याणि। य आकाशादीनां स्रष्टा आत्मनामको नारायणः यश्च पुरुषः चरमसृष्टपुरुषदेहप्रविष्टत्वात् पुरुषनामको नारायणः स एष पुरुषः अन्नरसमयो वै। सारतया मुख्यतया यदन्नमन्नशब्दप्रवृत्तिनिमित्तं 'अद्यतेऽत्ति च भूतानि' इति श्रुत्या स्वयमेव वक्ष्यमाणं यद्भूतात्तृत्वं तन्मयस्तत्प्रचुरः। अनाद्यनन्तकालेष्वपि नियमेन स्वतन्त्रतया सकलभूतसंहर्तेत्यर्थः। भोग्यत्वरूपासारार्थत्याजनाय श्रुतिः स्वाभिमतमन्नं रसशब्देन विशिनष्टि। पुरुषशब्दस्य स्वाभिमतदेहपरत्वं त्याजयितुं 'स वा' इति प्रागुक्तात्मानं परामृशति। अतो 'देह एष अन्नरसमयः' इति परव्याख्यानं गम्भीरश्रुतेः हृदयानभिज्ञताप्रयुक्तम्। न हि श्रुत्युक्तं भूतात्तृत्वं यया कयाचनविधया 'आकाशाद्वायुः' इत्यादिना अत्रैव भूतजन्यतयोक्तदेहे सम्भवति। न हि ब्रह्मविदित्युक्तब्रह्मप्रपञ्चनाय प्रवृत्ता श्रुतिरब्रह्मभूतमसारं देहं स्तौतीति बुद्धिमता वक्तुं शक्यम्। अनेन तृतीयलक्षणं प्रपञ्चितं भवति। स्रष्टा ब्रह्मा, संहर्ता शिव इति विप्रतिपन्नत्वेन विवादास्पदत्वादिदं हि लक्षणद्वयमादौ प्रपञ्चितम्। लक्षणत्वे विवादाभावात् क्रममुल्लङ्घ्य प्राणमयप्रकरणे तस्य प्रपञ्चनमिति ज्ञेयम्। 'तस्येदमेव शिरः' 'सप्तसु प्रथमा' इति सूत्रादिदमस्मिन् परिदृश्यमाने शिरः मनुष्याणां शिरसि शिरस्तिष्ठतीति शिरःपदाऽवृत्त्या योजना। एवमुत्तरत्रापि योजना द्रष्टव्या।

'दक्षिणः पक्षः' दक्षिणहस्तः। 'उत्तरः पक्षः' उत्तरहस्तः। यस्मात् पूर्वाभिमुखस्योत्तरदिशिस्थो वामः। दक्षिणदिशिस्थस्तु दक्षिणः। तस्माद् दक्षिणोत्तरपदयोः दक्षवामकरपरत्वमुचितम्। देहपार्श्वद्वये विद्यमानत्वात् पक्षपदेन हस्तौ गृह्यते। आत्मा मध्यदेहः। प्रतितिष्ठत्यनेनेति प्रतिष्ठा पादः। पुच्छपदेनाप्यर्वाचीनाङ्गत्वात् पाद एवोच्यते। मनुष्याणां शिरस्यन्नमयाख्यपरमात्मनः शिरः। करयोः करौ। मध्ये मध्यम्। पादयोः पादौ। स एवाऽनन्दमयाख्यः परमात्माऽऽपादमस्तकं मानुषशरीरं व्याप्य तिष्ठतीति भावः। 'स एवान्नात् पुनर्जातः' इत्यत्र सः भूतस्रष्टा परमात्मा अन्नाज्जायमाने शरीरे पुनर्जातोऽभिव्यक्तः। अन्नस्य सारभूतः श्रेष्ठः। शरीरस्य सारभूतः अन्तर्नियन्तृत्वाच्छ्रेष्ठः। तस्मिंच्छरीरे स्थितोऽनिरुद्धाख्यो भगवानत्तृत्वादुपजीव्यत्वाच्चान्ननामा। उपलक्षणमेतत्। तच्चात्तृत्वं सर्वेभ्योऽपि प्राचुर्येणास्तीति कृत्वा देहान्तःस्थितभगवद्रूपमन्नमयशब्देनाप्युच्यते। अन्यथाऽन्नमयप्रपञ्चत्वासम्भवादिति ज्ञेयम्। उक्तरीत्याऽन्नान्तर्यामी यो भगवान् सोऽप्यन्नमयप्रकरणेऽन्नशब्दार्थतयोक्तात्तृत्वव्युत्पत्त्यैवान्ननामा। न त्वन्नवत्। तर्ह्यत्तृत्वेनेति प्रसङ्गादुक्तम्। अन्नादन्नमयात् प्राचुर्यस्यापि भगवद्रूपत्वेन पार्थक्याभावसूचनाय श्लोके अन्नादित्येवोक्तम्। अन्यथा श्लोकश्लोकिनोः वैयधिकरण्यं स्यात्॥ ३-४॥

## पदार्थदीपिका

'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र स वा एष इत्यनेन अन्नात्पुरुष इति प्रकृतः प्रसिद्धान्नविकारभूतदेह एव परामृश्यत इत्यसदित्यभिप्रेत्य स इत्यनेन 'आत्मन अकाशः सम्भूतः' इत्यत्राऽत्मशब्दोक्तविष्णुरेव परामृश्यत इति तावत् प्रमाणेन दर्शयति- **य एष इति**॥ गुणाधिकः अत एवात्मशब्दोक्त इति शेषः। यथोक्तमनुव्याख्याने- 'स इत्यात्मपदोद्दिष्टः' इति। एष इत्यस्य जीवशरीरगत इत्यर्थमभिप्रेत्याह- **स एवेति**॥ अजातोऽपि जात इत्यनेन

प्रादुर्भाव एव हरेर्जनिर्न देहोत्पत्तिरिति दर्शयति । अत एवोत्तरत्र व्यज्यत इत्युक्तम् । इतरानधिष्ठानेन साक्षात्स्वयमेव जातः किमित्यतः अन्नात्पुरुष इत्यस्याभिप्रायमाह- **अन्नात्मनीति** ॥ अन्नविकारभूत इत्यर्थः । यथोक्तम्- **एष जीवशरीरग** इति । सुविवेकिभिरिति तृतीया षष्ठ्यर्थे । सा च कर्मणीति ज्ञातव्यम् । तथा च स वा एष इति न प्रसिद्धान्नविकारपुरुषशब्दोक्तदेहपरामर्शः । किन्तु आकाशादिपुरुषान्तशब्दैर्ब्रह्मणोऽपि वाच्यत्वमङ्गीकृतम् । तत्तत्क्रियाप्रवर्तकत्वेन ब्रह्मणोऽपि प्रादुर्भावाङ्गीकारात् । तथा च यस्मादात्मनः आकाशादिपुरुषान्तमुत्पन्नं स एषः पुरुषशब्दोक्त जीवशरीरगोऽन्नरसमय इति परमात्मपरामर्शाङ्गीकारात् । न च किमर्थमसौ परामृश्यत इति वाच्यम् । आत्मन आकाशादिकारणत्वमुक्त्वा तस्यैवान्नमयादिपञ्चरूपत्वप्रदर्शनाय पुनः प्रक्रान्तत्वात् न परामर्शवैयर्थ्यमिति भावः । यथोक्तं भाष्ये- 'स वा एष इत्यन्यप्रारम्भात्' इति । उक्तं चानुव्याख्याने- 'एवं देहादिपर्यन्तमागतं हरिमेव तु । परामृशति तस्यैव पञ्चरूपत्ववित्तये' (ब्र.सू.अनु. १.१.६, श्लो. २०६) इति । 'यदवादि स वा एष' इत्यन्यपरामर्शो नान्नात्पुरुष इत्युक्तदेहपरामर्श इति । तदयुक्तम् । आत्मनो दूरोक्तत्वात् देहस्य च समीपोक्तत्वात् समीपोक्तदेहपरित्यागेन दूरोक्तात्मपरामर्शग्रहणे कारणाभावात् । 'अन्नात् पुरुषः' इति पुरुषशब्देन प्रकृतस्यैव देहस्य 'स वा एष पुरुष' इति पुरुषशब्देनोक्तेरात्मनश्च पुरुषशब्देन प्रकृतत्वाभावाच्च । एकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगादित्याशङ्कापरिहारायअन्नरसमय इत्येतद् व्याचष्टे- **अन्नस्य सारभूतोयऽमिति** ॥ सारेति रसशब्दार्थः । 'रसः सारो वरश्चेति शब्दा एकार्थवाचकाः' इति वचनात् । अन्नस्यान्नशब्दार्थभूतस्यात्तृत्वादेः सारभूतः श्रेष्ठाऽत्ता श्रेष्ठाऽद्यश्चेत्यर्थः । यथोक्तम्- 'महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत्' इति । अन्नरसमय इत्यस्यैवार्थान्तरमाह- **शरीरस्य सारभूत** इति । अन्नविकारस्य शरीरस्येत्यर्थः ।

अयं भावः । 'स वा एष पुरुष' इति वाक्येन परमात्मैव परामृश्यते न देहः । न च तस्य दूरोक्तत्वविरोधः पुरुषशब्देनाप्रकृतत्वविरोधश्चेति वाच्यम् । आकाशादिपुरुषान्तशब्दैराकाशादिसारभूतस्य परमात्मनोऽपि प्रादुर्भावाङ्गीकारेण समीपोक्तत्वात् पुरुषशब्देन प्रकृतत्वाच्च परमात्मपरामर्शोपपत्तेः । न च पुरुषपदेन देह परमात्मनोरुभयोरप्युक्तत्वादुभयपरामर्शोऽयमस्त्विति वाच्यम् । पुरुषशब्दोक्तदेहसारभूतपरमात्मैव देहं विहायात्र परामृश्यते । कुत इति चेत् रसशब्देन विशेषणात् । यथा प्रकृतिं पुरुषं चेति पुरुषशब्देन जीवेश्वरयोर्द्वयोः प्रकृतत्वेऽपि दुःखानुभवितृत्वविशेषणेन 'पुरुषः प्रकृतिस्थो हि' इति वाक्ये जीव एवोच्यते नेश्वरः, एवम् 'अन्नात्पुरुषः' इत्युभयोः प्रकृतत्वेऽपि 'स वा एष पुरुषोन्नरसमयः' इति सारान्नमयत्वविशेषणेन परमात्मपरामर्श एवायमिति ज्ञायते । उक्तं च 'बहूनां सह निर्देशे एकयाभिधयैव तु । तयैवाभिधया तेषां परामृश्यैकमुच्यत' इति ॥ एतच्च सविस्तरमुक्तमुत्तरप्रस्थाने 'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च' (ब्र.सू.अनु. १.१.६, श्लो. २००) इत्यादिना । अन्नमयं प्रत्युदाहृतश्लोके 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादौ अन्नशब्देन प्रसिद्धान्नमेवोच्यत इत्यन्यथाप्रतीतिनिरासाय अन्नशब्दार्थमाह- **अन्ननामा चेति** ॥ अन्नाभेदेन तच्छब्दवाच्यत्वपरिहारायान्नसंस्थ इत्युक्तम् । अनेनान्नशब्दस्य हरौ रूढिरुक्ता भवति । अर्थान्तरमाह- **शरीरेष्विति** ॥ अन्नविकारभूतेषु शरीरेष्वित्यर्थः । तथा चान्नादित्यस्यान्नविकारशरीरसंस्थाद्धरेरित्यर्थ उक्तो भवति । प्रसिद्धान्नपरत्वे 'येऽन्नं ब्रह्मोपासते' इत्यादिनोक्तब्रह्मशब्दाद्ययोग इति भावः। किञ्च प्रसिद्धान्ने 'अद्यतेऽत्ति च' इति वाक्योक्तान्नशब्दनिर्वचनलभ्यार्थायोग इति भावः । भूताद्यत्वस्य कथञ्चित्सम्भवेऽपि भूतात्तृत्वस्य कथमप्यसम्भव इति भावेन 'अत्ति च भूतानि' इत्यस्यार्थमाह- **अत्तृत्वादिति** ॥ ननु परमात्मनोऽपि कथमन्नशब्दवाच्यत्वं ? भूतात्तृत्वस्य कथञ्चित्तत्र सम्भवेऽपि

भूताद्यत्वस्य कथमप्यसम्भवादित्यतो 'भूतैरद्यत' इत्यस्य तात्पर्यमाह- **उपजीव्यश्चेति** ।। यथोक्तं भाष्ये- 'उपजीव्यत्वमेवाद्यत्वम्' (ब्र.सू.भा. १.१.६) इति । उक्तं चानुव्याख्याने- 'भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः' (ब्र.सू.अनु. १.१.६, श्लो. २७७) इति ।

## उपनिषत्

**तदप्येष श्लोको भवति । अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीᳩ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नᳩ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नᳩ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ।। ५ ।।**

## भाष्यम्

'स ज्यायान् सर्वभूतेभ्यः तस्मात् सर्वौषधं स्मृतः ।
संसारे दह्यमानानामाश्रयत्वात् स औषधम् ।।'
'प्रचुरं मय इत्युक्तं प्रचुरात्ता यतो हरिः ।
प्रचुरैः सेव्यते नित्यमतोऽन्नमय ईरितः ।।'
'देहस्यैव शिरस्यस्य शिरो विष्णोः प्रतिष्ठितम् ।।
बाह्वोः पक्षौ तथा मध्ये मध्यं पश्चात्तनौ तथा ।
पुच्छमित्येष भगवाननिरुद्धः स्वयं हरिः ।।' ५ ।।

## भाष्यप्रकाशिका

सर्वौषधम् 'उष दाहे' इति धातोः संसाराग्निना दग्धा उषा इत्युच्यन्ते ।

तेषां दाहोपशामकत्वेन तत्सम्बन्धि धारकं च यद्वस्तु तदौषधमित्युच्यते । संसाराख्यं दाहं शमयित्वा मोक्षधारकं यद्भगवद्रूपं तदौषधमित्युच्यते । सर्वेषां योग्यजीवानामौषधं 'सर्वौषधम्' । 'येऽन्नमयं ब्रह्मोपासते' ते सर्वमन्नमयनामानं भगवन्तं प्राप्नुवन्ति । मुक्तावपेक्षितसकलान्नं प्राप्नुवन्तीति ध्वनिः । 'अन्नमय' इत्यादावुच्यमानमन्नं न प्राकृतान्नं येनाब्रह्मविद्यात्वं स्यात्, किन्तु सर्वोपजीव्यः सकलसंहर्ता भगवानेवान्नशब्देनोच्यत इति स्वाभिप्रायं श्रुतिः स्वयमेवोद्घाटयति- **'अद्यतेऽत्ति च'** इति ॥ ५ ॥

## पदार्थदीपिका

प्रसिद्धान्नपरत्वे 'अन्नं हि भूतानां ज्येष्ठं तस्मात्सर्वौषधमुच्यते' इति वाक्योक्तं सर्वभूतेभ्यो ज्यायस्त्वं संसारे दह्यमानानामाश्रयत्वरूपमौषधत्वं च मुख्यतो न सम्भवतीत्याशयेन तद्व्याचष्टे- **स ज्यायानिति** । तस्मात् ज्यायस्त्वादेव । **संसार** इति ॥ संसरत्यत्रेति संसारो देहस्तत्र जाठराग्निना दह्यमानानामाश्रयत्वादित्यर्थः । यथोक्तम्- 'ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत्' (ब्र.सू.अनु. १.१.६, श्लो. २०४) इति ॥ तथा च उषाः उष्टाः दग्धाः । 'उषप्लुषदाह' इति धातोः । ते धीयन्ते अस्मिन्निति व्युत्पत्तिर्द्रष्टव्या । ननु 'स वा एष पुरुषोन्नरसमयः' इत्युक्तान्नरसमयो न विष्णुः । किन्तु देहरूपः कोश एव । कुतः ? विकाराभिधायकमयट्प्रत्ययप्रयोगात् । तस्य चान्नविकारदेह एव सम्भवात् विकारशून्ये परमात्मनि चासम्भवात् इत्याशङ्कायाम् , नात्र मयट् विकारार्थो विवक्षितः किन्तु प्राचुर्यार्थ एवेत्याह- **प्रचुरमिति** ॥ प्रचुरं प्राचुर्यम् । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति वचनात् । 'अन्नमयो यज्ञ' इत्यादौ मयटः प्राचुर्ये प्रयोगदर्शनाच्चेति भावः । यथोक्तम्- 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' (ब्र.सू. १.१.१३) इति । ननु कथमत्रान्नमयशब्दोऽन्नप्राचुर्यार्थः । अन्नप्राचुर्यकथनस्याल्पत्वादित्यत आह- **प्रचुरात्तेति** ॥ इदमुपलक्षणम् ।

प्रचुराद्य इत्यपि ग्राह्यम् । तथा च प्रचुरात्ता पूर्णात्ता । प्रधानात्तेति यावत् । एवं प्रचुराद्यः प्रचुरोपजीव्यश्चेत्यन्नमय इत्यर्थः । नात्रान्नप्राचुर्यस्यान्नमय-शब्दार्थत्वायोगः । यतोऽत्रान्नशब्देन भूतात्तृत्वस्य तदद्यत्वस्य चाभिधानेनाल्पार्थत्वाभावात् । प्रसिद्धान्नार्थत्व एव तत्प्राप्तेरिति भावः । यथोक्तं भाष्ये- 'अन्नादीनां च प्राचुर्यमेव । ''अद्यतेऽत्ति च'' इति व्याख्यानात् । तत्प्राचुर्यं च युज्यते' इति । उक्तं चानुव्याख्याने । 'प्रचुरान्नादि-रेवातो ह्यन्नमन्नमयेत्यपि । उच्यते' इति । किञ्च नायं मयट् प्रत्ययः । किन्नाम प्रचुरवाची मयशब्द इत्यङ्गीकृत्यान्नमय इत्यस्यार्थान्तरमाह- **प्रचुरैरिति** ॥ हरिरिति वर्तते । अन्नशब्दवाच्यो हरिर्यतो मयैः प्रचुरैः बहुभिः सेव्यते अतो 'मयसेव्यान्न' इति भाव्ये मध्यमपदलोपेन मयशब्दस्य परनिपातेन चान्नमय इति ईरित इत्यर्थः ।

ननु यदि परिदृश्यमानदेह एव नान्नमयः । किन्तु परमात्मैव कथं तर्हि 'तस्येदमेव शिरः' इत्यादि प्रत्यक्षनिर्देशो युज्यते । न च वाच्यमुपनिषद्द्रष्टा मुनिः ब्रह्मापरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथा सति तेनापरोक्षी-कृतप्राणमयादावपि तत्प्रसङ्गात् निर्देशवैयर्थ्याच्चेत्यतस्तदभिप्रायमाह-**देहस्यैवेति** ॥ अस्य विष्णोः शिरो देहस्य शिरसि प्रतिष्ठितमिति सम्बन्धः । 'अयं दक्षिणःपक्षः, अयमुत्तरः पक्षः' इत्यस्यार्थो बाह्वोः पक्षाविति । अस्य विष्णोः पक्षौ दक्षिणोत्तरबाहू देहस्य बाह्वोः प्रतिष्ठिताविति लिङ्गवचन-विपरिणामेन सम्बन्धः । 'अयमात्मा' इत्यस्यार्थो मध्ये मध्यमिति । अस्य विष्णोः मध्यं मध्ये देहस्य मध्ये प्रतिष्ठितमिति सम्बन्धः । 'इदं पुच्छं प्रतिष्ठा' इत्यस्यार्थः- 'पश्चात्तनौ' इति । एकवचनं द्विवचनार्थे । देहस्य पश्चात्तनौ देहाधोभागयोः पादयोरिति यावत् । अस्य विष्णोः पुच्छं पादौ प्रतिष्ठितावि-त्यर्थः । यद्वा देहस्य पश्चात्तनौ पादद्वये विष्णोः पुच्छं पादद्वयं प्रतिष्ठित-

मित्यर्थः । अन्नमयशब्दवाच्यरूपस्य नामविशेषं दर्शयति- **इत्येष भगवानिति** ॥ एवं च परिदृश्यमानदेहशिरःपक्षादौ अन्नमयनामकानिरुद्धाख्यभगवच्छिरःपक्षादेः सन्निहितत्वात् वस्त्रप्रावृतजानुनीदं जान्विति निर्देशवदिदमिति निर्देशो युज्यते इति भावः । यथोक्तं भाष्ये- 'इदमिति च दृश्यमानसन्निहितत्वात्' इति । उक्तं चानुव्याख्याने- 'इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः । शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः' इति ॥ ५ ॥

## उपनिषत्

(प्राणमयप्रकरणम्)

**तस्माद्वा एतस्मादन्नरसमयात् । अन्योन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । ॥ ६ ॥**

**तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ ७ ॥**

### भाष्यम्

'तस्यान्तरं परं रूपमभिन्नमपि भिन्नवत् ।
प्रद्युम्नाख्यं प्राणमयं प्रणेतृत्वात् प्रकीर्तितम् ॥

'शिरस्तस्य प्राणगतं प्राण इत्येव नामतः ।
व्यानाख्यो दक्षिणः पक्षो व्यानगश्चोत्तरस्तथा ॥'
'अपानाख्योऽपानगत आकाशस्थं च मध्यमम् ।
आकाशाख्यं तथा पुच्छं पृथिव्यां पृथिविनामकम् ॥'
'उदान आकाशनामा समानः पृथिवीति च ।
प्रणेतृत्वात् प्राणनामा शिरो विष्णोः प्रकीर्तितम् ॥'
'विशेषाच्चेष्टयेद् यस्माद् व्यानाख्यो दक्षिणः करः ।
यस्मादपनयेद्दोषानपानः सव्य उच्यते ॥'
'आकाशस्त्ववकाशत्वात् मध्यदेहो महात्मनः ॥
पृथिवी पुच्छमस्योक्तं सर्वस्यापि प्रधारणात् ।
स एष जगतामायुस्तस्मिन् सङ्कर्षणः स्थितः ॥' ६-७ ॥

## भाष्यप्रकाशिका

'अन्तरः' अन्नमयस्यान्तर्विद्यमानः 'आत्मा' प्रद्युम्नाख्यः परमात्मा प्राणमय इत्युच्यते । रूपविशेषत्वाभिप्रायेणान्यत्वोक्तिः । न तु भिन्नत्वात् । सर्वेषामपि रूपाणां तत्तच्छ्लोकेषु श्रुत्यैव स्पष्टब्रह्मपदेन ब्रह्मत्वोक्तेः । तेन प्राणमयेन एषोऽन्नमयः पूर्णः । अन्नमयस्य शिरोऽन्तः प्राणमयस्य शिरः । करयोरन्तः- करौ । मध्यस्यान्तर्मध्यम् । पादयोरन्तः पादौ । एवमन्तर्जलेन पूरितघटवत् प्राणमयेऽन्नमयोऽन्तःपूरित इत्यर्थः । स वा एष प्राणमयः पुरुषविध एव पुरुषाकार एव । तस्य प्रद्युम्नस्य पुरुषविधतामनु अनुसृत्यायमन्नमयः पुरुषविधः । यथा देहे स्थितकरचरणादिना कञ्चुकस्य करचरणादिकं तथेति भावः। अत्रापि प्राणे प्रद्युम्नस्य शिरः । एवमुत्तरत्रापि द्रष्टव्यम् । प्राणं प्राण-मयम् । यः अन्नमयः पूर्वस्य प्राणकृतदेहस्य शारीरः शरीरात्मकतदन्तर्विद्यमानः तस्यान्नमयस्य एषः प्राणमयः शारीरः शरीरान्तर्विद्यमान आत्मा अन्तर्देहा-

कारतया स्थितः । अनेन प्राणनहेतुभूतत्वाख्यं सर्वजगद्रक्षकत्वलक्षणं विवृतं भवति ॥ ६-७ ॥

## पदार्थदीपिका

'तस्माद्वा एतस्मादन्नरसमयादन्योन्तरआत्मा प्राणमयः' इत्यादि प्राणमयप्रकरणं व्याचष्टे- **तस्यान्तरमित्यादिना** ॥ तस्यान्नमयनामकानिरुद्धस्य । 'अन्य' इत्यस्यार्थः परमिति । 'अन्तर आत्मा' इत्यस्यार्थः अन्तररूपमिति । अन्तरवस्थितं स्वरूपमित्यर्थः । 'प्राणमयोऽपि कोशः' इति विकत्थन्ते तदसदिति भावेनोक्तं **'प्रद्युम्नाख्यं प्राणमयम्'** इति । तत्र निमित्तमाह- **प्रणेतृत्वादिति** । प्रकर्षेण नेतृत्वादित्यर्थः । ननु 'अन्योऽन्तरआत्मा इत्यादिनाऽन्योन्यमन्यतयोक्तान्नमयादेः कथं परब्रह्मत्वं युज्यते । भगवद्रूपेषु भेदाभावादित्यत उक्तं- **अभिन्नमपि भिन्नवदिति** । विशेषबलादिति भावः। यथोक्तमनुव्याख्याने- 'अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः' (ब्र.सू.अनु. १.१.६, श्लो. २७९) इति । 'अत एकस्सपञ्चधा । उक्तः' इति च । प्राणमयस्य शिरआदिकं शरीरस्थप्राणापानादौ तिष्ठतीति वक्तुं 'तस्य प्राण एव शिरः' इत्यादिकं प्रवृत्तम् । तत्प्रद्युम्नाख्यभगवच्छिर आदेः प्राणाद्यभेदप्रतीतिवारणाय व्याचष्टे- **शिरस्तस्येत्यादिना** ॥ 'तस्य' प्राणमयस्य प्रद्युम्नस्य नामतः प्राणशब्दवाच्यमेवेत्यर्थः । 'उत्तरःपक्षः' इत्यनुवर्तते । मध्यमं मध्यमशरीरम् । पुच्छं पादद्वयं पृथिव्यां स्थितम् । ननु प्राणमयस्य विष्णोः शिरआदिकम् अध्यात्मप्राणापानादौ तिष्ठतीति कथनप्रसङ्गे आत्माख्यमध्यदेहपुच्छयोराकाशपृथिवीस्थितत्वोक्तिरसङ्गतेत्याशङ्क्य नात्राकाशपृथिवीशब्दाभ्यां प्रसिद्धाकाशपृथिव्यावभिधीयेते । किन्तु उदानसमानावेवातो नाऽसङ्गतिरित्याह- **उदान इति** ॥ प्राणमयस्य प्रद्युम्नस्य शिरआदिकं प्राणादिगतं प्राणादिनामकमिति रूढिमाश्रित्योक्तम् । इदानीं योगमभिप्रेत्य

प्राणादिशब्दान् प्राणमयशिरआदौ निरुच्य दर्शयति - **प्रणेतृत्वादित्यादिना** ।। विष्णोः प्राणमयस्य । विशेषादित्यनन्तरमासमन्तादित्यपि ग्राह्यम् । अपनयेत् परिहरेत् । सव्यः करः । अवकाशत्वात् अवकाशप्रदत्वात् । अस्य पुच्छं सर्वस्यापि प्रधारणात् पृथिवीत्युक्तमिति सम्बन्धः । प्राणमयं प्रत्युदाहृतश्लोके 'प्राणो हि भूतानामायुः' इत्युक्तम् । तस्यार्थमाह- **स एष इति** ।। जगतामुत्पत्तिमतां प्राणिनां आयुरायुष्यप्रदः । 'तस्माद्वा एतस्माद्प्राणमयात्' इत्यादिमनोमयप्रकरणं व्याचष्टे- **तस्मिन्निति** ।। प्राणमयनामके प्रद्युम्ने मनोमयनामा सङ्कर्षणस्स्थित इत्यनेन मनोमयस्यापि कोशत्ववचनं परास्तं वेदितव्यम् ।। ६-७ ।।

## उपनिषत्

(मनोमयप्रकरणम्)

**तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ।। ८ ।।**

**तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ९ ।।**

## भाष्यम्

'शिरस्तस्य यजुर्नाम यज्ञानां हरणात् स्मृतम् ।
यजुस्संस्थं च बाहू तु ऋक्सामान्तःस्थितौ सदा ।।'

**'ऋगर्चनायाः स्वीकारात् साम दोषात् समीकृतेः ।**
**पञ्चरात्रगतं मध्यमादेशाख्यं सुविस्तृतेः ॥'**
**'अथर्वाख्यं तथा पुच्छमधरं चाङ्गिनां रसः ।**
**मनोवाचामगम्यं तं ज्ञात्वाऽनन्दस्वरूपिणम् ॥**
**कुतश्चिन्न बिभेत्येव वासुदेवोऽन्तरस्ततः ॥' ८-९ ॥**

## भाष्यप्रकाशिका

ज्ञानपदोक्तसर्वज्ञत्वलक्षणं सामान्यतः सर्वज्ञत्वं, विशिष्य सर्वज्ञत्वमिति द्वेधा प्रपञ्चयितुं क्रमेण प्रकरणद्वयं प्रवृत्तम् । तत्र मनोमयप्रकरणस्य सङ्कर्षणः, उत्तरस्य वासुदेवः प्रतिपाद्य इति विवेकः । सामान्यतः सर्वज्ञत्वं नामानन्तानन्तपदार्थेषु ब्राह्मणत्वक्षत्रियत्ववैश्यत्वशूद्रत्वब्रह्मचारित्वगृहस्थत्ववानप्रस्थत्वयतित्वदेवत्वमनुजत्वराक्षसत्वपिशाचत्वादिभेदेन पशुत्वगोत्वमृगत्वरासभत्वादिभेदेन श्येनत्वकाकत्वकोकिलत्वादिभेदेन यान्यनन्तानि चेतननिष्ठसामान्यानि घटत्वपटत्वपृथिवीत्वाप्त्वपर्वतत्वादिभेदेनानन्तजडनिष्ठा ये सामान्यधर्मास्तेषां सर्वेषां विविच्य वेत्तृताख्यं सामान्यतः सर्वज्ञत्वमपि भगवत्यसाधारणत्वाद्भगवल्लक्षणम् । अतः प्रमेयत्वेन सार्वज्ञ्यमस्मदादीनामप्यस्तीति कुचोद्यं गर्भस्रावेणैव गतम् । अत एव हि -

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणाः ॥'**

इति समग्रसामान्यज्ञानस्य भगवदसाधारणभाग्यत्वोक्तिः । अस्य मनोमयस्य शिरः ज्ञानजनकयजुर्वेदनियामकं सत् यज्ञधारकत्वादिज्यत्वाद्यजुर्नामकं यजुर्वेदमूलमुख्यप्राणान्तःस्थितप्राणनामकप्राणमयशिरोऽन्तस्तिष्ठति । एवमन्यत्राऽपि । 'ऋक् पूजायाम्' इति धातोः पूजास्वीकारात् ऋङ्नामकः

ऋगन्तर्नियामकः मनोमयस्य दक्षिणकरः व्याननामकप्राणमयदक्षिण-करान्तस्तिष्ठति। दोषादुद्धृत्य सतां समाकर्षणात् सामनामा सामान्तर्यामी मनोमयस्य वामकरः। प्राणमयस्यापानान्तर्गतापाननामककरान्तस्तिष्ठ-तीति। आसमन्तादेशो यस्येति व्युत्पत्त्या विस्तृतत्वादादेशनामा सन्नादेशाख्यपञ्चरात्रान्तर्गतो मनोमयस्य मध्यदेहः आ समन्तात्काश-नादाकाशनामके मध्ये तिष्ठति। 'तृतीयोऽतिशये' इति वचनात्सर्वस्मादधो विद्यमानः अङ्गिनां रसभूतश्च पुच्छं प्रतिष्ठा मनोमयस्य पादः पृथक्त्वात् पृथ्वीनामकप्राणमयपादान्तस्तिष्ठति। पुच्छपदस्य नित्यनपुंसकत्वात् रसपदस्य नित्यपुंलिङ्गत्वात् स्त्रीलिङ्गप्रतिष्ठापदविशेषणत्वं ज्ञेयम्। मनोवाचामगोचराऽ-नन्दस्वरूपसंकर्षणप्रतिपादकत्वाच्छ्लोकश्लोकिनोरैकार्थ्यं ज्ञेयम्॥ ८-९॥

## पदार्थदीपिका

'तस्य यजुरेव शिरः' इत्यादौ मनोमयनामसङ्कर्षणाख्यभगवच्छिर आदेर्यजुराद्यभेदप्रतीतिवारणाय यजुरादिशब्दान्मनोमयनामकभगवच्छिर आदौ योगरूढिभ्यां व्याख्याति- **शिरस्तस्येत्यादिना**। तस्य मनोमयनामकस्य सङ्कर्षणस्य। यज्ञानां हरणात् यज्ञसम्बन्धिभागस्वीकारादित्यर्थः। 'यजुःसंस्थं च' इत्यादिना तत्र तत्र स्थितत्वोक्त्या रूढिरुक्तेति ज्ञातव्यम्। यजुर्वेदादौ प्रतिपाद्यतया स्थितमित्यर्थः। 'अर्चनायाः' पूजायाः। 'दोषात्' दोष-वत्त्वेन। सर्वाभक्तस्वरूपस्य 'समीकृतेः' साम्यकरणादित्यर्थः। यद्वा दोषात् इति ल्यब्लोपनिमित्ता पञ्चमी। दोषपरिहारं विधाय निर्दोषत्वेनेति यावत्। सर्वभक्तस्वरूपस्य साम्यकरणादित्यर्थः। 'दोषाच्छमीकृतेः' इति क्वचित् पाठः। तत्र भक्तानां दोषात् शान्तिकरणात् परिहारकरणादित्यर्थो द्रष्टव्यः। 'आदेश आत्मा' इत्यस्यार्थः पञ्चरात्रगतं पञ्चरात्रप्रतिपाद्यं मध्यं मध्याङ्गं आदेशाख्यमिति पञ्चरात्रे आदेशशब्दं निर्वक्ति - **सुविस्तृतेरिति**॥ बुध्या विवेकेन पञ्चरात्रमित्यनुवर्तते। उपदेशरूपत्वादिति शेषः। तथा च

भगवद्गुणसुविस्तृतेरुपदेशरूपत्वात् पञ्चरात्रमादेशाख्यमिति सम्बन्धः । यद्वा पञ्चरात्रगतमिति आदेशशब्दस्य रूढिमुक्त्वा 'सुविस्तृतेः' इत्यन्तं विस्तृतत्वादादेशाख्यमिति योगप्रदर्शनपरत्वेन व्याख्येयम् । अथर्वाङ्गिरसस्थितत्वादथर्वाख्यमथर्वाङ्गिरसशब्दवाच्यमित्यर्थः । ऋषिद्वयदृष्ट भागद्वयोपेतोऽथर्वणवेद एवाथर्वाङ्गिरसशब्देनोच्यत इति सम्प्रदायविदः । 'अधरं च' इत्यत्र च शब्दात् वर्तयतीत्यस्याऽङ्गिरस इत्यस्य सङ्ग्रहः । तथाचाधरं पातालादिस्थं प्राणिजातं वर्तयतीत्यथर्वाख्यमित्यर्थः । धकारस्य थकारो निर्वचनादित्यवगन्तव्यम् । अङ्गिनां प्रधानानां देवानां सकाशात् 'रसः सारो वरः' इति हेतोरङ्गिरस इत्यर्थः । 'यतो वाचो निवर्तन्ते' इत्यादेस्तात्पर्यम्-**मनोवाचामगम्यं तं इति** ।। साकल्येनेति शेषः । 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र आनन्दं ब्रह्मण इत्युक्त्या प्राप्तभेदशङ्कां परिहरति- **ज्ञात्वाऽनन्दस्वरूपिणमिति** ।। विशेषबलात्तथाव्यवहार इति भावः । 'न बिभेति कदाचन' इत्यस्यार्थः **कुतश्चिदिति** । 'तस्माद्वा एतस्मान्मनोमयात्' इति विज्ञानमयप्रकरणं व्याचष्टे- **वासुदेव इत्यादिना** ।। ततोऽन्तरः । मनोमयनामके सङ्कर्षणे स्थितः । अनेन विज्ञानमयोऽपि कोश इत्यपास्तम् ।। ८-९ ।।

## उपनिषत्

(विज्ञानमयप्रकरणम्)

**तस्माद्वा एतस्मान्मनोमयात् । अन्योन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ।। १० ।।**

तदप्येष श्लोको भवति। विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान् कामान् समश्नुत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य ॥ ११ ॥

## भाष्यम्

'श्रद्धाख्यं श्रुतिधर्तृत्वात् श्रद्धायां तच्छिरः स्मृतम्।
ऋतं ज्ञानततेर्दाता चर्तस्थो दक्षिणः करः ॥'
'वामः सत्यस्थितस्सत्यं सतां यस्मान्नियामकः।
योगाख्यं सर्वलोकस्य योगादत्रैव योगगम् ॥'
'मध्यं पुच्छं महोनाम महनीयत्वतस्सदा।
तस्मिन्नानन्दरूपोऽसौ स्थितो नारायणस्सदा ॥' १०-११ ॥

## भाष्यप्रकाशिका

तस्य विज्ञानमयस्य शिरः श्रद्धैव। 'श्रु श्रवणे' इति धातोः कर्मण्यौणादिके डत्प्रत्यये कृते श्रुतिरेव श्रदित्युच्यते। अतः श्रुतेर्धारणाच्छ्रद्धापदवाच्यं सत् श्रद्धायां तिष्ठति। 'ऋ गतौ' इति धातोः क्विप् प्रत्यये सर्वापहारे कृते ऋपदेनैव ज्ञानमुच्यते। तत्ततं यस्मिन् तदृतं ऋतनामकं विज्ञानमयस्य 'दक्षिणः पक्षः' दक्षिणहस्तः ऋते ज्ञानततौ तिष्ठति। ऋतशब्दस्य नित्यनपुंसकत्वात् पुंलिङ्गेन सम्बन्धो युज्यते। सतां नियामकत्वात् सत्यशब्दवाच्यो विज्ञानमयस्य वामकरः सत्ये सत्यवचने तिष्ठति। सर्वलोकस्य योगात्संयोगाद्योगपदवाच्यो विज्ञानमयस्याऽत्मा मध्यदेहः भगवति मनोयोगाख्ये योगे तिष्ठति। महनीयत्वान्महोनाम्नी विज्ञानमयस्य पुच्छोपमप्रतिष्ठा 'मह पूजायाम्' इति धातोः भगवदाराधनाख्ये महसि तिष्ठति ॥ १०-११ ॥

## पदार्थदीपिका

'तस्य श्रद्धैव शिरः' इत्यादौ विज्ञानमयनामकवासुदेवाख्यभगवच्छिरआदेः श्रद्धाद्यभेदप्रतीतिनिरासाय श्रद्धादिशब्दान् विज्ञानमयनामकभगवच्छिरआदौ योगरूढिभ्यां व्याख्याति- **श्रद्धाख्यमिति** ।। श्रद्धेत्यास्तिक्यबुद्धिरुच्यते भारती वा । श्रद्धायां स्थितं तच्छिरः श्रुतिधर्तृत्वाच्छ्रुतिधारकत्वाच्छ्रद्धाख्यमित्यनेन रूढियोगौ दर्शिताविति ज्ञातव्यम् । ऋतस्थः यथार्थज्ञानस्थः । नियामक इति च शब्दार्थः । सर्वलोकस्यात्रैव मध्यदेह एव योगात् ।।

आश्रितत्वेन सम्बन्धादित्यर्थः । पुच्छमित्यनन्तरं महःसंस्थं महः सूर्यादितेजःपुञ्जं तत्स्थमित्यपि द्रष्टव्यम् । महनीयत्वतः पूज्यत्वतः । 'मह पूजायाम्' इति धातोः । 'तस्माद्वा एतस्माद्विज्ञानमयात्' इत्यानन्दमयप्रकरणं व्याचष्टे- **तस्मिन्नित्यादिना** ।। तस्मिन् विज्ञानमयनामके वासुदेवे । 'आनन्दरूप' इत्यनेन मयटस्तादात्म्यमर्थ इत्युक्तं भवति । नारायण इत्यनेनानन्दमयस्यापि कोशत्वोक्तिः परास्तेति ज्ञातव्यम् ।। १०-११ ।।

## उपनिषत्

(आनन्दमयप्रकरणम्)

**तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।**

**तदप्येष श्लोको भवति । असन्नेव स भवति । असद् ब्रह्मेति**

वेद् चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति ।
तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ १२ ॥

## भाष्यम्

'शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् ।
मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् ॥'
'मोदप्रमोदनामानावानन्दस्त्वाततत्वतः ।
मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्या तु बृंहयेत्[1] ॥'
'पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा ।
अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः ॥'
'देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः ।
बहिस्थो देहवद्विष्णुरन्तस्थो देहिवत्स्मृतः ॥'
'अन्तर्व्याप्तिविशेषेण न त्वशक्तत्वतो बहिः ।
सर्वेऽपि पुरुषाकारा उत्तरात् पूर्वसम्भवाः ॥'
'उत्तरैः पूरिताः पूर्वे निच्छिद्रत्वेन सर्वशः ।
अत्तृत्वं च प्रणेतृत्वं बोधो विविधवेत्तृता ॥'
'आनन्दश्च यतः पूर्णस्ततोऽन्नादिमयाः स्मृताः ।
अत्त्यादिदास्ते प्रत्येकं सर्वे सर्वगुणा अपि ॥'
'नामभेदस्ततस्तूक्तः सर्वनामवतामपि ।
पञ्चरूपं तु तद्ब्रह्म जीवादन्यन्न विद्यते ॥'
'इति ये तु विजानन्ति तेऽसन्तस्तम आलयाः ।
जीवादन्यत्परं ब्रह्म पञ्चरूपं तु ये विदुः ।
सन्तस्त इति विज्ञेया मोक्षयोग्या हि ते ध्रुवम् ॥' ११-१२ ॥

---

१. बृंहयत्' इत्यपि पाठः ।

## भाष्यप्रकाशिका

विज्ञानमयस्यान्तरात्मा नारायणाख्यः पुरुषः आनन्दप्रचुरत्वादनन्दमयः। तस्याऽनन्दमयस्य शिरः 'पृ पालनपूरणयोः' इति धातोः पूर्ववत्कर्त्रर्थे क्विपि कृते सर्वस्य लोपे सति पृपदमेव परवाचकं भवति। एवं च पृणा परेण इयम् इति व्युत्पत्त्या प्रियपदवाच्यं सत् प्रिये उक्तव्युत्पत्त्या विषयप्राप्ये सुखे तिष्ठति तदन्तस्तिष्ठतीत्यर्थः। मोदनात् ध्याने परोक्षज्ञानजनितसुखदानात् प्रमोदनादपरोक्षज्ञाने सति ततोऽप्यतिशयितसुखदानाच्च मोदप्रमोद-नाम्नानावानन्दमयस्य दक्षवामकरौ मोदे प्रमोदे च तिष्ठतः। वरदायकदक्षिणकरादपि मोक्षाभयदायकवामकरस्य प्रकृष्टानन्ददायकत्वाद् वामकरस्यैव प्रमोददातृत्वमुचितम्। आत्मा मध्यदेहः आ समन्तात्साधुहृदये स्थित्वा नन्दयतीति व्युत्पत्त्या आनन्दपदवाच्यः आनन्दे अङ्गोपाङ्गैः पूरितपूर्णानन्दसमुदाये तिष्ठति। 'पुच्छं प्रतिष्ठा' 'यत्राऽनन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राऽप्ताः कामाः तत्र 'माममृतं कृधि' इति श्रुत्युक्तपञ्चविधानन्दानां मध्ये चतुर्णामुक्तत्वादुर्वरिमुख्यानन्दरूपः पादः 'पद्भ्यां भूमिः' इति श्रुतेः सकलप्राण्याधारभूतः सकलजनेन सकल-प्राणबृंहणहेतुत्वाद् ब्रह्मनामकः सन् ब्रह्मणि सर्वेभ्योऽप्यतिशयित-शतानन्दबृंहितत्वाद् ब्रह्मशब्दवाच्ये प्रधानवायौ तिष्ठतीत्यर्थः।

एवं च स्पर्शनगमनादिव्यापारहेतुतया शिरःपाण्यादिसर्वाङ्गव्याप्तत्वं जीवनहेतुतया शरीरगतप्राणादिप्रेरकत्वं ज्ञानहेतुतया वेदपञ्चरात्रप्रवर्तकत्वं तैरुद्बोधितविशिष्टज्ञानोदये सति मुक्तेरन्तरङ्गभूतश्रद्धादिजनकत्वम् अन्ते पञ्चविधानन्दरूपमुक्तिदायकत्वं हरेरेव घटत इति विविच्य बोधयितुं पञ्चानामन्नमयादीनां देहव्याप्तमूर्तित्त्वं प्राणादिव्याप्तमूर्तित्वम् ऋगादि-व्याप्तमूर्तित्वं श्रद्धादिशुभगुणव्याप्तमूर्तित्वम् आनन्दमयमूर्तित्वं च श्रुतिः प्रकरणपञ्चकेन प्रतिपादयतीति वाक्यसमुदायस्याभिसन्धिरनुसन्धेयः।

'तत्' पञ्चविधं ब्रह्मोद्दिश्य एष श्लोको भवतीत्यर्थः । प्रागुक्तं पञ्चविधं ब्रह्म 'असत्' सतोऽन्यत् असदविद्यमानमिति वेद चेत् सः 'असन्' सन्न भवतीत्यसन् असज्जीव एव भवति । अथ तत् आनन्दमयाख्यं पञ्चमं रूपमुद्दिश्य एष श्लोको भवति । एतत् अनन्दमयाख्यं पञ्चमं रूपम् 'असत्' ब्रह्म न, किन्तु पुच्छमेव ब्रह्मेति वेद चेत् स असन्नेव भवतीति तत्रोक्तश्लोकवत्पञ्चरूपविषयतया श्लोकस्य योजना द्रष्टव्या । स्वतोऽन्यद् ब्रह्मास्ति पञ्चरूपमपि ब्रह्मास्ति ब्रह्मतयैवास्तीति च वेद चेदेवं वेत्तारं ततः ईदृशतत्त्वज्ञानात् सन्तं विदुरित्यर्थः ॥ १२ ॥

## पदार्थदीपिका

'तस्य प्रियमेव शिरः' इत्यादौ आनन्दमयनामकनारायणाख्य-भगवच्छिरआदेः प्रियाद्यभेदप्रतीतिवारणाय प्रियादिशब्दानानन्द-मयनामकभगवच्छिरआदौ योगरूढिभ्यां व्याख्याति ॥ **शिरः प्रिये स्थितमित्यादिना** ॥ प्रिये वस्तुनि परेयं परैः संसारिविलक्षणैर्मुक्तैरुत्तमैर्वा प्राप्यमित्यर्थः । परेति प्र शब्दार्थः । प्रकारस्थाकारलोपः । बाहू मोदप्रमोदौ अपकृष्टप्रकृष्टविषयोत्थावानंदौ मोदप्रमोदौ । तयोः संस्थिताविति शेषः । आनन्दः स्वरूपभूतः । तत्र संस्थं मध्यम् । आततत्त्वतो निमित्तादानन्द इत्युच्यत इति योज्यम् । पुच्छं पादद्वयन्तु सृष्ट्या पृथिव्यादिलोकान् बृंहयेत् यतोऽतो ब्रह्मेत्युच्यत इत्यर्थः । यद्वा तु शब्दः सृष्टौ विशेषद्योतकः । तथा च भक्तानां सृष्ट्या मुक्तिसृष्ट्या मोक्षदानेनेति यावत् । बृंहयेत् ज्ञानानन्दौ बृंहयेद्यतोऽतः पुच्छं पादद्वयं ब्रह्मेत्युच्यत इत्यर्थः । यथोक्तं बृहद्भाष्ये- 'स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम्' (बृह.भा. ७.७.१) इति । 'अथ कस्मादुच्यते ब्रह्मेति बृहति बृंहयति चेति श्रुतिः' इति भावः । रूढिमप्याह- **प्रधानवायाविति** ॥ देहसंस्थे

मुख्यवायावित्यर्थः । 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' इत्यत्रान्नमयप्राणमयादीनां शरीरशरीरिभावोक्त्या भेदो नियम्यनियामकभावादिरूपो विशेषश्च प्रतीयते तदयुक्तम् । 'एकमेव' इत्यादिश्रुतिविरोधादित्यत आह- **अभेदोऽपीति** ।। भेदरहितोऽपीत्यर्थः । अविशेषोऽपि नियम्यनियामकभावादिविशेषरहितोऽपीत्यर्थः । इंद्रार्जुनादिवद्विशेषरहितोऽपीत्यर्थ इति पूर्वटीकाकाराः । परमैश्वर्ययोगत इत्युपलक्षणम् । विशेषबलाच्चेति द्रष्टव्यम् । को देहवत्कश्च देहिवदित्यत आह ।। **बहिःस्थइति** ।। अन्नमयादिरित्यर्थः । अन्तस्थितः प्राणमयादिः । ननु यथा अस्मदादीनां देहसम्बन्धं विना बहिःस्थिताश्माद्यादाने असमर्थत्वाद्देहसन्बम्धोऽपेक्षितः । एवं प्राणमयादिरूपस्य हरेरप्यन्नमयादिरूपदेहसम्बन्धं विना बहिःस्थितवस्त्वादानेऽसमर्थत्वाद्देहित्वं किमित्यपेक्षायामाह- **अन्तर्व्याप्तीति** ।। अन्नमयाद्यन्तर्व्याप्तिविशेषेणैव हरिर्देही बहिःस्थितत्वमात्रेणैवान्नमयादेर्देहत्वमित्यपि द्रष्टव्यम् । बहिर्बहिष्ठवस्तुविषये तदादानादाविति यावत् । अशक्तत्वतो देही जात इति तु नेत्यर्थः । प्राणमयादिप्रकरणचतुष्टयगतस्य 'स वा एष पुरुषविध, एव' इत्यस्यार्थमाह- **सर्वेऽपीति** ।। प्रकरणचतुष्टयगतस्य 'तस्य पुरुषविधताम्' 'अन्वयं पुरुषविधः' इत्यस्य तात्पर्यमाह- **उत्तरादिति** ।। उत्तरादानन्दमयादेः सकाशात्पूर्वस्य विज्ञानमयादेः सम्भवः प्रादुर्भावो भवतीत्यर्थः । नारायणादिरूपैर्वासुदेवादिरूपाणामभिव्यक्तिरिति भावः । प्रकरणचतुष्टयगतस्य 'तेनैष पूर्णः' इत्यस्यार्थमाह- **उत्तरैरिति** ।। पूर्वे सर्वशः सर्वे विज्ञानमयादयः उत्तरैरानन्द-मयादिभिर्निश्छिद्रत्वेन निरवकाशतयेति यावत् । पूरिताः पूर्णा इत्यर्थः । स्पष्टमन्नमयादिशब्दार्थानाह- **अत्तृत्वं चेत्यादिना** ।। चशब्देनाद्यत्वसङ्ग्रहः । अत्तृत्वमद्यत्वं चान्नशब्दार्थः । प्राणशब्दार्थः प्रणेतृत्वम् । 'मनु अवबोधने' इति धातोः बोधो मनोमयशब्दार्थः । विज्ञान(मय)शब्दार्थे विविधवेत्तृतेति । तत्र वीत्यस्यार्थो विविधेति । ज्ञानशब्दार्थो वेत्तृतेति ।

मयटामर्थः पूर्णा इति । नन्वन्नमयादीनां पञ्चानामपि प्रत्येकमत्तृत्वादि-सर्वगुणोपेतत्वेन प्रत्येकमन्नमयादिसर्वनामकत्वात् कथमन्नमयादीनां प्रत्येकमत्तृत्वादिगुणोक्तिस्तत्प्रयुक्तान्नमयादीनामभेदश्चेत्यत आह- **अत्त्यादि-दास्त इति** ।। अपि यद्यपि प्रत्येकं ते सर्वे सर्वगुणा अत्तृत्वादिसर्वगुणवन्तः, तथाऽपि प्रत्येकं अत्त्यादिदाः स्वोपासकानां रुद्रादीनामत्तृत्वादिदाः स्वस्य तदभावे परस्मै तद्दानानुपपत्तेरिति न्यायेनाऽत्तृत्वाद्युपेता इति यावत् । उच्यन्ते, ततः स्वोपासकानामत्तृत्वादिगुणदातृत्वादेव सर्वनामवतामपि नामभेदः उपनिषदुक्तः उपपद्यत इति भावः । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इत्यस्यार्थमाह- **पञ्चरूपं चेति** ।। असदित्यस्यार्थो 'जीवादन्यन्न विद्यते' इति । ततश्च दुःखीति यावत् । 'अभाववाचकाः शब्दाः सर्वे ते दुःखवाचकाः' इति गीतातात्पर्यवचनात् । 'असन्नेव स भवति' इत्यस्य तात्पर्यमाह- 'ते असन्तः' इति । दुखिन इत्यर्थः । तत्र हेतुस्तमालया इति । तम आलयः, अन्ते आश्रयो येषां ते तथा तमसि आ सम्यक् 'लयो येषां ते तथा । तमसि मग्ना इत्यप्याहुः । यत इति शेषः । यतोऽतस्तेऽसन्त इति सम्बन्धः । 'अस्ति ब्रह्मेति चेद्वेद' इत्यस्यार्थमाह- **जीवादन्यदिति** ।। ततश्च सुखीति यावत् । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः' इति वचनात् । 'सन्तमेनं ततो विदुः' इत्यस्यार्थः 'सन्तस्ते' इतीति । सन्तः सुखिन इत्यर्थः । तत्र हेतुः 'मोक्षयोग्या हि' इति । हि यस्मात् 'ध्रुवं' निश्चयेन मोक्षयोग्याः तस्मात् 'सन्तस्त' इति 'विज्ञेया' इति सम्बन्धः ।। १२ ।।

## उपनिषत्

**ॐ ।। ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ।। २ ।।**

## खण्डार्थः

ततश्च ।। 'ब्रह्मविदाप्नोति परम्' इत्यादेरियमक्षरयोजना । अन्यविद्याया अन्यगतेरयुक्तत्वात् ब्रह्मवित् परब्रह्मवित् परं ब्रह्माप्नोति । ननु तत्परं ब्रह्म किं लक्षणकम् । न हि लक्षणेन विना वस्तु स्वेतरसमस्तव्यावृत्ततया शक्यते ज्ञातुम् । कुत्र च तद्वेदनं किं हृदि तदन्यत्र वा ? का च तत्प्राप्तिः ? किं तदैक्यापत्तिरूपा उत तत्समीपं प्राप्य भोगानुभवरूपा वा इति शङ्कयामाह- **तदेषेति** ।। तदेतच्छङ्कात्रयं अभि प्रति तदुत्तरत्वेनेति यावत् । एषा वक्ष्यमाणा ऋक् मन्त्रवर्णरूपा उक्ता उच्यत इत्यर्थः । तमेव मन्त्रवर्णमुदाहरति - **सत्यमित्यादिना विपश्चितेत्यन्तेन** ।। तत्राद्यप्रश्नोत्तरम्- **सत्यमिति** ।। द्वितीयतृतीयप्रश्नोत्तरमाह- **यो वेदेति** ।। योऽधिकारी गुहायां हृदयगुहायां 'परमे व्योमन्' व्योम्नि दहराकाशे निहितं सत्यत्वादिविशिष्टं परब्रह्म वेद स ब्रह्मवित् अधिकारी सर्वान् कामान् स्वयोग्यानानन्दादीन् विपश्चिता ब्रह्मणा विरिञ्चेन परेण च सह तद्वश्यः सन् अश्नुते भुङ्क्ते इत्यर्थः । अनेन हृदि तद्वेदनं तत्प्राप्तिश्च तत्समीपं प्राप्य तदधीनतया भोगानुभवरूपेत्युक्तं भवति । इतिशब्दो मन्त्रवर्णसमाप्तिद्योतकः ।। २ ।।

**तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ।। ३ ।।**

**स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ।। ४ ।।**

इतः परं मन्त्रवर्णोक्तसत्यत्वादिविस्तृतिरेव 'तस्माद्वा एतस्मात्' इत्यादिनोत्तरग्रन्थेन क्रियते । यथोक्तमनुव्याख्याने- 'अतो हि

मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया । क्रियते परया यस्मात्' (ब्र.सू.अनु. १.१.६, श्लो. २९५) इति । तत्र सृष्टिप्रकरणेनान्नमयप्राणमयप्रकरणाभ्यां च सत्यत्वं विव्रियते । तथाहि 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते' (भ.गी. १७.२६) इति वचनात् 'सद्भावशब्देन प्रजननं सूचितम्' इति गीताभाष्योक्तेश्च सत् सद्भावं प्रजननं यापयति प्रापयतीति 'सत्यम्' । तथा सत् सत्त्वं जीवनं विशीर्णतापरपर्यायं संहारं च यापयतीति 'सत्यम्' । अन्नशब्दार्थोऽप्ययमेव । जीवनप्रदातृतयोपजीव्यत्वाख्याद्यत्वात् विशीर्णताप्रदातृतया संहर्तृत्वाख्यात्तृत्वात् तयोरेवान्नशब्दार्थत्वात् । 'तथा प्राणं देवा अनुप्राणन्ति' इत्यादिना प्राणमयप्रकरणेन गतिजीवन-प्रदातृत्वयोरुक्तत्वात् । सदिति धात्वर्थोऽपि गतिः । 'अस्ति देवदत्तः' इत्युक्ते जीवतीति प्रतीतेः जीवनं चासधात्वर्थः । अतस्तत्प्रदातृत्वस्यापि सत्यशब्दार्थत्वात् सत्यत्वं प्राणत्वं चैकमेव । तथा सामान्यविशेषज्ञानत्वरूपं ज्ञानत्वलक्षणं मनोमयविज्ञानमयप्रकरणाभ्यां विव्रियते । मनधातोरवबोधार्थ-त्वात् । देशतः कालतः आनन्दादिगुणतश्च परिच्छेदशून्यत्वरूपमनन्तत्वं चानन्दमयप्रकरणेनावशिष्टवाक्यैश्च विव्रियते । उक्तं च सूत्रकृता । **'मान्त्रवर्णिकमेव च गीयते'** (ब्र.सू.१.१.१५) इति । उक्तं च भाष्ये- '''ब्रह्मविदाप्नोति परम्' इति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्र-वर्णे लक्षितं परमेव ब्रह्म शब्दानुसन्धानाद्गीयते'' इति । उक्तं चैतत्सर्वमनु-व्याख्यानेऽपि (ब्र.सू.अनु. १.१.६, श्लो. १८७-१९४)।

'ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् ।
तदेष मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ।
लक्षितं तत्र सत्यत्वं सृष्ट्यान्नप्राणयोरपि ।
उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।
अनन्तत्वं तथानन्दमयवाचाप्युदाहृतम् ।

सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते।
इति सृष्टिरिह प्रोक्ता जगत्सद्भावयापकम्।
ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च।
विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत्।
अतोऽद्यतात्तृताऽन्नत्वं सत्यशब्दार्थ एव हि।
प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये।
आयुः प्राणो हि भूतानामिति यद्गतिजीवने।
उक्ते सदिति धात्वर्थो गतिश्चातो हि सत्यता।
प्राणत्वमवबोधार्थो मन्धातुः प्रकीर्तितः।
नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः।
अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके' इति।

अत्रानुवादबलादात्मत्वमादौ विधेयम्। तस्मान्मोक्षजनकीभूतज्ञान-विषयत्वेन ब्रह्मशब्दोक्तादेतस्मात् मन्त्रवर्णे लक्षितादात्मनः परमात्मनः आकाशः सम्भूत इत्यादि। अत्राकाशादिपुरुषान्तशब्दैर्भूतं भूताभिमानी भूताभिमानिनो देहः तदन्तर्नियामको हरिश्चेति चत्वार उच्यन्ते। तत्र मुख्यतो हरिरेवाकाशादिशब्दवाच्य इति ज्ञातव्यम्। तत्र भूतस्य तदभिमानिशरीरस्य च साक्षादुद्भवः अभिमानिनस्त्वभिमानोत्पत्तिः। हरेस्तु तदुत्पत्त्यादि-क्रियाप्रवर्तकत्वेनाकाशादिषु प्रादुर्भाव एवेति विवेकः। यथोक्तमनुव्याख्याने-

'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च।
तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम्।
भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः।
हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च।
क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः।

आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ।
अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भवः ॥' इति ॥

(ब्र.सू.अनु. १.१.६, श्लो. २००-२०६)

आसमन्तात्काशनादाकाशः । बलज्ञानस्वरूपत्वाद्वायुः । स्वतो न गच्छतीत्यगं, तन्नयतीत्यग्निः। आपालनादापः । बहुरूपत्वाद्बहुवचनम् । एवमुत्तरत्रापि । प्रथितत्वात् पृथिवी । उष्टानां शरीरे जाठराग्निना दह्यमानानामाश्रयत्वादोषधयः । अन्नसंस्थत्वादन्नविकारशरीरसंस्थत्वाद्वा अत्तृत्वादुपजीव्यतयाद्यत्वाद्वा अन्नम् । पुरि शेत इति पुरुषः । यथोक्तमनुव्याख्याने (ब्र.सू.अनु. १.१.६, श्लो. २०२-२०४)-

'आसमन्तात्काशते यदाकाशो मुख्यतो हरिः ।
बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।
आप आपालनाच्चैव पृथिवी प्रथितो यतः ।
उष्टानामाश्रयत्वेन स एवौषधिनामकः ।
ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ।
पुरि शेते यतः सोऽथ पुरुषश्च निगद्यते' इति ॥ ३ ॥

एवं पुरुषशब्दोक्तदेहपर्यन्तमागतस्य हरेरन्नमयादिपञ्चरूपत्वज्ञापनाय पुनः प्रारम्भं करोति- **स वा इति** ॥ सः भूतस्रष्टृतया आत्मपदोद्दिष्टः एषः जीवशरीरगः पुरुषः परमात्मा अन्नरसमयः सारान्नमयः अन्नशब्दार्थभूताद्यत्वात्तृत्त्व-प्रचुरः । प्रचुरात्ता प्रचुरोपजीव्यश्चेत्यर्थः । अयं चान्नमयोऽनिरुद्धः । अस्य निराकारतापरिहारायान्नमयनामकानिरुद्धस्योपास्त्यर्थं अवयवसंस्थिति-प्रकारमाह- **तस्येति** ॥ तस्य जीवशरीरगतस्य अन्नमयनामकानिरुद्धस्य शिरः इदं अस्मिन् जीवशरीरस्य शिरसि वर्तते । दक्षिणः पक्षः दक्षिणबाहुः । अयमेतच्छरीरस्य दक्षिणबाहौ तिष्ठति । उत्तरः पक्षः सव्यबाहुः ।

अयमेतच्छरीरस्य सव्यबाहौ वर्तते । आत्मा मध्यदेहः अयमेतच्छरीरस्य मध्यदेहेऽस्ति । पुच्छम् लाङ्गूलत्वभ्रान्तिवारणाय तस्यैवार्थमाह- **प्रतिष्ठेति** । प्रतितिष्ठत्याभ्यामिति प्रतिष्ठा पादौ । इदं एतच्छरीरस्य पादयोस्तिष्ठतीत्यर्थः । एवमुत्तरत्रापि 'पुच्छं प्रतिष्ठा' इत्यस्यार्थो द्रष्टव्यः ॥ ४ ॥

**तदप्येष श्लोको भवति । अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ॥ ५ ॥**

**तस्माद्वा एतस्मादन्नरसमयात् । अन्योन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । ॥ ६ ॥**

अन्नमयनामकानिरुद्धस्य सर्वप्रजास्रष्टृत्वादिरूपं महिमानं श्लोकेन वक्तुं प्रतिजानीते उपनिषद्द्रष्टा मुनिः- **तदपीति** ॥ 'तदपि' तत्राऽपि अन्नमयनामकानिरुद्धस्य समस्तप्रजास्रष्टृत्वादौ एष वक्ष्यमाणः श्लोकोऽपि प्रमाणत्वेन भवतीत्यर्थः । तमेव श्लोकं पठति- **अन्नाद्वै प्रजा इत्यादिना** ॥ अत्र सर्वत्रान्नशब्दोऽन्नमयपरो द्रष्टव्यः । अन्नादन्नमयनामकादनिरुद्धात् । कास्ताः प्रजा इत्यत आह- **याः काश्चेति** ॥ श्रिताः आश्रिताः तत्रस्था इति

यावत्। न केवलं सृष्टिकर्तृत्वमात्रं किन्नाम ? स्थितिकर्तृत्वं चेत्याह- **अथो इति** ॥ सृष्ट्यनन्तरं जीवन्ति । प्रजा इति वर्तते । संहारकर्तृत्वं चाह- **अथेति** ॥ स्थित्यनन्तरं अन्ततः प्रलये प्रजाः एनत् अन्नमयनामकानिरुद्धमपि यन्ति प्राप्नुवन्ति । महिमान्तरमाह- **अन्नं हीति** ॥ हि यस्मादन्नमयनामकानिरुद्धो 'भूतानां' भूतेभ्यो ज्येष्ठं ज्यायान् तस्मात् ज्यायस्त्वादेव 'सर्वौषधमुच्यते' शरीरे जाठराग्निना दग्धानामन्ने स्थितत्वादाश्रय इत्युच्यते । एवमन्नमयनामकानिरुद्धोपासकस्य फलमाह- **सर्वमिति** ॥ येऽधिकारिणः 'अन्नं हि भूतानां ज्येष्ठम्' इत्यादिना प्रकारेण तथाभूतैरद्यते उपजीव्यते भूतानि अत्ति च यतः तस्मात्तत् अनिरुद्धनामकरूपमन्नमुच्यत इत्येवमन्नं अन्नमयनामक-मनिरुद्धं ब्रह्म ज्येष्ठत्वादिगुणपूर्णमुपासते 'ते सर्वं' पूर्णमन्नं अन्नमयमनिरुद्धं 'प्राप्नुवन्ति' इत्येतद्वै प्रसिद्धमित्यर्थः । यद्वा उपासनाप्रकारं 'वर्धन्त' इत्यन्तेनैवोक्त्वा श्लोकशेषेणान्नशब्दो निरुच्यते- **वर्धन्त इति** ॥ 'येऽन्नं ब्रह्मोपासते' इति सम्बन्धो द्रष्टव्यः । इति श्लोको भवतीति सम्बन्धः ॥ ५ ॥

तस्मात् 'तस्येदमेव शिरः' इत्युक्तमहिमोपेतादेतस्मात् श्लोकोक्तमहिमोपेतादन्नरसमयादनिरुद्धादन्यः विशेषेणैवान्य इत्युदितः प्राणमय आत्मा प्रद्युम्नः अन्तरः अन्नमयनामकानिरुद्धान्तरवस्थितो देहिवत् ज्ञातव्यः । अन्नमयस्तु बहिष्ठत्वाद्देहवत् ज्ञातव्यः । तेनान्तरवस्थितेन प्राणमयेन एषः अन्नमयः पूर्णः निश्छिद्रत्वेन पूरितः । 'स वा एषः' अन्तरवस्थितप्राणमयः 'पुरुषविध' एव पुरुषाकार एव । तस्यान्तरवस्थितस्य प्राणमयस्य 'पुरुषविधतां' पुरुषाकारतामनुसारेणायं बहिष्ठो देहस्थानीयोऽन्नमयः 'पुरुषविधः' पुरुषाकारः । प्राणमयनामकप्रद्युम्नस्योपास्त्यर्थं शिरोबाह्वादिकमाह- **तस्येति** ॥ 'तस्य' प्राणमयस्य प्रद्युम्नस्य 'शिरः' प्राण एव । प्राणगतत्वात्

प्रणेतृत्वात् च प्राणनामकं प्रकीर्तितम् । तस्य दक्षिणः पक्षो दक्षिणो बाहुर्व्यानः व्यानगतत्वात् विशेषात् आसमन्तात् चेष्टकत्वाच्च व्याननामा । उत्तरः पक्षः सव्यबाहुरपानः अपानगत्वात् दोषापनेतृत्वाच्चापाननामकः । आत्मा मध्यदेहः आकाशः आकाशनामकोदानगतत्वादवकाशदातृत्वाच्च काशनामा । 'पुच्छं' तस्यैव विवरणम्- **प्रतिष्ठेति** । पादद्वयं पृथिवी पृथिवीनामकसमानगतत्वात् सर्वस्य धारणाच्च पृथिवीनामकमित्यर्थः ॥ ६ ॥

**तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूताना-मायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ ७ ॥**

**तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनो-मयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविध-ताम् ।अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ॥ ८ ॥**

प्राणमयनामकप्रद्युम्नस्य शरीरस्थतया प्राणादिसमस्तप्रवर्तकत्वरूपार्थे श्लोकं प्रमाणयति- **तदपीति** ॥ तमेव श्लोकं पठति- **प्राणमिति** ॥ ये देवाः मनुष्याः पशवश्च ते सर्वे प्राणं प्रणेतृत्वात् प्राणनामकं प्रद्युम्नमनु तत्प्रेरणामनु तत्प्रेरणयैवेति यावत् । प्राणन्ति चेष्टन्ते हि यस्मात् प्राणः प्रद्युम्नो भूतानां जगतां उत्पत्तिमतां सर्वेषां प्राणिनामायुरायुष्यप्रदस्तस्मात् 'सर्वायुषं' सर्वायुष्यद इत्युच्यते । एवमुपासकस्य फलमाह- **सर्वमेवेति** ॥ येऽधिकारिणः 'प्राणो हि

भूतानामायुस्तस्मात्सर्वायुषमुच्यते' इति प्रकारेण प्राणं प्रद्युम्नं ब्रह्म सर्वायुष्य-प्रदत्वादिगुणपूर्णमुपासते ते सर्वं पूर्णमायुर्मोक्षमिति यावत् । यन्त्येव प्राप्नुवन्त्येव । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' इत्युक्तमुपसंहरति- **तस्यैष एवेति** ॥ पूर्वस्य तस्यान्नमयस्य शरीरस्थानीय-स्यानिरुद्धस्य य एष एव प्राणमयः प्रद्युम्नः स एव 'शारीर आत्मा' शरीरान्तर्गत आत्मा अन्तर्व्याप्तिविशेषेण देहिस्थानीय इत्यर्थः । यद्वा 'तस्यैष' इत्युक्त-तच्छब्दार्थं व्यनक्ति- **यः पूर्वस्येति** ॥ 'पूर्वस्य' अन्नविकारदेहाख्यकोशस्य योऽनिरुद्धः 'शारीर आत्मा' शरीरान्तर्गतात्मतया वर्तते तस्य अन्नमय-कोशस्थस्यानिरुद्धस्य एषः प्राणमयः 'शारीर आत्मा' इत्यर्थः ॥ ७ ॥

तस्मादित्यस्य पूर्ववद् व्याख्येयम् । 'मनोमयः' सङ्कर्षणः । तेन मनो-मयेन । एषः प्राणमयः । 'स वा एषः' मनोमयः । तस्य मनोमयस्य । अयं प्राणमयः । मनोमयनामकसङ्कर्षणस्योपास्त्यर्थं शिरआदिकमाह- **तस्येत्या-दिना** ॥ तस्य शिरो यजुः प्रतिपाद्यतया यजुःसंस्थत्वात् यज्ञसम्बन्धि-भागस्वीकर्तृत्वाच्च यजुर्नामकम् । 'दक्षिणः पक्षः' दक्षिणबाहुः ऋक्प्रतिपाद्यतया ऋक्संस्थत्वादर्चनायाः स्वीकर्तृत्वाद् वा ऋङ्नामकः । 'उत्तरः पक्षः' वामबाहुः सामप्रतिपाद्यतया सामान्तःस्थत्वात् सर्वभक्तानां निर्दोषत्वेन समीकरणाच्च सामनामकः । आत्मा मध्यदेहः 'आदेशः' भगवत्तनु-विस्तृत्युपदेशरूपत्वेन आदेशनामक पञ्चरात्रप्रतिपाद्यत्वात् अत्यन्त-विस्तृतत्वात् वा आदेशनामकः । 'पुच्छं प्रतिष्ठा' पादद्वयं अथर्वाङ्गिरस-प्रतिपाद्यतया अथर्वाङ्गिरसाख्य मुनिद्वयदृष्टभागद्वयोपेताथर्वणवेदस्थितत्वात् अधरं वर्तयतीति व्युत्पत्त्या पातालाद्यधोलोकस्थितप्राणिजातप्रवर्तकत्वाच्च अथर्वनामकम् । निर्वचनत्वाद्धकारस्य थकारः । अङ्गिनां प्रधानानां देवानां रसत्वात् श्रेष्ठत्वादङ्गिरसनामकमित्यर्थः ॥ ८ ॥

**तदप्येष श्लोको भवति। यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य॥ ९॥**

**तस्माद्वा एतस्मान्मनोमयात्। अन्योन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्।अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा॥ १०॥**

भगवच्छिरआदेर्यजुरादिवेदवाक्यप्रतिपाद्यत्वेन तन्नामकत्वमुक्तम्। तत् किं साकल्येनेति शङ्कायां नेत्यभिप्रेत्याह - **तदपीति**॥ तत्रापि साकल्येन सकलवेदाप्रतिपाद्यत्वेपीत्यर्थः। तमेवश्लोकं पठति -**यत इति**॥ यतो मनोमयनामकात् सङ्कर्षणाद् वाचो वेदवाचः मनसा सहाऽप्राप्य साकल्येनाप्रतिपाद्य निवर्तन्ते। तस्य ब्रह्मणो मनोमयस्यानन्दं आनन्दस्वरूपिणं मनोमयनामकं सङ्कर्षणमिति यावत्। विद्वान् कदाचित् कुतश्चिन्न बिभेति। 'तस्माद्वा इत्युक्तमुपसंहरति - **तस्यैष इति**॥ पूर्वस्य तस्य प्राणमयस्य य एष मनोमयः स शारीर आत्मा' इत्यर्थः। यद्वा यः प्राणमयः पूर्वस्य अन्नरसमयाख्यस्य अनिरुद्धस्य शारीरआत्माऽभवत्। तस्य प्राणमयस्य एषः मनोमयः 'शारीरआत्मा' देहिवत्तिष्ठतीत्यर्थः॥ ९॥

विज्ञानमयो वासुदेवः। तेन विज्ञानमयनामकेन वासुदेवेन। एषः मनोमयनामकः सङ्कर्षणः पूर्णः। 'स वा एषः' विज्ञानमयः। तस्य विज्ञानमयस्य। अयं मनोमयः। विज्ञानमयनामकस्य वासुदेवस्योपास्त्यर्थं शिरो बाह्वादिकमाह- **तस्येत्यादिना**॥ तस्य शिरः श्रद्धैव श्रद्धायां स्थितत्वात्

श्रुतिधर्तृत्वाच्च श्रद्धानामकम् । 'दक्षिणः पक्षः' दक्षिणबाहुः । 'ऋतं यथार्थविज्ञानं' तत्रस्थत्वात् ज्ञानततेर्दातृत्वाच्च ऋतनामकः । 'उत्तरःपक्षः' सव्यबाहुः सत्यं सत्यसंस्थितत्वात् सतां नियामकत्वाच्च सत्यनामकः । आत्मा मध्यदेहः योगसंस्थत्वात् सर्वलोकस्थत्वाद् वा तत्रैवाश्रितत्वेन सम्बन्धाद् वा योगनामकः । 'पुच्छं प्रतिष्ठा' पदद्वयं महः सूर्यादितेजःपुञ्जसंस्थत्वात् महनीयत्वाच्च महोनामकमित्यर्थः ॥ १० ॥

**तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ ११ ॥**

**तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।**

**तदप्येष श्लोको भवति । असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ १२ ॥**

'महःपुच्छम्' इति विज्ञानमयनामकभगवत्पुच्छस्य महनीयत्वमुक्तम् । तेनावयवावयविनोरभेदाद्विज्ञानमयस्यापि पूज्यत्वं लब्धम् । तत्कुत इत्या-

शङ्कायां सम्प्रदायप्रवर्तकतया समस्तयज्ञादिकर्तृत्वात् ज्येष्ठत्वेन सर्वदेवोपास्य-त्वाच्चेत्यभिप्रेत्य तत्रार्थे श्लोकसंम्मतिं वक्तुमाह- **तदपि तत्रापीति** ॥ महः शब्दोक्तपूज्यत्वोपपादके समस्तयज्ञादिकर्तृत्वे ज्येष्ठत्वेन सर्वदेवोपास्यत्वे च वक्ष्यमाणश्लोको भवतीत्यर्थः । तमेव उदाहरति- **विज्ञानमित्यादिना** ॥ ''श्रद्धादिस्थ शिरआदिमद्विज्ञानमयाधीनं यज्ञादीति तात्पर्यार्थः । तं श्लोकेन वक्ष्यन्नाह- 'तदप्येष' इति'' इति पूर्वटीकाकाराः । विज्ञानं विज्ञानमयनामा वासुदेवः कृष्णरामादिरूपेण वैदिकसम्प्रदायप्रवृत्त्यर्थे 'यज्ञं' अश्वमेधादिकं 'तनुते' लोके विस्तारयति करोतीति यावत् । न केवलं यज्ञमेव तनुते किन्तु 'कर्माणि' उक्तातिरिक्तानि नित्यनैमित्तिकान्यपि च 'तनुते' । 'ब्राह्मे महूर्ते उत्थाय वायुपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम्' (भाग. १०.७७.४) इति वचनात् । चापिशब्दौ यज्ञकर्मकरणयोः परस्परसमुच्चायकौ । सर्वे देवाः विज्ञानं विज्ञानमयवासुदेवं ज्येष्ठं कालतो देशतश्च ज्यायांसं ब्रह्म यज्ञादिप्रवर्तकत्वादिगुणपूर्णमुपासते । एवं वेत्तुः फल-माह- **'विज्ञानं ब्रह्म चेत्' इति** ॥ चेद्यदि कश्चिद्विज्ञानं विज्ञानमयं वासुदेवं ब्रह्म यज्ञप्रवर्तकत्वादिगुणपूर्णं वेद श्रवणादिना । न केवलं वेदनमात्रेण पूर्यते किन्तु चेद्यदि तस्माद्विज्ञानमयाद् वासुदेवात् न प्रमाद्यति कदाऽपि प्रमादयुक्तो न भवति । सर्वदा ध्यायतीति यावत् । तर्हि अपरोक्षज्ञानद्वारा प्राक् शरीरे सति सम्पादितान् पाप्मनः अप्रारब्धपापानि हित्वा भस्मसाद् विधाय भोगेन प्रारब्धान् पाप्मनो हित्वा क्षपयित्वा लिङ्गभङ्गानन्तरं योग्यान् सर्वान् कामान् सम्यगश्नुत इत्यर्थः । 'तस्माद्वा' इत्युक्तस्योपसंहारः- **'तस्यैष' इति** ॥ 'पूर्वस्य' तस्य मनोमयस्य य एष विज्ञानमयः 'शारीर आत्मा' इत्यर्थः । यद्वा मनोमयः पूर्वस्य प्राणमयनामकप्रद्युम्नस्य शारीर आत्माभवत् । तस्य मनोमयस्य एषः विज्ञानमयः 'शारीर आत्मा' देहिवदस्तीत्यर्थः ॥ ११ ॥

आनन्दमयो नारायणः । तेन आनन्दमयेन एषः विज्ञानमयः पूर्णः । एषः आनन्दमयः । तस्यानन्दमयस्य । अयं विज्ञानमयः । आनन्दमयनामकनारायणस्योपास्त्यर्थं शिरो बाह्वादिकमाह- **तस्येत्यादिना** ॥ तस्य शिरः प्रियं प्रिये स्थितत्वात् परैरियत्वात् प्राप्यत्वाच्च प्रियनामकं 'दक्षिणः पक्षः' दक्षिणबाहुः 'मोदः' अपकृष्टविषयोत्थानन्दस्थत्वात् मोदनाच्च मोदनामकः । 'उत्तरःपक्षः' सव्यबाहुः 'प्रमोदः' प्रकृष्टविषयोत्थानन्दस्थत्वात् प्रमोदनाच्च प्रमोदनामकः । आत्मा मध्यदेहः आनन्दः स्वरूपभूतः तत्रस्थत्वादाततत्वाच्चानन्दनामकः । 'पुच्छं प्रतिष्ठा' पादद्वयं ब्रह्म देहसंस्थे ब्रह्माख्ये प्रधानवायौ संस्थितत्वात् भक्तानां मोक्षदानेन ज्ञानानन्दौ बृंहयेत् यतोऽतश्च ब्रह्मनामकमित्यर्थः । एवमन्नमयादीनां पञ्चानामपि 'येऽन्नं ब्रह्म' इत्यादिना ब्रह्मशब्दाभ्यासाद् ब्रह्मत्वमेव न जीवत्वं कोशत्वं वा । यथोक्तं सूत्रकृता 'आनन्दमयोभ्यासात्' इति ॥ उक्तं चानुव्याख्याने (ब्र.सू.अनु. १.१.६, श्लो. १५६-१५७)-

'येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ।
अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ।
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ॥' इति ॥

एवमन्नमयादिपञ्चरूपं ब्रह्म जीवादन्यन्नास्तीति ये विदुः ये च जीवादन्यदेवेति विदुः तदुभयोः फलं वक्तुमाह- **तदपीति** ॥ तत्रापि पञ्चरूपस्य ब्रह्मणो जीवादनन्यत्ववेदने तदन्यत्ववेदने च यत्फलं तद्विषये एषः वक्ष्यमाणः श्लोको भवतीत्यर्थः । तमेवोदाहरति- **'असन्नेव' इति** ॥ ब्रह्म अन्नमयादिपञ्चरूपं असत् जीवादन्यत्वेन विद्यमानं न भवति दुःखीति यावत् । इति चेत् यदि वेद । अत्र सर्वत्रापि एकवचनं बहुवचनार्थे । विदुः । तर्हि सः ते वेत्तारोऽसन्नेव भवति 'सद्भाववाचकाःशब्दाः सर्वे ते सुखवाचकाः ।

अभाववाचकाः शब्दाः सर्वे ते दुःखवाचकाः' (भ.गी.ता. २.१६) इति वचनेन सच्छब्दस्य सुखार्थकत्वादसन् असन्तो दुःखिनो भवन्ति। तमआलयाः भवन्तीति यावत् इति ज्ञानिनो विदुरिति सम्बन्धः। तथा ब्रह्म अन्नमयादि-पञ्चरूपं अस्ति जीवादन्यत्वेन सुखि इति चेद्यदि वेद विदुः तर्हि एतान् वेत्तॄन् ततः सम्यम् वेत्तृत्वादेव। सन्तं सतः। सुखिनः मोक्षयोग्यानिति यावत्। इति ज्ञानिनो विदुरित्यर्थः। इति श्लोको भवतीति सम्बन्धः। 'तस्माद्वा' इत्युक्तमुपसंहरति- **तस्यैष एवेति**॥ पूर्वस्य तस्य विज्ञानमयस्य य एष आनन्दमयः स 'शारीर आत्मा' इत्यर्थः। यद्वा यो विज्ञानमयः पूर्वस्य मनोमयनामकसङ्कर्षणस्य शारीर आत्माऽभवत्। तस्य विज्ञानमयस्य एष आनन्दमयः 'शारीर आत्मा' इत्यर्थः॥ १२॥

## उपनिषत्

(ज्ञानिनोऽखिलाः ब्रह्म प्राप्नुयुः)

**अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्यं। कश्चन गंच्छती३। आहो विद्वानमुं लोकं प्रेत्यं। कश्चित् समं-श्नुता३उ॥ १३॥**

## भाष्यम्

**'इत्युक्ते ब्रह्मणा पूर्वं पप्रच्छ वरुणो विभुम्।**
**अविद्वानपि यः कश्चित् ब्रह्माऽप्नोति कथञ्चन॥**
**विद्वानेवोत तत्रापि सर्वे वाऽथैव केचन।**
**यदि सर्वेऽथ तत्रापि सर्वे सम्यक् समाप्नुयुः॥**
**केचिदेवोत सम्यक् तदसम्यगपरे जनाः।**
**ज्ञानिनोऽपीति पृष्टः सन् ब्रह्मा प्राह चतुर्मुखः॥**

अज्ञा न प्राप्नुयुर्ब्रह्म प्राप्नुयुर्ज्ञानिनोऽखिलाः ।
तत्रापि सम्यक् प्राप्तिस्तु विरिञ्चस्यैव सर्वदा ॥
अन्येषां तारतम्येन प्राप्तिस्सुखविशेषतः ।
इत्यभिप्रायवान् ब्रह्मा ह्युकारेण समासतः ॥
उक्त्वा प्रश्नोत्तरं पश्चाद् विस्तरेण जगाद ह ।
कश्चिदेवोत सम्यक् तदाप्नुयादिति वाक्यतः ॥
अनन्तरं तथैवेति ब्रह्मोकारमुवाच ह ॥' १३ ॥

## भाष्यप्रकाशिका

अथ पञ्चविधरूपप्रतिपादनानन्तरम् । अतः अस्मिन्नर्थे । पञ्चविधरूपज्ञानात् मुक्तिर्भवतीत्यर्थे इति यावत् । अनु नानामतान्यनुसृत्य श्रोतुः प्रश्ना भवन्ति । इत्थमुक्तप्रकारेणाविद्वान् प्रेत्य कश्चन अमुं लोकं गच्छति, आहो आहोस्वित् प्रेत्यामुं लोकं विद्वानेव गच्छतीत्येकः प्रश्नः । उत विद्वानेक एव गच्छति आहोस्वित् सर्वे गच्छन्तीति द्वितीयः प्रश्नः । गतेषु विद्वत्सु सर्वेऽपि समश्नुवन्ति सम्यक् सुखमश्नुवन्ति उत कश्चित्समश्नुते सम्यक्सुखमश्नुत इति तृतीयः प्रश्नः । एतेषां सर्वेषामपि प्रश्नानाम् उ तथैव भवतीत्यर्थकोकारेण ब्रह्मा एकमेवोत्तरमाह । अत्रायं विवेकः । अविद्वानपि गच्छतीति प्रथमोक्तां कोटिं त्यक्त्वा विद्वान् गच्छतीति द्वितीयकोटिस्त्वयैव गृहीता । अतस्त्वया त्यक्तकोटिः मयाऽपि त्यक्ता । त्वयाऽङ्गीकृता या कोटिः त्वयोक्ता सैव मयाऽप्यङ्गीकृतेति पुनरुकारेणैवोत्तरमाह । तृतीयप्रश्नेऽपि सम्यगश्नुवन्तीति कोटिमुपेक्ष्य 'कश्चित्समश्नुते' इति या कोटिस्त्वयाऽङ्गीकृता सा मयाऽङ्गीकृतेति पुनश्चोकारेणैवोत्तरमाह । तथा च त्रयस्याप्येकेनैवोकारेणोत्तरमभूदिति । एवं चैकेनैवोकारेणोत्तरं वदन् ब्रह्मा न केवलं चतुराननः किं तु महाचतुरतरप्रवचनकौशलवानपीति युक्तमुत्पश्यामः ॥ १३ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः ॥** ननु 'अथातोऽनु प्रश्ना' इत्यत्र केन कं प्रतिकृताः प्रश्नाः कथ्यन्त इति न प्रतीयते। किञ्च एतेषां प्रश्नानां बीजमित्यतः प्रमाणेनैव तद्दर्शयति - **इत्युक्त इति** ॥ पूर्वं ब्रह्मणा चतुर्मुखेन वरुणं प्रति 'ब्रह्मविदाप्नोति परम्' इत्युक्ते सति वरुणो विभुं प्रश्नानां प्रतिवचनदाने समर्थं ब्रह्माणं प्रति पप्रच्छेत्यर्थः। प्रश्नबीजसद्भाववाच्यतः शब्दाभिप्राय इत्युक्त इत्यनेनोक्त इत्यवगन्तव्यम्। उताविद्वानित्यादिकं व्याचष्टे- **अविद्वानपीति** ॥ ननु 'ब्रह्मवित् परमाप्नोति' इति ज्ञानिनः परब्रह्मप्राप्तेरुक्तत्वेन उताविद्वानिति प्रश्ने बीजाभावात् तत्कोटिप्रसक्तिरेव नास्तीति चेत् उच्यते। 'ब्रह्मविदाप्नोति परम्' इत्यत्र ब्रह्मविदेवेत्यवधारणाभावाद् ब्रह्मवेत्ता तदवेत्ताऽप्याप्नोति इत्यप्यर्थसम्भवमभिप्रेत्यायं प्रश्नः। अत एवाविद्वानपीति प्रमाणेऽपिशब्दप्रयोग इत्यवगन्तव्यम्। अविद्वानित्याद्येकवचनं बहुवचनार्थे। ननु उताविद्वानाहो विद्वानिति द्विकोटिकोऽयमेकःप्रश्नः। कश्चित् समश्नुत इत्यपरः प्रश्न इति प्रश्नद्वयमेव प्रतीयते। अथातोऽनुप्रश्ना इति कथं बहवः प्रश्नाः प्रतिज्ञाताः। अन्त्यप्रश्ने च कोट्यन्तरं न प्रतीयते। अतोऽध्याहारेण द्वितीयं प्रश्नं तृतीयप्रश्ने कोट्यन्तरं च प्रमाणेनैव दर्शयति- **उत तत्रापीत्यादिना** ॥ तत्रापि विद्वांस एव ब्रह्म प्राप्नुवन्तीति पक्षेऽपि। वचनव्यत्ययेन ब्रह्माप्नुवन्तीति वर्तते। यदि सर्वेऽपि विद्वांसो ब्रह्माप्नुवन्तीति पक्षः अथ तर्हि तत्रापि तस्मिन् पक्षेऽपीत्यर्थः। समाप्नुयुर्ब्रह्मेति वर्तते। तथा च मुक्तौ किं सर्वेऽपि समा इत्याशयः। अनेनोपनिषदि तृतीयप्रश्ने आद्या कोटिरभिप्रेता दर्शितेति ज्ञातव्यम्। 'कश्चित् समश्नुता' इत्यस्यार्थमाह- **केचिदेवेति** ॥ मुक्तब्रह्मगणविवक्षया केचिदिति बहुवचनम्। उत 'केचिदेव' ज्ञानिनो जनाः सम्यक् तद्ब्रह्म समाप्नुयुः अपरे ज्ञानिनोऽपि जना असम्यक् तदाप्नुयुरिति तृतीयप्रश्ने द्वितीयकोटिप्रदर्शनं

कृतमित्यवगन्तव्यम् । 'कश्चित् समश्नुते' इत्यनन्तरं अध्याहर्तव्यमाह- **इति पृष्टःसन्निति** ।। तत्र उ इति ब्रह्मकृतसमाधानाभिप्रायमाह- **अज्ञा इत्यादिना** ।। 'तत्राज्ञा न प्राप्नुयुर्ब्रह्म' इत्यनेन द्विकोटिकप्रश्नत्रयमध्ये आद्यप्रश्ने आद्यकोटिरनभ्युपगमेनैव परास्ता । 'ज्ञानिनां मोक्षदश्च सः' (ब्र.सू.अनु. १.१.१, श्लो. १५) 'ज्ञानी प्रियतमोऽतः' 'तमेवं विद्वान्' (म.ना.उ. ४.३) 'तं विद्वानेव चामृतः' इत्यादिप्रमाणविरोधादिति भावः । तत्र द्वितीयामेव कोटिमङ्गीकरोति- **प्राप्नुयुर्ज्ञानिन इति** ।। द्वितीयप्रश्ने द्वितीयकोटिरसम्मतैव । 'न कश्चिद् ब्रह्मवित् सृतिमनुभवति' । 'अनियमः सर्वेषामविरोधात्' इत्यादि श्रुतिसूत्रविरुद्धत्वादित्यभिप्रेत्य तत्राद्यामेव कोटिमङ्गीकरोति- **अखिला इति** ।। तृतीयप्रश्ने आद्यकोटिरसम्मतैव । 'अक्षण्वन्तः कर्णवन्तः' इत्यादिप्रमाणविरोधेन सर्वेषां ज्ञानिनां मुक्तौ साम्येन सम्यग्ब्रह्मप्राप्तेरभावादित्यभिप्रेत्य 'केचिदेवोत सम्यक्तदसम्यगपरे जनाः । ज्ञानिनोऽपि' इत्युक्तद्वितीयकोटिमेवाङ्गीकरोति- **तत्रापीति** ।। ब्रह्मप्राप्तेषु अखिलेष्वपि ज्ञानिषु मध्य इत्यर्थः । ननु विरिञ्चस्येव सम्यग्ब्रह्मप्राप्तिर्भवति । अन्येषां तारतम्येन ब्रह्मप्राप्तिर्भवतीत्येतत् कुतः ? इत्यत आह- **सुखविशेषत इति** ।। विशेषो वैचित्र्यं मुक्तानां तावत्सुखे वैचित्र्यमस्ति ।

'तत्राप्यानन्दस्य विचित्रता ।
मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात् ।
तत्रापि तारतम्यं स्यात्तेषु ब्रह्माधिको मतः ।
विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता'

इत्यादि प्रमाणात् । न च तत् आकस्मिकम् । यतः साधनतारतम्याधीनं ब्रह्मप्राप्तितारतम्यमित्यङ्गीकार्यम् । अन्यथा तन्नस्यादिति भावः । ब्रह्मप्राप्तितारतम्यं च

'केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।
अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ।
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।
तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ।
सालोक्यं च सरूपत्वं सामीप्यं योग एव च ।
इमामारभ्य सर्वत्र यावत्सु क्षीरसागरम् ।
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः ।' (ब्र.सू.भा. ४.४.१९)

इति प्रमाणानुसारेण ज्ञातव्यम् । समासतः सङ्कोचतः- **पश्चादिति** ॥ 'अज्ञा न प्राप्नुयुर्ब्रह्म' इत्येतद्विस्तरेण 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' इत्यनेनोच्यते। 'प्राप्नुयुर्ज्ञानिनोऽखिलाः' इत्येतद् 'यदा ह्येवैष एतस्मिन्नदृश्य' इति वाक्येनोच्यते। तत्रापि सम्यक् प्राप्तिस्तु विरिञ्चस्यैवेत्येतद् क्षितिपमारभ्य ब्रह्मपर्यन्तमानन्दतारतम्यकथनपरेण 'सैषानन्दस्य मीमाँसा भवति' इत्यादि ग्रन्थेनोच्यते । तत्राधिकारिवर्गे ब्रह्मण एव पूर्णानन्दत्वोक्त्या तस्यैव सम्यक् परब्रह्मप्राप्तिरन्येषां तारतम्येनेति स्पष्टमवगमात् । 'कश्चिदेव सम्यक् समश्नुत' इत्यस्य ज्ञानिन एव मुच्यन्ते इत्यत्रैवान्तर्भावात् । उत्तरत्र विस्तरात् तदनुक्तिरिति पूर्वटीकाकाराः । हेत्यनेन

'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः ।
बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात् ॥'

इति प्रमाणप्रसिद्धिं दर्शयति ।

ननु अयमभिप्राय उकारेण कथं लब्ध इत्यत आह- **कश्चिदेवेति** ॥ 'कश्चित्समश्नुते' इत्यस्यार्थानुवादोऽयम् । तथैवेत्युकारमित्यन्वयः । कश्चिदेव सम्यक् तदाप्नुयादिति यदुक्तं तत् तथैवेत्यर्थकमुकारमित्यर्थः । तथा

चाऽज्ञानिनोऽपि ब्रह्माप्नुवन्ति ? ज्ञानिन एव वा ? ज्ञानिनोऽपि सर्वे ब्रह्माप्नुवन्ति वा केचन वा ? यदि सर्वेऽपि तत्रापि सर्वेऽपि ज्ञानिनः सम्यक् ब्रह्माप्नुयुरुत कश्चिदेव समश्नुते ? इति प्रश्ने 'कश्चित्समश्नुते' इति वाक्यानन्तरमेव तथैवेत्यर्थकस्य उकारस्य ब्रह्मणा प्रयुक्तत्वात् कश्चिदेव विरिञ्चः सम्यक् तद्ब्रह्माश्नुते' इत्यभिप्राय उकारप्रयोगेण लब्ध इति भावः ॥ १३ ॥

## उपनिषत्

(विष्णोः स्वातन्त्र्यज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं च निरूपयति)

**सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ॥ १४ ॥**

## भाष्यम्

'अज्ञो नैव तदाप्नोति ज्ञान्येवैतदवाप्नुते ।
इति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय तु ॥
आह सृष्टिं प्रवेशं च माहात्म्यज्ञानतो यतः ।
प्रीतिं यान्ति महान्तस्तु तद्वशा एव चेश्वराः ॥
अग्न्यादयोऽपि किमुत तदन्ये मुक्तिदस्ततः ।
स एवैकस्स विज्ञेयः पूर्णैश्वर्यादिरूपवान् ॥
इति तस्य महैश्वर्यमुच्यते .......'

## पदार्थदीपिका

ननु तर्हि 'सोऽकामयत' इत्यादिना 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिना च ग्रन्थेन सृष्टिः सृष्टपदार्थप्रवेशादिकं च किमसङ्गतमेवोच्यत इत्यतस्तस्य सङ्गतिमाह- **अज्ञो नैवेत्यादिना** ॥ इतीममर्थं 'यदा ह्येवैष एतस्मिन्' इत्यादौ ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय स्वातन्त्र्यादिरूपमाहात्म्यज्ञापनाय सृष्टिं सृष्टपदार्थप्रवेशं चाहेत्यन्वयः । ननु 'ज्ञान्येवैतदवाप्नुते' इत्युक्तायां ज्ञानिनो ब्रह्मप्राप्तौ विष्णोः स्वातन्त्र्यादिरूपमाहात्म्यज्ञानस्य कथमुपयोगः । येन तज्ज्ञापनाय सृष्ट्याद्युक्तिः सङ्गतेति चेन्न । ब्रह्मप्राप्तिरूपो मोक्षस्तावत् प्रसादादेव भवति । 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इत्यादि श्रुतेः । प्रसादश्च गुणोत्कर्षज्ञानसाध्यः । लोके तथा दर्शनात् । तथा च 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति वचनादधिकारिणः प्रति भगवत्प्रसादोत्पादनद्वारा मोक्षं साधयितुं प्रवृत्तानां वेदानां तद्गुणोत्कर्षज्ञापन एव महातात्पर्यं वक्तव्यम् । अतः स्वातन्त्र्याख्यमहैश्वर्यज्ञापनाय सृष्ट्यादिकं कथ्यत इति नासङ्गतिरित्याह - **माहात्म्यज्ञानत इत्यादिना** ॥ तुशब्द एवार्थे । माहात्म्यज्ञानत एवेति सम्बध्यते । 'राजाहम्' इति वदन्तं राजानो घातयन्ति हीति द्रष्टव्यम् । यतो महान्तो लोके माहात्म्यज्ञानतः प्रीतिं यान्तीति दृष्टमिति हेतोस्तस्य विष्णोर्महैश्वर्यं भक्तानां तत्प्रीत्युत्पादनाय ज्ञातव्यतयोच्यत इत्यन्वयः । 'तत्त्वेव भयं विदुषो मन्वानस्य' 'भीषास्माद्वातः' इत्यादेरपि प्रकृतोपयोगं दर्शयति - **तद्वशा एवेति** ॥ ईश्वराः पचनादि-व्यापारसमर्थाः अग्न्यादयोऽपि तद्वशाः विष्णुवशा एव किमु तदन्ये । ततो हेतोः स एवैको मुक्तिद इत्यन्वयः । किमु तदन्य इत्यनेन 'भीषास्माद्वात' इत्यादिकमुपलक्षणमित्युक्तं भवति । मुक्तिदो विज्ञेय इत्यनेन 'अथ सोऽभयं गतो भवति' इत्यस्य तात्पर्यमुक्तं ज्ञातव्यम् । 'सो कामयत' इत्यादिना

सृष्ट्युक्तेः सङ्गत्यन्तरमाह- स्रष्टृत्वादिपूर्णैश्वर्यादिरूपवान् स हरिर्विज्ञेय इति। 'ज्ञान्यैवैतदाप्नुत' इत्युक्तम् । तत्र ब्रह्मज्ञानं कीदृशं विवक्षितमित्याशङ्कायां जगत् स्रष्टृत्वादिना रूपेण ज्ञानमेव ब्रह्मज्ञानं विवक्षितमित्यभिप्रेत्य सृष्ट्यादिकमुच्यत इति नासङ्गतिरिति भावः । महैश्वर्यं जगत्स्रष्टृत्वादि-रूपम् । उच्यते 'सोकामयत' इत्यादिनेति शेषः ॥

## भाष्यम्

........................स त्वकामयत् ।
सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु ॥
बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत् ।
स्यादित्यालोचनान्नान्यत् तपो विष्णोः कदाचन ॥
अवतारेष्वनुकृतिः बाह्यवृत्त्या तपस्विनाम् ।
सृष्टिर्नाम स्वरूपात्तु बहिर्निष्क्रमणं स्मृतम् ॥
यद्यपीदं जगत्सर्वं सोदरस्थं महात्मनः ।
तथाऽप्येष द्वितीयेन रूपेण बहिराक्षिपेत् ॥
रूपान्तरेणाविशच्च जगत्सर्वं जनार्दनः ।

## भाष्यप्रकाशिका

सः मूलरूपनारायणो बहुः बहुरूपवान् स्यामित्यकामयत । तदर्थं बहुरूपाणामाविष्करणाय प्रकृष्टेन रूपान्तरेण जायेयेत्यप्यकामयत । मूलरूपी नारायणः लये स्वोदरस्थमपि जगत् तेनैव रूपेण न निष्क्रामयति । किन्तु मूलरूपोदरस्थं जगत् स्वोदरस्थीकृत्य आविर्भूतपुरुषाख्यरूपान्तरेणैव निष्क्रामयति बहुरूपो भवति चेति शास्त्ररहस्यम् । 'जगृहे पौरुषं रूपं भगवान् महदादिभिः । सम्भूतं षोडशकलमादौ लोकसिसृक्षया' (भाग. १.३.१) इति भागवतोक्तेः । महदादिभिः स्वोदरस्थसूक्ष्ममहदादितत्त्वैः

सम्भूतं सहभूतं पौरुषं रूपं जगृह इति तस्यार्थः । सृष्टियोग्यमहदादिस्थूलतत्त्वानामद्याप्यनुत्पन्नत्वेन पुरुषरूपस्याऽपाततः प्रतीतमहदाद्युत्पन्नत्वस्यासम्भवात् । अतो भगवान् बहुरूपाविर्भावयोग्यं प्रकृष्टं रूपान्तरं मम भूयादित्यचिन्तयदिति भावः । अत एव 'एतन्नानावताराणां निदानं बीजमव्ययम्' (भाग. १.३.५) इति मूलरूपाविर्भूतपद्मनाभाख्यमूर्तिमेव नानावताराणां बीजमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः - 'यद्यपीदं जगत् सर्वं स्वोदरस्थं महात्मनः । तथाऽप्येतद्द्वितीयेन रूपेण बहिराक्षिपेत्' इति । स द्वितीयरूपी पुरुषाख्यो नारायणः तपः आलोचनारूपं तपः अतप्यत अतपत् । अकरोदिति यावत् । मूलरूपनारायणेन अभिलषितबहुरूपधारणाय अधिष्ठानभूतासङ्ख्यजगन्निर्माणेनावश्यं भाव्यमित्यालोचयामासेति भावः ॥ एतादृशं तपः आलोचनं तप्त्वा कृत्वा इदं सर्वं महदादिजगदसृजत ॥ यदिदं किञ्च किञ्चन तिष्ठति तत्सृष्ट्वा पूर्वसंकल्पानुसारेण बहुरूपैः स्रष्टुम् ।

## पदार्थदीपिका

एवं 'सोऽकामयत' इत्याद्युत्तरप्रकरणस्य सङ्गतिमभिधायेदानीं तद्वाक्यजातं प्रमाणेनैव व्याचष्टे- **स त्वकामयदित्यादिना** ॥ तत्र 'सोऽकामयत' 'बहुः स्याम्' इति वाक्यं व्याचष्टे- **स त्विति** ॥ सः प्रलयस्थो विष्णुः कामनायाः अमोघत्वरूपविशेषसूचनाय 'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृतः' (भा.ता. १०.९४.१५) इति वचनोक्तकालविशेषसूचनाय वा तु शब्दः । यथोक्तम् 'ईक्षा बभूव परनामनिमेषकान्ते' (म.ता.नि. १.३) इति । अस्य सृष्टस्य जगतः । यद्वा [१]इत्येवाकामयद् इत्यर्थः । तुशब्द एवार्थे । ब्रह्मणो जगदाकारेण परिणामभवनकामनाव्यावृत्त्यर्थः । ननु तर्हि 'इदं सर्वमसृजत' (छां. १.२०.५) इत्युत्तरवाक्यमसङ्गतम् । नह्यन्यार्थ सङ्कल्पमभि-

---

१. 'इत्येवाकामयदित्येवं तुशब्द एवार्थे' इति निर्णयसागरमुद्रिते ।

धायान्यक्रियाभिधानं सङ्गच्छते । नहीश्वरो स्वतन्त्रो सत्यकामो वा इत्यत आह- **स्याज्जगच्चेति** ॥ नियामकत्वस्य नियम्यापेक्षत्वान्नियामकबहु-स्वरूपत्वार्थं नियम्यं जगत्स्यादित्यचिन्तयदित्यर्थः । अत एव 'सृष्ट्वा जगदिदं सर्वम्' इति बहुरूपभवनकामनाप्रकारो विवृतः । यथोक्तमनुव्याख्याने- 'तदर्थं ह्यसृजज्जगत्' इति । 'प्रजायेय' इत्यस्यायमर्थ इत्यप्याहुः । 'स तपो तप्यत' इत्यत्र कृच्छ्रादिरूपं सन्तापात्मकं विचारापरपर्यायालोचनात्मकं वा तपश्चकार इति प्रतीयते, तदयुक्तम् । तथात्वेऽप्राप्तकामत्वस्याज्ञत्वस्य च प्राप्तेरतः प्रकृते विवक्षितं 'तपः' शब्दार्थमाह- **स्यादित्यालोचनादिति** ॥ स्यादित्यस्य नञा सम्बन्धः । आलोचनं नाम ज्ञानमेव विवक्षितं न तु विचारात्मकं सन्तापात्मकं वा । तथा च आलोचनात् ज्ञानरूपात् तपसोऽन्यत्तपः सन्तापात्मकं विचारात्मकालोचनात्मकं वा विष्णोर्न स्यात् नाभिप्रेतम् । इति शब्दः समाख्याप्रदर्शकः । 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' (आथ. १.९) इति श्रुतेरित्यर्थः । तथा च 'स तपो' तप्यत' इत्यस्य स्वोदरसंस्थं जगद्ददर्श इत्यर्थो वर्णनीयः । उक्तं च भगवत्पादैः – 'दृष्ट्वा स चेतनगणान् जठरे शयानान्' इति । यथोक्तं कर्मनिर्णयटीकायाम्- 'यस्य तपो ज्ञानमयं नत्वालोचनात्मकं वा सन्तापात्मकं वा अज्ञो ह्यालोचते । अप्राप्तकामश्च तपस्यति' । 'तपस्तप्त्वा इदं सर्वमसृजत' इत्यस्य व्याख्यानमेतदिति । ननु कृष्णाद्यवतारेषु रुद्रादीन् प्रति सन्तापाद्यात्मकतपःकरणस्य दर्शनात् कथमेतदित्यत आह- **अवतारेष्विति** ॥ स्यादित्यनुवर्तते । इदं मे इति शेषः । तथा च अवतारेषु इदं मे स्यादित्येवं तपस्विनामनुकृतिर्बाह्यवृत्त्यैव न त्वन्तर्वृत्त्येत्यर्थः । उक्तं च तात्पर्यनिर्णये भगवत्पादैः– 'त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा' (म.ता.नि. १.५७) इत्यादिवचनादिति ज्ञातव्यम् । उक्तं च तात्पर्यनिर्णये भगवत्पादैः –

'..............................

ययौ कैलासमद्रीशं चकारेव तपोऽत्र च ।

स्वीयानेव गुणान्विष्णुर्भुञ्जन्नित्येन शोचिषा ।

शार्वं तपःकरोतीव मोहयामास दुर्जनान् ।' (२२.१६०-१६१)

'विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् ।' (१०.७०)

'अहं त्वां पूजयिष्यामि लोकसम्मोहनोत्सुखः ।' (२२.१५४)

'कृष्णोऽप्ययोग्यजनमोहनमेव वाञ्छन्

तुष्टाव रुद्रहृदिगं निजमेव रूपम् ।' (२२.१७०) इति ॥

'इदं सर्वमसृजत' इत्यत्रोक्ता सृष्टिर्नाम ब्रह्मणो जगदाकारेण परिणाम एवेति भास्करस्तदयुक्तम् । 'अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यादि प्रमाणविरोधादतोऽत्राभिप्रेतां सृष्टिं विवृणोति-**सृष्टिर्नामेति** ॥ 'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः । ससर्ज मातापितृवदूर्णनाभिवदेव वा । प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा' (ब्र.सू.अनु. १.४.२९, श्लो. ६४-६५) इत्यनुव्याख्यानानुसारेणैतदर्थो द्रष्टव्यः । अत्र 'योऽखिलं जगज्जठरे निधाय लक्ष्मीभुजान्तरगतः सन् नारायणः प्रलये आसीत्तस्मादेव मूलरूपाज्जगत्सृष्टिर्भवतीति प्रतीयते' । तथा 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यत्रापि मूलरूपिण एव हरेः प्रवेश उच्यते इति प्रतीयते तां प्रतीतिं वारयन् तत्र विशेषमाह- **यद्यपीत्यादिना** ॥ यद्यपीदं सर्वं जगत् महात्मनोऽपरिच्छिन्नस्य मूलरूपिणः स्वस्यैवोदरस्थम् । तथा च तस्मादेव बहिर्निष्क्रमणेनोत्पत्तुमर्हं तथाऽपीत्यर्थः । स्वेच्छयेति शेषः । द्वितीयेन रूपेण द्वितीयादिरूपेण वासुदेवप्रद्युम्नानिरुद्धरूपेण । यथोक्तं तात्पर्यनिर्णये -

'व्यूढश्चतुर्धा भगवान् स एको मायां श्रियं सृष्टिविधित्सयाऽऽर ।

रूपेण पूर्वेण स वासुदेवेनाम्ना विरिञ्चं सुषुवे च सातः ।' (३.९)

'स सृष्टिहेतोः प्रद्युम्नतामुपगतः कृतितां च देवी ।' (१.७)

'निर्देहकान् स भगवाननिरुद्धनामा जीवान् स्वकर्मसहितानुदरे निवेश्य ।
चक्रेऽथ देहसहितान् क्रमशः स्वयम्भूप्राणात्मशेषगरुडेशमुखान् समग्रान्॥'
(१.९)

इति । रूपान्तरेण अनिरुद्धादिरूपान्तरेण । 'अनेन जीवेनात्मनानुप्रविष्टम्' इति श्रुतेः । 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति श्रुतिः । 'स जीवनामा भगवान् प्राणधारणहेतुतः' इत्यादि स्मृतेः ।

'नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ ।
सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ ।
अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ।' (ऐ.भा. २.२.१)
'स्थितोऽनिरुद्धो हृदि चाखिलस्य ॥' इत्यादि स्मृतेश्चेति ज्ञातव्यम् ।

## भाष्यम्

(ब्रह्मैव सत्त्यदादिशब्दवाच्यम्)

**त्यच्चानिरुक्तं विज्ञानं तथा निलयनं महान् ॥**
**सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथाऽनृतम् ।**
**अविज्ञानं चानिलयनं प्रकृतिप्राणयोः परम् ॥**
**तद्गविष्णोस्तु सम्बन्धात् स्वतस्तन्नामको हरिः ।**
**ततो नियामकश्चेति त्यदानन्त्यादवाच्यतः ॥**
**अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः ।**
**विज्ञानं सर्वविज्ञानात् सत्यं साधुस्वरूपतः ॥**
**अवसादसुवाच्यत्वदौर्बल्याज्ञस्यसाधुताः ।**
**प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः ॥**

**अतः साधुस्वरूपस्सन् सत्यनामाऽनृतादिकम्।**
**नामानेन गतत्वादेः यदिदं किञ्च भाषितम्॥**
**सन्निरुक्तादिशब्देन तत्सर्वं साधुतैव हि।**
**अवसादनादिहेतुत्वं साधुतैव हि सर्वशः।**
**असाधुताऽवसादादिस्तत्कर्तृत्वं हि भाषितम्॥ १४॥**

## पदार्थदीपिका

अत्राऽह भास्करः – 'सच्चत्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यम्' इत्यस्यां श्रुतौ ब्रह्मणः सत्त्यदादिशब्दाभिधेयमूर्तामूर्तराशिद्वयात्मकविश्वभाव एवोच्यते। अतः स इदं 'सर्वमसृजत' इत्यत्रापि सृष्टिः परिणामरूपैव व्याख्येया' इति। तदयुक्तम्। 'स इदं सर्वमसृजत तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्चत्यच्चाभवत्' इति वचनेन ब्रह्मणः सदादिभवनात् पूर्वमेव मूर्तामूर्तरूपविश्वोत्पत्तेरवगतत्वात्। तथा च नेदं सदादिभवनं विश्वोत्पादनं विश्वोत्पत्त्युत्तरकालीनत्वात्। या क्रिया यदुत्तरकालीना नासावसौ, यथा भुक्त्वा चरतीत्युक्तं चरणं न पूर्वकालीनं भोजनमिति प्रयोगसम्भवात्। अनुपपन्नार्थं चान्यथावाक्यमापद्यते। नहि मृत्सुवर्णादिकं घटरुचकादिसृष्ट्वा तदनुप्रविश्य तद्भवति। यद्वा विश्वं सत्त्यदादिशब्दार्थतयात्र न विवक्षितम्। तद्भवनात्पूर्वकालीनोत्पत्तिकत्वात्। भोजनवदित्यादि प्रयोक्तव्यम्।

ननु तर्हि कः श्रुत्यर्थः। जगद्भावं विना अवसादनकर्तृत्वादिधर्मयोगेन ब्रह्मैव सत्त्यदादिशब्दवाच्यं भवतीति ब्रूमः। ननु तर्हि 'तदनुप्रविश्य' इत्यस्यान्वयो नास्ति। नहि ब्रह्मणोऽवसादनकर्तृत्वादि धर्मयोगे सदादिशब्दवाच्यत्वे वा जगत्प्रवेशस्योपयोगोऽस्ति। किञ्चैवं सति प्रसिद्धिविरोधः।

सत्त्यदादिशब्दानां 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च स्थितं च यच्च सच्च त्यच्च' इत्यादौ मूर्तामूर्तवाचितया प्रसिद्धत्वादिति चेन्न। यद्यप्यनन्यापेक्षयाऽवसादनकर्तृत्वादिधर्मयोगः सदादिशब्दवाच्यता चास्त्येव ब्रह्मणः, तथापि तत्तद्वस्तुगतरूपेणैव तत्तत्च्छशब्दवाच्यत्वमित्यस्त्येव व्यवस्था। तथा च मूर्तामूर्तजगद्गतेन रूपेणैव ब्रह्म सदादिशब्दवाच्यमतस्तदनुप्रविश्येति सम्बध्यते। परमेश्वरसन्निधानादेव मूर्तादेरपि सदादिशब्दवाच्यता चोपपद्यत इति भावेन त्यदनिरुक्तनिलयनविज्ञानसत्यपदवाच्यं विश्वं तथा सन्निरुक्तानिलयनाविज्ञानानृतशब्दवाच्यं च विश्वं दर्शयन् तत्र तच्छब्दवाच्यतायां निमित्ततयावस्थिते विष्णौ तान् शब्दान् निरुच्य दर्शयति- **त्यच्चानिरुक्तमित्यादिना**॥ त्यत् अनिरुक्तं विज्ञानं तथानिलयनं सत्यं चेति शब्दपञ्चकेन महान् महत्तत्वाभिमानी ब्रह्मा प्राणस्तथा श्रीश्च कथ्यते इति शेषः। 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इति वचनादविज्ञानं चानिलयनमिति नवाक्षरत्वेऽपि न दोषः। सदादिशब्दपञ्चकेन प्रकृतिप्राणयोः श्रीमुख्यप्राणयोः। उपलक्षणमेतत्। महतो ब्रह्मणश्च सकाशात् परं अन्यत् विश्वं कथ्यत इत्यर्थः। किं स्वातन्त्र्येणेत्याह- **तद्वेति**॥ तु शब्दोऽवधारणे। तदन्तर्गतविष्णुसम्बन्धादेवश्यादिकं विश्वं त्यदादिशब्दवाच्यमित्यर्थः। विष्णोरपि तच्छब्दवाच्यत्वं किमन्यसम्बन्धादेवेति शङ्कायां नेत्याह- **स्वत इति**। स्वातन्त्र्येणेत्यर्थः। तथा च तच्छब्दप्रवृत्तिनिमित्तानां विष्णोरेव स्वतोऽन्या नधीनतयासद्भावात् विष्णोरेव मुख्यतः तच्छब्दवाच्यत्वम्। अन्यत्र विद्यमानस्याप्यल्पस्य प्रवृत्तिनिमित्तस्य तदधीनत्वादमुख्यतोऽन्यस्य तच्छब्दवाच्यत्वमिति भावः। यथोक्तम् - 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम्। स्वातन्त्र्यं तत्र मुख्यं स्यात्' इति। कानि तच्छब्दप्रवृत्तौ निमित्तानि यानि विष्णौ अनन्याधीनतया वर्तन्ते इत्यतः तानि दर्शयति- **तत इत्यादिना**॥ त् यत् इत्यनयोः क्रमेणार्थः ततो व्याप्तो

नियामकश्चेति । अवाच्यतः अवाच्यत्वतः । तथाच निर्नितरां साकल्येनोक्तं न भवतीत्यनिरुक्तमित्यर्थः । तत्र हेतुरानन्त्यादिति । साधुस्वरूपतः साधुगुणस्वरूपत्वादित्यर्थः । 'सत्यं साधुगुणत्वात् सः' इति वचनात् । एवमव्याख्याने द्वितीयसत्यशब्देन पौनरुक्त्यप्रसङ्ग इति ज्ञातव्यम् । सदादि-शब्दप्रवृत्तौ निमित्तं दर्शयति- **अवसादेति** ।। 'षद्लृ विशरणगत्यवसादनेषु' इति धातुव्याख्यानादवसादनं खेदः मनः शैथिल्यं सच्छब्दप्रवृत्तिनिमित्तं निरुक्तशब्दप्रवृत्तिनिमित्तं सुवाच्यत्वम् । अनिलयनशब्दलब्धार्थो दौर्बल्यम् । सर्वाधारत्वाभावोपपादकत्वात् तस्येति ज्ञातव्यम् । अज्ञप्तीत्यविज्ञानशब्दप्रवृत्तिनिमित्तम् । असाधुतयेत्यनृतशब्दप्रवृत्तिनिमित्तम् । ऋतशब्दपर्यायसत्यशब्दस्य साधुस्वरूपार्थतया व्याख्यातत्वात् । प्रकृतिः श्रीदेवी । प्राणशब्देन ब्रह्मापि ग्राह्यः । अन्यत्र प्रकृत्यादित्रितयभिन्ने जगति अवसादादीन् कुर्वन् हरिः वर्तते यतोऽतस्तन्नामकः सदादिनामपञ्चकवाच्य इति योजना । सत्यमभवदित्यत्रस्थद्वितीय सत्यशब्दार्थमाह- **साधुस्वरूप इति** ।। सन् निर्दुष्टो हरिः । 'मङ्गलानां च मङ्गलम्' इति वचनात् साधुस्वरूपो मङ्गलस्वरूपः सन्नेव यतः सर्वत्रास्ति अतः सत्यनामा सत्येति नामवान् इत्यर्थः । ननु सत्यादिशब्दानां जगद्वाचित्वपक्षे कथं व्युत्पत्तिः कर्तव्येत्यतः तत्प्रकारं दर्शयति अनेन गतत्वादेर्निमित्तात् जगति अनृतादिकं नामेति । तथा च प्रकृत्यादिभिन्नं जगत् 'अन चेष्टायाम्' इति धातोरनेन चेष्टकेन ऋतं गतं प्रविष्टं यतोऽतोऽनृतम् । आदिपदेनासाधुत्वाच्च अनृतम् । अविज्ञानं सर्वज्ञानरहितत्वात् । अनिलयनं सर्वाधारत्वाभावात् । निरुक्तं नितरामुक्तत्वात् । सत् अवसादनात् । खेदेन मनः शैथिल्ययुक्तत्वात् । तथा प्रकृत्यादिकं त्रयं ततत्वान्नियामकत्वाच्च त्यत् । अनिरुक्तमवाच्यत्वात् । प्रकृतिर्निलयनम् भगवदितरजगदाधारत्वात् । तदुभयातिरिक्तसर्वजगदाधारत्वात् महान् प्राणश्चेति ज्ञातव्यम् । विज्ञानं यथायोग्यभगवदितरसर्वविज्ञानात् । सत्यं साधुगुणस्वरूपत्वादिति

ग्राह्यम् । नन्ववसादनसुवाच्यत्वदौर्बल्याज्ञत्स्यसाधुतानाममङ्गलत्वात् तन्निमित्तकसदादिशब्दवाच्यत्वं कथं भगवतो युक्तमित्याशङ्कापरिहाराय प्राप्तं 'यदिदं किञ्च' 'तत्सत्यमित्याचक्षते' इति वाक्यं व्याचष्टे - **यदिदं किञ्चेति** ।। सत्यशब्दार्थः साधुतैवेति । स्वार्थे तल्प्रत्ययः । साध्वेव मङ्गल-स्वरूपमेवेति तदर्थः । सन्निरुक्तादिशब्देन यदिदं किञ्च भाषितम् । तत्सर्वं साधुतैव साध्वेवेति हि प्रसिद्धमित्यर्थः । आचक्षत इत्यस्यार्थो हीति । एतदेव विविच्य दर्शयति- **अवसादनादिहेतुत्वमिति** ।। सर्वशः सर्वमवसादनादिहेतुत्वं हि यस्माद् भगवति साधुतैव साध्वेव मङ्गलमेव अवसादादिस्तदधिकरणत्वमिति यावत् । असाधुता असाध्वेवाऽमङ्गलमेवेत्यर्थः । नन्ववसादनादिहेतुत्वस्य साधुत्वेऽपि प्रकृते किमायातम् । नहि अवसादादिहेतुत्वं प्राक् प्रतिपादितं किन्त्ववसादादिकमेवेत्यतोऽवसादनादिहेतुत्वमेव प्रतिपादितमित्याह- **तत्कर्तृत्वं हीति** ।। हि यस्मात् तत्कर्तृत्वं अवसादादिकर्तृत्व-मेवाऽस्माभिर्भाषितम् । 'अवसादसुवाच्यत्त्वदौर्बल्याज्ञत्स्यसाधुताः । प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः' इत्युक्तत्वादतो न कोऽपि दोष इत्यर्थः । यथोक्तमनुव्याख्याने -

'एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ।
नैव दोषा हरौ तद्बुध्योक्ता दोषकारिणः ।
तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः' ।।

(ब्र.सू.अनु. १.४.३, श्लो. १०-११) इति ।। १४ ।।

## उपनिषत्

**तदप्येष श्लोको भवति । असद्वा इदमग्रं आसीत् । ततो वै सदंजायत ।। तदात्मानꣳ स्वयंमकुरुत । तस्मात्तत् सुकृतमुच्यंत इति । यद्वै तत्सुकृतम् । रंसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनंन्दी**

भवति । कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्द याति ॥ १५ ॥

भाष्यम्

'अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः ।
स आसाद्यश्च सन्नामा वासुदेवोऽभवत् प्रभुः ॥

स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणादिकम् ।
तस्मात् तत्सुकृतं नाम स आनन्दो रसस्ततः ॥

आनन्दमेनं सम्प्राप्य [1]मुक्तो मोदेन्न चान्यथा ।
आदीप्तस्त्वेष भगवान् यद्यानन्दो भवेन्न च ॥

सामान्यचेष्टा धर्म्याश्च कस्य स्युस्तमृते प्रभुम् ।
सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः ॥

अल्पात् सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत् ।
न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः ॥

तस्माद् यादृक् सुखं तादृक् कर्म पूर्णसुखस्ततः ।
सर्वकृत्त्वात् परो विष्णुः आह तस्मात् सनातनी ॥

सुखं लब्ध्वा करोतीति छन्दोगानां श्रुतिः परा ।
अलब्ध्वा तु सुखं नैव करोतीत्यपि सादरम् ॥
तत्पूर्णानन्ददेवेन कारितः प्राणिति स्फुटम् ।
सर्वलोकः स एवैक आनन्दयति चाखिलम् ॥' १५ ॥

---

१. 'मुच्येदेव न चान्यथा' इत्यपि पाठः ।

## पदार्थदीपिका

पूर्वं प्रलयकालगो नारायणो वासुदेवरूपेण प्रजायेयेति कामनां कृत्वा वासुदेवो भूत्वा जगत् ससर्जेत्युक्तम् । तत्र सम्मतितया श्लोकमुदाहरति- **ब्रह्मा तदपीति** ॥ तत्राऽग्र प्रलये असदेव शून्यमेवाऽसीत्। ततोऽसतः शून्यात् सदजायतेत्येवं शून्यस्य प्रलये सत्त्वं जगत्कारणत्वं चात्र प्रतिपाद्यत इति प्रतीयते । तदयुक्तम् । असतः सदुत्पत्तेः काप्यदृष्टत्वात् । 'कुतस्तु खलु सोम्यैवं स्यात्कथमसतःसज्जायते' इति श्रुतिविरोधाच्चेति भावेन प्रमाणेनैव तं श्लोकं व्याचष्टे- **अनासाद्यस्त्विति** ॥ पूर्वं प्रलये स्थितो नारायणाभिधो हरिः केनाप्यनासाद्योऽप्राप्य इति हेतोरसन्नामाऽभवदिति सम्बन्धः । 'ततो वै सदजायत' इत्येतद् व्याचष्टे- **स आसाद्यस्त्विति** ॥ स नारायणाभिधः प्रभुः वासुदेवोऽभवत् । स चासाद्यो ज्ञानिप्राप्य इति हेतोः सन्नामेत्यर्थः । वासुदेवस्य निजमुक्तिपदप्रदातृत्वेन ज्ञानिप्राप्यतायाः प्रसिद्धत्वादिति भावः। गत्यर्थात्सदेःकर्मणि क्विबन्तस्य रूपमेतत्। 'तदात्मानं स्वयमकुरुत' इत्येतत् ब्रह्मैव स्वात्मानं जगदाकारेण कुरुत' इत्यपव्याख्यानमित्यभिप्रेत्य व्याचष्टे- **स वासुदेव इति** ॥ 'सङ्कर्षणादिकं' सङ्कर्षणादिरूपोपेतम्। अनेन नारायण एव सङ्कर्षणादिरूपाणि ससर्जेति प्रतीतिरप्यपास्ता वेदितव्या । अत एव 'सङ्कर्षणश्च स बभूव पुनः सुनित्यः ।' (म.ता.नि. १.७) 'स सृष्टिहेतोः प्रद्युम्नतामुपगतः ।' (म.ता.नि. १.७) 'स्थित्यै पुनः स भगवाननिरुद्धनामा' (म.ता.नि. १.८) इति तात्पर्यनिर्णयेऽपि तच्छब्दैः वासुदेव एव ग्राह्यो न नारायण इति सम्प्रदायविदः। 'तस्मात् तत्सुकृतमुच्यते' इति वाक्यं व्याचष्टे- **तस्मादिति** ॥ यस्माद् वासुदेवः स्वात्मानं सङ्कर्षणादिकं चक्रे तस्मात्कारणात् स वासुदेवः सुकृतमित्युच्यते। सु सम्यक् सङ्कर्षणाद्यात्मना स्वस्वरूपं कृतमिति व्युत्पत्त्येत्यर्थः । 'यद्वै तत्सुकृतं रसो वै सः' इत्येतद् व्याचष्टे- **स आनन्द इति** ॥ सः सुकृतनामवान् वासुदेवः आनन्दः आनन्दवान्। 'रसः सारोःवरश्चेति

शब्दा एकार्थवाचकाः' इत्यभिधानात् रसो वरः श्रेष्ठः । आनन्दविशिष्टस्य विशेषणं भवदिदं वरत्वं विशेषणभूतमानन्दमुपसङ्क्रामति । तथा च रसानन्दो महानन्दः पूर्णानन्द इत्यर्थो द्रष्टव्यः । यद्वा स इत्यनूद्य आनन्द इति शेषः पूरितः । तथा च 'यद्वै तत् सुकृतं सः तदीयानन्दो सरोवरः पूर्ण इत्यर्थः । रस इत्यानन्दो यतः अतस्तद्रूपो भगवान् आनन्द इति योजनेति पूर्वटीका-काराः । मुक्तानां सुखकारणत्वाच्च अयं पूर्णानन्द इति वक्तुं प्रवृत्तं 'रसं ऽ ह्येवायं लब्ध्वा' इति वाक्यं हेतुहेतुमद्भावं दर्शयन् व्याचष्टे- **तत इति** ॥ यत इति शेषः । यतः वासुदेवः पूर्णानन्दः तत आनन्दम् । पूर्णानन्दस्वरूपमेनं वासुदेवं सम्प्राप्यैव मुक्तो मोदेत् । स्वयोग्यानन्दपूर्णो भवेदन्यथा तन्न स्यादि-त्यर्थः । लोके चेष्टकत्वयुक्त्याऽपि भगवतो वासुदेवस्य पूर्णानन्दत्वं समर्थयते- **को हीत्यादिना** ॥ तत्राकाशस्यानन्दत्वाभावेऽननं प्राणनं च कस्यापि न स्यादित्येतावदुच्यते न तु विष्णोर्महानन्दत्वे कोऽपि हेतुरुक्त इत्यतः तद्वाक्यं प्रमाणेनैव व्याचष्टे- **आदीप्त इति** ॥ आकाशशब्दार्थोऽयम् । आ समन्तात् 'काशृ दीप्तौ' इति धातोः काशनात् दीपनात् दीप्तत्वादिति यावत् । आकाश इत्यर्थः ।

दीप्तेरनन्याधीनत्वरूपविशेषसूचनाय तु शब्दः । एष भगवान् वासुदेवः । 'अन्यात्' इत्यस्य तात्पर्यं सामान्येति । सामान्यचेष्टाः लौकिकचेष्टाः । 'प्राण्यात्' इत्यस्य तात्पर्यं धर्म्या इति । धर्म्याः धर्मविषयाः वैदिक्यश्चेष्टाः । तथा च आसमन्तात् काशनादाकाशः एषः भगवान् यदि पूर्णानन्दो न स्यात् तदा न कश्चित्प्रवर्तयेत् । न चेदेष कश्चित् प्रवर्तयेत् तदा कः पुमान् प्राण्यात् अन्याच्च । न कोऽपि लौकिकीं वैदिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्या-भावादित्येवं विष्णोरनानन्दत्वे जगतो निश्चेष्टत्वमापादयन्त्या श्रुत्या जगच्चेष्टकत्वमानन्दपूर्णत्वे हेतुत्वेन विवक्षितमिति ज्ञायते । तथा च 'भगवान्,

सुखी भवितुमर्हति, प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वात्' उन्मत्तवत् इत्यनुमानं सूचितं भवति । तथा हि । लोके चेतनप्रवृत्तिश्चतुर्विधा दृष्टा । दुःखोद्रेकात् रोदनादौ प्रवृत्तिः । सुखरागात् तत्प्राप्त्यर्थं भोजनादौ प्रवृत्तिः । दुःखद्वेषात् तन्निवृत्त्यर्थं कण्टकोद्धारणादौ प्रवृत्तिः । सुखोद्रेकात् नृत्तगानादिरूपोन्मत्तप्रवृत्तिः । तथा च दुःखोद्रेकनिमित्ता तन्निवृत्त्यर्था सुखावाप्त्यर्था चेत्याद्यं प्रवृत्तित्रयं परमेश्वरत्वादेव तस्मिन्नोपपद्यते । अतः परिशेषात् सुखोद्रेकादेव अस्य प्रवृत्तिरिति सिध्यतीत्यभिप्रेत्योक्तप्रयोगप्रकारं सूचयति- **सुखमिति** ॥ लोकचेष्टामित्युपलक्षणम् । वैदिकचेष्टामित्यपि ग्राह्यम् । हिशब्देन नृत्तगानादिरूपोन्मत्तप्रवृत्तिरन्वयव्याप्तौ दृष्टान्ततया प्रसिद्धेति सूचयति । अग्निमत्त्वादेव धूमवत्त्वमित्यादाविव 'सुखं लब्ध्वैव कुरुते' इति सावधारणेन व्याख्यानेनोक्तहेतुहेतुमद्भावः सूचित इति ज्ञातव्यम् । ननु जगच्चेष्टकत्वेन सुखमात्रसिद्धावपि न तस्य पूर्णत्वं सिध्यतीत्यत आह- **अल्पादिति** ॥ अल्पसुखादेवेत्यर्थः । अल्पकर्मा अल्पप्रवृत्तिमान् । पूर्णानन्दादेवेति व्याख्येयम् । सर्वकृत् महाप्रवृत्तिमान् । तथा च कारणस्य कार्यानुगुणत्वात् महाप्रवृत्त्या महानन्द एव सिद्ध्यतीति भावः । उक्तानुमाने व्यतिरेकव्याप्तौ दृष्टान्तमाह- **न हीति** ॥ आर्ताः दुःखिनः कर्म न कुर्वन्ति प्रवृत्तिमन्तो न भवन्तीत्यर्थः । तथा च उभयाभावप्रयुक्तविशिष्टाभावमादायोक्तहेतुव्यतिरेकस्तेष्वस्तीति भावः । आर्तानामपि किञ्चित्प्रवृत्तिमत्वात् दृष्टान्तान्तरमाह- **मुग्धाश्चेति** ॥ मुग्धाः मूर्छावन्तः । तदानीं दुःखमात्रप्रतिस्मृत्या विशेषतः आर्तापेक्षया विशेषाकारेण कर्म नैव कुर्वन्तीति सम्बन्धः । प्रवृत्तिमात्रशून्या इत्यर्थः । तथा च उभयाभावप्रयुक्तविशिष्टाभावमादाय हेतुव्यतिरेकस्तेष्वप्यस्तीति भावः । अल्पात् सुखादित्युक्तं विवृणोति- **तस्मादिति** ॥ तस्मादार्तादीनां प्रवृत्त्यभावात् ॥ यादृक् सुखं तादृक् तादृगेव तदनुसार्येव । 'कर्म' प्रवृत्तिः दृष्टा । अतः सर्वकर्तृत्वात् महाप्रवृत्तिमत्त्वात्

परो विष्णुः पूर्णसुख इत्यर्थः । निर्मूलानुमानममानमित्याशङ्कापरिहाराय तन्मूलभूतां श्रुतिमाह- **आहेति** ॥ तस्मात् प्रवृत्तिकारणत्रयरहितत्वेसति प्रवृत्तिमत्त्वस्य सुखित्वेनाविनाभावस्य प्रसिद्धत्वादित्यर्थः । सुखं लब्ध्वा सुखं लब्ध्वैव उन्मत्तादौ दर्शनादिति भावः । अनेन 'यदा वै सुखं लभतेऽथ करोति' इति श्रुतिमुपादत्ते । अनेनोक्तान्वयव्याप्तिः प्रमापिता भवतीति ज्ञातव्यम् । सनातनी अपौरुषेयत्वेन पुरुषदोषनिबन्धनदोषशून्या । अत एव परा स्मृत्यपेक्षयोत्तमेत्यर्थः । यद्वैतच्छृतिसमाख्यारूपा परा अन्या छन्दोगानां श्रुतिरित्यर्थः । 'नासुखं लब्ध्वा करोति' इति श्रुतिमर्थतोऽनुवदति- **अलब्ध्वेति** ॥ मुग्धार्तादौ दर्शनादिति भावः । अनेनोक्ता व्यतिरेकव्याप्तिरपि प्रमापिता भवतीति ज्ञातव्यम् । व्याप्तिद्वयोपदर्शनादादरोऽवगम्यत इति भावः । 'को ह्येवान्यात्' इत्युपनिषदुक्ते तर्के विपर्ययपर्यवसानं दर्शयति - **तदिति** ॥ तत्तस्मात् कारितः प्रेरितः प्राणिति वैदिकीं चेष्टां करोति । इदमुपलक्षणम् । अनिति लौकिकीं चेष्टां च करोतीत्यपि द्रष्टव्यम् । तथा च सर्वो लोकस्तावल्लौकिकीं वैदिकीं वा चेष्टां करोति, अनुभवसिद्धत्वात् । तस्मात् पूर्णानन्दवता देवेन कारितः प्रेरित एव प्राणिति अनिति च । तथा च तत्कारयिता देवः पूर्णानन्द इति सिद्ध्यतीति भावः । अमुक्तानां ब्रह्माद्यखिललोकानां सुखकारणत्वाच्चायं भगवानानन्दरूप इत्युच्यते- **एष ह्येवेति** ॥ तद्व्याचष्टे- **स एवैक इति** ॥ अखिलं ब्रह्माद्यं मुक्तजातम् । स्वस्यैव तदभावे परस्मै तद्दानानुपपत्तेरिति भावः । रसं ह्येवेति वाक्यं तु मुक्तानां आनन्दप्रदत्वान्यथानुपपत्त्या भगवतः पूर्णानन्दत्वसाधनपरमित्यपौनरुक्त्यम् ॥ १५ ॥

## उपनिषत्

**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं**

प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥ १६ ॥

## भाष्यम्

'तस्माददृश्ये जैवानां गुणानामप्यसङ्गतेः ।
अनात्म्येऽथ गुणानन्त्यादनिरुक्ते [१]निराश्रयात् ॥
अनिलयनेऽभयत्वेन यदा ज्ञानेन तिष्ठति ।
तदाऽभयं हरिं गच्छेन्नैवाज्ञानी कथञ्चन ॥
यदैतस्मिन् परे विष्णावुदरं जीवगत्वतः ।
भेदं करोति तेनैव भयमस्य महद्भवेत् ॥
अ इत्युक्तो परो विष्णुरेभ्य उच्चस्स एव तु ।
त उदा जीवसङ्घास्स्युरुदरं [२]तद्गतान्तरम् ॥
तदेव ब्रह्म भयकृद्विदुषोऽविदुषस्तथा ।
विदुषोऽल्पभयं कुर्याद् यावन्मुक्तिं व्रजत्यसौ ॥
अथाभयं भवेद् ब्रह्म तस्य मुक्तस्य सर्वदा ।
तस्माद् वाय्वादयो देवा विद्वांसोऽपि विशेषतः ॥
भीताः स्वकर्म कुर्वन्ति विष्णोः प्रीत्यर्थमञ्जसा ।
अमन्वानस्य नुर्विष्णुः कुर्यान्नित्यं महद्भयम् ॥
तम आख्यमनुत्थानम्.......... ॥' १६ ॥

---

१. 'निजाश्रयात् । अनिलायने' इत्यपि पाठः ।
२. ख. 'तद्गतान्तरम्' इत्यपि क्वचित् ।

## पदार्थदीपिका

'रसं ह्येवायं लब्ध्वा' इत्यनेन आनन्दरूपमेनं सम्प्राप्य मुक्तो मोदेदित्युक्तम् । तत्र तत्प्राप्तौ किं साधनमित्याशङ्कायां प्रतिष्ठितं ज्ञानमेवेत्युच्यते । 'यदा ह्येवैष' इति । तद्व्याचष्टे- **तस्मादिति** ।। तस्मात् उक्तरीत्या सर्वचेष्टकत्वेन मुक्तानामानन्दप्रदत्वादिना तस्यैव स्वतन्त्रत्वादित्यर्थः । ज्ञानं प्रतिष्ठितमेव मोक्षसाधनं यस्मात्तस्मादिति पूर्वटीकाकाराः । अदृश्ये अज्ञदृष्ट्यगोचरे । आत्मनः इदमात्म्यं, जीवसम्बन्धिगुणजातं अल्पज्ञानाल्पसुखादि, तद्रहितो नाऽत्म्यस्तस्मिन्निति अक्षरार्थमभिप्रेत्योक्तम्- **जैवानामिति** ।। जीवसम्बन्धिनामित्यर्थः । असङ्गतेः सम्बन्धाभावात् । निर्नितरामयनं आश्रयो निरयनम् । निरयनमेव निलयनम् । रो ल इति स्मरणात् । न विद्यते अन्यो निलयनं आश्रयो यस्यासावनिलयनः इत्यक्षरार्थमभिप्रेत्य तल्लब्धार्थ उक्तो निराश्रयत्वादिति । स्वाश्रयत्वादित्यर्थः । अभयमिति क्रियाविशेषणमित्यभिप्रेत्योक्तम्- **अभयत्वेनेति** ।। एतादृश भगवद्विषये प्रतिष्ठां प्रकर्षेण स्थिर्तिं विन्दते लभते । योग्यतया ज्ञानस्येति लाभ इत्यर्थमभिप्रेत्य तत्तात्पर्यमाह- **यदा ज्ञानेनेति** ।। श्रौताथशब्दार्थस्तदेति । अनेन ज्ञान्येव एतदवाप्नुते इत्युक्ताकारेणोक्तस्योपसंहारोऽप्यनेन कृतो भवतीति ज्ञातव्यम् । एवं भगवद्विषयकसम्यग्ज्ञानेनैव मोक्षमभिधाय विपरीतज्ञानिनोऽनर्थ उच्यते । 'यदा ह्येवैषः' इति । तद्व्याचष्टे- **यदेति** ।। अन्तरमित्यस्यार्थो भेदमिति । तस्य प्रसिद्धोदरत्वं बाधितमित्यतः उदरमित्यनूद्य भेदस्योदरशब्दवाच्यत्वे निमित्तमाह- **जीवगत्वत इति** ।। तथा च जीवेषु युगपदनेकस्थानत्वेन भेददर्शनात् तद्दृष्टान्तेन तादृशभेदं यदा यदि एतस्मिन् परे विष्णौ विश्वतैजसादिभगवद्रूपसमुदायेऽपि युगपद्दक्षिणाक्ष्यादिस्थानभेदेन करोति धातूनामनेकार्थत्वात् जानाति अनुमिनोतीति यावत् । यद्वा जीवेषु

विष्णुप्रतियोगिकभेददर्शनात् तं भेदं विश्वादिरूपे एतस्मिन् परे विष्णौ करोति विष्णुप्रतियोगिकमेव भेदं विष्णौ जानातीति यावदित्यर्थ इति बृहदारण्यकभावबोधोक्तरीत्या व्याख्येयम् । तर्हीति शेषः । अस्य तेनैव भेददर्शनजातेन भगवद्द्रोहेण महद्भयं तमआख्यमनुत्थानं भवेदित्यर्थः । ननु जीवगतत्वमुदरशब्दात् कथं लभ्यते इत्यत तद्दर्शयति- **अ इत्युक्त इति** ॥ परो विष्णुः अ इत्युक्तः 'अः इति ब्रह्म' इति श्रुतेरिति भावः । स एव अकारवाच्यो विष्णुरेव । एभ्यः जीवेभ्यः उत् इत्यस्यार्थः उच्च इति । तथा च उत् उच्चः उत्कृष्टः अः विष्णुः येभ्यो जीवेभ्यस्ते जीवसङ्घाः उदाः उदशब्दवाच्या इत्यर्थः । ऋगतौ अस्मात्कर्तरि अप्रत्यये यणादेशे सति निष्पन्नो रशब्दः गतत्वार्थ इत्यभिप्रेत्य तद्गतेत्युक्तम् । जीवगतेत्यर्थः । अत्र तद्गतेत्यविभक्तिको निर्देशः । लुप्तविभक्तिकं वा । तथा च उदरमित्यनूद्य तद्गतेति व्याख्यानम् । तद्गतमित्यर्थः । अन्तरमिति श्रौतविशेष्यपदानुवादः । तद्गतान्तरं उदरमुदरमन्तरमित्यर्थः । **तद्रतान्तरमिति क्वचित्पाठः** । तत्रापि रतेत्यस्य गतेत्येवार्थो द्रष्टव्यः । प्रकृतस्यैव परब्रह्मणो विद्वदविद्वद्भयप्रदत्वरूप-महिमान्तरमुच्यते । **तत्वेवेति** ॥ तद्व्याचष्टे- **तदेवेति** ॥ यद्विषयकसम्यग्ज्ञानेन मोक्षो यद्विषयकमिथ्याज्ञानेनान्धन्तमस्तदेव ब्रह्म विदुषोऽविदुषश्च भयकृदित्यर्थः । स्वोक्तमवश्यं कर्तव्यं विदुषेत्यभिप्रेत्य स्वोक्ताकरणे भगवान् तेषां भयकृद्भवतीति ज्ञातव्यम् । यथोक्तमर्जुनं प्रति भगवता वासुदेवेन- 'अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि' (भ.गी. १८.५८) इति । अमन्वानस्येत्येतद्व्याचष्टे- **अविदुष इति** ॥ तथा भयकृदित्यर्थः । ननु विदुषोऽपि भयसद्भावे अविदुषः सकाशात्तस्य को विशेष इत्याशङ्कायां तु शब्दसूचितं भये विशेषमाह- **विदुष इति** ॥ नाविद्वद्वन्महदित्यर्थः । तस्य निरवधिकत्वं वारयति- **यावदिति** ॥ यावदसौ मुक्तिं व्रजति तावत्पर्यन्तं तस्य विदुषोऽल्पभयं कुर्यादिति सम्बन्धः । अवध्युक्त्या फलितार्थमाह-

**अथेति** ।। युक्त्यनन्तरमित्यर्थः । अभयं अभयप्रदम् । तत्वेव भयं विदुष इत्युक्तार्थे श्लोकसम्मतिरुच्यते । तदपीत्यादिना तद्व्याचष्टे-**तस्मादिति** ।। यस्माद्विदुषोऽपि ब्रह्म भयकृत्तस्मादित्यर्थः । विशेषतो भीताः अज्ञान्यपेक्षया विशेषतः । स्वविहितकर्माकरणे विष्णोर्विप्रीतिर्भविष्यतीति भीताः सन्तः 'स्वकर्म' स्वोचितं पचनादिरूपं कर्म । यथोक्तमनुव्याख्याने-

'ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि ।
कृच्छ्रेणापि तपो ज्ञानं कर्माप्येते चरन्ति हि ।
न च स्वभाव एवायं भयपूर्वप्रवृत्तितः ।।'' इति ।

अमन्वानस्येत्यनेनाविदुषोऽपि ब्रह्म भयकृदित्युक्तम् । तत्रापि तुशब्दसूचितं भये विशेषमाह- **अमन्वानस्येति** ।। अविदुष इत्यर्थः । नुः पुरुषस्य । अमन्वानो द्विविधः । सज्जन एवोपदेष्टृभावे सम्यग्ज्ञानरहितो भवति यस्त्रैविद्य इत्युच्यते स एकः । मिथ्याज्ञानी चापरः । तत्राद्यस्य परब्रह्मकृतं भयं नाम संसारे परिवृत्तिरेवेति प्रसिद्धत्वान्नोक्तम् । यथोक्तं गीतातात्पर्ये–

'समर्पयति यज्ञाद्यम् अन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।
पुनः कुर्यात्पुनः स्वर्गं याति यावद्धरेर्वशे ।
सर्वदेवान् प्रविज्ञाय तत्कर्मैव सदा भवेत् ।।' इति ।

उक्तं चाथर्वणभाष्ये 'इष्टापूर्तम्' (आथ. १.२.१०) इति श्रुति-व्याख्यानावसरे- 'इमं लोकम्' इत्यज्ञविषयमिति । अपरस्य त्वेतत्प्रमाणोक्तं फलमिति ज्ञातव्यम् । अज्ञो हि नैवैतदाप्नोति । ज्ञान्येव हि तद्गुणोत्कर्ष-ज्ञानसाध्यप्रसादद्वारा तदवाप्नुते इत्युक्ते तज्ज्ञानं कीदृशं विवक्षितमिति शङ्कायां सृष्टिकर्तृत्वादिरूपगुणोत्कर्षज्ञानमेव प्रसादद्वारा मोक्षसाधनमित्यभिप्रेत्य 'सोऽकामयत' इत्यारभ्य 'मृत्युर्धावति पञ्चम' इत्यन्तेन ग्रन्थेन भगवत्सामर्थ्यं

प्रतिपादितम्। तस्योक्तरीत्या प्रकृतोपयोगं दर्शयन् उपनिषदभिप्रेतमर्थ-मुपसंहरति- **विदुषामिति** ।। 'सोऽकामयत' इत्यारभ्योक्तभगवत्सामर्थ्य-विदुषामित्यर्थः। इति प्रसिद्धमिति शेषः। उत्तरवाक्योपक्रमो वाऽयम्।।१६।।

## उपनिषत्

('अथातोऽनु' इत्यादिमन्त्रखण्डार्थः)

**अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्यं । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्यं । कश्चित् सम-श्नुता३उ ।। १३ ।।**

।। ततश्चायं 'अथातो नु प्रश्नाः' इत्यादेरयमक्षरार्थः ।।

अथशब्दः प्रकरणान्तरारम्भद्योतनार्थः । एवमन्नमयादिपञ्चरूप-निरूपणानन्तरं प्रकरणान्तरमारभ्यते । अतः 'ब्रह्मविदाप्नोति परम्' इति वाक्येन ब्रह्मविदः परब्रह्मप्राप्तेरुक्तत्वात्तच्छ्रुतवता वरुणेन चतुर्मुखं प्रति कृताः अनुप्रश्नाः तत्वनिर्णयानुकूलाः प्रश्नाः कथ्यन्ते । तानेव विशदयति-**उतेति** ।। ब्रह्मविदिति निरवधारणोक्तेः । कश्चन अविद्वानुत । एकवचनं बहुवचनार्थे । अज्ञानिनोऽपि प्रेत्य मृत्वा अमुं लोकं परलोकम् । वैकुण्ठादिस्थं परब्रह्मेति यावत् । गच्छति । गच्छन्ति प्राप्नुवन्ति । अविद्वानपि अमुं लोकं प्रति प्रेत्य प्रकर्षेण गत्वा ब्रह्म गच्छतीति वार्थः । आहोस्वित् विद्वान् ज्ञानिन एवामुं लोकं प्रेत्य गच्छन्तीत्येवं द्विकोटिक एकः प्रश्नः । ज्ञानिन एव ब्रह्म प्राप्नुवन्तीति पक्षेऽपि सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्ति अथ केचनैवेति द्विकोटिको द्वितीयः प्रश्नोऽध्याहार्यः । सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्तीति पक्षेऽपि किं सर्वेऽपि ब्रह्म सम्यक् समाप्नुवन्ति मुक्तौ ब्रह्मप्राप्ताः सर्वेऽपि समा इति यावत् । उत कश्चिदेव ज्ञानी समश्नुता सम्यक् अश्नुते प्राप्नोति । दीर्घस्त्वाधिक्यार्थः ।

इति पृष्टः सन् ब्रह्मा प्रोवाचेति ग्राह्यम् । तत्राज्ञानिनो ब्रह्म नैवाप्नुवन्ति । 'तमेवं विद्वानमृत इह भवति' इत्यादिवचनविरोधात् । तस्मात् ज्ञानिन एव ब्रह्म प्राप्नुवन्ति । तत्रापि अखिला अपि ज्ञानिनो ब्रह्माप्नुवन्ति । न केचि-देव । अन्यथा 'अनियमः सर्वेषाम्' (ब्र.सू. ३.३.३२) 'न कश्चिद् ब्रह्मवित् सृतिमनुभवति' (ब्र.सू.भा. ३.३.३२) इत्यादि प्रमाणविरोधात् । तत्रापि सर्वज्ञानिनो न सम्यक् ब्रह्म समाप्नुयुः किन्तु सम्यक् प्राप्तिर्विरिञ्चस्यैव सर्वदा । अन्येषां तारतम्येन तत्प्राप्तिरित्यभिप्रायेण समासेनोत्तरमाह- उ इर्ति ॥ कश्चिदेव सम्यक् तदाप्नुयादिति यदुक्तं तत् उ तथैवेत्यर्थः । कश्चित्समश्नुता इत्येतद्वाक्यानन्तरमेवोक्तत्वादुकार उक्ताभिप्रायक इति ज्ञातव्यम् ॥ १३ ॥

**सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ॥ १४ ॥**

एवं समासेनोत्तरमुक्त्वा अज्ञो नैवेतदाप्नोति ज्ञान्येवैतदाप्नुते तत्रापि कश्चिदेव सम्यक् अश्नुत इत्येतद्विस्तरेण 'यदा ह्येवैषः' इत्यादिना वक्तुं ब्रह्मावाप्तिरूपो मोक्षः तावत्तत्प्रसादादेव भवति । प्रसादश्च स्वातन्त्र्यादिरूपमाहात्म्यज्ञानसाध्य इत्याशयेनाधिकारिणो मोक्षसाधनीभूतप्रसादोत्पादनाय ज्ञातव्यतया सृष्टिकारणत्वादिरूपमाहात्म्यमुच्यते उत्तरप्रकरणेन । यद्वा ज्ञान्येवैतदाप्नुत इत्युक्तम् । तत्र ब्रह्मज्ञानं नाम कीदृशं विवक्षितमिति शङ्कायां

जगत्स्रष्टृत्वतत्प्रवेष्टृत्वसर्वदेवादिभयप्रदत्वमुक्तिप्रदत्वादिना रूपेण ज्ञानमेव ब्रह्मज्ञानं विवक्षितमित्याशयेन ब्रह्मणःसृष्टिकारणत्वादिरूपं माहात्म्यमुच्यते उत्तरप्रकरणेन। तत्र ब्रह्मणस्सृष्टिकारणत्वं नोपादानत्वेन। किन्तु कुलालादिवत् निमित्ततयैव इत्यभिप्रेत्य सृष्ट्यपेक्षया पूर्वभाविनं व्यापारमाह- **सोऽकामयतेत्यादिना**॥ सः प्रलयकालगो नारायणोऽकामयत। कामनाप्रकारमेवाह- **बहुः स्यामिति**॥ अहमादौ प्रजायेय वासुदेवादिरूपेण प्रादुर्भवानि। नियम्यं जगच्च स्यात्। तदनन्तरं त्यदादिशब्दवाच्यः श्रीब्रह्मादिजगन्नियामकतयाऽहं बहुरूपः स्याम् इत्यकामयत। एवं कामनानन्तरं स प्रलयकालगो नारायणस्तपोऽतप्यत। ज्ञानात्मकं तपश्चकार। स्वोदरस्थं जगद्दर्शेति यावत्। स तपस्तप्त्वा स्वोदरस्थं जगद् दृष्ट्वा वासुदेवादिरूपोऽभवदिति वक्तव्यम्। 'इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजमुक्तिपदप्रदाता' इत्यादिवचनात्। अनन्तरं यदिदं किञ्चित् जगत्सत्त्यदादिशब्दवाच्यं तदिदं सर्वमसृजत। वासुदेवादिरूपेण स्वोदरात् बहिर्निष्कास्य वियदधिकरणव्युत्पादितावान्तरविशेषवदकरोदित्यर्थः। तत्सृष्ट्वा तन्नियामकतया स्वयमप्यनिरुद्धादिबहुरूपो भूत्वा सृष्टं तदेव जगदनुप्राविशत्। तत्सत्त्यदादिशब्दवाच्यं जगदनुप्रविश्य स्वयमपि सच्चत्यच्चाभवत्। स्वयमपि सत्त्यदादिशब्दवाच्योऽभवदित्यर्थः। तत्रत्यदनिरुक्तनिलयनविज्ञानसत्यशब्दैः प्रकृतिचतुर्मुखप्राणाख्यं जगदुच्यते। तत्रस्थो हरिस्ततत्वे सति नियामकत्ववाच्यत्वसर्वाधारत्वसर्वविज्ञानसाधुगुणस्वरूपत्वनिमित्तैः प्रकृत्यादिगततत्त्वादिप्रेरकतया मुख्यतस्त्यदादिशब्दवाच्योऽभवत्। प्रकृत्यादित्रितयभिन्नं जगदवसादनात् सदित्युच्यते। सुवाच्यत्वान्निरुक्तम्। दौर्बल्येन सर्वाधारत्वाभावादनिलयनम्। असर्वज्ञत्वादविज्ञानम्। असाधुत्वादनृतम्। ऋतशब्दपर्यायस्य सत्यशब्दस्य साधुत्वार्थकत्वात्। यद्वा अनेन चेष्टकेन हरिणा ऋतत्वात् गतत्वात् प्रविष्टत्वादनृतम्। अवसादनादिकर्तृत्वात् तदन्तर्गतो

हरिरेव मुख्यतस्तच्छब्दवाच्योऽभवदित्यर्थः । यथोक्तमनुव्याख्याने- 'सच्चत्यच्चाभवदिति नास्य विश्वत्वमुच्यते । जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते' (ब्र.सू.अनु. १.४.२९, श्लो. ७५) इति । एवं सर्वत्र स्थितस्य हरेः न तत्प्रयुक्तलेपोऽस्तीत्याह- **सत्यमभवदिति** ।। सर्वत्राऽस्थितोऽपि हरिः सत्यं साधुगुणस्वरूपः मङ्गलस्वरूप एवाभवत् । न तत्प्रयुक्तलेपवानित्यर्थः । नन्ववसादसुवाच्यत्वदौर्बल्याङ्गस्यसाधुतानाममङ्गलत्वात् तन्निमित्तक-सदादिशब्दवाच्यत्वं कथं युक्तमित्यत आह- **यदिदं किञ्च तत्सत्यमित्याचक्षत इति** ।। सन्निरुक्तादिशब्देन यदिदं किञ्च भाषितं अवसादनादिकर्तृत्वं तत्सर्वं सत्यं साधु मङ्गलरूपमेवेत्याचक्षते विद्वांस इत्यर्थः । अवसादाद्यधिकरणत्व-स्यैवासाधुत्वात्तस्य चास्माभिरनभिप्रेतत्वादिति भावः । यथोक्तं 'स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः' (ब्र.सू.अनु. १.४.३, श्लो. ९) इति । नन्वत्र 'सच्चत्यच्चाभवत्' इति वचनात् ब्रह्मणोऽवसादनकर्तृत्व-तत्त्वनियामकत्वादिगुणजातं सादीति प्राप्नोति । तच्च प्रमाणविरुद्धम् । अतः कथं अभवदिति प्रयोग इति चेत् अस्त्यत्र सम्प्रदायविशेषः । ब्रह्म मूर्तामूर्तात्मकं विश्वं सृष्ट्वा तत्प्रेरकत्वेन नानारूपैस्तदेव विश्वं प्रविश्य प्राक् सृष्टेरुपदेष्टृणां उपदेश्यानां च शरीरेन्द्रियवतामभावादप्रतीतगुणकं सत्, अथेदानीमुपदेष्टृणा-मुपदेश्यानां च शरीरेन्द्रियवत्त्वे सति प्रतीतगुणकं भवति । तदपेक्षयाऽभवदिति प्रयोग इति द्रष्टव्यम् । तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञानार्थेत्युक्तं भवति । यथोक्तं भगवत्पादैः । 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति' (म.ता.नि. १.५) इति । सोऽयं मे सृष्ट्यादिरूपो विहारः क्रीडा तनुभृतां योग्यानां स्वस्य स्वतन्त्रस्य मम ये भावाः धर्माः ततत्वादिगुणास्तेषां सम्भूतये ज्ञानाय भवतीति तदर्थः । यथोक्तमनुव्याख्याने- 'व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम् । भवेदभवदित्यस्मात्प्रयोगश्चात्र युज्यते' (ब्र.सू. १.४.२९, श्लो. ७८) इति ।। १४ ।।

**तदप्येष श्लोको भवति । असद्वा इदमग्र आसीत् । ततो वै सदजायत ।। तदात्मानꣳ स्वयमकुरुत । तस्मात्तत् सुकृतमुच्यत इति । यद्वै तत्सुकृतम् । रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति । कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्द याति ।। १५ ।।**

पूर्वं प्रलयकालगो नारायणो वासुदेवादिरूपेण प्रजायेयेति कामनां कृत्वा वासुदेवो भूत्वा जगत्ससर्जेत्युक्तम् । तत्र सम्मतितया श्लोकमुदाहरति ब्रह्मा- **तदपीति** ।। तदपि तत्रापि नारायणस्य वासुदेवादिरूपेण भवने एषः वक्ष्यमाणः श्लोको भवति । तं श्लोकं पठति- **असद्वेति** ।। इदमग्रे अस्य जगतोऽग्रे प्रलय इति यावत् । असद्वा अनासाद्यत्वात् अपरिच्छिन्नत्वेन केनाप्यप्राप्यत्वात् असन्नामकनारायण एव आसीत् । ततो नारायणात् सत् ज्ञानि- प्राप्यत्वात्सन्नामा वासुदेवोऽजायत । तद्रूपं व्यक्तमभवत् । तस्यैव वासुदेवरूपस्य सुकृतमिति नामान्तरं वक्तुं तत्र निमित्तमाह- **तदिति** ।। तत् वासुदेवरूपं आत्मानं स्वात्मानं स्वयं स्वेच्छयैव सङ्कर्षणादिरूपेणाकुरुत । यस्मात्तस्मादेव हेतोस्तत् वासुदेवरूपं सुकृतमित्युच्यते । सु सम्यक् सङ्कर्षणाद्यात्मना स्वस्वरूपं कृतमिति व्युत्पत्त्येत्यर्थः । इति श्लोको भवतीति सम्बन्धः । यद्वैतत्सुकृतं सुकृतनामकं वासुदेवरूपं सः रसः रसानन्दः रसशब्दो हि वरत्ववाची । 'रसः सारो वरश्च' इत्यभिधानात् । तथा च रसः आनन्दो वरानन्दः । आनन्दस्य वरत्वं नाम महत्वं पूर्णत्वमिति यावत् । तथा च पूर्णानन्द इत्यर्थः । यद्वा यद्वैतत्सुकृतं सः तदीयः आनन्दो रसो वरः पूर्ण इत्यर्थः । ननु भगवतः पूर्णानन्दत्वे किं मानमित्याशङ्क्य मुक्तानां सुखकारणत्वादयं पूर्णानन्द इत्याह- **रसमिति** ।। हि यस्माद्रसं पूर्णानन्दमेनं वासुदेवं लब्ध्वैव प्राप्यैव अयं मुक्त आनन्दी भवति स्वयोग्यानन्दपूर्णो भवति । अन्यथा तन्न स्यात् । नहि

दुःखिनं प्राप्तस्यानन्दो दृश्यत इत्यर्थः । तथाचायं वासुदेवः पूर्णानन्दो न स्यात् यदि तर्हि तं प्राप्तो मुक्तोऽपि पूर्णानन्दो न स्यात् । लोके दुःखिनं प्राप्तस्यानन्दादर्शनात् । भवति च मुक्तः पूर्णानन्दः । 'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन' इति वचनात् । अतः तत्प्राप्यो वासदेवोऽपि पूर्णानन्द इति सिद्ध्यतीति भावः । लोकचेष्टकत्वात् अन्यथानुपपत्तिरूपयुक्त्याऽपि भगवान् वासुदेवः पूर्णानन्द इत्याह - **को ह्येवान्यादिति** ।। आसमन्तात्काशनात् दीप्तत्वादाकाशनामा एषः भगवान् वासुदेवो यदि पूर्णानन्दो न स्यात् तदा प्रवृत्तौ कारणतया रोदनभोजनकण्टकोद्धारणादौ प्रसिद्धानां दुःखोद्रेकसुखरागदुःखद्वेषरूपाणामभावात् असौ न कञ्चित्प्रवर्तयेत् । न चेदेष प्रवर्तयेत् तदा कः पुमान् प्राण्यादन्याच्च न कोऽपि वैदिकीं लौकिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्याभावात् । प्राणिति चानिति सर्वो लोकोऽतस्तत्प्रवर्तको भवन् एष भगवान् केवलमुन्मत्तवदानन्दोद्रेकादेवेति वक्तव्यम् । कार्यानुगुणत्वाच्च कारणस्य महाप्रवृत्त्या महानन्द एव सिध्यतीत्यर्थः । तथा चैष भगवान् पूर्णानन्दो भवितुमर्हति प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वात् उन्मत्तवत् व्यतिरेकेणार्तवत् मुग्धवदिति साधनानुमानं द्रष्टव्यम् । अमुक्तानां ब्रह्माद्यखिललोकानामानन्दकारणत्वाच्चायं भगवान् पूर्णानन्द इत्याह- **एष ह्येवेति** ।। अखिलमिति शेषः । हि यस्माद् एष भगवान् अखिलं ब्रह्माद्यमुक्तजातम् । 'आनन्दयाति' अनन्दयति । दीर्घस्त्वाधिक्यार्थः । अतोऽयं भगवान् वासुदेवः आनन्दपूर्ण इत्यर्थः । स्वस्यैव तदभावे परस्मै तद्दानानुपपत्तेरिति भावः ।। १५ ।।

**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष**

**एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति। भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति ॥ १६ ॥**

'रसं ह्येवायं लब्ध्वानन्दी भवति' इत्यनेन 'आनन्दमेनं सम्प्राप्य मुक्तौ मोदेन्न चान्यथा' इत्युक्तम् । तत्प्राप्तौ किं साधनमिति शङ्कायां प्रतिष्ठितं ज्ञानमेवेत्याह- **यदा ह्येवैष इति** ॥ यदैव एषोऽधिकारी अदृश्ये अज्ञदृष्ट्यगोचरे अनात्म्ये आत्मन इदं आत्म्यं जीवसम्बन्ध्यल्पज्ञानाल्पसुखादिगुणजातं तद्रहिते अनिरुक्ते अनन्तगुणवत्त्वेन साकल्येन वेदाप्रतिपाद्ये अनिलयने न विद्यते अन्यो निलयनं आश्रयो यस्य सोऽनिलयनस्तस्मिन् अनिलयने निजाश्रयादपराश्रयरहिते एतस्मिन् हरौ तद्विषय इति यावत् ।

अभयं क्रियाविशेषणमेतत् । अभयं यथा भवति तथा अभयत्वेनेति यावत् । ज्ञानस्येति शेषः । प्रतिष्ठां ज्ञानस्य प्रकर्षेण स्थितिं विन्दते लभते निर्भयतया भगवद्विषयकज्ञानी भवति । अपरोक्षज्ञानी भवतीति यावत् । अथ तदा सोऽधिकारी प्रसादद्वारा अभयं हरिं गतः प्राप्तो भवति मुक्तो भवतीत्यर्थः । हिशब्देन ज्ञानप्रसादयोः प्रसादमोक्षयोश्च साध्यसाधनभावो ज्ञानी प्रियतमः । 'यस्य प्रसादात्' इत्यादिप्रमाणप्रसिद्ध इत्याचष्टे । एवं भगवद्विषयक सम्यग्ज्ञानेनैव मोक्षमभिधाय विपरीतज्ञानिनोऽनर्थमाह- **यदेति** ॥ यदा यदि एषोऽधिकारी उदरम्= 'अः' विष्णुः येभ्यः जीवेभ्यः 'उत्' उच्चः उत्कृष्टः ते जीवसङ्घाः उदाः तेषु 'रः' ऋ-गताविति धातोः गतः स्थित उदरस्तं उदरं जीवगतमित्यर्थः । जीवेषु युगपदनेकस्थानेषु भेददर्शनात् तद्दृष्टान्तेन तादृशं अन्तरं भेदं एतस्मिन् परे विष्णौ विश्वतैजसादि-भगवद्रूपसमुदायेऽपि युगपत् दक्षिणाक्ष्यादिस्थानभेदेन करोति, अनेकार्थ-

त्वाद्धातूनां जानाति अनुमिनोतीति यावत् । यद्वा उदरं उक्तरीत्या जीवगतं अन्तरं विष्णुप्रतियोगिकं भेदं एतस्मिन् विष्णौ कुरुते रामकृष्णादिरूपे विष्णावेव विष्णुप्रतियोगिकं भेदं जानातीत्यर्थः । अथ तर्हि तस्य भयं महद्भयमनुत्थानं तम आख्यं महाभयङ्करस्थानं भवतीत्यर्थः । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र.सू. ३.२.११) 'न भेदादिति चेन्न प्रत्येकमतद्वचनात्' (ब्र.सू. ३.२.१२) 'ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते' 'प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह' (भाग. १.९.४९) इत्यादिवचनविरुद्धत्वेन भगवद्रूपेषु भेदज्ञानं तावन्मिथ्याज्ञानम् । मिथ्याज्ञानिनश्च 'अन्धन्तमःप्रविशन्ति येऽविद्यामुपासते ।' (ईश. ९) 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम्' (ई.भा. ९) इत्यादिवचनात् अन्धन्तमःप्राप्तिर्भवतीति प्रसिद्धमिति हिशब्दार्थः । प्रकृतस्यैव परब्रह्मणो विद्वदविदुषोर्भयप्रदत्वरूपं महिमान्तरमाह- **तत्त्वेवेति** ।। यद्विषयकसम्यग्ज्ञानेन मोक्षो यद्विषयकमिथ्याज्ञानेनानर्थस्तदेव विदुषो वाय्वग्नीन्द्रादिदेवजातस्य यावन्मुक्ति भयं भयप्रदं भवति स्वाज्ञाया अकरण इत्यर्थः । भये स्वल्पत्वरूपविशेषसूचकस्तुशब्दः । नाविद्वद्वन्महदित्यर्थः । अमन्वानोऽपि द्विविधः । सज्जन एवोपदेष्टृभावप्रयुक्ताज्ञानवान् त्रैविद्यसंज्ञक एकः । मिथ्याज्ञानी चापरः । तत्राद्यस्यामन्वानस्य तदेव ब्रह्म भयं संसारे परिवृत्तिलक्षणभयप्रदं भवति । भये मिथ्याज्ञानिभयापेक्षया स्वल्पत्वरूपविशेषद्योतकोऽत्र तुशब्दः। तथा अमन्वानस्य मिथ्याज्ञानिनोऽपि तदेव ब्रह्म भयकृत् तमआख्यमहाभयकृत् भवति । तस्मिन् भये अनुत्थानरूपविशेषसूचनाय तुशब्दः । यथोक्तं भाष्ये- 'तु शब्दोऽनुत्थानवाचि' इति । तत्वे भयं विदुष इत्युक्तार्थे सम्मतितया श्लोकमुदाहरति - **तदपीति** ।। तत्रापि ब्रह्मविदुषां भयप्रदमित्युक्तार्थेऽपि एष वक्ष्यमाणः श्लोको भवति । तमेव श्लोकं पठति-**भीषेति** ।। भीट्शब्दस्य तृतीयैकवचनं भीषेति । अस्मादिति पञ्चमी षष्ठ्यर्थे । अस्य

भगवतो भीषा भयेन वातो भूतवाय्वभिमानी प्रवहः 'पवते' पव शुद्धौ । तृणपर्णादिसम्मार्जनेन भूशुद्धिं करोतीत्यर्थः । भीषोदेति सूर्यः । अस्मादित्यनुवर्तते । उदितो भूत्वा ध्वान्तं विनाश्य पदार्थान् प्रकाशयतीति ग्राह्यम् । अग्निश्चेन्द्रश्चेत्युभौ पचनवर्षणरूपस्वव्यापारं कुरुत इति शेषः । अस्य भीषा पञ्चमः पञ्चत्वसङ्ख्यापूरको मृत्युर्यमः प्रजासंयमनादिरूपे स्वव्यापारे धावति अतीव तत्र जागरूकस्तिष्ठतीत्यर्थः । इदमुपलक्षणम् । एवं सर्वे देवाः अस्य भीषैव स्वव्यापारान् कुर्वन्तीति ग्राह्यम् । इति श्लोको भवतीति सम्बन्धः ॥१६॥

## उपनिषत्

(मुक्तावानन्दतारतम्यमस्तीति निरूपणम्)

**सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधु युवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ॥ १७ ॥**

## भाष्यम्

'................विदुषां नियमेन तु।
स्यादेव मोक्षस्तत्रापि ह्यानन्दस्य विचित्रता।
यस्तु साधुगुणैर्युक्तस्तस्यैवाप्यखिला मही।
त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः॥

अधीतिफलपूर्णत्वादाध्यायक इतीरितः ।
स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः ॥
एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।
तस्मात् शतगुणानन्दाः गन्धर्वा मानुषात्मकाः ।
मुक्त्या श्रुतिफलं प्रप्ताः ततः कामाहतास्तथा ॥' १७ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः** ॥ सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्ति । तत्रापि सम्यक् प्राप्तिर्ब्रह्मण एव अन्येषां तु तारतम्येनेति उकारेण समासतः कथितमेव प्रश्नोत्तरं विस्तारेण मुक्तानन्दतारतम्यकथनपूर्वकं वक्तुं सैषानन्दस्येत्यादिको ग्रन्थः । तं व्याख्यातुमाह- **विदुषामिति** ॥ सैषेत्यादि व्याचष्टे- **तत्रापीति** ॥ मोक्षेऽपीत्यर्थः । विचित्रता तरतमभाववत्तेत्यर्थः । युवा स्यादित्यादिकं व्याचष्टे- **यस्त्वित्यादिना** ॥ साधुयुवन्शब्दार्थः साधुगुणैर्युक्त इति । निर्दुष्टत्वं साधुशब्दार्थः । तथा च दुःखसम्भिन्नत्वाद्यनित्यत्वादिदोषशून्याः ये आनन्दाद्याः गुणास्तैर्युक्त इत्यर्थः । यद्यपि 'साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः' इत्यनुव्याख्याने व्याख्यातम् । तथाऽपि इदं व्याख्यानान्तरमित्यदोषः । तृतीयान्ते साधुशब्दे उपपदे 'यू मिश्रण' इत्यस्मादन्येभ्योऽपि दृश्यत इति कनिप्प्रत्यये कृते साधुयुवन्निति प्रातिपदिकं सिध्यति ।

यद्वा 'युजियोगे' इत्यस्मात्कनिप्प्रत्यये सतीदं रूपम् । दृशिग्रहणसामर्थ्याद्धातोरन्तलोपो ज्ञातव्यः । ननु 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्' इति वित्तपरिपूर्णपृथिवीपतित्वमुच्यमानं कथं मुक्तस्य युज्यते इत्यत आह- **तस्यैवेति** ॥ यस्तु साधुगुणैर्युक्तो मुक्तस्तस्यैव मुक्त्यपेक्षया पूर्वं संसारे अखिला मही अधीनतया तिष्ठतीत्यर्थः । मुक्तामुक्तक्षितिपविवक्षया हि युवास्यादित्यादिकमारब्धम् । तत्र युवा स्यादित्यादिना मुक्तं प्रतिपाद्य,

अमुक्तविवक्षया तस्येत्यादिवाक्यं प्रवृत्तं यतोऽतो युज्यत इति भावः । यथोक्तमनुव्याख्याने- 'तस्येयं पृथिवीत्यादि पूर्वभावव्यपेक्षया' इति । नन्वेवं युवा स्यादित्यादेर्मुक्तामुक्तविषयकत्वाङ्गीकृतावेकविषयताप्रतीतिविरोध इति चेन्न । एक एव हि चेतनो युवादिशब्दैः प्रतिपाद्यते । तस्य चावस्थाभेदेन विशेषणानि व्यवस्थाप्यन्ते । तस्मादेकविषयताप्रतिभासो नानुपपन्नः । अत एवानुव्याख्यानेऽमुक्तव्यपेक्षयेति वक्तव्ये पूर्वभावशब्दः प्रयुक्तः । तेन पूर्वावस्थावाचिनोक्ताभिप्रायसूचनादिति अवगन्तव्यम् । 'अत एव चक्रवर्ती 'चक्रं राष्ट्रे सुदर्शने । आज्ञायां समुदाये च' इत्यभिधानात् चक्रं राष्ट्रं यस्य चक्रे आज्ञायां वर्तते स चक्रवर्ती । आध्यायकशब्दार्थमाह- **यदेति** ॥ तदेति शेषः । तु शब्द एवार्थे । अधीतिरध्ययनम् । अध्यायशब्दो यद्यपि आङ्अधिपूर्वात् इङ् अध्ययन इत्यस्मात् ण्वुल्प्रत्यये सति निष्पन्नः सम्यगध्ययनस्य कर्तारमाह । तथापि अत्र पुरुषार्थप्रसङ्गादध्ययनमात्रस्य चापुरुषार्थत्वादध्ययनफलप्राप्तेर्लक्षको वर्णनीयः । अध्ययनफलं च तेन मुक्तेनैव पूर्णं प्राप्तं मुक्तेरेव तत्फलत्वात् । तेन कारणेन यदा संसृतेर्लिङ्ग-शरीरान्मुक्तस्तदैवाध्यायक इतीरित इत्यर्थः । 'युवा स्यात्' इत्यत्र युवशब्दार्थमाह- **स एवेति** ॥ संसृतेर्मुक्त एव 'यु मिश्रणे' इत्यस्मात् क्विपि निष्पन्नस्य यु धातोरर्थो युक्त इति । योग्यतया विष्णुनेत्यस्य लाभः । वाधात्वर्थ उक्तो गच्छतीति । 'वा गतिगन्धनयोः' इति धातोः । तथा च भगवत्सामीप्य-लक्षणमोक्षवान् युवेत्युच्यते इत्युक्तं भवति । साधु युवन् शब्दादप्यतिशयेन युवशब्दो मुक्तस्य ज्ञापक इति भावेन क्रममुल्लङ्घ्य पश्चाद्व्याख्यातः ।

यद्यपि 'यौवनं नित्यमेतस्य मुक्तस्येति युवा स च' इति अनुव्याख्याने व्याख्यातम् । तथापीदं व्याख्यानान्तरमित्यवगन्तव्यम् । 'स एको मानुष आनन्द' इत्यस्यार्थमाह- **एकानन्देति** ॥ 'यदा पूर्वं चक्रवर्तित्वावस्थायां

सर्वभोगसम्पन्नोऽभूत् सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः' इति बृहदारण्यवाक्यात् । तदा यावानानन्दोऽस्ति अभिव्यक्ततावदानन्दस्वरूपो मुक्त इत्यर्थः । स सर्वोऽप्यानन्द एकत्वेन विवक्ष्यते । उत्तरत्र शतगुणानन्दादिगणनानुकूलत्वेनेत्याशयेन एकानन्दस्वरूपमित्युक्तमिति ज्ञातव्यम् । अत्र मानुषो मुक्तः क्षितिपः तदवरो मनुष्योत्तमो नोक्तः सोऽत्र ग्राह्यः । 'अन्येभ्योऽपि विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् । मुक्तानां हि शतोद्रिक्तः' इति बृहदारण्यकभाष्ये उक्तत्वात् । तथा च स क्षितिपानन्दो वस्तुगत्या विचार्यमाणो मनुष्योत्तमानामानन्दापेक्षया शतगुणित एवेति ज्ञातव्यम् । शतोद्रिक्त इति बृहद्भाष्योक्तेः । 'ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः' इति वाक्यं व्याचष्टे- **तस्मादिति** ।। अत्र गुणशब्दो गणनापरः । तथा चाभिव्यक्तक्षितिपानन्दापेक्षया शतगुणितानन्दवन्त इत्यर्थः ।।

श्रोत्रियस्येति वाक्यं धर्म्यन्तरसमुच्चायकचशब्दबलादेकवचनप्रयोगाच्च प्रकृतमुक्तमनुष्यगन्धर्वभिन्नविरक्तपुरुषपरमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **मुक्त्येति** ।। मुक्तत्वेनेति यावत् । सम्पूर्णश्रुतिफलं प्राप्त एव हि श्रोत्रियः । स च मुक्त एव नान्यः । मुक्तेरेव तत्फलत्वादित्यर्थः । ततो मुक्तत्वादेव । कामाहताः अवाप्तकामत्वेन कामकृतोपद्रवशून्या इत्यर्थः । तथा च चशब्दः प्रकृतानां मुक्तमनुष्यगन्धर्वाणां श्रोत्रियत्वादिविशेषणसमुच्चायक एवाभिमतो न धर्म्यन्तरसमुच्चायकः । एकवचनं बहुवचनार्थकमभिप्रेतं श्रुतिफलं प्राप्ता इत्याद्युक्तेः । तथा च श्रोत्रियाणामकामहतानां चेति वाक्यवृत्तिरिति न दोष इति भावः । एवमेवोत्तरत्रापि श्रोत्रियस्य चेत्यादिवाक्यं मुक्तदेवगन्धर्वादिविषयं प्रतिपत्तव्यम् । ननु 'ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य' इत्येतदेकवाक्यतया व्याख्यातम् । तथात्वे अनुव्याख्यानविरोधः । तथाहि । श्रोत्रियस्येति वाक्यस्य प्रकृतादन्यो विषय

इति चशब्देनैवावगम्यते। चशब्दस्त्वयं समुच्चयस्य द्योतकः प्रतीयते। देवदत्तो धनिको यज्ञदत्तश्चेति यथा। नचैकविषयतायामेवं युज्यते। न हि भवति वसिष्ठो ब्रह्मिष्ठो अरुन्धतीपतिश्च तथेति प्रयोगः। विशेषणसमुच्चयः किं न स्यादिति चेन्न। मुक्तरूपधर्म्यन्तरसमुच्चयरूपमुख्यार्थे बाधकाभावेन त्यागायोगात्। वचनव्यत्ययश्चैकवाक्यतायां स्फुट एव। तथा च स एक इति वाक्येन संसारिक्षितिपानन्दाच्छतगुणः संसारिमनुष्यगन्धर्वानन्द इत्युक्त्या श्रोत्रियस्य चेति वाक्येन मुक्तक्षितिपानन्दान्मुक्तमनुष्यगन्धर्वस्य शतगुण आनन्द उच्यते। एवमुत्तरत्रापि। यथोक्तमनुव्याख्याने (ब्र.सू.अनु. ३.४.३, श्लो. ३३.३४) -

'तच्च चशब्देनैव गम्यते।
स एक इति संसारगतमुक्त्वा सुखं पुनः।
श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम्।
संसारगाच्च संसारगतस्यैव शताधिकम्।
मुक्तान्मुक्तस्य' इति।

तथा च कथं मुक्तमात्रपरतया व्याख्यानमिति चेत्, उच्यते। अयमभिप्रायो भाष्यकारस्य- 'स एकः' 'श्रोत्रियस्य च' इति वाक्यद्वयमुक्तरीत्या भिन्नविषयक-मेव। तथा सति मुक्तामुक्तयोरुभयोरपि तारतम्योक्तिलाभात् वाक्य-भेदज्ञापकचशब्दसद्भावाच्च। एकवाक्यताश्रद्धायामपि मुक्तमात्रविषय-मस्तु। नामुक्तविषयम्। तत्र श्रोत्रियत्वादीनां मुख्यतोऽसम्भवेनानुप-पत्तीनां बाहुल्यात्। मुक्तमात्रपरत्वे तु वचनव्यत्ययमात्रस्यैवानुसरणीयत्वेन तदभावात्। प्रमाणेन मुक्तपरतया व्याख्यातत्वाच्चेति विरोधपरिहारो द्रष्टव्यः ॥ १७ ॥

## उपनिषत्

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ॥ १८ ॥

## भाष्यम्

'तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ।
ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च ॥
शताधिका हि पितरस्तेभ्यः आजानदेवताः ।
अनाख्याता देवतास्तु जाता देवकुले च याः ॥
आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः ।' १८ ॥

## पदार्थदीपिका

'ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः' इति वाक्यं व्याचष्टे- **तेभ्य इति** ॥ ये देवैर्मुख्यतः स्वमुखत एव प्रेष्याः ते देवगन्धर्वाः । तेभ्यो मुक्तमनुष्यगन्धर्वेभ्यः शतगुणितानन्दा इत्यर्थः । मनुष्यगन्धर्वाणामपि देवप्रेष्यत्वान्मुख्यत इत्युक्तम् । तथा च देवगन्धर्वद्वारेणैव देवप्रेष्याः । न देवगन्धर्ववत्स्वमुखेनैवेत्यर्थः । यथोक्तम्- ''देवैः स्वमुखतःप्रेष्या देवगन्धर्वशब्दिताः । तद्द्वारा प्रेषणीया ये गन्धर्वा मानुषास्तु ते' इति । 'ते ये

शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणाम्' इत्यादिवाक्यं व्याचष्टे- **मुक्तेभ्य इति** ॥ 'ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आजानजानाम्' इत्यादि वाक्यं व्याचष्टे- **तेभ्य इति** ॥ शताधिका इति वर्तते । तासां लक्षणमाह- **अनाख्याता इति** ॥ नामविशेषेण प्रसिद्धा इत्यर्थः । 'अजानदेवता' आजानजदेवताः । 'ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानाम्' इत्यादि व्याचष्टे- **ताभ्य इति** ॥ अग्र्याः शताधिका इत्यर्थः ॥ १८ ॥

**ये कर्मणा देवानंपियन्ति । श्रोत्रियस्य चाऽकामंहतस्य । ते ये शतं कर्मदेवानां देवानांमानन्दाः । स एको देवानांमानन्दः । श्रोत्रियस्य चाऽकामंहतस्य ॥ ते ये शतं देवानांमानन्दाः । स एक इन्द्रंस्यानन्दः । श्रोत्रियस्य चाऽकामंहतस्य ॥ ते ये शतमिन्द्रंस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाऽकामंहतस्य ॥ ते ये शतं बृहस्पतेरानन्दाः ॥ १९ ॥**

## भाष्यम्

**बल्याद्याः अन्तराप्राप्तदेवताः कर्मदेवताः ॥**
**ताभ्यश्च तात्त्विका देवाः सृष्ट्यादौ देवतां गताः ।**
**तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुं राख्यत् पुरा ॥**
**तस्माद् बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः ॥ १९ ॥**

## पदार्थदीपिका

कर्मदेवताशब्दनिर्वचनपरं 'ये कर्मणा देवानपियन्ति' इति वाक्यं व्याचष्टे- **अन्तरेति** ॥ देवाः देवत्वोपेताः इत्यर्थः । तेषां भावो देवता । 'तस्य भावस्त्वतलौ' इति स्मरणात् । सृष्ट्यादौ न देवत्वं प्राप्ताः किन्तु अन्तरा

सृष्टिमध्य एव कर्मणा प्राप्तदेवत्वोपेता इत्यर्थः। एतादृशाः के इत्यतो बल्याद्याः इत्युदाहृतम्। बलिर्हि वामनाय यज्ञे कृत्स्नां महीं दत्वा तन्महिम्ना सावर्णिनाम्नि उत्तरमन्वन्तरे स्वर्गाधिपत्यं लब्धवान् इति पुराणेषु प्रसिद्धम्। एवमन्येष्वपि द्रष्टव्यम्। 'ते ये शतं कर्मदेवानामानन्दाः स एको देवानाम्' इत्यादिवाक्यं व्याचष्टे-**ताभ्य इति**॥ तात्त्विकाः तत्त्वाभिमानिनः पुष्करमारभ्य प्रवहान्ताः। अग्र्या इत्यनुवर्तते। देवतां देवत्वं गताः प्राप्ताः। 'ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः। ते ये शतमिन्द्रस्यानन्दः स एको बृहस्पतेरानन्दः' इत्यत्रेन्द्रबृहस्पतिशब्दाभ्यां प्रसिद्धेन्द्रबृहस्पत्योर्ग्रहणे इन्द्रानन्दापेक्षया बृहस्पत्यानन्दस्याधिक्यकथनं प्रमाणबाधितं स्यात्। तस्य ततो नीचत्वात्। अतो रूढिपरित्यागेन योगमङ्गीकृत्य इन्द्रशब्दवाच्यां देवतां दर्शयन् तद्वाक्यं व्याख्याति- **तेभ्य इति**॥ इन्दुं चन्द्रं रारयत् क्षयमनयत्। रीङ् क्षय इति धातोः। अश्विन्याद्याः दक्षपुत्रीः परित्यज्य रोहिण्यामेव चन्द्रे अत्यासक्ते सति दक्षेण बहुवारं बोधितोऽपि यदा अश्विन्याद्याः स्त्रीर्न जग्राह चन्द्रः। तदाऽतिकुपितो दक्षः 'कलाक्षयं प्राप्नुहि' इति शशापेति पौराणिकीं प्रसिद्धिं हिशब्देनाचष्टे। पुरा मुक्तेः पूर्वं वचनविपरिणामेन अग्र्य इत्यस्यानुवृत्तिरत्रोत्तरत्र च द्रष्टव्या। 'ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्द' इत्यत्र बृहस्पतिशब्देन देवगुरुग्रहणे तदानन्दस्येन्द्रशब्दोक्तदक्षानन्दादाधिक्यकथनं प्रमाणविरुद्धं प्रसज्यते। दक्षबृहस्पत्योः समत्वात् अतोऽत्रापि रूढिपरित्यागेन योगमङ्गीकृत्य बृहस्पतिशब्दप्रतिपाद्यं दर्शयन् तद्वाक्यं व्याख्याति- **तस्मादिति**॥ पुरन्दरस्य बृहस्पतिशब्दवाच्यत्वे निमित्तमुक्तं **महेन्द्रत्वादिति**। महेति बृहच्छब्दार्थः। इन्द्रेति पतिशब्दार्थः। अनेन बृहंश्चासौ पतिश्चेति बृहस्पतिरिति निर्वचनं सूचितं भवति। तद्बृहतोः करपत्योश्चोरदेवतयोः 'समासे सुड्तलोपश्च' इति वचनात् सुडागमे तकारलोपे बृहस्पतिरिति युक्तम्॥ १९॥

## उपनिषत्

स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ २० ॥

## भाष्यम्

तस्मात् प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता ॥
तस्माद् ब्रह्मा शतगुणो मुक्त इत्येष निर्णयः ।
यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके ॥
सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः ।
अथवा सहस्रगुणिता अनन्तगुणितास्तथा ॥

## पदार्थदीपिका

'ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः' इत्यत्र यदि प्रजापतिर्दक्षस्तर्हि तस्येन्द्रपदेनोक्तस्य बृहस्पतिशब्दोक्तेन्द्रावरस्य तदानन्दादधिकानन्दवत्त्वं कथ्यमानं विरुद्धं स्यात् । यदि चतुर्मुखस्तर्हि 'ते ये शतं प्रजापतेरानन्दाः' स एको ब्रह्मणआनन्द इत्येतदयुक्तं स्यात् । स्वापेक्षया स्वस्यैव शतगुणानन्दत्वोक्तेर्बाधितत्वादतोऽत्रापि रूढित्यागेन योगमङ्गीकृत्य प्रजापतिशब्दप्रतिपाद्यं दर्शयंस्तद्वाक्यं व्याचष्टे- **तस्मादिति** ॥ प्रजा प्रजननमिति यावत् । तत्पतिस्तन्नियामक इति पदार्थमभिप्रेत्योक्तं प्रजननेशितेति । 'माशिश्नदेवा अपि गुर्ऋतं नः । घ्नन् शिश्नदेवां अभिवर्पसा भूत्' इत्यादि श्रुत्या रुद्रस्य लिङ्गदेवतात्वप्रसिद्धेः । प्रजननसाधनस्य च रेतसो लिङ्गाश्रितत्वात् रुद्रः प्रजननेशितेति द्रष्टव्यमिति सम्प्रदायः । मुक्तौ रुद्रस्याभावाच्छेषोऽत्र रुद्रशब्देन ग्राह्यः । यथोक्तम्- 'उमागिरीशाविति

भारतीराविति स्म वाग्वेदगता ब्रवीति । अहीन्द्रपत्नीमहिषं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले । त एव यत्तत्पदमाप्नुवन्ति' (ब्र.सू.अनु. ४.२.१६, श्लो. १२५) इति । 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति वाक्यं व्याचष्टे- **तस्मादिति** ॥ अत्र सरस्वत्यादिस्त्रीणां केषाञ्चिद्देवानां चानुक्तत्वात् शतशब्दो बहुत्ववचनो न दशदशकपरः । यथोक्तं श्रीमद्भारत-तात्पर्यनिर्णये- 'ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः पञ्चोत्तरैरपि यथाक्रमशः श्रुतिस्थाः । शब्दो बहुत्ववचनः शतमित्यतश्च श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता नं' (म.ता.नि. १.१६) इति । तस्माच्छान्दोग्यभाष्यानुसारेणैव निर्णयो द्रष्टव्यः । यथोक्तं सप्तमाध्याये- 'नामाभिमानिनी चोषा' इत्यारभ्य 'प्राण इत्युच्यते वायुः' इत्यन्तेन । उषाः स्वाहापर्जन्यमित्राग्निवरुणविधुप्रवहानि-रुद्धाहङ्कारिकप्राणेन्द्रोमारुद्रवाणीप्राणान् देवानुक्त्वा 'सर्वे त्वेते दशोत्तराः । पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धोऽनिलात्पञ्च-गुणाधिकः । पादोनो वरुणादग्निरध्यर्धोनः सो मतः । शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरः' (छां. ७.१) इत्युक्तम् । तथा च कर्माभिमानिनः पुष्करात् नामाभिमानिनी उषाः दशोत्तरा, नाम्नः स्वाहा दशोत्तरा, तस्याः पर्जन्यो द्विगुणोत्तरः, । ततो मित्रो द्विगुणः मित्रादग्निर्द्विगुणः, अग्नेर्वरुणः पादाधिकः, वरुणात्सोमः पादपादार्धतोऽधिकः सोमात्प्रवहो द्विगुणोत्तरः प्रवहादनिरुद्धः पञ्चगुणः, अनिरुद्धात्तैजसाहङ्कारिकप्राणो दशोत्तरः, तस्मात्पुरन्दरो दशोत्तरः, तस्मादुमा दशोत्तरा, उमायाः शिवो दशोत्तरः, शिवात्सरस्वती दशोत्तरा तस्याः मुख्यवायुः शतोत्तरः तदात्मकत्वाद्ब्रह्मा चेत्युक्तत्वेन सर्वत्र शतप्रयुक्ततारतम्यस्यानादरणीयत्वात् । अत एव शतादिसङ्ख्योक्तेः का गतिरित्याशङ्क्य 'सङ्ख्यान्यथात्वं यत्र स्यात्तत्रावेशविशेषतः । अवराणां गुणस्यापि परमीयत्वतस्तथा' इति शताधिकसङ्ख्योक्तेर्गतिरपि तत्रैवोक्तेत्यवगन्तव्यम् । अत्र 'सैषानन्दस्य'

इत्यादिना यत्पूर्वपूर्वस्मादुत्तरोत्तरस्यानन्दे शताधिकत्वमुक्तं तदिदं ज्ञानभक्त्यादिगुणानामप्युपलक्षणमित्याशयेनाह- **यथानन्द इति** ॥ उक्तेन क्रमेण क्षितिपमनुष्यगन्धर्वादिक्रमेण । ननु कचित्पूर्वपूर्वस्मादुत्तरोत्तरस्यानन्दः सहस्रगुणित इत्युच्यते । कचिच्चानन्तगुणित इति । अतस्तद्विरोध इत्यतः तदप्यनुमतमित्याह- **अथवेति** ॥

## भाष्यम्

**परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।**
**यथा दीपात् शतगुणाऽप्यग्निज्वाला न दीपवत् ॥**
**स्फुटीभवेत् यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।**
**यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ॥**
**उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।**
**प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः ।**
**अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तराः ॥' २० ॥**

## पदार्थदीपिका

ननु शतगुणे आनन्दादौ सहस्रगुणितत्वादिकं विरुद्धम् । अतः कथमङ्गीक्रियते इत्यत आह- **परिमाण इति** ॥ पूर्वपूर्वेषामानन्दापेक्षया उत्तरोत्तरेषामानन्दोऽत्रोक्तरीत्या शतगुणपरिमाण एव । यत्सहस्रगुणितत्वादिकमुक्तं तदुत्तरोत्तरानन्दानामतिस्फुटत्वापेक्षयैवेति न विरोध इति भावः। आनन्दस्फुटतावशादित्यत्रानन्दग्रहणमुपलक्षणम् । पूर्वपूर्वेषां ज्ञानापेक्षयोत्तरोत्तरेषां ज्ञाने परिमाणतः शतगुणितेऽपि स्फुटतावशादनन्तगुणितज्ञानवन्त इत्युपपद्यते इत्यादि द्रष्टव्यम् । अत्र ब्रह्माणमारभ्योमापर्यन्तं ज्ञाने अनन्तांशन्यूनत्वमेव । यथोक्तमनुव्याख्याने- 'उमा यावदनंतांशान् पूर्वदृष्टेभ्य एव तु । विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते' (ब्र.सू.अनु.

३.४., श्लो. ८७) इति। व्याख्यातं च सुधायाम् - 'पश्चादुक्ताः वाण्याद्याः उमापर्यन्तं पूर्वपूर्वदृष्टेभ्यः ब्रह्मादिदृष्टेभ्यः। चतुर्थी षष्ठ्यर्थे। दृष्टानां गुणानां अनन्तांशानेव वासुदेवस्य विशेषान् विचक्षते' इति। तथा चोमामारभ्य ब्रह्मपर्यन्तं ज्ञाने अनन्तांशाधिकत्वमेवेति यत्सुधानुव्याख्यानयोरुक्तं तदप्यनेन समाहितं भवति। उमापर्यन्तं यदनन्तांशन्यूनत्वमुक्तं तदत्रोक्तरीत्या पूर्वपूर्वज्ञानानामतिस्फुटत्वापेक्षयैव। एतदभिप्रायेणैवानन्तगुणितास्तथेत्युक्तमित्यवगन्तव्यम्। ननु 'उमा यावदनन्तांशान्' इति ग्रन्थस्वारस्येनोमाज्ञानपर्यन्तमनन्तांशन्यूनत्वज्ञाने वास्तवमेव विवक्षितम्। न स्फुटत्वप्रयुक्तम्। सैषानन्दस्य मीमांसा भवति' इत्यादिना शतगुणतारतम्यकथनस्यानन्दमात्रविषयतायाः स्पष्टमवगमादिति चेन्न। उमा यावदित्यस्योक्तरीत्या स्फुटत्वाभिप्रायेण सावकाशत्वात्। 'यथा नन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके। सर्वैर्गुणैश्शतगुणाः क्रमेणोक्तेन तेऽखिलाः' (तै.भा.) इत्यत्रोदाहृतस्पष्टनिरवकाशप्रमाणविरोधप्रसङ्गेन शतांशन्यूनतायाः आनन्दतारतम्योक्तिपरे 'सैषानन्दस्य' इत्यादावानन्दग्रहणस्य ज्ञानाद्युपलक्षकत्वात्। 'नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च। सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम्' इति भाष्योदाहृतप्रमाणविरोधाच्चेति। ब्रह्माणीज्ञानस्य ब्रह्मज्ञानापेक्षया अनन्तांशन्यूनत्वविषये ज्ञापकान्तराणि चास्मादाचार्यकृतसुधाटिप्पण्यां सावकाशतया व्याख्यातानीति। तत्रापि ब्रह्मज्ञानापेक्षया शतांशन्यूनत्वमेवावगन्तव्यम्। ननु स्फुटतायाः परिमाणविशेषाधीनत्वाच्छतगुणत्वरूपपरिमाणस्य क्षितिपानन्दादिकमारभ्य ब्रह्मानन्दादिपर्यन्तमपि साम्यात्तदधीना स्फुटताऽपि कथमुत्तरोत्तरानन्दादौ महती स्यादिति चेन्न। ज्ञाने परोक्षत्वापरोक्षत्ववत् स्फुटताऽपि ज्ञानानन्दादिगतस्वाभाविकविशेषरूपैव न परिमाणविशेषाधीना। यथोक्तं 'स्फुटत्वं च परोक्षत्वादिवज्ज्ञानगत एव कश्चन विशेषो न विषयोपाधिकः' इति। अन्यथा स्फुटतायाः

परिमाणविशेषाधीनत्वे दीपाच्छतगुणाप्यग्निज्वाला दीपवत्स्फुटा स्यात् । तथा सूर्यात् द्विगुणमुद्दीप्तस्याग्नेःसूर्यवत्स्फुटता स्यात् । तथा सूर्यमण्डलात् द्विगुणस्यापि चन्द्रमण्डलस्य सूर्यमण्डलवत्स्फुटता स्यात् । इष्टापत्तिरिति चेत्तत्राह- **यथेत्यादिना** ।। बहुलोऽपि सूर्यात् द्विगुणमुद्दीपितोऽपि न सूर्यवत् स्फुटीभवेदित्यनुवर्तते । सूर्यचन्द्रशब्दौ तन्मण्डलपरौ । ततः किमित्यत आह- **उत्तरेषामिति** ।। एवमित्यादौ योज्यम् । एवं तस्मात् स्फुटतायाः ज्ञानानन्दादि-गतस्वाभाविकविशेषत्वेन परिणामविशेषाधीनत्वाभावाऽदित्यर्थः । शतगुणपरिमाणे सर्वत्र समेऽपीति शेषः । गुणाः ज्ञानानन्दाद्याः । ननु सर्वेषां ज्ञानादौ स्फुटतैकप्रकारैव किं न स्यात् । सर्वेषामुत्तरोत्तरेषां गुणानामतिस्फुटत्वेऽवरगुणानां च तदभावे निमित्तविशेषादर्शनादित्यत आह - **प्रतिबिम्बा इति** ।। नरादयः मनुष्योत्तमादयः ।

'आभासकोऽस्य पवनः पवनस्य रुद्रः
शेषात्मको गरुड एव च शक्रकामौ ।
वीन्द्रेशयोस्तदपरे त्वनयोश्चतेषा-
मृष्यादयः क्रमश ऊनगुणाः शतांशात् ।
आभासिका त्वथ रमाऽस्य मरुत्स्वरूपात्
श्रेष्ठाप्यजात्तदनु गीः शिवतो वरिष्ठा ।
तस्या उमा विपतिनी च गिरस्तयोस्तु
शच्यादिकाः क्रमश एव यथा पुमांसः ।' (म.ता.नि. २.१४.१५)

इत्युक्तप्रकारेण पूर्वे नरादयो ब्रह्मान्तानां प्रतिबिम्बाः तदधीनास्तत्सदृशा-श्चेत्यर्थः । ते पूर्वे नरादयः अस्पष्टस्वरूपाः अस्पष्टज्ञानानन्दादिस्वरूपाः । स्फुटरूपाः स्फुटज्ञानानन्दादिरूपाः । तथा च सर्वेषां ज्ञानादौ स्फुटताया एकप्रकारत्वे बिम्बप्रतिबिम्बभावो न स्यादिति भावः ।। १७- २० ।।

## उपनिषत्

सैषाऽऽनन्दस्य मीमांꣳसा भवति । युवा स्यात्साधु युवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ॥ १७ ॥

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ॥ १८ ॥

ततश्चायमर्थः-

सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्ति । तत्रापि सम्यक्प्राप्तिः ब्रह्मण एव अन्येषां तारतम्येनेति उकारेण समासतः कथितमेव प्रश्नोत्तरं विस्तरेण मुक्तानन्दतारतम्यकथनपूर्वकं वक्तुमाह- **सैषानन्दस्येति** ॥ विदुषां नियमेन स्यादेव मोक्षस्तत्रापि मोक्षे सा प्रमाणप्रमिता एषा वक्ष्यमाणा आनन्दस्य मीमांसा आनन्दवैचित्र्यविषयको विचारः क्रियमाणो भवति । क्रियत इति यावत् । पूर्वं अमुक्त्यवस्थायां चरमजन्मनि वित्तस्य वित्तेन पूर्णेयं पृथिवी

यस्याधीना स्यात् । यः पूर्वं त्रेतायुगे वित्तपरिपूर्णपृथिवीपतिरिति यावत् । अतिशयेन सर्वभोगैः सम्पन्न इत्यपि ग्राह्यम् । 'सर्वैर्मानुषकैर्भोगैः सम्पन्नतमः' इति बृहदारण्यकोक्तेः । तथा च तदानीं तस्य महानन्दो भवतीति यावत् । यश्च लिङ्गभङ्गानन्तरं युवा स्यात् 'यु मिश्रणे' इतिधातोर्युशब्दो युक्तत्वार्थकः । 'वा गतिगन्धनयोः' इति धातोर्वातिर्गमनार्थः । योग्यतया विष्णुनेत्यस्य लाभः । तथा च विष्णुना युक्तः सन् गच्छतीति युवा । भगवत्सामीप्यलक्षणमोक्षवान् स्यादित्यर्थः । साधु युवा निर्दोषो हि साधुरित्युच्यते । तथा च साधुभिः दुःखसम्भिन्नत्वानित्यत्वादिदोषरहितैः आनन्दाद्यैर्गुणैर्युक्तः । आध्यायकः अधीति फलसम्पूर्णः आशिष्ठः आसम्यक् शं सुखमस्येत्या(शः)शीः अतिशयेना(शः)शीः आशिष्ठः । सम्यक्त्वं च ह्रासाभावादिकमेव । यथोक्तमनुव्याख्याने - 'निर्ह्रासानन्दसम्प्राप्त्या चाशिष्ठ इति गीयते' इति । दृढिष्ठः । अविकारो हि दृढिष्ठो नाम । तथा च स्थितस्यानन्यथा प्राप्तेरतिशयेन दृढो निर्विकारो दृढिष्ठः । यथोक्तम्- 'स्थितस्यानन्यथाप्राप्तेर्दृढिष्ठश्चोदित' इति । बलिष्ठः बलमस्यास्तीति बली अतिशयेन बली बलिष्ठः अतिशयश्च स्वाभाविकत्वं यथोक्तम्- 'बलिष्ठश्च स्वभावेन मुक्तो भवति केवलम्' इति ॥ तस्य मुक्तस्य पूर्वं चक्रवर्तित्वावस्थायां यावानानन्दोऽभूत् अभिव्यक्तस्तावानेवानन्दो मानुष आनन्द इत्युच्यते । अत्र मानुषशब्दः क्षितिपपरः । तदवरो मनुष्योत्तमोऽप्यत्र ग्राह्यः । 'अन्येभ्योऽपि विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् । मुक्तानां हि शतोद्रिक्तः' इति बृहद्भाष्ये कथितत्वात् । स च मौक्तः क्षितिपानन्दो वस्तुगत्या चतुर्गुणोपासकमुक्तमनुष्योत्तमानन्दापेक्षया शतगुण एवेति द्रष्टव्यम् । 'शतोद्रिक्त' इत्युक्तेः । उत्तरत्र शतगुणानन्दादिगणनायाः सम्यक् बुध्यारोहायाऽऽह- **स एक इति** ॥ सः क्षितिपानां यावानानन्दोऽस्ति मनुष्योत्तमानन्दाच्छतगुणस्तावान् सर्वोऽपि मिलित्वा एकः एकत्वेन विवक्षित इति योज्यमिति सम्प्रदायः । 'ते ये शतं

मानुषा आनन्दाः’ मनुष्योत्तमानन्दापेक्षया शतगुणाः ये क्षितिपानन्दाः सन्ति तेषां सर्वेषामप्यानन्दानां एकत्वं विवक्षित्वा एतादृशाः ये क्षितिपानां शत-सङ्ख्याकानन्दाः तत्समानः मनुष्यगन्धर्वाणामानन्दः । एकवचनं बहु-वचनार्थे । आनन्दा इत्यर्थः । क्षितिपानन्दाच्छतगुणो मानुषगन्धर्वाणामानन्द इति भावः । स एकः स क्षितिपानन्दात् शतगुणो यो मनुष्यगन्धर्वाणामानन्दः स सर्वोऽपि मिलित्वा पुनरेकत्वेन विवक्षितः । उत्तरत्र शतगुणानन्दादि-गणनानुकूलत्वेनेत्यर्थः । मनुष्यगन्धर्वाणाममुक्तत्वप्रतीतिवारणाय तान् विशिनष्टि- **श्रोत्रियस्य चेति** ।। एकवचनं बहुवचनार्थे । श्रोत्रियाणां सम्यक् श्रुतिफलं प्राप्तानां । अकामहतानां अवाप्तकामत्वेन कामकृतोपद्रवरहितानां मनुष्यगन्धर्वाणामित्यन्वयः । प्रकृतमुक्तमनुष्यगन्धर्वाणां श्रोत्रियत्वादिविशेषण-समुच्चयाकश्चशब्द इति ज्ञातव्यम् । यथोक्तं बृहद्भाष्ये- ‘च शब्दस्तु श्रोत्रियत्वादिगुणानां मुक्तौ समुच्चयार्थः’ इति । एवमेवोत्तरत्रापि योजना द्रष्टव्या ।। १७ ।।

देवगन्धर्वाणां ये देवैः स्वमुखत एव प्रेष्याः नान्यद्वारेण ते देवगन्धर्वा-स्तेषाम् । यथोक्तम्- ‘देवैः स्वमुखतः प्रेष्याः देवगन्धर्वसंज्ञिताः । तद्द्वारा प्रेष्यतां याताः गन्धर्वा मानुषास्तु ते’ इति । चिरलोकलोकानां पितरोऽनेके सन्ति । तत्रार्यमाद्युत्तमपित्रधिष्ठितो लोकः चिरलोक इत्युच्यते । चिरलोके विद्यमानत्वात् देवचिरपितरः इति तेषां प्रसिद्धिः । तथा च चिरलोक एव लोको येषां ते तथोक्तास्तेषाम् । मुक्तानामपि पितॄणां चिरलोकलोकत्वाभावात् तस्येयं पृथिवीत्यादिवत् पूर्वभावव्यपेक्षया इदं व्याख्येयम् । यद्वा श्रोत्रियत्वादिवदिदमपि पितॄणां मुक्तत्वज्ञापकमेव । तथा च नाशशून्यतया चिरलोको वैकुण्ठादिः स एव लोको येषां ते तथोक्तास्तेषामिति वा । ‘लुक् प्रकाशे’ इति धातोः चिरलोके वैकुण्ठादौ लोकानां स्वरूपाविर्भावेण

प्रकाशमानानामिति वा व्याख्येयमिति । प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोग इति न कश्चित्क्षुद्रोपद्रव इति ।

अजानजानां देवकुले उत्पन्नाः नामविशेषेणानाख्याता आजानजास्तेषाम् । १८ ॥

**ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाऽकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं बृहस्पतेरानन्दाः ॥ १९ ॥**

**स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ २० ॥**

कर्मदेवताशब्दं निर्वक्ति - **ये कर्मणेति** ॥ ये बल्याद्याः यज्ञे वामनाय महीदानादिरूपकर्मणा देवान् भावप्रधानो निर्देशः । देवत्वानि 'अपियन्ति' प्राप्नुवन्ति ते कर्मदेवा इत्युच्यन्ते । 'ये कर्मणा देवत्वमभिसम्पद्यन्ते' इति बृहदारण्यकोक्तेः । पूर्वभावव्यपेक्षयेदम् । तथा च 'ये कर्मणा देवानपियन्ति' बल्याद्याः तेषां कर्मदेवानाम् । 'देवानां' दिवु- क्रीडाविजिगीषाद्युतीत्यादिधातोः मोक्षे द्योतमानानां बल्यादीनामानन्द इत्यर्थः ॥

देवानां सृष्ट्यादावेव देवत्वं प्राप्तानां तत्वाभिमानिनां पुष्करमारभ्य प्रवहान्तानां देवानामित्यर्थः । तदानन्देष्वपि अवान्तरतारतम्यं प्रमाणान्तरादवसेयम् ॥

**इन्द्रस्येति** ।। इन्दुं चन्द्रं मुक्तेः पुर्वं रारयत् 'रीङ्- क्षये' इति धातोः क्षयमनयदिति हेतोरिन्द्रो दक्षः तस्येत्यर्थः ।।

बृहस्पतेः बृहंश्चासौ पतिश्चेति व्युत्पत्त्या महेन्द्रत्वात् पुरन्दरो बृहस्पतिशब्देनोच्यते तस्येत्यर्थः ।। १९ ।।

प्रजापतेः प्रजा प्रजननं तदीशितृत्वात्प्रजापती रुद्रस्तस्य । प्रजननसाधनस्य रेतसो लिङ्गाश्रितत्वात् रुद्रस्य च लिङ्गदेवतात्वेन प्रसिद्धेः रुद्रः प्रजननेशिता भवतीति प्रजापतिशब्देनोच्यते इति भावः । अत्र रुद्रपदेन शेषो ग्राह्यः । मुक्तप्रसङ्गात् । यथा हि लोके कस्यचिच्चतुर्थाश्रमरूपावस्थान्तरापत्तावपि तदभिज्ञास्तं पूर्वनाम्नैव व्यवहरन्तीति प्रसिद्धमित्यवगन्तव्यम् ।।

ब्रह्मणश्चतुर्मुखस्य अत्रानन्दग्रहणं ज्ञानादिगुणानामप्युपलक्षणम् । तथा च पूर्वपूर्वज्ञानाद्यपेक्षया उत्तरोत्तरस्य ज्ञानादिकमप्यानन्दवत् शतगुणाधिकमेवेत्यवगन्तव्यम् ।। २० ।।

## उपनिषत्

(नियामकभगवद्रूपेष्वभेदकथनम्)

**स यश्चा॑यं पु॒रुषे । यश्चासा॑वादि॒त्ये । स एकः॑ । स यं एवं॒वित् । अस्माल्लो॑कात् प्रे॒त्य । एतमन्नमयमात्मान- मुप॑सङ्क्रा॒मति । एतं प्राणमयमात्मानमुप॑सङ्क्रा॒मति । एतं मनोमयमात्मानमुप॑सङ्क्रा॒मति । एतं विज्ञान- मयमात्मानमुप॑सङ्क्रा॒मति । एतमानन्दमयमात्मान- मुप॑सङ्क्रा॒मति ।। २१ ।।**

## भाष्यम्

'यत्प्रसादात् स्वरूपाप्तिः ब्रह्मादीनां समन्ततः ।
स विष्णुस्सर्वजीवेषु नृषु देवेषु च स्थितः ॥
एक एव महायोगी निर्विशेषोऽखिलैर्गुणैः ।
सर्वोत्तमस्स पूर्णश्च तमेवं वेद यः पुमान् ॥
जीवांश्च तारतम्यस्थान् स गच्छेत् पञ्चरूपिणम् ।
विष्णुं ............................ ॥ २१ ॥

## पदार्थदीपिका

**अथ भाष्यार्थः** ॥ एवं विष्णोर्विदुषां नरादिब्रह्मान्तानां नियमेन मोक्षदातृत्वरूपं मोक्षे च तरतमभावापन्नस्वरूपानन्दाविर्भावदातृत्वरूपं महिमानं चोक्त्वा इदानीं उत्कृष्टापकृष्टसर्वजीवनियामकतयाऽवस्थित-रूपाभेदरूपं महिमान्तरमुच्यते- **स यश्चायं पुरुष** इत्यादिना । तत्र पूर्वेण सङ्गतिं सूचयन् पुरुषशब्दोक्तमनुष्यादित्यमात्रस्थितयोरेव रूपयोः अभेद उच्यत इति प्रतीतिनिरासाय आदित्यपुरुषशब्दौ उत्कृष्टापकृष्टसर्वजीवोप-लक्षकावित्यभिप्रेत्य प्रमाणेनैव व्याचष्टे- **यत्प्रसादादित्यादिना** ॥ ब्रह्मादीनामन्ततः लिङ्गदेहनाशानन्तरम् । सं सम्यक् स्वयोग्यतानुसारेण । स्वरूपाप्तिः स्वरूपानन्दावाप्तिः । यत्प्रसादात् भवति स विष्णुरिति योज्यम्। समन्ततः सर्वकल्पेष्ववस्थितानामिति वा । स एक इत्यत्र त्यच्छब्दानुवादेन विष्णुरिति व्याख्यातम् । सर्वजीवेष्वित्यस्य विवरणं नृषु देवेषु चेति । तथा चादित्यपुरुषशब्दौ उत्कृष्टापकृष्टसर्वजीवोपलक्षकौ इत्युक्तं भवतीति ज्ञातव्यम्। भेदाभेदव्यावृत्त्यर्थं एक एवेत्युक्तम् । करचरणादिसमग्राङ्गसाकल्येन युगपदनेकस्थानस्थितस्य विष्णोरेकत्वमन्यत्रादृष्टं कथं घटत इत्यत आह- **महायोगीति** ॥ 'युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च' इति शब्द-

निर्णयवचनात् । अघटितघटकतया महान् योगः शक्तिः तद्वानित्यर्थः । उत्कृष्टापकृष्टजीवस्थितयोः विष्णुरूपयोर्यमधर्मरूपयोः विदुरयुधिष्ठिरयोरिव विशेषोऽस्ति किं नेत्याह - **अखिलगुणैर्निर्विशेष इति** ॥ सर्वजीवावस्थितत्वोक्त्या लब्धार्थप्रदर्शनं सर्वोत्तम इति । सम्पूर्णः अखिलैर्गुणैरिति वर्तते । सर्वरूपेष्वभेदादिरूपभगवन्माहात्म्यवेत्तुः मुक्तानन्दादितारतम्यवेत्तुश्च फलमुच्यते- **स य एवं विदित्यादिना** ॥ तद्व्याचष्टे- **तमेवं वेदेति** ॥ सर्वरूपाभिन्नत्वसृष्टिकर्तृत्वसृष्टपदार्थप्रवेष्टृत्वादिरूपोक्तमाहात्म्योपेतत्वेन तं विष्णुं वेदेत्यर्थः । जीवान्मनुष्योत्तमादिब्रह्मान्तान् तारतम्यस्थान् भगवत्प्रसादाविर्भूततरतमभावोपेतानन्दादिमत इति यावत् । यो वेद सः अस्माल्लोकात् चरमत्वेन प्रसिद्धाच्छरीरात् प्रेत्येति शेषः । पञ्चरूपिणं विष्णुं गच्छेदित्यर्थः । पञ्च च तानि रूपाणि च पञ्चरूपाणि तान्यस्य सन्तीति पञ्चरूपी तमिति कर्मधारयादिनिः । उपसङ्क्रामतीत्यस्यार्थो गच्छेदिति । अत्रान्नमयनामानिरुद्धो भूम्यप्स्थितः । प्राणमयनामा प्रद्युम्नोऽग्न्यादिस्थितः । मनोमयनामा सङ्कर्षणो मनआदि तत्त्वस्थितः । विज्ञानमयनामा वासुदेवो महत्तत्वस्थितः । आनन्दमयनामा नारायणोऽव्यक्ततत्वगत इति विशेषो द्रष्टव्यः । यथोक्तं द्वितीयस्कन्धतात्पर्ये- 'भूम्यब्गमन्ननामानं प्राणमग्न्यादिसंस्थितम् । मानसं मनआदिस्थं विज्ञानं महति स्थितम् । आनन्दमव्यक्तगतं क्रमशो यान्ति देवताः' इति । अनेन य एवं वित्सोऽस्माल्लोकात् प्रेत्यैतच्छरीररूपमन्नमयमात्मानं शरीररूपं कोशमुपसङ्क्रामति ।

अतिसङ्क्रामति अतिक्रम्य परित्यज्येति यावत् । गच्छतीत्येतदपव्याख्यानमित्युक्तं भवति । श्रुतोपशब्दत्यागस्याश्रुतातिशब्दकल्पनस्य चापत्तेः । न चाव्ययानां अनेकार्थत्वात् उपशब्द एवातिक्रमार्थक इति वाच्यम् । अव्ययानामनेकार्थत्वेऽपि अन्तरित्यस्य कदाऽपि बहि-

रित्यर्थकत्वाभावात् । अन्नमयशब्दवाच्यशरीररूपकोशपरित्यागस्य अस्माल्लोकात् प्रेत्येति पूर्ववाक्येनैवोक्तत्वेन पुनरुक्तिश्च स्यादिति द्रष्टव्यम् । यथोक्तमनुव्याख्याने-

'उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति ।
अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ।
अश्रुतस्यातिशब्दस्य स्थानं दद्यात् कथं पुनः ।
श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् ।
मृतावेव परित्यागः कृतो ह्यन्नमयस्य च ॥' इति ॥ २१ ॥

(ब्र.सू.अनु. १.१.२९, श्लो. ११८)

## उपनिषत्

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳस्पृणुते । य एवं वेद । इत्युपनिषत् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥ २२ ॥

## भाष्यम्

'......न पुण्यपापे च तस्यानिष्टे कदाचन ॥
प्रियाप्रियेषु तज्ज्ञानी ह्यास्तृणोति यतो नृषु ।

**अगोचरं वाङ्मनसोरानन्त्यात् पुरुषोत्तमम् ।**
**ज्ञात्वा मुक्तस्य भीर्नैव कुतश्चन भविष्यति ।।'**
इत्यादि यजुस्संहितायाम् ।। २२ ।।

## पदार्थदीपिका

'स य एवं विद्वानेते आत्मान२ स्पृणुते' इत्येतद्व्याचष्टे- **न पुण्यपापे चेति** ।। तस्य एवं वेत्तुः स्वफलप्रदेतिशषः । ननु प्रारब्धपुण्यपापयोः सद्भावात् कथमेतदित्यत उक्तम्- **अनिष्टे इति** ।। यदनभीष्टमप्रारब्धं काम्यं पुण्यं तद्बन्धकत्वेनानिष्टम् । पापं त्वनिष्टं भवत्येवेति प्रसिद्धत्वात् अप्रारब्धं काम्यं पुण्यं पापं चेत्येते पुण्यपापेन स्वफलप्रदे भवत इत्यर्थः । यथोक्तं सूत्रकृता- 'अतोऽन्यदपीत्येकेषामुभयोः' इति । उक्तं च भाष्ये- 'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति । किमु पापं परब्रह्मज्ञानिनो नात्र संशयः' इति । कुतो न तस्यानिष्टे पुण्यपापे स्वफलप्रदे इत्यत आह- **प्रियाप्रियेष्विति** ।। प्रियेष्वप्रियेषु च नृषु । पुत्रादयस्तदितरे सुहृदश्च प्रियशब्देनात्र विवक्षिताः । ते अनिष्टपुण्यपापे पुत्रादयः प्रियाश्चापरोक्षज्ञानजन्मकालीना एवेति सम्प्रदायविदः । आस्तृणोति विस्तारयति । जहातीति यावत् । धातूनामनेकार्थत्वात् । यतस्ततो न तस्यानिष्टे पुण्यपापे स्वफलप्रद इति सम्बन्धः । यथोक्तं भाष्ये- ''तस्य पुत्रा दायमुपयन्ति सुहृदः साधु कृत्यां द्विषन्तः पापकृत्याम्'' इति । तस्यापरोक्षज्ञानिनः तज्जन्मकालीनाः ये पुत्राः सुहृदः तदन्ये प्रियाश्च ते सर्वे साधुकृत्यां दायं अप्रारब्धानिष्टकाम्यपुण्याख्यं धनं उपयन्ति प्राप्नुवन्ति । द्विषन्तस्तु पापकृत्यां दायं अप्रारब्धपापाख्यं दायमुपयन्तीति श्रुत्यर्थो द्रष्टव्यः । 'यतो वाचो निवर्तन्ते' इत्यादिकं व्याख्याति- **अगोचरमिति** ।। समासान्तो विधिरनित्य इति वचनात् वाङ्मनसोरिति साधु । साकल्येनेति शेषः । कुत इत्यतस्तत्र श्रुत्यभिप्रेतं हेतुमाह- **आनन्त्यादिति** ।। पुरुषोत्तमं ज्ञात्वेत्यनेन आनन्दं ब्रह्मण इत्येतदानन्दरूपं परं ब्रह्म विद्वानिति व्याख्येयमिति सूचयति ।

ज्ञात्वेत्यनन्तरं अवस्थितस्येति शेषः । तेन ज्ञानरूपक्रियायां अवस्थानरूपक्रियायां च पुरषस्यैव कर्तृत्वेन समानकर्तृत्वप्राप्त्या भुक्त्वा व्रजतीतिवत् ज्ञात्वेति क्त्वा प्रत्ययोपपत्तिः । समानकर्तृकयोः पूर्वकाले क्त्वेति स्मरणात् । तथा च ज्ञानरूपक्रियायां पुरुषस्य कर्तृत्वात् न भविष्यतीत्युक्तभवनरूपक्रियायां च भीरित्युक्तभयस्य कर्तृत्वेन समानकर्तृत्वाभावात् कथं क्त्वा प्रत्ययप्रयोग इति शङ्कानवकाश इति ज्ञातव्यम् । **भीर्नैवेति** ॥ किमहं साधु नाकरवमित्यादिरूपपश्चात्तापजनिता भीर्भीतिः संसारिणां या प्रसिद्धा सा मुक्तस्य कुतश्च न कुतोऽपि नैव भविष्यतीत्यर्थः ॥ २२ ॥

## उपनिषत्

**स यश्चा॑यं पु॒रुषे । यश्चासा॑वादि॒त्ये । स एकः॑ । स य॑ एवं॒वित् । अस्माल्लो॒कात् प्रे॒त्य । एतमन्नमयमात्मान-मुप॑सङ्क्रा॒मति । एतं प्राणमयमात्मानमुप॑सङ्क्रा॒मति । एतं मनोमयमात्मानमुप॑सङ्क्रा॒मति । एतं विज्ञान-मयमात्मानमुप॑सङ्क्रा॒मति । एतमानन्दमयमात्मान-मुप॑सङ्क्रा॒मति ॥ २१ ॥**

### खण्डार्थः

एवं विष्णोर्विदुषां नियमेन मोक्षदातृत्वरूपं मोक्षे च तरतमभावापन्न-स्वरूपानन्दाविर्भावदातृत्वरूपमहिमानं चोक्त्वा इदानीं उत्कृष्टापकृष्ट-सर्वजीवनियामकतयाऽवस्थितरूपाभेदरूपं महिमान्तरमाह- **स इति** ॥ चशब्दौ परस्परसमुच्चयार्थौ । स प्रसिद्धो योऽयं पुरुषे तदुपलक्षितापकृष्टजीवेषु नियामकतया तिष्ठति । यश्चासावादित्ये तदुपलक्षितोत्कृष्टजीवेषु देवेषु नियामकतया तिष्ठति । स ब्रह्मादीनां स्वरूपानन्दाविर्भावाप्तिदाता विष्णुरेक एव । न तयोः परस्परं भेदो मन्तव्य इत्यर्थः । सर्वरूपेष्वभेदादिरूप-

भगवन्माहात्म्यवेत्तुः मुक्तानन्दतारतम्यवेत्तुश्च फलमाह- **स य इति** ।। यः एवं उक्तप्रकारेण सर्वरूपेष्वभिन्नत्वादिरूपभगवन्माहात्म्यस्य वित् वेत्ता तथा एवं नरादिब्रह्मान्तानां भगवत्प्रसादाद्मदाविर्भूततरतमभावोपेतानन्दस्य च वित् वेत्ता, एवं भगवन्माहात्म्यज्ञानपूर्वकस्नेहरूपभक्त्युपासनादिजनितापरोक्षज्ञानीति यावत् । सः भोगेन प्रारब्धं कर्म क्षपयित्वाऽनन्तरम् अस्मात् चरमत्वेन प्रसिद्धाल्लोकाच्छरीरात् प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितनाडीद्वारा देहात् निष्क्रम्य अर्चिरादिद्वारा यथायोग्यं कार्यमकार्यं च ब्रह्म प्राप्यावस्थितः सन् कार्यात्यये तदध्यक्षेण ब्रह्मणा सह एतमन्नमयं तन्नामकं भूम्यब्गं आत्मानं अनिरुद्धं उप तत्समीपमिति यावत् । सङ्क्रामति गच्छतीत्यर्थः । प्राणमयं अग्न्यादिषु स्थितं प्रद्युम्नम् । मनोमयं मनस्तत्वादिसंस्थं सङ्कर्षणम् । विज्ञानमयं महति स्थितं वासुदेवम् । आनन्दमयं अव्यक्ततत्वगतं नारायणम् । एवं पञ्चरूपिणं भगवन्तं प्राप्य संसारभयरहितः सन् तिष्ठतीति शेषः ।। २१ ।।

## उपनिषत्

**तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतँ ह वाव न तपति । किमहँ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानँ स्पृणुते । उभे ह्येवैष एते आत्मानँस्पृणुते । य एवं वेद । इत्युपनिषत् ।।**

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।। २२ ।।**

।। इति द्वितीया वल्ली सम्पूर्णा ।।

अत्रार्थे सम्मतितया श्लोकमुदाहरति - **तदपीति** ।। तत्रापि पञ्चरूपिणं भगवन्तं प्राप्तस्य भयराहित्ये एषः वक्ष्यमाणः श्लोको भवतीत्यर्थः । तमेव श्लोकं पठति - **यत इति** ।। यतो यस्मात् मनसा सह वाचः अप्राप्य निवर्तन्ते । आनन्त्यादिति शेषः । एतादृशं ब्रह्मण आनन्दं आनन्दरूपिणं आनन्दमयं नारायणाख्यं परं ब्रह्मेति यावत् । इदमुपलक्षणम् । अन्नमयादिशब्दवाच्याऽनिरुद्धादिरूपचतुष्टयमपि ग्राह्यम् । विद्वान् तद्विषयकापरोक्षज्ञानद्वारा तं प्राप्त इति यावत् । कुतश्चन कुतोऽपि । न बिभेति संसारभयवान् न भवतीत्यर्थः । इति श्लोको भवतीति सम्बन्धः । श्लोकोक्तं भयाभयं विवृणोति - **एतꣳ ह वावेति** ।। अहं किं किमर्थं साधुकर्म नाकरवं नाकार्षम् । किमर्थं पापमकरवं येन एतादृशं पापफलं भुञ्जे इत्येवं रूपं पश्चात्तापजनितं भयं एतं मुक्तं न तपति न सन्तापयति इत्येतत् ह वाव अतिप्रसिद्धमित्यर्थः । संसारे प्रसिद्धं एतादृशं भयं मुक्तस्य नास्तीति भावः । ननु ज्ञानिनः कथं भगवत्प्राप्तिः प्रारब्धकर्मणां भोगेन क्षयेऽपि पूर्वार्जितानामप्रारब्धानां पुण्यपापरूपाणां अनन्तकर्मणां भावात् । नच तेषामपि भोगेन क्षय इति वाच्यम् । आनन्त्यादेव । यथोक्तम्- 'नह्यानन्त्यात् कर्म्मणां भोगेन नाशः' इति । तत्राह- **स य एवं विद्वानिति** ।। सः यः प्रसिद्धः एवमुक्तमाहात्म्योपेतत्वेन आत्मानं परमात्मनं विद्वान् तदपरोक्षज्ञानीति यावत्। एते अनिष्टं अप्रारब्धं यत्काम्यपुण्यं तथाऽप्रारब्धं पापं चेत्येवमेते पुण्यपापे स्पृणुते स्तृणुते । प्रियेष्वप्रियेषु चाऽऽस्तृणोति विस्तारयति । धातूनामनेकार्थ-त्वात् । जहातीति यावत् । तथा च तदीयाऽप्रारब्धानभीष्टपुण्यपापभागिनः प्रियाप्रियाश्च भवन्तीत्यर्थः । 'सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्याम्' इति श्रुतेः । तथा च युक्ता ज्ञानिनो भगवत्प्राप्तिरिति भावः । उक्तप्रकारेण भगवद्ज्ञानी अनिष्टे पुण्यपापे प्रियाप्रियेषु जहातीत्युक्तं तन्नोपचरितमिति

भगवन्माहात्म्यवेत्तुः मुक्तानन्दतारतम्यवेत्तुश्च फलमाह- **स य इति** ॥ यः एवं उक्तप्रकारेण सर्वरूपेष्वभिन्नत्वादिरूपभगवन्माहात्म्यस्य वित् वेत्ता तथा एवं नरादिब्रह्मान्तानां भगवत्प्रसादाद्‌दाविर्भूततरतमभावोपेतानन्दस्य च वित् वेत्ता, एवं भगवन्माहात्म्यज्ञानपूर्वकस्नेहरूपभक्त्युपासनादिजनितापरोक्षज्ञानीति यावत् । सः भोगेन प्रारब्धं कर्म क्षपयित्वाऽनन्तरम् अस्मात् चरमत्वेन प्रसिद्धाल्लोकाच्छरीरात् प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितनाडीद्वारा देहात् निष्क्रम्य अर्चिरादिद्वारा यथायोग्यं कार्यमकार्यं च ब्रह्म प्राप्यावस्थितः सन् कार्यात्यये तदध्यक्षेण ब्रह्मणा सह एतमन्नमयं तन्नामकं भूम्यब्जं आत्मानं अनिरुद्धं उप तत्समीपमिति यावत् । सङ्क्रामति गच्छतीत्यर्थः । प्राणमयं अग्न्यादिषु स्थितं प्रद्युम्नम् । मनोमयं मनस्तत्वादिसंस्थं सङ्कर्षणम् । विज्ञानमयं महति स्थितं वासुदेवम् । आनन्दमयं अव्यक्ततत्वगतं नारायणम् । एवं पञ्चरूपिणं भगवन्तं प्राप्य संसारभयरहितः सन् तिष्ठतीति शेषः ॥ २१ ॥

## उपनिषत्

**तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳस्पृणुते । य एवं वेद । इत्युपनिषत् ॥**

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥ २२ ॥**

॥ इति द्वितीया वल्ली सम्पूर्णा ॥

अत्रार्थे सम्मतितया श्लोकमुदाहरति - **तदपीति** ।। तत्रापि पञ्चरूपिणं भगवन्तं प्राप्तस्य भयराहित्ये एषः वक्ष्यमाणः श्लोको भवतीत्यर्थः । तमेव श्लोकं पठति - **यत इति** ।। यतो यस्मात् मनसा सह वाचः अप्राप्य निवर्तन्ते । आनन्त्यादिति शेषः । एतादृशं ब्रह्मण आनन्दं आनन्दरूपिणं आनन्दमयं नारायणाख्यं परं ब्रह्मेति यावत् । इदमुपलक्षणम् । अन्नमयादिशब्दवाच्याऽनिरुद्धादिरूपचतुष्टयमपि ग्राह्यम् । विद्वान् तद्विषयकापरोक्षज्ञानद्वारा तं प्राप्त इति यावत् । कुतश्चन कुतोऽपि । न बिभेति संसारभयवान् न भवतीत्यर्थः । इति श्लोको भवतीति सम्बन्धः । श्लोकोक्तं भयाभयं विवृणोति - **एतꣳ ह वावेति** ।। अहं किं किमर्थं साधुकर्म नाकरवं नाकार्षम् । किमर्थं पापमकरवं येन एतादृशं पापफलं भुञ्जे इत्येवं रूपं पश्चात्तापजनितं भयं एतं मुक्तं न तपति न सन्तापयति इत्येतत् ह वाव अतिप्रसिद्धमित्यर्थः । संसारे प्रसिद्धं एतादृशं भयं मुक्तस्य नास्तीति भावः । ननु ज्ञानिनः कथं भगवत्प्राप्तिः प्रारब्धकर्मणां भोगेन क्षयेऽपि पूर्वार्जितानामप्रारब्धानां पुण्यपापरूपाणां अनन्तकर्मणां भावात् । नच तेषामपि भोगेन क्षय इति वाच्यम् । आनन्त्यादेव । यथोक्तम्- 'नह्यानन्त्यात् कर्म्मणां भोगेन नाशः' इति । तत्राह- **स य एवं विद्वानिति** ।। सः यः प्रसिद्धः एवमुक्तमाहात्म्योपेतत्वेन आत्मानं परमात्मनं विद्वान् तदपरोक्षज्ञानीति यावत्। एते अनिष्टं अप्रारब्धं यत्काम्यपुण्यं तथाऽप्रारब्धं पापं चेत्येवमेते पुण्यपापे स्पृणुते स्तृणुते । प्रियेष्वप्रियेषु चाऽऽस्तृणोति विस्तारयति । धातूनामनेकार्थत्वात् । जहातीति यावत् । तथा च तदीयाऽप्रारब्धानभीष्टपुण्यपापभागिनः प्रियाप्रियाश्च भवन्तीत्यर्थः । 'सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्याम्' इति श्रुतेः । तथा च युक्ता ज्ञानिनो भगवत्प्राप्तिरिति भावः । उक्तप्रकारेण भगवद्ज्ञानी अनिष्टे पुण्यपापे प्रियाप्रियेषु जहातीत्युक्तं तन्नोपचरितमिति

भावेन तथा वेत्तुरपि तदेव फलं भवतीत्याह- **उभे इति** ।। इदं वाक्यमावर्त्त्य योज्यम् । तथाहि । य एवमुक्तप्रकारेण आत्मानं भगवन्तं वेद अपरोक्षतो जानाति स एष उभे अनिष्टे पुण्यपापे प्रियाप्रियेषु स्पृणुते स्तृणुते इत्येवं यो वेद स एषोऽप्यधिकारी अपरोक्षज्ञानानन्तरं उभे अनिष्टे पुण्यपापे एव प्रियाप्रियेषु स्पृणुते स्तृणुते न प्रारब्धमपीत्यर्थः । य एवं स य एवं विद्वानेते आत्मान९ स्पृणुते इत्युक्तप्रकारेण वेद स एषोऽप्युभे स्पृणुत इति योजनायां आत्मानमित्येतदुर्वरितं भवतीति ज्ञातव्यम् । तदर्थमात्मशब्दो न भगवत्परः अपि तु ज्ञानिपर इत्यङ्गीकृत्य य एवं स य एवं विद्वानित्युक्तरीत्या प्रियाप्रियेषु पुण्यपापहानकर्तृत्वेन आत्मानं ज्ञानिनं वेद स एषोऽप्युभे स्पृणुत इति योजनायां तु नावृत्तिर्द्रष्टव्या । एवं वरुणं प्रत्युपदिश्योपसंहरति ब्रह्मा- **इत्युपनिषदिति** ।। 'यदेव विद्यया करोति श्रद्धयोपनिषदा' इत्यत्रोपनिषीदतीत्युपनिषद्योग्येति टीकाकारैरुपनिषच्छब्दो योग्यार्थतया व्याख्यातः । 'तस्योपनिषत्सत्यस्य सत्यमितीत्यत्रोपनिषत् रहस्यं नाम' इति रहस्यार्थतया च व्याख्यातः । तथा च इति पूर्वोक्तप्रकारेण उपनिषत् त्वद्योग्या रहस्यभूता च ब्रह्मविद्या त्वां प्रति मयोपदिष्टेति शेषः ।। २२ ।।

## भाष्यम्

('सोऽश्नुते' इत्यादिमन्त्रखण्डापव्याख्याननिरसनम्)

**नच 'सह ब्रह्मणा' इत्यादेरन्योऽर्थः कल्प्यः । अप्रामाणिकत्वादनाश्वासाच्च ।**

**नच 'ओषधीभ्योऽन्नम्' , 'अन्नरसमयः' इत्यत्रोभयार्थत्वे विरोधः 'अन्नस्यान्नम्', 'मध्यमः प्राणः' ,'प्राणः स्थूणा' इत्यादिवत् विशेषितत्वादुपपत्तेः ।**

## पदार्थदीपिका

एवं समग्रब्रह्मवल्लीं स्वयोग्यं ब्रह्मविदित्यादिप्रमाणेनैव सम्यग्व्याख्याय 'सोऽश्नुते' इत्यादेः परकृतापव्याख्यां प्रत्याख्याति - **नचेति** ।। ननूपनिषद्व्याख्यानमुपक्रम्य अपव्याख्याननिराकरणे असङ्गतिरिति चेन्न । स्वव्याख्यानदार्ढ्यर्थत्वात् यावदापातसुन्दरं अपव्याख्यानं शिष्याः पश्येयुस्तावत्प्रमाणेन कृतमपि सम्यग्व्याख्यानं न तेषां हृदि दृढनिरूढं भविष्यतीति तत्प्रत्याख्यानमावश्यकमेव । तत्र 'सः' ब्रह्मवित् 'सह' युगपत् एककालं सर्वान् कामानश्नुते । ननु कथं तस्य सर्वकामभोक्तृत्वमित्याशङ्क्योक्तम्- **ब्रह्मणेति ।।** ब्रह्मरूपेणेत्यर्थः । तथा च मुक्तस्य ब्रह्माभिन्नत्वाद् ब्रह्मणश्च भोक्तृसर्वजीवात्मकत्वात् तद्धटत इत्येवं 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' इति वाक्यस्यार्थो न कल्पनीय इत्यर्थः । कुतो न कल्पनीय इत्यत आह- **अप्रामाणिकत्वादिति** ।। प्रमाणशून्यत्वात् 'स्वयोग्यं ब्रह्मवित्' इत्यादिप्रमाणविरुद्धत्वाच्चेत्यर्थः । **अनाश्वासाच्चेति** ।। अप्रामाणिकत्वादेव त्वदुक्तेऽर्थे विश्वासाभावाच्चेत्यर्थः । ननु भवद्भिरपि 'ओषधीभ्योऽन्नम्' इत्यत्रान्नशब्दः प्रसिद्धान्नपर इत्यङ्गीकृत्य 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्रान्नशब्दो अत्तृत्वाद्यर्थ इत्येवं 'अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः । उपजीव्यश्च भूतानाम्' इत्यादि व्याख्यातम् । तदप्ययुक्तम् । एकेन शब्देन द्विरुक्तत्वेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगादित्याशङ्क्य निषेधति- **नचेति** ।। उभयार्थत्वे प्रसिद्धान्नात्तृत्वादिरूपार्थद्वयवत्त्वे अन्नशब्दस्याङ्गीकृते सतीति शेषः । विरोधः पूर्ववाक्ये अन्नशब्दस्य प्रसिद्धान्नपरत्वे प्रकृतत्वविरोध इत्यर्थः । कुतो न विरोध इत्यतो ज्ञापकसद्भावादित्याह- **विशेषितत्वादिति** ।। 'ओषधीभ्योन्नम्' इत्यत्रान्नशब्दः प्रसिद्धान्नपर एव 'स वा एष' इत्यत्र चान्नशब्दो रसशब्देन विशेषितत्वादत्तृत्वाद्यर्थ इत्येवमर्थद्वयाङ्गीकारोपपत्तेर्न विरोध इत्यर्थः । तत्र दृष्टान्तमाह-

**अन्नस्यान्नमित्यादिना** ।। अन्नस्यान्नत्वप्रदं भगवद्रूपमित्यर्थः । 'प्राणो मुख्यप्राणो मध्यमोऽवान्तरेश्वरः । अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुः' इति वचनात् । 'प्राणो हरिः स्थूणां स्तम्भवदाश्रयः । स्थूणा तु भगवान् हरिः' इति वचनात् । यथान्नस्यान्नमिति वाक्ये अन्नशब्दद्वयं भिन्नार्थकमेव । एकस्य षष्ठ्या निर्देशात्, अपरस्य प्रथमया निर्देशात् । यथा वा 'योऽयं मध्यमः प्राणः प्राणःस्थूणा' इत्यत्र एकप्रकरणे श्रुतस्यापि प्राणशब्दद्वयस्य मुख्यप्राणभगवदाख्यार्थद्वयमङ्गीक्रियते । मध्यमत्व-स्थूणात्वरूपविशेषणबलात् । एवं प्रकृतेऽपि 'ओषधीभ्योऽन्नम् । अन्नातुपुरुषः' इत्यत्रौषधिजातत्वेन देहोपादानत्वेन च विशेषितत्वात्तत्रान्नशब्दः प्रसिद्धान्नार्थक एव । 'स वा एषः' इत्यत्र तु रसशब्देन विशेषितत्वादन्नशब्दोऽत्तृत्वाद्यर्थक एवेत्यर्थद्वयाङ्गीकारो युक्त इत्यर्थः ।

## भाष्यम्

(अन्नमयादयः पञ्चापि ब्रह्मैव)

**न चान्नमयादीनामब्रह्मत्वे किञ्चिन्मानम् । 'येन्नं ब्रह्मोपासते' ,'ये प्राणं ब्रह्मोपासते', 'आनन्दं ब्रह्मणो विद्वान्', 'विज्ञानं ब्रह्म चेद्वेद', 'अस्ति ब्रह्मेति चेद्वेद', 'अधीहि भगवो ब्रह्मेति','तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' इत्यादिना ब्रह्मशब्देन उक्तत्वाच्च ।**

**न च लौकिकान्नस्य अत्तृत्वमस्ति । 'येऽन्यथा विदुस्तेऽन्यराजानः ते क्षय्यलोका भवन्ति' इति श्रुतेरविद्यमानोपासनात् दोषावगतेश्च । 'न च रमन्त्यहो असदुपासनयाऽऽत्महनः' इति च भागवते ।**

## पदार्थदीपिका

एष भगवान् अनिरुद्धः स्वयं हरिरित्यादिना अन्नमयादयः पञ्चापि ब्रह्मैवेति

प्रमाणेन स्वयं व्याख्यातम्। मायावादिनस्त्वाहुः- 'अन्नमयादयः पञ्चापि कोशा एव' इति तद्दूषयति- **न चेति** ॥ ननु तेषां ब्रह्मत्वेऽपि किं मानमिति चेत्। उदाहृतं प्रमाणवाक्यं तावदेकम्। 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १.१.१२) इति सूत्रोक्तब्रह्मशब्दाभ्यासरूपं प्रमाणान्तरमाह- **येऽन्नं ब्रह्मेत्यादिना** ॥ अन्नमयादीनां ब्रह्मत्वे भृगुवल्लीसमाख्याकथनम्- **अधीहीत्यादि** ॥ ब्रह्मशब्देनोक्तत्वात् ब्रह्मशब्देनान्नमयादीनां विशेषितत्वादित्यर्थः। ननु 'अन्नं प्राणम्' इत्यादिवाक्ये ब्रह्मशब्दाऽश्रवणात् कथं 'ब्रह्मशब्देनोक्तत्वात्' इत्युच्यते। अतोऽन्नादीनामब्रह्मत्वमेवेत्याशङ्कापरिहाराय 'अधीहि भगवो ब्रह्म' इति वाक्यं उदाहृतम्। 'अधीहि भगवो ब्रह्म' इति भृगुणा ब्रह्मोपदेशप्रार्थने कृते सति वरुणेन तं प्रत्युपदिष्टत्वान्यथानुपपत्त्यान्नादीनां ब्रह्मत्वावगमात्। यथोक्तम्- 'अधीहि भगवो ब्रह्म' इत्युक्तोऽन्नप्राणपूर्वकम्। 'आह ब्रह्म कथं तन्न' इति। 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ तु स्पष्ट एव ब्रह्मशब्दः। अत एवेत्यादिनेत्युक्तम्। न च ब्रह्मोपदेशप्रार्थने कृतेऽपि वरुणोऽन्यदुवाचेति युक्तम्। मायावित्वप्राप्तेः। यथोक्तम्- 'तद्यत् किञ्चित् कथं ब्रूयात् उपसन्नाय दिक्पतिः। न वदेत् ब्रह्म च कथं मायावी न हि वारिराड्' इति। ननु ब्रह्मवल्ल्युक्तानां अन्नमयादीनां ब्रह्मत्वेऽपि भृगुवल्ल्युक्तानां कुतो ब्रह्मत्वमिति चेन्न ब्रह्मवल्ल्युक्तार्थे समाख्यात्वेनैव भृगुवल्ल्याः प्रवृत्तत्वात्। यथोक्तम्- 'भृगोश्चैतद् वदिष्यति' इति। ननु स्थानद्वयेऽपि नैकं वस्तूच्यते। ब्रह्मवल्ल्युक्ताः अन्नमयादयः भृगुवल्ल्युक्ताश्चान्नादय इति संज्ञाभेदादिति चेन्न। भृगुवल्ल्यामपि 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादिना प्राप्यस्थाने मयटामुक्तत्वेन शब्दान्तरन्यायेन भृगुवल्ल्युक्तान्नादिशब्दानामपि अन्नमयादिपरत्वात्। यथोक्तम्- 'प्राप्यत्वेन मयट् प्रोक्तेर्न तत्राप्यन्यदुच्यते' इति। ननु तथापि न स्थानद्वयोक्तमेकं वस्तु भवितुमर्हति। ब्रह्मवल्ल्युक्तानां अन्नमयादीनां पञ्चत्वात्

भृगुवल्ल्युक्तानां अन्नादीनां षट्त्वादिति सङ्ख्याभेदादिति चेन्न । वाधूलशाखायामष्टमरूपस्यापि ब्रह्मण उक्तत्वेन तदनुसारादत्रापि ब्रह्मवल्ल्यां चक्षुःश्रोत्रवाचामपि ग्राह्यत्वात् । भृगुवल्ल्यामपि विज्ञानानन्दमययोर्ग्राह्यत्वेन स्थानद्वयेऽपि रूपाष्टकस्य वाच्यत्वेन सङ्ख्यासाम्यस्यैव प्राप्त्या तद्भेदाभावात् । यथोक्तम्- 'तच्च वाधूलशाखायामष्टरूपमुदाहृतम् । विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः । आवापोद्वापतः शाखा यत आहुः परं पदम्' इति । 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इति श्रुत्यन्तरोक्तानां तु शुद्धिप्रार्थनलिङ्गादब्रह्मत्वेऽपि न विरोध इति ज्ञातव्यम् । अतः स्थानद्वयेप्येकस्यैव वस्तुन [1]उच्यमानत्वेन युक्तं ब्रह्मवल्ल्युक्तान्नमयादीनां ब्रह्मत्वे भृगुवल्लीसमाख्याकथनमिति भावः । एवमन्नमयादीनां पञ्चानां ब्रह्मत्वमुपपाद्यान्नमयस्यैवाब्रह्मत्वे अन्तरानुपपत्तिं चाह - **नचेति** ।। 'अन्ननामा चान्नसंस्थः' इत्युक्तरीत्याऽन्नशब्दस्यानिरुद्धनामकपरब्रह्मत्वमनङ्गीकृत्य प्रसिद्धान्नपरत्वाङ्गीकारे अन्नमयं प्रत्युदाहृतश्लोके 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति' इत्यन्नशब्दो निरुच्यते । तदयुक्तं स्यात् । प्रसिद्धान्ने भूताद्यत्वस्य कथञ्चित् सम्भवेपि भूतात्तृत्वस्य कथमप्यसम्भवादिति भावः । ननु लौकिकान्ने अविद्यमानमप्यत्तृत्वमुपनिषदि उच्यते उपासनार्थम् । सा चाविद्यमानस्यापि सम्भवति । 'योषितमग्निं ध्यायीत' इति वदतो न तद्बाधकमित्यत आह- **येऽन्यथेति** ।। येऽन्यथाविद्युरुपासीरन् त अन्यराजानः अन्ये स्वाधमाः राजानो नियामका येषां ते तथा । स्वाधमनियम्या भवन्ति ते क्षय्यलोका भवन्तीति श्रुत्यर्थः । दोषः स्वावरनियम्यत्वादिरूपोऽनर्थः । नायं विशेषतोऽनर्थ इत्यत आह- **नचेति** ।। आत्महनः इत्ययुक्तम् । तस्य नित्यत्वादित्यत उक्तम् । असदुपासनया इति । न रमन्ति सुखवन्तो न भवन्ति । च शब्दान्नित्यदुःखमनुभवन्तीति समुच्चिनोति । यथोक्तं

---

१. उच्यमानत्वेन न

श्रुतिगीतातात्पर्ये । 'न रमन्ति नित्यदुःखं चानुभवन्तीति च शब्देनोक्तम्' इति । येऽन्यथाविदुरिति श्रुत्युदाहरणं तु सज्जनस्यैव दुःसङ्गत्या कदाचिदन्यथोपास्ति प्रसक्तौ सत्यां तस्येदं फलमुच्यत इति ज्ञापयितुम् । तथा च ये सन्त एव दुःसङ्गात् यद्यन्यथाविद्युस्तर्हि ते क्षय्यलोका अनित्यनरकभाजो भवन्ति । तदनन्तरं भूमौ जन्मलब्ध्वाऽन्यराजानो भवन्तीति ज्ञातव्यमिति सम्प्रदायविदः ।

## भाष्यम्

**'नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।**
**अविद्यमानं ध्यायन्तो यान्ति सर्वेऽधरं तमः ॥**
**तस्मात् सत्यार्थतां ब्रूयाद् वेदानामपि सर्वशः ।**
**य एवं वेद स ज्ञानी ज्ञानवान् नान्यथा भवेत् ॥'**

**इति वेदार्थविवेके ॥**

## पदार्थदीपिका

स्फुटं चात्र प्रमाणमाह- **नाविद्यमानमिति** ॥ वैदिका वेदानुसारिणो ग्रन्थाश्च । ननु 'योषितमग्निं ध्यायीत' इत्यविद्यमानोपास्त्यभिधायकवेदानां कथं व्याख्यानं कार्यमिति चेत्तत्राह- **तस्मादिति** ॥ सत्यार्थतां अबाधितार्थवत्ताम् । तथा च 'अङ्गारसदृशी नारी घृतकुम्भसमःपुमान्' इति वाक्यान्तरानुसारेण यथाग्निसम्बन्धे कुम्भस्थस्य घृतस्य द्रवीभावः एवं योषित्सम्बन्धेनापि पुरुषान्तःकरणस्य द्रवीभावो भवति । अतः सा परित्याज्येति योषित्यग्निसादृश्यमभिप्रेत्यैव योषितमग्निं ध्यायीतेत्युच्यते । नाग्न्यभेदाभिप्रायेणेति भावः । एवं नाविद्यमानमित्याद्युक्तप्रकारेण । किं तत इत्यत आह- **ज्ञानवानिति** ॥ अन्यथोपासनयाऽधरं तमो यान्तीति ज्ञानवान् । 'अन्यथा' अन्यथोपासको न भवेदित्यर्थः ।

## भाष्यम्

**'स यश्चायं पुरुषे। यश्चासावादित्ये' इत्यधिकरणत्वेन भेद एव जीवस्य परमादुक्तः। 'एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते', 'एतमानन्दमयमात्मानमुपसङ्क्रामति', 'सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिना मुक्तस्यापि भेद एवाभ्यस्यते।**

## पदार्थदीपिका

अत्राह- जीव एवान्नमयादिशब्दार्थो न ब्रह्म। स ह्यन्नविकार शरीरावच्छिन्नत्वाद्भवत्यन्नमयः। प्राणमनोबुध्यानन्दोपाध्यवच्छिन्नश्च भवति। प्राणादिविकारो घटाकाशमिव घटविकारः। तेन प्राणमयत्वाद्युपपत्तिः। तथा च 'स वा एष पुरुष' इति परामर्शस्तदुपाधिविषयतयाऽश्लिष्टतरो भवति। रसशब्दश्चान्नस्थविभागव्यावर्तको भविष्यति। इदमिति निर्देशश्च मुख्यार्थः सम्पद्यते। प्राणमयादिषु सर्वत्र शिरः प्रभृत्यवयवानां वक्तव्यत्वेन तत्प्राप्तये सिद्धस्यापि कथनोपपत्तेः। शारीरत्वमवयवित्वं प्रियादियोगो ब्रह्मपुच्छत्वं चेति एतत् सर्वं जीवपक्षे समञ्जसं भवति। न च वक्तव्यं शरीरादिकोशा एव कुतस्तर्हि नाङ्गीक्रियन्ते। तथा च अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इति श्रुत्यन्तरानुगुण्यं च स्यादिति। कोशेषु ब्रह्मशब्दाद्यनुपपत्तेः। अन्यत्वमन्तरत्वं शारीरत्वं चोपाध्यपेक्षया जीवेऽप्युपपद्यते। ननु जीवपक्षेऽप्यनुपपत्तिरस्ति। तथाहि- ब्रह्मशब्दो हि निर्बाधो न परमात्मना विनोपपद्यते। 'अद्यतेत्ति च' इति सर्वाद्यत्वं सर्वात्तृत्वं 'प्राणं देवा' इति सर्वदेवादिचेष्टकत्वं 'यतो वाच' इति वाङ्मनसागोचरत्वं 'विज्ञानं देवाः सर्वे' इति सर्वदेवोपास्यत्वं ज्येष्ठत्वं 'सोकामयत' इति सङ्कल्पपूर्वकं स्रष्टृत्वं

सर्वान्तरत्वमित्यादीनि नाल्पतरज्ञानशक्त्यादिसम्पन्ने जीवे संभवन्ति। 'को ह्येवान्यात्' इति चासङ्गतमेव स्यात्। 'तदेषाभ्युक्ता' इति मन्त्रवर्णसमाख्योक्तिश्च बाध्येत। तत्र 'सोऽश्नुते' इत्युक्तस्य मोक्षस्य जीवज्ञानादनुपपत्तेरतो न जीवोऽन्नमयादिशब्दार्थः। किन्तु ब्रह्मैवेति चेत् मैवम्। उपनिषदर्थानवबोधात्। अत्र हि जीवब्रह्मणोरेकत्वं तत्वतो विवक्षितम्। तत्र यानि वाक्यानि शुद्धविरोधीनि तान्युपहितसंसारिस्वरूपापेक्षाणि। ब्रह्मशब्दादीनि तु तत्स्वभावसिद्धपरमात्मस्वरूपापेक्षाणि। ऐक्ये विवक्षा चात्र वाक्यशाबल्यान्यथानुपपत्त्यैव गम्यते। नचैवं जीवब्रह्मणोरैक्यविवक्षायां जीवः कुतोऽन्नमयादिशब्दार्थः परमात्मैव किं न स्यात्। विनिगमनायां कारणाभावादिति वाच्यम्। विशुद्धिविरोधिवाक्यानां परमात्मनि सर्वथाप्यनुपपत्तेः। सत्यप्यभेदे महाकाशधर्म एवावच्छिन्नाकाशे व्यवह्रियते 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति। न तु परिच्छिन्नधर्मो वितस्तिमात्रत्वं महाकाशे। न च जीवपक्षे 'ब्रह्मपुच्छं प्रतिष्ठा' इत्यनुपपन्नमिति वाच्यम्। अस्य जीवस्य ब्रह्मपुच्छमायतनमधिष्ठानं निजस्वरूपमित्यर्थोपपत्तेरिति। तदेतन्निराकरोति - **स यश्चायमिति** ॥ अधिकरणत्वेनेत्युपलक्षणम्। अधिष्ठातृत्वेनेत्यपि ग्राह्यम्। परमात् परमात्मनः। स्यादेतदेवं कथञ्चिदुक्तं समस्तम्। यद्यस्यामुपनिषदि जीवपरमात्मनोरभेद एव विवक्षितः स्यात्। न चैवम्। 'स यश्चायं पुरुषे यश्चासावादित्ये' इति पुरुषादित्यशब्दोपलक्षितापकृष्टोत्कृष्टसकलजीवानां नियम्यतयाधिकरणत्वेन परमात्मनश्च नियामकतयाधिष्ठातृत्वेन भेदस्यैवोक्तत्वादित्यर्थः। उक्तं चानुव्याख्याने- ''आदित्ये पुरुषे चायमिति भेदोपदेशतः। नास्याभेदोऽस्ति जीवेन''(ब्र.सू.अनु.१.१.२९, श्लो.२११) इति। नन्वस्त्वेवं परमात्मना जीवानां भेदः। स च संसारे आविद्यक एवाभिप्रेतो न पारमार्थिकः। अभिहितवाक्यस्य च तादृशभेदपरत्वेनोपपत्तिरिति चेत्।

मैवम् । अस्मिन्प्रकरणे निवृत्ताविद्यकस्य मुक्तस्यापि परमात्मना भेदस्यैव बहुवारमुक्तत्वादित्याह- **एतस्मिन्नित्यादिना** ॥ विन्दत इत्यनन्तरं 'अथ सोऽभयं गतो भवति' इति वाक्यशेषोऽपि ग्राह्यः । इत्यादिनेत्यादिपदेन 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति सुवर्णज्योतीः' इति च वाक्यं ग्राह्यम् । **भेद एवाभ्यस्यते इति** ॥ भेदकधर्मः एव बहुवारमुच्यत इत्यर्थः । नत्वेक-प्रकारासकृदुक्तिरूपो मुख्यो ग्राह्यः । तादृशस्यात्रादर्शनादिति ज्ञातव्यम् । अत्र एतस्मिन्निति वाक्ये । प्रतिष्ठां विन्दत इति ज्ञातृज्ञातव्यत्वयोः 'अभयं गतो भवति' इति प्राप्तृप्राप्यत्वयोश्चोक्त्या भेद एवावगम्यते । परमात्मप्राप्त्युक्त्या च मुक्तपरत्वं तत्प्राप्तेरेव मुक्तित्वात् । एतमिति वाक्येऽपि उपसङ्क्रामतीति प्राप्तृप्राप्यभावोक्त्या भेद एवोच्यते । 'अस्माल्लोकात् प्रेत्य' इत्युक्तत्वाच्च मुक्तपरत्वम् । 'सोऽश्नुते' इत्यत्र ब्रह्मणा सह' इत्युक्त्या भेदो लब्धः । सर्वकामावाप्त्युक्त्या च मुक्तपरत्वम् । एतमिति भृगुवल्लीगतवाक्येऽपि उक्तरीत्या भेदस्तस्यमुक्तपरत्वं च । 'रसं ह्येवायम्' इत्यत्र लब्धृलब्धव्यत्वयोरुक्त्या भेदः । अस्य वाक्यस्य 'आनन्दमेनं सम्प्राप्य मुक्तो मोदेन्न चान्यथा' इति प्रमाणेन मुक्तपरतया व्याख्यातत्वान्मुक्तपरत्वं चावगम्यते । 'सुवर्णज्योतीः' इत्यत्रापि प्रेर्यप्रेरकभावोक्त्या भेदः । 'अस्माल्लोकात् प्रेत्य' इत्यारभ्याधीतत्वेन मुक्तपरत्वं चेत्यवगन्तव्यम् ।

## भाष्यम्

(सैषानन्दस्येत्योक्तानन्दमीमांसा मुक्तिसम्बन्धिनी)

**'अथ सोऽभयं गतो भवति' इति मुक्तिप्रस्तावात् 'सैषाऽनन्दस्य मीमांसा' इति मुक्तानन्दो मीमांस्यते । 'श्रोत्रियस्य चाकामहतस्य' इति सर्वत्र विशेषणाच्च । न ह्यमुक्तस्य अकामहतत्वं मुख्यं भवति । न च मुख्या श्रोत्रियता ।**

'यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते ॥
यस्य कामास्तु सत्याः स्युस्स हि कामैर्न हन्यते ।
न ह्यकामः क्वचित् कश्चित् दृश्यते श्रूयतेऽपि च ॥'

इति ब्रह्माण्डे ।

## पदार्थदीपिका

'सैषानन्दस्य' इत्यादिना क्रियमाणानन्दमीमांसा संसार्यानन्दविषयिण्येव न मुक्तानन्दविषयिणीति व्याख्यानं 'विदुषां नियमेन तु । स्यादेव मोक्षस्तत्रापि ह्यानन्दस्य विचित्रता' इति प्रमाणोदाहरणेनैव निरस्य युक्त्यापि निरस्यति- **अथेत्यादिना** ॥ मुक्तानन्दो मीमांस्यत इत्यत्र हेतुः- **अथेति** ॥ मुक्तिप्रस्तावात् मुक्त्युपक्रमादित्यर्थः । तथा च मुक्तिमुपक्रम्य तत्प्रकरणे अधीतं सैषानन्दस्येति वाक्यं मुक्तानन्दमीमांसापरमेवेति भावः । युक्त्यन्तरं चाह - **श्रोत्रियस्य चेति** ॥ मनुष्यगन्धर्वानारभ्य सर्वत्रेत्यर्थः । च शब्दः प्रस्तावादित्युक्तयुक्ति-समुच्चायक इति द्रष्टव्यम् । तथा च श्रोत्रियत्वाकामहतत्वयोरन्यत्रामुक्तेऽ-सम्भवात् तद्विशेषणयुक्तो मनुष्यगन्धर्वादिर्मुक्त एवेति तदानन्द एव मीमांस्यत इति भावः । पूर्वटीकाकारास्तु- उदाहृतवाक्येषु प्रतीतो भेदो मुक्तभेद इति कुत इत्यत आह- 'अथेति', इत्येवं 'अथ सोऽभयं गतो भवति' इति मुक्तिप्रस्तावादिति वाक्यं पूर्वग्रन्थशेषत्वेन व्याख्याय सैषेत्यादिवाक्यद्वयन्तु सैषानन्दस्येतन्मुक्तिपरतया व्याख्यातं तत्कुत इत्यतः साधयितुं प्रतिजानीते **सैषेति** । प्रमाणेन तथा व्याख्यातत्वादिति भावः । युक्त्यन्तरं चाह । श्रोत्रियस्य चेति' इति व्याकुर्वते । अत्र चशब्दः पूर्वोदाहृतप्रमाणसमुच्चायक इति ज्ञातव्यम् । अत्र केचिदाहुः- 'न श्रोत्रियत्वादिविशेषणबलात् प्रकृतमनुष्य-गन्धर्वादीनां मुक्तत्वं वाच्यम् । अमुक्तानामपि तत्सम्भवात् । 'श्रोत्रियश्छन्दोऽ-

धीते' इति स्मरणात् श्रोत्रियत्वस्य छन्दोऽधिगतिनिमित्तकत्वात् । मनुष्यगन्धर्वादीनां च सर्वज्ञकल्पत्वात् विषयवैराग्योपेतत्वात् अकामहताश्च भवन्ति' इति । तत्राह-, **नहीत्यादिना** । अमुक्तस्येति समुदायापेक्षमेकवचनम् । अमुक्तानां मनुष्यगन्धर्वादीनामित्यर्थः । ननु तर्हि किं तन्मुख्यं श्रोत्रियत्वमकामहतत्वं च यदुभयममुक्तानामसम्भावितमित्यत आह- **यस्येति** ॥ श्रुतिफलं मोक्षः । स क इत्यत आह- **स हि मुक्त इति** ॥ सः श्रुतिफलं प्राप्तो मुख्यः श्रोत्रियो मुक्त इत्येवं हि प्रसिद्धं मुक्तेरेव श्रुतिफलत्वात् । तस्य मुक्तेनैवाप्तत्वादिति भावः । अकामहत इत्यत्रापि स मुक्त इत्यनुवर्तते । कुतो मुक्त एवाकामहत इत्यत आह- **सहीति** ॥ स मुक्त एव कामैर्न हन्यत इत्येतत्प्रसिद्धमित्यर्थः । कुतो न हन्यत इत्यत्र निमित्तमाह- **यस्येति** ॥ काम्यन्त इति कामाः विषयाः । सत्याः अनायासेन प्राप्ताः ।

एतदुक्तं भवति - कामेनोपद्रवो हि कामहतता । तदभावश्चाकामहतता । कामकृतोपद्रवाभावश्च अनायासेन तद्विषयप्राप्तावेव भवति नान्यथेत्यनुभवसिद्धम् । अतः प्राप्तकामत्वाकामहतत्वयोर्निमित्तनैमित्तिकभावो युक्त एवेति । यथोक्तमनुव्याख्याने-'अप्रयत्नेन कामानामवाप्तिः सा यदा भवेत् । तदैवाकामहता' (ब्र.सू.अनु. ३.४.३ श्लो. १६) इति । ननु नायमस्ति नियमो यदाप्तकामस्यैव कामनिमित्तोपद्रवाभावो नान्यथेति । सर्वथा कामाभावेऽपि तन्निमित्तोपद्रवाभावसम्भवात् । एवं च मनुष्यगन्धर्वादिषु आप्तकामत्वाभावेऽपि अकामत्वेनैव निमित्तेनाकामहतत्वं सम्भवतीति चेन्न । प्रकृतमनुष्यगन्धर्वाद्याः न सर्वथा कामरहिताः । असुप्तामूढचेतनत्वात् देवदत्तवदित्यनुमानविरोधादित्याशयवान् अनुमानस्य व्याप्तिमुपपादयति - **न हीति** ॥ कश्चित् असुप्तामूढचेतनः अकामो न हि दृश्यतेत्यर्थः । घटादौ व्यभिचारवारणाय चेतनत्वादित्युक्तम् । सुप्तमुग्धयोस्तत्परिहाराय

असुप्तामूढेत्युक्तमिति ज्ञातव्यम्। यथोक्तमनुव्याख्याने- 'चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता' (ब्र.सू.अनु. ३.४.३ श्लो. १६) इति। उक्तं च सुधायाम् - 'अमुग्धस्येत्यपि द्रष्टव्यम्' इति।

मायावादिनस्त्वेवमेतां श्रुतिं व्याचक्षते- 'श्रोत्रियस्य चाकामहतस्य' इति वाक्यं न प्रकृतमुक्तानां विशेषणोक्तिपरम्। किन्तु पुरुषान्तरविषयम्। तथा हि- देवेभ्यः इन्द्रस्य शतगुणस्तावदानन्दः यश्च श्रोत्रियः इन्द्रपदे अकामश्च देवपदाकामनिष्ठश्रोत्रियत्वादिगुणापेक्षयाऽधिकश्रोत्रियत्वादिगुणवान् इति यावत्। कश्चिद्विरक्तः पुमानस्ति तस्यापीन्द्रसमान एवानन्दोऽस्ति। स च देवपदाकामश्रोत्रियत्वादिगुणोपेतविरक्तपुरुषानन्दात् शतगुणानन्द एव। एवं पूर्वत्र उत्तरत्र च स्थितस्य श्रोत्रियस्येतिवाक्यस्य योजना द्रष्टव्या। न च विरक्तानां सर्वत्र कामाभावात् कथमियं तारतम्योक्तिरिति। इन्द्रादिपदव्यतिरिक्तोत्तरपदेषु कामसद्भावस्य विवक्षितत्वात्। तथा च यो यो यावदायासान्मुक्तोऽसावसौ तावदानन्दवान् इत्यर्थो हि अत्र प्रतिपिपादयिषितः' इति। तदेतदयुक्तम्। हतशब्दस्य प्रयोजनाभावेन हातव्यतया श्रुतहानप्रसङ्गात्। तस्मिन्पदे अकामस्य तदुत्तरपदे सकामस्येति च कल्पनीयत्वेनाश्रुतकल्पनाप्रसङ्गाच्च।

## भाष्यम्

**नच देवपदाकामस्य सकाशात् इन्द्रपदाकामस्य शतगुणानन्दो दृश्यते सति च प्राजापत्यादिकामे। नच मानुषाः प्रायस्तदिच्छवः। चक्रवर्तिनस्तु युवशब्देनैव मुक्तत्वमुक्तम्। तस्मात् मुक्तविषयेयं मीमांसा।**

**'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इत्यत्राप्यन्तःकरणस्थानामेव कामानां विमोक्ष उक्तः। न तु स्वरूपभूतानाम्।**

## पदार्थदीपिका

दोषान्तरं चाह- **नचेति** ।। इन्द्रपदाकामस्य तदुत्तरपदकामनावत इति ग्राह्यम् । श्रोत्रियत्वादिगुणोपेतविरक्तपुरुषस्य देवपदाकामस्य श्रोत्रियत्वाद्युपेतविरक्तपुरुषस्य तदानन्दस्येति यावत् । सकाशात् शतगुणानन्दो न च दृश्यते नानुभूयते । येन स आनन्दः इन्द्रानन्दसमानः स्यात् । तत्तत्पदाकामस्योत्तरपदकामनावतो विरक्तपुरुषस्य तत्समानानन्दोऽस्ति । स च पूर्वपदाकामपुरुषानन्दात् शतगुणो नानुभूयत इति यावदित्यत्र तात्पर्यम् । कुतो न दृश्यत इति चेत् राज्यमकामयमानस्य राजसमानसुखानुभूतेरनुभवबाधितत्वस्य स्पष्टत्वात् । यथोक्तमनुव्याख्याने- 'कुत्रचित्कामिनः पुंसः कामाभावात् क्वचित् क्वचित् । इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति' (ब्र.सू.अनु. ३.४ श्लो. २७) इति । वैराग्यप्रशंसातो न तत्वं मार्गणीयमिति चेन्न । निरवधिकस्वरूपानन्दोऽयमात्माकामाद्युपद्रवावरणात्तु तथा न भासते । अतो यावद्यावद् कामक्षयस्तावत्तावदानन्दोत्कर्षो दृश्यत इत्यस्यार्थस्य प्रदर्शनार्थमस्य प्रकरणस्यावतारितत्वाद् आनन्दोत्कर्षविशेष एवात्र तात्पयम् । शतगुणत्वे तु न निर्भरः कार्य इति चेन्न । देवपदाकामस्य सकाशादिन्द्रपदाकामस्यानन्दोत्कर्षविशेषादर्शनादिति भावः ।

किञ्चोत्तरपदकामे तस्याङ्गीकृते सति अकामहतत्वरूपं विशेषणमसम्भवि स्यादित्याशयेनाह- **सति चेति** ।। उत्तरपदकामे सतीति यावत् । किञ्च तत्तत्पदाकामास्तत्तत्समानानन्दवन्तः तदुत्तरपदकामवन्तश्च विरक्ताः पुरुषा एवाप्रामाणिका इत्याह- **न चेति** । तदिच्छवः उत्तरोत्तरपदेच्छवः । तथा च यदा मनुष्यास्तदिच्छवो न भवन्ति तदा अयोग्यपदाकाङ्क्ष्या अनर्थज्ञाः महान्तो ऋष्यादयस्तदिच्छवो न भवन्तीति किमु वाच्यमिति भावः । ननु 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र.सू. १.३.२६) इति सूत्रे मनुष्याणामेव

देवतापदप्राप्तेरुक्तत्वात् कथं मनुष्यास्तदिच्छवो न भवन्तीत्युच्यत इत्यत उक्तम्- **प्राय इति** । तत्तत्पदयोग्यमनुष्यव्यावृत्त्यर्थमेव प्राय इत्युक्तम् । न तु तत्पदायोग्यमनुष्याणां मध्य एव केचित् तदिच्छवः सन्ति केचिन्नेति द्योतयितुमिति भावः ।

ननु मनुष्यगन्धर्वाद्यानन्दनिर्देशे मुक्तत्वज्ञापकश्रोत्रियत्वादिविशेषणवत् चक्रवर्त्यानन्दनिर्देशे मुक्तत्वज्ञापकविशेषणाभावात् कथमेतन्मुक्तविषयमित्याशङ्कायामाह- **चक्रवर्तिनस्त्विति** ।। 'स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः' इति प्रमाणेन भगवत्सामीप्यलक्षणमुक्तिं प्राप्तो युवेत्युच्यत इति पूर्वं व्याख्यातत्वेन युवशब्द एव चक्रवर्तिनो मुक्तत्वज्ञापक इति भावः । एवं 'सैषानन्दस्य मीमांसा भवति' इति मुक्तानन्दो मीमांस्यत इति प्रतिज्ञातमर्थं प्रस्तावादिति युक्त्याऽपव्याख्याननिराकरणेन चोपपाद्योपसंहरति- **तस्मादिति** ।। अपव्याख्यानस्यायुक्तत्वात् प्रस्तावादिति युक्तिबलाच्च इयं 'सैषानन्दस्य' इत्यादिना क्रियमाणा मीमांसा मुक्तविषया मुक्तानन्दविषयिणीत्यर्थः । इति सिद्धमिति शेषः । पूर्वमकामहतत्वं कामकृतोपद्रवाभावः । स चाप्तकामत्वेनैवोपपद्यते न सर्वथा कामाभावेन । तथा च मुक्तस्यैवाप्तकामत्वात् तस्यैवाकामहतत्वं मुख्यमिति स हि मुक्तोऽकामहत इत्यादिनोक्तं तदयुक्तम् । आप्तकामत्वाभावेऽपि सर्वथा अकामत्वेनैवाकामहतत्वोपपत्तेः ।

न चासुप्तामूढचेतनत्वेन सर्वथा कामाभावो नास्तीति 'नह्यकामः कश्चिद्दृष्ट' इत्यादिनोक्तमिति वाच्यम् । मुक्तानां कामराहित्याभावसाधनस्य श्रुतिबाधितत्वात् । 'यदा सर्वे प्रमुच्यन्ते कामयेऽस्य हृदि स्थिताः । अथ मर्त्यो मृतोऽभवत्यत्र ब्रह्म समश्नुते' इति श्रुतौ मुक्तानां सर्वथा कामाभावोक्तेरित्यत आह- **यदा सर्व** इति ।। अन्तःकरणस्थानामेव कामानां मोक्षो मोक्षणं

परित्याग उक्तो न तु सर्वथापीत्येवार्थः । एतदुक्तं भवति- 'यदा सर्वे' इति श्रुतिः सर्वथा कामाभावपरेत्यङ्गीकारे हृदि स्थिता इति कामानां विशेषणं व्यर्थमेव स्यात् । कामानां हृदयगतत्वाव्यभिचारेण व्यावर्त्याभावात् । अतो 'हृदि स्थिताः' इति कामानां विशेषणं प्रयुञ्जाना श्रुतिरन्तःकरणपरिणतानां कामानामेव मुक्तावभावः । अन्तःकरणस्यैवाभावात् । न तु सर्वेषामभावः स्वरूपभूतानां कामानामवस्थानादित्येवमर्थं गमयतीति ।

## भाष्यम्

(मुक्तानां स्वरूपभूतकामोऽस्तीति प्रतिपादनम्)

**'यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव भवति' इति मुक्तानामपि स्वरूपभूतः कामः प्रतीयते ।**

**'कामस्सङ्कल्प आनन्दो मुक्तानां तारतम्यतः ।**
**स्वरूपभूतास्ते सर्वे निर्दोषा गुणरूपकाः ।।' इति पाद्मे ।।**

**'सङ्कल्पादेव च तच्छ्रुतेः' (ब्र.सू. ४.४.८) इति सूत्रम् । 'भेदव्यपदेशात्' (ब्र.सू. १.३.५) इति जीवेशयोर्भेदश्चोक्तो भगवता ।**

ननु मुक्तानां स्वरूपभूतकामसद्भावे किं प्रमाणमित्यत आह- **यं यमिति** ।। 'अन्तं स यदि पितृलोककामो भवति' इत्यादिश्रुत्युक्त-पितृलोकादिस्थानविशेषम् । यथोक्तं बृहद्भाष्ये- 'स्वप्रान्तमुच्चावचमीयमान' इत्यत्र । 'अन्तःस्थानं स्थलं वासः प्रदेश इति चोच्यते' इति । 'अन्तमवसानं निर्णयं वा' इति पूर्वटीकाकाराः । मुक्तानामपि षोडशकलात्मकलिङ्ग-शरीरान्मुक्तानामपि प्राकृतान्तःकरणरहितानामपीति यावत् । कामः प्रतीयते । अतः स स्वरूपभूत एव नत्वन्तःकरणपरिणतिरूप इति । मुक्तानां स्वरूपभूतकामप्रतिपादकं स्पष्टं प्रमाणमाह- **काम इति** ।। सङ्कल्पो नाम इदं

करिष्य इत्येवं क्रियारम्भहेतुभूतइच्छाविशेषः। कामः सङ्कल्पः आनन्द इत्येते मुक्तानां मुक्तेभ्यो भेदतो भिन्नतया नैव सन्ति। किन्तु ते सर्वे मुक्तानां स्वरूपभूता एव। यतो निर्दोषज्ञानानन्दादिगुणाः स्वरूपभूता इत्यर्थः। मुक्तानां स्वरूपभूतकामसद्भावे सूत्रं च पठति- **सङ्कल्पादेव चेति**॥ न मुक्तानां भोगादिषु प्रयत्नापेक्षा। 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिश्रुतेः सङ्कल्पमात्रादेव तद्भोगसिद्धिरिति सूत्रार्थः। यदुक्तं परेण जीव एवान्नमयादिशब्दार्थो न ब्रह्म। न च जीवपक्षे ब्रह्मशब्दानुपपत्तिरिति वाच्यम्। जीवब्रह्मणोरभेदाभिप्रायेण तदुपपत्तेरिति। तत्र सूत्रविरोधमाह- **भेदव्यपदेशादिति**॥ ईशो ब्रह्म तस्यैव मायाशबलितस्य तन्मते ईशव्यवहारभाक्त्वादिति ज्ञातव्यम्। न केवलं स यश्चायमिति वाक्येऽधिकरणत्वाद्युक्त्या श्रुत्यैव भेद उक्तः। किन्तु भगवता चोक्त इति सम्बन्धः। यद्यपि इदं तत्रैव वक्तव्यम्। तथाप्युत्तरग्रन्थोपक्षेपायात्रोक्त-मित्यवगन्तव्यम्।

## भाष्यम्

(भेदस्य धर्मिस्वरूपत्वसमर्थनम्)

**न च भेददर्शनमसुकरम्। स्वरूपत्वात् भेदस्य।**

## पदार्थदीपिका

ननु भेदः कोऽपि न प्रामाणिकः। न च प्रत्यक्षत एव घटादिभेदः सिद्ध इति वाच्यम्। अन्योन्याश्रयादिदोषदुष्टत्वेन भेददर्शनस्यासुकरत्वात्। तथाहि- भेदः किं द्विष्ठो वा उत एकनिष्ठो परनिरूप्यः। आद्ये भेदो हि प्रतीयमानो घटपटौ भिन्नाविति घटपटविशेषणतया वा घटपटयोर्भेद इति घटपटविशेष्यतया वा प्रत्येतव्यः। भेद इत्येवाप्रतीतेः। द्वितीये तु घटात् पटो भिन्न इति वा घटात्पटस्य भेद इति वा घटप्रतियोगिकतया पटधर्मिकतया भेदग्रहणमेष्ट-

व्यम् । तत्रोभयत्राप्यन्योन्याश्रयत्वम् । विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्यः । नहि देवदत्तादर्शने दण्डस्य तद्विशेषणतया दर्शनं युज्यते । विशेष्यज्ञानं च भेदज्ञानापेक्षम् । न हि भेदाप्रतीतौ घटपटाविति द्वित्वविशिष्टार्थप्रतीतिः सम्भवति । एवं भेदरूपविशेष्यज्ञाने तद्विशेषणतया द्वित्वावच्छिन्नघटपटज्ञानम्, द्वित्वप्रतीतेर्भेदज्ञानकार्यत्वात् । द्वित्वावच्छिन्नघटपटज्ञाने च भेदज्ञानम्, ससम्बन्धिकपदार्थप्रतीतेः सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानकार्यत्वात् इत्यन्योन्याश्रयत्वम् । तथा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम् । तस्य तज्जन्यत्वात् । भेदज्ञाने सत्येव धर्मिप्रतियोगिनोर्ज्ञानम् । न हि भेदाग्रहे धर्मिप्रतियोगिभावोऽवगन्तुं शक्यते । तथात्वे घटाद्घटस्य भेद इत्यपि प्रतीतिः स्यात् । नच परस्पराश्रयाणि कार्याणि सम्भवन्ति । किञ्च प्रत्यक्षं भेदमेव गोचरयेदुत वस्त्वपि । नाद्यः । भेद इत्येवाप्रतीतेः । द्वितीयेऽपि किं भेदपूर्वं वस्तुगोचरयेदुत वस्तुपूर्वं भेदम् । युगपदुभयं वा । नाद्यः, भेद इत्येवाप्रतीतेरिति दत्तोत्तरत्वात् । बुद्धेर्विरम्यव्यापारायोगाच्च । अत एव न द्वितीयः । नापि तृतीयः । वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगात् । किञ्च पटो भिन्न इति विशेषणविशेष्यभावप्रतीतेः तस्याश्च भेदप्रतीत्यधीनत्वस्य दण्डिनि चैत्रादौ दर्शनेन भेदप्रतीतिपरम्परयाऽनवस्था स्यात् । किञ्च किमयं भेदो भिन्नमेव धर्मिणं परिरभते उताभिन्नम् । नाद्यः । अनन्तभेदाभ्युपगमप्रसङ्गात् । अन्यथात्माश्रयाद्यापातात् । सन्त्वनन्तभेदाः किं नश्छिन्नमिति चेन्न । ते अनन्ता अपि भेदाः किं क्रमेण धर्मिणं परिरम्भन्ते उत युगपत् । नाद्यः । क्रमेण परिरम्भमाणानन्तभेदसम्बन्धाय धर्मिणोऽनादिनित्यतापातात् । नच भेदानन्त्यं प्रामाणिकम् । येन तदङ्गीकारः स्यात् । न द्वितीयः । भिन्ने भेद-स्थितिरिति पक्षक्षतेः । भेदसम्बन्धं विना भिन्नत्ववाचोऽयुक्तेरयुक्तत्वात् । तत्सम्बन्धेनैव भिन्नत्वे त्वेकैकेन भेदेन विशिष्टे एकस्य भेदस्य स्थितौ

नियामकाभावेन तेषां कलहान्नैकोऽपि भेदो विशिष्येत्। न द्वितीयः। विरोधादेव। किञ्च भेदः किं स्वरूपं धर्मो वा। नाद्यः। 'सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः। एकाभावादसंदेहान्न रूपं वस्तुनो भिदा' (तत्त्वप्रकाशिका पृ. १६७)। किञ्च भेदस्य घटस्वरूपत्वे घटभेदशब्दयोः पर्यायत्वमन्यतरपरिशेषश्च स्यात्। न द्वितीयः। किञ्च पटो भिन्न इत्युक्तरीत्या अनवस्थापातात्। तस्माद् भेदस्वरूपस्य विचारासहत्वेन तद् दर्शनस्यासुकरत्वात्। अविचारितरमणीयाविद्याविलसित एवायं भेद इति।

तदेतत्प्रतिषेधति- **न चेति** ।। अयंभावः। किं भेदस्य दर्शनमेव निराक्रियते। उत तस्य कारणजन्यत्वम्। अथ निर्दोषकरणजन्यत्वम्। नाद्यः। यदि भेदो दृश्येत तदा अन्योन्याश्रयत्वादिकं स्यादित्यापादने भेददर्शनस्योभयसम्मतत्वेन विपर्ययापर्यवसानात्। भेदभ्रमनिरासाय वेदान्तश्रवणाद्ययोगाच्च। न द्वितीयः। तत्किमजन्यतया स्यात् उतातत्कारणजन्यतया वा। नाद्यः। भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्रातिकूल्यचरणापातात्। न द्वितीयः। तदुत्पादकस्यैव तत्कारणत्वेन व्याघातात्। तृतीयेऽपि किं तर्केण सदोषत्वाध्यवसायः अथ स्फुटतरबाधकवशात्। नाद्यः। वेदान्तवाक्यजन्यज्ञानविषयस्यैक्यस्याप्यविश्वसनीयतापातात्। त्वदुक्ततर्काणां वक्ष्यमाणरीत्या ऐक्येपि प्रसरात्। कश्चात्र भेदप्रत्यक्षे दोषः। अविद्येति चेत् तर्हि सैव वेदान्तानामपि मूलमिति किं निबन्धनः प्रत्यक्षे प्रद्वेषः। न द्वितीयः। निरवकाशस्य तस्यानुपलम्भात्। तत्त्वमसीत्यादेस्तत्र तत्र सम्यग्व्याख्यातत्वात्।

किञ्च कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेद् उताभेदम्। यद्वा यत्किञ्चित्। निरालम्बनबाधायोगात्। नाद्यः। साधकत्वात्। द्वितीयेऽपि तदभावस्तद्विरोधी तदन्यो वा नञर्थो वाच्यः। पक्षत्रयेऽपि दुष्परिहरो भेदः।

व्यम् । तत्रोभयत्राप्यन्योन्याश्रयत्वम् । विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्यः । नहि देवदत्तादर्शने दण्डस्य तद्विशेषणतया दर्शनं युज्यते । विशेष्यज्ञानं च भेदज्ञानापेक्षम् । न हि भेदाप्रतीतौ घटपटाविति द्वित्वविशिष्टार्थप्रतीतिः सम्भवति । एवं भेदरूपविशेष्यज्ञाने तद्विशेषणतया द्वित्वावच्छिन्नघटपटज्ञानम्, द्वित्वप्रतीतेर्भेदज्ञानकार्यत्वात् । द्वित्वावच्छिन्नघटपटज्ञाने च भेदज्ञानम्, ससम्बन्धिकपदार्थप्रतीतेः सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानकार्यत्वात् इत्यन्योन्याश्रयत्वम् । तथा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम् । तस्य तज्जन्यत्वात् । भेदज्ञाने सत्येव धर्मिप्रतियोगिनोर्ज्ञानम् । न हि भेदाग्रहे धर्मिप्रतियोगिभावोऽवगन्तुं शक्यते । तथात्वे घटाद्घटस्य भेद इत्यपि प्रतीतिः स्यात् । नच परस्पराश्रयाणि कार्याणि सम्भवन्ति । किञ्च प्रत्यक्षं भेदमेव गोचरयेदुत वस्त्वपि । नाद्यः । भेद इत्येवाप्रतीतेः । द्वितीयेऽपि किं भेदपूर्वं वस्तुगोचरयेदुत वस्तुपूर्वं भेदम् । युगपदुभयं वा । नाद्यः, भेद इत्येवाप्रतीतेरिति दत्तोत्तरत्वात् । बुद्धेर्विरम्यव्यापारायोगाच्च । अत एव न द्वितीयः । नापि तृतीयः । वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगात् । किञ्च पटो भिन्न इति विशेषणविशेष्यभावप्रतीतेः तस्याश्च भेदप्रतीत्यधीनत्वस्य दण्डिनि चैत्रादौ दर्शनेन भेदप्रतीतिपरम्परयाऽनवस्था स्यात् । किञ्च किमयं भेदो भिन्नमेव धर्मिणं परिरभते उताभिन्नम् । नाद्यः । अनन्तभेदाभ्युपगमप्रसङ्गात् । अन्यथात्माश्रयाद्यापातात् । सन्त्वनन्तभेदाः किं नश्छिन्नमिति चेन्न । ते अनन्ता अपि भेदाः किं क्रमेण धर्मिणं परिरम्भन्ते उत युगपत् । नाद्यः । क्रमेण परिरम्भमाणानन्तभेदसम्बन्धाय धर्मिणोऽनादिनित्यतापातात् । नच भेदानन्त्यं प्रामाणिकम् । येन तदङ्गीकारः स्यात् । न द्वितीयः । भिन्ने भेद-स्थितिरिति पक्षक्षतेः । भेदसम्बन्धं विना भिन्नत्ववाचोऽयुक्तेरयुक्तत्वात् । तत्सम्बन्धेनैव भिन्नत्वे त्वेकैकेन भेदेन विशिष्टे एकस्य भेदस्य स्थितौ

नियामकाभावेन तेषां कलहान्नैकोऽपि भेदो विशिष्येत् । न द्वितीयः । विरोधादेव । किञ्च भेदः किं स्वरूपं धर्मो वा । नाद्यः । 'सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः । एकाभावादसंदेहान्न रूपं वस्तुनो भिदा' (तत्त्वप्रकाशिका पृ. १६७) । किञ्च भेदस्य घटस्वरूपत्वे घटभेदशब्दयोः पर्यायत्वमन्यतरपरिशेषश्च स्यात् । न द्वितीयः । किञ्च पटो भिन्न इत्युक्तरीत्या अनवस्थापातात् । तस्माद् भेदस्वरूपस्य विचारासहत्वेन तद् दर्शनस्यासुकरत्वात् । अविचारितरमणीयाविद्याविलसित एवायं भेद इति ।

तदेतत्प्रतिषेधति- **न चेति** ।। अयंभावः । किं भेदस्य दर्शनमेव निराक्रियते । उत तस्य कारणजन्यत्वम् । अथ निर्दोषकरणजन्यत्वम् । नाद्यः । यदि भेदो दृश्येत तदा अन्योन्याश्रयत्वादिकं स्यादित्यापादने भेददर्शनस्योभयसम्मतत्वेन विपर्ययापर्यवसानात् । भेदभ्रमनिरासाय वेदान्तश्रवणाद्ययोगाच्च । न द्वितीयः । तत्किमजन्यतया स्यात् उतातत्कारणजन्यतया वा । नाद्यः । भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्रातिकूल्यचरणापातात् । न द्वितीयः । तदुत्पादकस्यैव तत्कारणत्वेन व्याघातात् । तृतीयेऽपि किं तर्केण सदोषत्वाध्यवसायः अथ स्फुटतरबाधकवशात् । नाद्यः । वेदान्तवाक्यजन्यज्ञानविषयस्यैक्यस्याप्यविश्वसनीयतापातात् । त्वदुक्ततर्काणां वक्ष्यमाणरीत्या ऐक्येपि प्रसरात् । कश्चात्र भेदप्रत्यक्षे दोषः । अविद्येति चेत् तर्हि सैव वेदान्तानामपि मूलमिति किं निबन्धनः प्रत्यक्षे प्रद्वेषः । न द्वितीयः । निरवकाशस्य तस्यानुपलम्भात् । तत्त्वमसीत्यादेस्तत्र तत्र सम्यग्व्याख्यातत्वात् ।

किञ्च कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेद् उताभेदम् । यद्वा यत्किञ्चित् । निरालम्बनबाधायोगात् । नाद्यः । साधकत्वात् । द्वितीयेऽपि तदभावस्तद्विरोधी तदन्यो वा नञर्थो वाच्यः । पक्षत्रयेऽपि दुष्परिहरो भेदः ।

भेदाभावादिग्राहिणापि बाधकेन प्रतियोगिविलक्षणतयैव स्वविषयस्य ग्राह्यत्वेन भेदस्य दुष्परिहरत्वात्। नापि तृतीयः। अविरोधेन बाधकत्वायोगात्। किञ्च नायं भेद इति वा नास्त्यत्र भेद इति वा अन्यदेव भेदात्मना प्रत्यभादिति वा बाधकज्ञानेन भवितव्यम्। नेदं रजतमित्यादिवत्। तदेतत्सर्वथा भेदावगाहीति कथं तद्बाधकमिति। तदेतत्सर्वं भेददर्शनमसुकरं न, किन्तु सुकरमेवेत्यनेन सूचितम्। तेन परपक्षे बाधकानां सूचितत्वात्। ननु तथापि अन्योन्याश्रयत्वादिदोषपरिहारोपायः क इत्यतो भेददर्शनस्यासुकरत्वाभावे हेतुमाह- **स्वरूपत्वादिति** ॥ धर्मिस्वरूपत्वादित्यर्थः। भेदो धर्मिस्वरूपमेव। तेन धर्मिप्रतीतेरेव भेदप्रतीतिरिति प्रतीतिद्वयाभावान्नान्योन्याश्रयत्वमिति भावः। प्रतियोगिप्रतीत्यपेक्षयाऽन्योन्याश्रयत्वं तु स्वयमेवाचार्यः परिहरिष्यति।

यदुक्तं प्रत्यक्षं किं भेदमेव गोचरयेदित्यादि। तत्र युगपदुभयं गोचरयतीति ब्रूमः। न च वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगः। भेदस्य वस्तुस्वरूपत्वेन वस्तुप्रतीतिरेव भेदप्रतीतिरित्यङ्गीकारात्। अन्यथा बिम्बप्रतिबिम्बयोरभेदग्राहिप्रत्यक्षं जीवब्रह्मणोरभेदग्राहिश्रुत्यादिकं च किमभेदमेव गोचरयेत् उत वस्त्वपीत्याद्यापातः। यदप्युक्तं 'किञ्च पटो भिन्नः' इत्यादि तदयुक्तम्। भेदस्य धर्मिस्वरूपत्वेनानवस्थाभावात्। न च तथात्वे विशेषणविशेष्यभावानुप-पत्तिः। सविशेषाभेदाङ्गीकारेणोपपत्तेः। अन्यथा जीवाभिन्नं ब्रह्मेत्यादावपि विशेषणविशेष्यभावानुपपत्तिः। यच्चोक्तं 'किमयं भेदः' इत्यादि, तदपि तुच्छम्।भेदस्य धर्मिस्वरूपत्वेन धर्मिणं परिरभ्यैव भेदो जात इत्यङ्गीकारात्। ननु धर्मिणा सहैव धर्मोत्पत्त्यङ्गीकारे गुणिना सहैव गुणोत्पत्तिरप्यङ्गीकार्या स्यात्। तथा च 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति' इति कल्पनावैयर्थ्यं गुणेष्वपि धर्मन्यायस्यैव कल्पनीयत्वादिति चेन्न। नैयायिकं प्रत्येवास्य आपाद्यत्वेनास्मान्प्रति असम्भवात्। गुणवदुपादानमेव गुणवदुपादेयाऽऽत्मना परिणमत इत्यङ्गीकारात्।

## भाष्यम्

**सर्वव्यावृत्तं हि सर्वस्य स्वरूपं सर्वैरनुभूयते। अन्यथा 'अहं वा दृष्टोऽन्यो वा दृष्टः' इत्यपि संशयः स्यात्।**

## पदार्थदीपिका

ननु भेदस्य वस्तुस्वरूपत्वमेव कुत इति चेन्न। यो हि भेदमेव नाङ्गीकुर्यात् किं तस्यार्द्रकवणिजो वहित्रचिन्तया। भेदस्वरूपे तु प्रमाणं प्रत्यक्षमेव। यस्तु भेदमङ्गीकृत्यापि तस्य वस्तुस्वरूपत्वं नाभ्युपैति तं प्रत्याह- **सर्वव्यावृत्तमिति**॥ हि शब्देनानुभवस्य सर्वथा अविगानमाह। सर्वव्यावृत्तमिति सावधारणम्। सर्वस्य घटादेः स्वरूपं यदानुभूयते तदेदं न सर्वात्मकं किन्तु स्वयमेवेति सर्वव्यावृत्तमेवानुभूयते । न तु सर्वात्मकत्वेनेति सर्वानुभवसिद्धम्। व्यावृत्तिरेव च भेदः। तेन सर्वभेदो घटादिस्वरूपमिति ज्ञायते। अयमत्र प्रयोगः। विमतो भेदो घटस्वरूपम्। घटप्रतीतौ नियमेन प्रतीयमानत्वादिति। घटपटाविति समूहालम्बनज्ञानविषयभूते पटे व्यभिचारवारणाय नियमग्रहणम्। ननु कथमत्र व्याप्तिः। न च यज्ज्ञाने यन्नियमेनोपलभ्यते तत्तत्स्वरूपमिति वाच्यम्। दण्डिज्ञानादाववश्यं भासमानदण्डादौ दण्ड्यादिस्वरूपत्वाभावेन व्यभिचारादिति चेन्न। यत्र घटप्रतीतावेव नियमेन प्रतीयमानत्वं तत्र घटस्वरूपत्वम्। यथा घटस्वरूपमिति विशेषव्याप्तेराश्रयात्। यद्वा घटभेदावन्योन्याभिन्नौ नियमेनान्यतरप्रतीतावन्यतरस्य प्रतीयमानत्वात्। ययोर्मध्ये अन्यतरस्य स्फुरणे सत्यन्यतरस्य स्फुरणनियमस्तावभिन्नौ। यथा सम्प्रतिपन्नौ रूपघटाविति प्रयोगः। दण्डिप्रतीतौ दण्डस्य स्फुरणनियमेऽपि दण्डप्रतीतौ दण्डिनः स्फुरणनियमाभावात् न व्यभिचारः। ननु भेदो न धर्मिस्वरूपं तत्प्रतीतावपि कदाचिदप्रतीयमान-

त्वात् । यो यत्प्रतीतावपि न प्रतीयते नासौ तत्स्वरूपम् । यथा घटप्रतीतावप्रतीयमानः पटो न घटस्वरूपमिति सत्प्रतिपक्ष इति चेत् तत्राह- **सर्वैरिति** ।। तथा च स्वरूपासिद्धो हेतुरिति भावः । स्यादेवं यदि सर्वस्य स्वरूपं सर्वव्यावृत्तमेव अनुभूयत इति स्यात् तदेव कुत इत्यतस्तदनङ्गीकारे बाधकमाह- **अन्यथेति** ।। अन्यो वेत्यस्य घटो वेत्यर्थः । यदि न सर्वस्य स्वरूपं सर्वव्यावृत्तमेवानुभूयते तदा सर्वपदार्थान्तर्गतात्मस्वरूपमपि प्रतीयमानं घटादिसर्वव्यावृत्तत्वेन न प्रतीयेत । तथा चाहमिति दृष्टः किमहं वा घटो वेति संशयस्स्यात् । अपिशब्देन इदं सर्वं भवति न वेति संशयं समुच्चिनोति । संशयोऽपीति वाऽपिशब्दसम्बन्धः । तेन घट एवेत्यादिविपर्ययः स्यादित्यस्य समुच्चयः । समानधर्मदर्शनादेः संशयकारणस्य सत्त्वात् । प्रतिबन्धकीभूत-व्यावृत्तिज्ञानस्याभावात् । तस्मादुक्तसंशयकारणस्य सत्त्वेऽपि व्यावृत्ति-ज्ञानरूपप्रतिबन्धकस्य सत्त्वान्न तथा संशयादिकमिति वक्तव्यम् । तथा च सिद्धं वस्तुप्रतीतावेव व्यावृत्तिरस्तीति।

## भाष्यम्

**न च पश्चाद् भेदो ज्ञायत इत्यत्र किञ्चिन्मानम् । न हि दृष्टवस्तुनः पुरुषस्य तस्य वस्त्वन्तराद्भेदे संशयः क्वचिद् दृष्टः । न च सर्वतो व्यावृत्त्यनुभवे सर्वज्ञता अपेक्षितेति दोषः । सामान्यतः सर्वस्य सर्वैरपि ज्ञातत्वात् ।**

## पदार्थदीपिका

ननु तथाऽपि न भेदो वस्तुप्रतीतावेव प्रतीयते । न चैवमुक्तसंशयाद्या-पत्तिः । पूर्वं वस्तुप्रतीतिः पश्चाद् भेदप्रतीतिरित्यङ्गीकारात् । युक्तं च तथा । निर्विकल्पके हि प्रत्यये वस्तुमात्रमवभासते । भेदस्तु वस्तुदर्शनोत्तरकालं प्रतियोगिस्मरणे सत्यवभासते । यथा गवि गवयसादृश्यं भूतले घटाभावश्च । तथा च पाश्चात्यं भेददर्शनं प्रसक्तमपि संशयादिकं निरोत्स्यति । ततश्च

भवदीयहेतोरेवासिद्धिर्नास्मदीयस्येत्यत आह- **न चेति** ॥ पश्चात् वस्तुप्रतीतेरिति शेषः । स्यादेतदेवं यदि पूर्वं वस्तुप्रतीतिः पश्चाद्भेदप्रतीतिरित्यत्र प्रमाणं स्यान्न चैवमस्ति । परेण निर्विकल्पकाङ्गीकाराभिप्रायेण ह्येतदुक्तम् । न चैतद्युक्तम् । तस्याप्रामाणिकत्वादिति भावः । तथा हि । न तावत्प्रत्यक्षं तस्यातीन्द्रियत्वाभ्युपगमात् । नापि हानादिव्यवहाररूपकार्येण तदनुमानं हानादिव्यवहारस्य सविकल्पकसाध्यत्वात् । नापि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवदित्यनुमानं मानम् । दृष्टान्तस्य साध्यविकलत्वात् । न चानुमितौ साध्यप्रसिद्धेर्हेतुत्वेन तत्र विशेषणज्ञानजन्यत्वं सिद्धमेवेति वाच्यम् । व्याप्त्यादिज्ञानसत्त्वे साध्यप्रसिद्धिविलम्बेनानुमितिविलम्बाभावेन तत्र तस्या अहेतुत्वात् । न च साध्यप्रसिध्यभावे व्याप्तिग्रह एव न सम्भवतीति वाच्यम् । तर्हि तस्याः साध्यप्रसिद्धेरनुमितिजनकीभूतव्याप्तिग्रहजनकत्वेनान्यथासिद्धतयानुमितावजनकत्वापातात् । नापि ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणं सकलज्ञानवृत्तित्वात् व्यतिरेकेणेच्छात्ववत् । अप्रमात्वे व्यभिचारवारणाय सकलपदमित्यनुमानम् । अप्रयोजकत्वात् इच्छात्वव्यवहारत्वानुमितित्वादिकं पक्षीकृत्यापि प्रयोगसम्भवेन निष्प्रकारकेच्छादिसिद्धिप्रसङ्गाच्च । नापि चक्षुः चाक्षुषसविकल्पकातिरिक्तज्ञानकरणं ज्ञानकरणत्वात् घ्राणवदित्यनुमानम् । अप्रयोजकत्वात् । अनेन निर्विकल्पकसिद्धौ तदतिरिक्तेति विशेषणदानेन सविकल्पकनिर्विकल्पकातिरिक्तज्ञानसिद्धिः स्यात् । एवं तदतिरिक्तज्ञानसिद्धिरपि स्यादित्यतिप्रसङ्गाच्च । नापि जागराद्यसविकल्पकं प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् दण्डीति प्रत्यक्षवदित्यनुमानं मानम् । दृष्टान्तस्य साध्यवैकल्यात् । दण्डपुरुषयोर्युगपदिन्द्रियसन्निकर्षेऽसंसर्गाग्रहे च सति विनैव पूर्वदण्डज्ञानं दण्डीति ज्ञानोत्पत्तिसम्भवेन विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वासम्मतेः । तस्माद् नानुमानं मानम् ।

आगमस्तु तत्र नेष्टो दृष्टो वा। तदेतदाह - **किञ्चिदिति** ॥ किञ्च यदि भेदो वस्तुप्रतीतौ न प्रतीयेत तदा अस्य अमुना भेद इति सविकल्पकज्ञानमपि न जायेत। तथा च तथा व्यवहारोऽपि न स्यात्। अस्यामुनेति धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य भेदो ज्ञायते। न चागृहीतभेदं तथोद्देष्टुं शक्यते। एकस्मिन्नपि तत्प्रसङ्गात्। भेदसत्तामात्रेण तदुपपत्तिरिति चेन्न। दूरस्थवनस्पत्योरभेद-प्रत्ययाभावप्रसङ्गात्। दोषात्तत्र तथेति चेन्न। भेदस्य स्वरूपसत्तयैवोपयोगे दोषस्य अकिञ्चित्करत्वात्। अतो धर्मिप्रतीतौ भेदो न प्रतीयते चेत्, न प्रतीयेतैव कदापीति संशयादिप्रसङ्गो दुर्वार एव। एतेन निर्विकल्पकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासान्न संशयाद्यवकाश इत्यपि परास्तम्। निर्विकल्पकस्यैव अप्रामाणिकत्वात्। भेदस्य तदीयतानवगतौ तद्विषयकसंशयादिप्रतिबन्धानुपपत्तेश्च। अन्यथा सर्वत्र संशयाद्यनुदय-प्रसङ्गादिति।

यदुक्तं सर्वव्यावृत्तं सर्वस्य स्वरूपं नानुभूयते चेद्दृष्टः किमहमन्यो वेत्यादिसंशयः स्यादिति तदयुक्तम्। इष्टापत्तेरिति चेन्न। अप्रामाणिकाङ्गी-कारस्यानुचितत्वादित्याह- **नहीति** ॥ तस्येति स्वस्येत्यर्थः। विभक्तिव्यत्ययेन वा वस्त्वन्तरादित्यस्य विशेषणं तस्मादिति। तथैव क्वचित्पाठः। वस्त्वन्तरत्वात् दृष्टवस्त्वन्तरात्। घटादिरूपवस्तुदर्शने तद्द्रष्टृत्वेन स्वस्य प्रत्यक्षत एव सिद्धत्वेन तस्माद् घटादेः स्वस्य भेदनिश्चय एव भवतीति तादृशसंशयासम्भवः प्रसिद्ध इत्यर्थः। यदुक्तं 'सर्वव्यावृत्तं सर्वस्य स्वरूपं सर्वैरनुभूयते' इति तन्न। प्रतियोगिज्ञानस्य व्यावृत्तिज्ञाने कारणत्वेन सर्वव्यावृत्त्यनुभवे सर्वेषां सर्वज्ञानप्रसङ्गात्। न हि सर्वेषां सर्वज्ञानमस्तीत्याशङ्क्य निषेधति- **नचेति** ॥ कुतो न दोष इत्यत आह- **सामान्यत इति** ॥ सामान्यतः सर्वव्यावृत्त्यनुभवे हि प्रतियोगिभूतस्य सर्वस्यापि सामान्यत एव ज्ञानमपेक्षितं

न विशेषतः । सामान्यतः सर्वज्ञानं च प्राणभृन्मात्रसिद्धम् । अन्यथा सर्वोपसंहारवती व्याप्तिर्न सिध्येत् । सर्वशब्दप्रयोगश्च न स्यात् । सर्वज्ञानं नास्तीति निषेधोऽपि न स्यात् । 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्यार्थधीश्च न स्यादिति भावः । ननु तथाऽपि विशेषतः सर्वव्यावृत्त्यनुभवे विशेषतः सर्वज्ञतापेक्षितेति चेन्न । पदार्थस्वरूपानुभवेऽपि प्रतियोगिभूतस्य सर्वपदार्थस्य विशेषतो ज्ञानाभावादेव विशेषाकारेण सर्वव्यावृत्त्यनुभवाभावेन विशेषतः सर्वज्ञताया अनपेक्षितत्वात् ।

## भाष्यम्

**यावत्तु सर्वतो भेदो विशेषतो न ज्ञायते तावत् स्वरूपमेव विशेषतो न ज्ञातम् । न हि ज्ञाताद् वस्तुनोऽव्यावृत्तिः केनचित् शङ्क्यते । यदा तु संशीयते तदाऽपि कुतश्चिद् व्यावृत्तमेव ज्ञायते । न हि सर्वमिदं भवति वा न वेति कस्यचित् संशयः । अतो व्यावृत्तिरेव स्वरूपम् ।**

## पदार्थदीपिका

नन्वेवं व्यावृत्त्यपरपर्यायस्य भेदस्य विशेषाकारेणाज्ञाने तदात्मकत्वात् पदार्थस्वरूपमपि विशेषाकारेण न ज्ञायेतेत्यत आह- **यावदिति** ॥ सर्वतो भेदः सर्वव्यावृत्तिर्यावत्पर्यन्तं विशेषतो विशेषाकारेण न ज्ञायते तावत्पर्यन्तं पदार्थस्वरूपमपि विशेषतो न ज्ञातमेव इत्यङ्गीक्रियत इत्यर्थः । तु शब्दात् यदा च भेदो विशेषतो ज्ञायते तदा तदभिन्नं पदार्थस्वरूपमपि विशेषतो ज्ञातमेव इत्यपि ग्राह्यम् । तथा चेष्टापत्तिरिति भावः । नन्वस्तु सर्वपदार्थज्ञानं सर्वेषां तथाऽपि सामान्यतो ज्ञातात् समस्ताद् वस्तुनः पुरोवर्ति पदार्थस्य व्यावृत्तिज्ञानं सर्वेषामस्तीति कुतोऽङ्गीकरणीयमिति चेन्न । तदनङ्गीकारे सामान्यतो ज्ञातात्सर्वस्माद् वस्तुनः पुरोवर्तिपदार्थस्याव्यावृत्तिरभेदः केनचित्

शङ्क्येत इदं सर्वं भवति न वेति । समानधर्मदर्शनादिकारणसद्भावात् । व्यावृत्तिज्ञानरूपप्रतिबन्धकाभावाच्च । नच तथास्तीत्याह- **नहीति** ।। वस्तुन इति पञ्चम्यन्तं षष्ठ्यन्तं च ।

यदुक्तं भेदो वस्तुस्वरूपं वस्तुप्रतीतावेव प्रतीयमानत्वादिति, तदयुक्तम् । तथा सति सन्देहाभावप्रसङ्गात् । धर्मिज्ञानस्य संशयादिहेतुत्वात् तज्ज्ञानेनैव तदभिन्नस्य भेदस्यापि ग्रहणात् भेदज्ञानस्य संशयादिविरोधित्वात् इति हेतोरसिद्धिरिति चेत् तत्राह- **यदात्विति** ।। कुतश्चिदेवेति सम्बन्धः । कुतश्चिदेव व्यावृत्तं ज्ञायते न तु सर्वस्मात् । तथा च संशयोपपत्तिरिति भावः ।

अयं भावः । एक एव खल्वेकस्य भेदः । अनेकत्वे प्रमाणाभावात् । न च निरूपकभेदे न निरूप्यभेदस्याप्यनेकत्वमेवेति वाच्यम् । अनेकविषय-निरूप्यस्यापीश्वरज्ञानस्यैकत्वदर्शनात् । स च भेदो वस्तुप्रतीतौ प्रतीयत एव । तत्र च भेदे घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ताः धर्माः सन्ति । तत्र भेदनिष्ठो यत्प्रतियोगिकत्वादिरूपो धर्मः सादृश्यादिवशात् न प्रतीयते तत्र संशयादिकमुत्पद्यते इति न तत्रापि भेदस्याप्रतीतिः । अतः संशयादेरन्यथोपपत्तेर्न तदर्थं धर्मिप्रतीतौ भेदाप्रतीतिरङ्गीकार्या यया भेदस्यास्वरूपत्वं भवेदिति । ननु संशयादिस्थलेऽपि पदार्थस्वरूपं कुतश्चित् व्यावृत्तमेव प्रतीयत इति कुतोऽङ्गीकार्यमिति चेन्न । तदनङ्गीकारे इदं सर्वं भवति न वेत्येव संशयः स्यान्नतु स्थाणुर्वा पुरुषो वेति । समानधर्मदर्शनादि-रूपसामग्रीसद्भावात् । व्यावृत्तिज्ञानरूपप्रतिबन्धकाभावाच्च । न चैवं संशयोऽस्तीत्युक्तमित्याशयेनाह- **नहीति** ।। विवेकिनस्तादृशसंशयाभावेऽपि अविवेकिनः स्यादेवेत्यत उक्तं **कस्यचिदिति** । अविवेकिनोऽपीत्यर्थः । एवं हेतोः स्वरूपासिद्धिं परिहृत्य साध्यं निगमयति- **अत इति** ।। अतो व्यावृत्तिर्भेदो वस्तुस्वरूपमेवेति सम्बन्धः ।

## भाष्यम्

**अस्य भेद इति विशेष्यत्वमस्य स्वरूपमितिवत्। यथाऽस्तीति वर्तमानः कालो वस्तुना सहैवानुभूयते एवमन्यस्माद् व्यावृत्तमित्यत्र अन्यदपि सामान्यतः सहैवानुभूयते।**

## पदार्थदीपिका

ननु तथापि भेदस्य वस्तुस्वरूपत्वं न युज्यते। अस्य भेद इति विशेष्यत्वेन प्रतीयमानत्वात्। यो यद्विशेष्यतया प्रतीयमानो नासौ तत्स्वरूपं यथा कम्बलो ब्राह्मणस्येत्यत आह- **अस्य भेद इतीति** ॥ विशेष्यत्वं विशेष्यत्वप्रतीतिर्विशेष्यत्वव्यपदेशो वेत्यर्थः। इतिवदुपपद्यत इति शेषः। यथा अस्य स्वरूपमिति पदार्थविशेष्यत्वेन प्रतीयमानमपि स्वरूपं न ततोऽन्यत् तथा भेदोऽपीत्यनैकान्तिकत्वमनेनोक्तं भवतीति ज्ञातव्यम्। यदि तत्र भेदातिरिक्तं किमपि विशेष्यप्रतीतिनिमित्तमुच्यते तर्ह्यत्रापि विशेषोऽस्तीत्यन्यथासिद्धिः। यदि वा तत्र व्यपदेशमात्रं न प्रतीतिरित्यभिधीयते तदाऽत्रापि तत्सममिति स्वरूपासिद्धिः। अनयैव दिशा पटो भिन्न इति विशेषणतया प्रतीतिरपि न भेदस्य वस्तुस्वरूपत्वाभावसाधिका विशेषेणान्यथासिद्धत्वात्। अत एव सर्वव्यावृत्तमित्यादिप्रयोगोऽपि युज्यत इति द्रष्टव्यम्।

ननु भेदस्य धर्मिस्वरूपत्वेन धर्मिज्ञानापेक्षयाऽन्योन्याश्रयाभावेऽपि प्रतियोगिज्ञानापेक्षयान्योन्याऽश्रयस्तु स्यादेव। तथाहि प्रतियोगिभूतसर्वस्य ज्ञाने हि पुरोवर्तिवस्तुनिष्ठव्यावृत्तिज्ञानं प्रतियोगिज्ञानस्य तत्र कारणत्वात्। सर्वस्य प्रतियोगित्वज्ञानं च भेदज्ञाने सति धर्मिणः सकाशाद् भेदेन प्रतीतस्यैव सर्वस्य प्रतियोगित्वात्। अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसङ्गात्। न च धर्मिस्वरूपत्वमिव प्रतियोगिस्वरूपत्वमपि भेदस्याङ्गीक्रियते। तथा सत्यद्वैतप्रसङ्गादित्यत आह- **यथेति** ॥ अन्यस्मात्

प्रतियोगिभूतात् सर्वस्मादित्यर्थः । अन्यत्प्रतियोगिभूतं सर्वम् । अपि शब्दो दृष्टान्तेन सह समुच्चयार्थः । वस्तुना सहैव । स्यादेवमन्योन्याश्रयः यद्यादौ प्रतियोगिभूतसर्वपदार्थज्ञानम्, अनन्तरं भेदज्ञानमिति स्यात् । न चैवम्, किन्नाम यदा वस्त्वन्यस्माद् व्यावृत्तमित्यनुभूयते तदा प्रतियोगिभूतमन्यदपि वस्तुना सहैव अनुभूयते । एवं च प्रतियोगिना सहैव व्यावृत्तिप्रतीतेः । प्रतीतिद्वयाभावात् न अन्योन्याश्रय इत्यर्थः । ननु घटादिप्रतीतिश्चक्षुरादिजन्या प्रतियोगिभूतसर्वपदार्थज्ञानं च साक्षिरूपमिति वक्ष्यति । तथा च कथं साक्षिसिद्धेन सर्वपदार्थेन सह घटादिप्रतीतिरित्यत उक्तं **यथेति** । अनुभूयते साक्षिणेति शेषः । वस्तुना सहैव साक्षिसिद्धेन कालेन सहैव । वस्त्वनुभूयत इति यावत् । कालस्य साक्षिसिद्धत्वं त्वन्यत्रोपपादितमनुसन्धेयम् । यथोक्तम्- 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते' इति । नन्वेवं सामान्येन भेदप्रतीतावन्योन्याश्रयाभावेऽपि विशेषतो भेदप्रतीतावन्योन्याश्रयः स्यादेव । सा हि घटात् पटो भिन्न इत्युत्पद्यते । तथा च पटात् घटस्य भेदप्रतीतौ घटात् पटस्य भेदप्रतीतिरिति । धर्मिणः सकाशात् भेदेन प्रतीतस्यैव प्रतियोगित्वात् । अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसङ्ग इति चेत् । उच्यते । प्रत्येतव्यभेदाधिकरण-भूतपटप्रतियोगिकभेदवत्त्वेन ज्ञातस्य न प्रतियोगित्वं येनोक्तरीत्यान्योन्याश्रयः स्यात् । किन्तु यथा गोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतो गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविसदृशत्वेनाप्रतीतिमात्रेण वा गवयगत-सादृश्यप्रतियोगित्वं, एवमिहापि वस्तुतः प्रत्येतव्यभेदाधिकरण-प्रतियोगिकभेदवतो घटादेर्घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वोपपत्तेः । ननु घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वे पटाभिन्नतया ज्ञातस्यापि घटादेः पटधर्मिकभेदप्रतियोगित्वं स्यादिति चेन्न । तदा घटत्वादिना ज्ञानाभावात् । कैश्चित्पटैक्येन प्रतीतस्य घटादेः घटत्वादिना ज्ञानमात्रेण प्रतियोगित्वमुपपद्यत

इति वाच्यमानत्वाददोषः। अन्यथा जीवस्य ब्रह्मणाऽभेदे ज्ञाते ब्रह्मण जीवाभेदधीरिति तवाप्यन्योन्याश्रयः स्यात्। विस्तरस्तु सुधायां द्रष्टव्यः।

## भाष्यम्

**न ह्यस्तीति वर्तमानकालापेक्षया अनुभूयत इत्येतावता विद्यमानता नाम वस्तुनोऽन्या। सदित्यपि शत्रन्तत्वात् कालसम्बन्ध्येवानुभूयते तिष्ठन्निितिवत्। एवमन्यस्माद् व्यावृत्तमित्यन्येन सह प्रतीयमानमपि न स्वरूपादन्यत्।**

## पदार्थदीपिका

ननु तथापि 'न रूपं वस्तुनो भिदा' भेदस्य धर्मिप्रतियोगिसापेक्षत्वात्। भेदो हि प्रतीयमानो 'घटात् पटो भिन्नः' इति वा 'घटात् पटस्य भेदः' इति वा धर्मिप्रतियोगिप्रतीत्यपेक्षयैव प्रतीयते न जातुचिद् भेद इत्येव। धर्मिस्वरूपं तु परप्रतीतिनिरपेक्षमेव प्रतीयते। न ह्यस्मादयं पट इति वाऽस्मादस्य पट इति वा कस्यचित्प्रतीतिरस्ति किन्नाम पट इत्येव। तथा च सापेक्षत्वनिरपेक्षत्व-लक्षणविरुद्धधर्माधिकरणयोर्भेदधर्मिस्वरूपयोः कथमैक्यं स्यादित्यत आह- **नहीति** ॥ ब्रह्म किमस्ति न वेति केनचित् पृष्टे, न तावत् नास्तीति वक्तुं युक्तम्, शून्यवादापातात्। ततोऽस्ति ब्रह्मेत्येवोत्तरं वाच्यम्। तथा च ब्रह्मविद्यमानताऽस्तीति वर्तमानकालापेक्षतयाऽनुभूयते। ब्रह्म तु नेति सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वेऽपि विद्यमानता ब्रह्मरूपवस्तुनः सकाशादन्या न हि भवति। अन्यत्वे, सत्त्वे अद्वैतभङ्गप्रसङ्गात्। मिथ्यात्वे, 'अस्ति ब्रह्मेति चेत् वेद' इत्यादिश्रुतीनामतत्त्वावेदकत्वप्रसङ्गात्। न च विद्यमानता न सापेक्षेति वाच्यम्। विद्यमानता हि वर्तमानकालसम्बन्धः। सम्बन्धस्य च सम्बन्धिसापेक्षत्वमनुभवसिद्धम्। तदिदमुक्तम्- **अनुभूयत इति** ॥ अथास्ति ब्रह्मेत्यत्र तत्प्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्ध-

धर्माधिकरणत्वेन भेदोऽस्तु , न तद्विषयस्य । एकस्यैवाग्नेर्व्याप्त्यादिज्ञानसापेक्ष-तन्निरपेक्षानुमितिप्रत्यक्षविषयत्वदर्शनेन विरोधाभावादिति चेत् । समं प्रकृतेऽपि । किञ्च भेदधर्मिस्वरूपयोरभेदे सत्यपि सापेक्षत्वादिकं युज्यत एव । सविशेषाभेदाङ्गीकारात् । यथोक्तं टीकाकारैः- 'अधिकश्चात्र सविशेषाभेदाङ्गीकारेण परिहारः' इति ।

स्यादेवं ब्रह्म किमस्ति न वेति प्रश्नेऽस्तीत्येवोत्तरं स्यात् । न चैवं किन्नाम सदित्येव । तथा च नोक्तदोष इत्यत आह- **सदित्यपीति** ॥ सदित्यपि सदित्यत्रापि । सच्छब्दस्य शत्रन्तत्वात् शतुश्च लडर्थत्वाल्लटश्च वर्तमान-कालार्थत्वात्सत्त्वं वर्तमानकालसम्बन्ध्येवानुभूयते । न केवलं न च तत्सत्त्वं ब्रह्मणोऽन्यत् । सत्यत्वमिथ्यात्वाभ्यां प्रागुक्तदोषप्रसङ्गादित्यर्थः । सच्छब्दस्य शत्रन्तत्वात् तदर्थभूतं सत्त्वं कालसम्बन्ध्येवानुभूयत इत्येतन्निदर्शनेन समर्थयते- **तिष्ठन्नितिवदिति** ॥ तिष्ठन्नित्यस्य शत्रन्तत्वात् तदर्थभूतगतिनिवृत्तिर्यथा वर्तमानकालसम्बन्धिन्येवानुभूयते तथेत्यर्थः । नन्वस्तु विद्यमानता सत्त्वं वा कालापेक्षया प्रतीयमानमपि ब्रह्मणो नान्यत् । किं तत इत्यत आह- **एव-मिति** ॥ यथा कालापेक्षया प्रतीयमानमपि सत्त्वं न तन्निरपेक्षप्रतीति-कब्रह्मणोऽन्यत् एवमन्यस्मात् व्यावृत्तमित्यन्येन प्रतियोगिना सह प्रतीयमानमपि भेदस्वरूपं न प्रतियोगिज्ञाननिरपेक्षधर्मिस्वरूपादन्यत् । तथा चानैकान्तिकत्वात् न सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वस्य हेतोर्न भिदायाः वस्तुस्वरूपत्वाभावसाधकत्वमिति भावः ।

## भाष्यम्

**अस्माद् व्यावृत्तिरन्यस्य स्वरूपम् । अन्यस्माद् व्यावृत्तिरस्य स्वरूपमिति नैकस्वरूपता । ज्ञानानन्दादिवत् स्वरूपत्वेऽपि व्यवहारविशेषो भवति ।**

## पदार्थदीपिका

ननु तथापि न भेदस्य धर्मिस्वरूपत्वं युक्तम्। तथाहि। एक एव हि भेदोऽनेकाश्रितः। न च तत्र प्रमाणाभावः। 'भिन्नाविमौ' 'भिन्ना इमे' इत्यादि प्रतीतेः। इमौ संयुक्तौ इतिवदत्र एकस्यैव भेदस्योभयाश्रितत्व-प्रतिभासात्। स्पष्टं चानयोर्भेदः। अमीषां भेद इति प्रतीतौ एकस्यैव भेदस्यानेकाश्रितत्वमुपलभ्यते अनयोः संयोग इतिवत्। तथा च भेदस्य धर्मिस्वरूपत्वे घटपटयोरपि भेदं प्रति धर्मित्वात् घटाभिन्नभेदाभिन्नत्वेन पटस्यापि घटाभिन्नत्वप्राप्त्या घटपटयोरप्येकस्वरूपत्वं स्यादित्यत आह- **अस्मादिति**॥ अङ्गीकारात् नैकस्वरूपता उक्तरीत्या घटपटयोरिति शेषः। नैक एव भेद अनेकाश्रितः। येनोक्तदोषः स्यात्। इमौ भिन्नावित्यत्र स्तम्भात् कुम्भस्य भेदः कुम्भात् स्तम्भस्य भेद इति भेदद्वयमेव प्रतीयते शुक्ला-विमावित्यादिवत्। अनयोर्भेद इत्यत्रापि घटपटधर्मिकं भेदद्वयमेव प्रतीयते घटपटयो रूपमितिवत्। इमौ संयुक्तावनयोः संयोग इत्यत्रापि एवमेव। व्यवहारे एकवचनं च विप्राणां भोजनमितिवत् समुदायापेक्षयोपपन्नम्। किञ्च भेदो ह्यन्योन्याभावः। स चानेकाश्रित इति न कस्यापि सम्मतम्। ननु तथापि पृथक्त्वरूपो भेदो भवत्येवानेकाश्रित इति चेन्न। घटात् पटः पृथगिति प्रतीतस्यैव पृथक्त्वस्य परेणापि द्विष्ठत्वानङ्गीकारात्। न च घटपटौ पृथगिति प्रतीतस्यानेकपृथक्त्वस्य द्विष्ठत्वमङ्गीक्रियत इति वाच्यम्। तस्या अपि प्रतीतेरन्योन्याभावविषयकत्वेनैवोपपत्तौ तदतिरिक्तपृथक्त्वाङ्गीकारे मानाभावात्। अन्यथा रूपरसौ पृथगित्यादौ का गतिः। न हि रूपादौ पृथक्त्वरूपो गुणोऽङ्गीक्रियते। तस्मान्नानेकाश्रितो भेदः किन्त्वेकैकाश्रित एव। न चानेकसम्बन्धित्वप्रतिभासानुपपत्तिः। अस्मात् घटात् व्यावृत्तिरन्यस्य पटस्य स्वरूपं अन्यस्मात् पटात् व्यावृत्तिरस्य घटस्य स्वरूपमित्यङ्गी-

कारेणानेकसम्बन्धित्वप्रतिभासोपपत्तेः । न चात्र प्रमाणाभावः । घटनिष्ठो भेदो न पटधर्मः पटप्रतियोगिकतया प्रतीयमानत्वात् । यो यत्प्रतियोगिकतया प्रतीयते नासौ तद्धर्मः यथा स्थविरप्रतियोगिकमपरत्वं न स्थविरधर्म इत्यनुमानस्य सत्त्वात् । एतद् प्रमाणज्ञापनायैव व्यावृत्तिरेकैकस्वरूपमिति वक्तव्ये अस्मादिति विविच्योक्तम् ।

एतेन प्रतियोगिनिरूप्यभेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यात् । निरूपितस्य यद्भवति तन्निरूपक-स्यापि भवतीति न्यायादिति निरस्तम् । प्रतियोगिन उपलक्षणमात्रत्वेन धर्मिण्यन्तर्भावाभावात् । अन्यथाऽ-ज्ञाननिवृत्तेः पुरुषार्थत्वेनाज्ञानस्यापि तदापत्तेः । क्वेदमुपलब्धं भवता 'निरूपितस्य यद्भवति तन्निरूपकस्यापि भवति' इति । 'लम्बकर्णमानय' इत्यादिवदिति चेत् 'चित्रगुमानय' इत्यादौ किं तदभावोऽपि न दृष्टः । न हि व्याप्तिग्रहणेऽनुसृतो लौकिकदृष्टान्तो व्यभिचारे नानुसरणीय इत्यस्ति । ननु तथाऽपि न भेदस्य धर्मिस्वरूपत्वं युक्तम् । तथा सति घटभेदशब्दयोः पर्यायत्वापत्त्या 'घटो भिन्नः' इत्यादि सहप्रयोगाभावप्रसङ्गादित्यत आह-**ज्ञानेति** ॥ यथा ज्ञानानन्दैक्यानां ब्रह्मस्वरूपत्वेऽपि ब्रह्मज्ञानानन्दाद्वितीय-शब्दानामपर्यायत्वेन 'विज्ञानमानन्दं ब्रह्म' 'एकमेवाद्वितीयम्' इत्यादि-व्यवहारविशेषस्तद्वत् भेदस्य घटस्वरूपत्वेऽपि घटभेदशब्दयोरपर्यायत्वेन व्यवहारविशेषो भवति उपपद्यत इत्यर्थः । वस्तुतस्तु अस्मन्मते सविशेषाभेदाङ्गीकारेण घटभेदशब्दयोरपर्यायत्वं युज्यते । न चैवं त्वयाङ्गीकर्तुं शक्यते । विशेषानङ्गीकारात् ।

ननु विज्ञानानन्दशब्दयोर्वाच्यार्थभेदोऽस्त्येव ज्ञानत्वादिविशिष्टस्य वाच्यत्वात् तस्य च भिन्नत्वात् । अतो न पर्यायत्वम् । न चैवं विज्ञानादिपदानां भिन्नार्थप्रतिपादकत्वेन निर्भेदार्थनिष्ठत्वरूपाखण्डार्थत्वहानिविशिष्टस्य

मिथ्यात्वात् वेदान्तानामतत्वावेदकत्वं च स्यात् इति वाच्यम् । लक्षणया ब्रह्मस्वरूपपरत्वाङ्गीकारेण विज्ञानानन्दपदयोस्तात्पर्यार्थैक्यसद्भावात् किं विशेषाङ्गीकारेणेति चेन्न । अत्र प्रष्टव्यं किं विज्ञानशब्देन लक्षितं ब्रह्मैवानन्दशब्देन लक्ष्यते तदतिरिक्तं वा । नाद्यः । आनन्दशब्दवैयर्थ्यात् । न द्वितीयः । आनन्दशब्दस्याखण्डार्थत्वहानेः । न हि धर्मधर्मिभेदासहमखण्डत्वं धर्मिभेदसहम् । ननु विज्ञानशब्देन लक्षितस्यैव आनन्दशब्देन लक्षितत्वेऽपि अज्ञानानन्दादिव्यावृत्तिरूपभिन्नभिन्नप्रयोजनसद्भावात् न पदान्तरवैयर्थ्यमिति चेन्न । विज्ञानानन्दादिशब्देन लक्ष्यार्थे ब्रह्मणि ज्ञानत्वादिधर्मानवबोधनेऽज्ञानादिव्यावृत्तिबोधनस्यापि कर्तुमशक्यत्वात् । तस्मात् 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतिविरोधपरिहाराय विज्ञानानन्दैक्यानां यथा ब्रह्मणाऽत्यन्ताभेदोऽङ्गीक्रियते एवं विज्ञानादिशब्दानां पुनरुक्तेः वैयर्थ्यस्य वा परिहाराय विशेषोऽप्यङ्गीकार्य एवेति ।

## भाष्यम्

**न च स्वरूपत्वेन भेदस्याभावो भवति । ज्ञानानन्दादिवदेव । अन्यप्रतियोगिकत्वात् भेदस्य न स्वस्मादपि भवति ।**

## पदार्थदीपिका

ननु तथापि भेदस्य घटस्वरूपत्वे घट एवास्ति न भेदः, भेद एवास्ति न घट इति वा प्राप्त्या एकतरपरिशेषः स्यादित्याशङ्क्य निषेधति- **न चेति** ॥ भेदस्य धर्मिस्वरूपत्वेन धर्मिणो भेदस्य वाऽभावो भवति आपद्यते इति च नेत्यर्थः । कुतो नेति चेत्, परेण ज्ञानानन्दैक्यानां परस्परं ब्रह्मणा चाभेदाङ्गीकारेण ब्रह्म वा स्यात् ज्ञानं वा स्यादित्यन्यतरपरिशेषापादनस्य तत्रापि साम्यादित्याह - **ज्ञानेति** ॥ एवकारेण दृष्टान्तदौर्बल्यं व्यावर्तयति । ननु ज्ञानानन्दादेः परस्परं ब्रह्मणा चाभिन्नत्वे एकतरपरिशेषः स्यादिति कोऽर्थः ।

किं वस्तुभेदो न स्यात् किन्तु एकमेव स्यादिति किं वा ज्ञानमिति वा ब्रह्मेति वा व्यवहारः स्यात् न तूभयथेति । यद्वा एतयोर्मध्ये एकस्यैवार्थक्रिया स्यान्नोभयार्थक्रियेति अथवा द्विवचनप्रयोगो न स्यादिति । नाद्यः । इष्टापत्तेः । न द्वितीयः । प्रवृत्तिनिमित्तभेदेन तदुपपत्तेः । न तृतीयः । एकत्रैव दीपे शुक्लभास्वररूपोष्णस्पर्शावच्छेदेन प्रकाशदाहरूपार्थक्रियावदेकत्रैव-ज्ञानत्वानन्दत्वावच्छेदेन तदुपपत्तेः । न चतुर्थः । अर्थप्रकाशात्मकत्व-निरुपाधिकेष्टत्वरूपयोर्ज्ञानत्वानन्दत्वरूपयोर्विशेषणयोरनेकत्वेन विज्ञानानन्दावित्यादि द्विवचनप्रयोगोपपत्तिरिति चेत् समं प्रकृतेऽपि ।

ननु विदारणात्मनो भेदस्य घटस्वरूपत्वे घटस्यापि विदारणं स्यात् । तथावयवानामपि भेदः स्वभाव इति तत्रापि विदारणं भवेदित्यनेन क्रमेण परमाणोरपि भेदःस्वभाव इति तत्रापि विदारणापत्त्या सर्वशून्यतापत्तिरित्यत आह- **अन्येति** ।। स्वस्मादपि भेद इति शेषः । विदारणात्मा हि भेदो यस्य यतस्तं ततो विदारयेन्नतु यं कमपि यतः कुतश्चित् । नच घटस्वरूपस्य भेदस्य घट एव प्रतियोगी येन स्वस्मिन्नपि विदारणं स्यात् । किन्तु घटादन्य एव । ततो विदारणं तु नानिष्टं तस्य शून्यताऽनापादकत्वादिति भावः । अपि च विदारकमपि लवित्रादि स्वयं यत्सम्बन्धि तदेव विदारति । न तु स्वात्मानम् । ततो धर्मभेदवादे कथञ्चिदेवं वक्तव्यं न तु स्वरूपाभेदवादे । करणसाधनत्वमङ्गीकृत्यैवायं परिहार उक्तः । वस्तुतस्तु न भेदो विदारकः किन्तु विदारणम् । भेदशब्दस्य भावसाधनत्वाङ्गीकारात् । 'भिदिर् विदारणे' इति धातुव्याख्यानात् । तथा च घटोऽपि विदारणं स्यात् । न तु घटस्य विदारणम् । न हि विदारणस्य विदारणं युक्तम् । स्ववृत्तिविरोधात् । एवं विदारणं विभाग इत्यङ्गीकृत्यैवेदं दूषणमुक्तम् । वस्तुतस्तु न विभागरूपविदारणात्मा भेदः किन्त्वन्योन्याभावः ।

'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः ।
प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ॥

इति वचनात् भिदिर् विभागवचनोऽन्यत्ववचनश्च । 'भिन्नो घटः' इत्युक्ते स्फुटित इति प्रतीतेः । भिन्नं गगनं घटादित्युक्तेऽन्यदिति विज्ञायते । प्रकृते चान्यत्वमेव प्रकृतम् । न विभाग इत्यन्यतालक्षणभेदस्य वस्तुस्वरूपत्वेऽस्माभिः कथिते विदारणप्रसङ्गेन शून्यतापादनमसङ्गतमेव छलत्वादिति ।

ननु विभागस्यान्यत्वस्य च को विशेषो येनैवमुच्यत इति चेन्न । 'विदारणार्थो धातुश्च विभागगुणवाचकः' इत्यनुव्याख्याने गुणग्रहणेनैव विशेषस्य सूचितत्वात् । विभागो हि गुणतया वैशेषिकादिभिरुपात्तोऽन्यता चान्योन्याभाव इति स्फुटस्तयोर्भेदः । यस्तु मायावादी गुणादिप्रक्रियां नानुमन्यते । स तु 'अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ तु तस्य च' इत्यनुव्याख्यानोक्तरीत्या बोधनीयः । तथाहि । यदा मायावादी अस्माभिः पराजितः सन् निरुत्तरतया तूष्णीमास्ते तदा तदीययोरोष्ठयोः संयुक्तत्वेन विदारणलक्षणविभागाभावेऽपि अन्योन्याभावलक्षणभेदवत्त्वेनैव ओष्ठौ भिन्नाविति प्रयोगोऽस्त्येव । एवं च यदभावे यदस्ति तत्ततोऽन्यदिति सुप्रसिद्धत्वात् विभागादन्योन्याभावलक्षणो भेदोऽर्थान्तरमेवेति । एतेनानेकत्वैकार्थसमवायिनो भेदस्य घटस्वरूपत्वे घटस्याप्यनेकत्वं स्यात् । कोऽर्थः अनेकत्वाधारत्वं स्यात् नत्वेकत्वाधारत्वम् । तथा तदवयवानामपि भेदः स्वरूपमेवेति सर्वत्राप्यनेकत्वस्यैवापत्त्या तद्विरुद्धमेकत्वं क्वापि न स्यात् । एकत्वाभावे चानेकत्वमपि न भवेत् । तत्समाहाररूपत्वात्तत्कार्यत्वाद्वा तस्य । तथा च सञ्चारहितस्य द्रव्यस्य शून्यतापत्तिरिति निरस्तम् । एवं तर्हि घटोऽप्यनेकः स्यात् नत्वेकः । तथाहि-भेदघटयोरभिन्नत्वेन भेदस्य या गतिः सैव घटस्यापि वाच्या । तथा च भेदो

यथाऽनेकनिष्ठधर्मस्तथा तदभिन्नो घटोऽप्यनेकः स्यात्। अनेककपालनिष्ठधर्मः एव स्यान्न त्वेकः। अनेकत्वाधिकरिणीभूतो धर्मीति यावत्। तथा च घटस्यापि धर्मित्वप्राप्त्या घटस्याप्यनेकत्वं स्यादित्यनेकत्वरूपधर्मत्वापादनमयुक्तम् । अस्तु वा घटस्यानेकत्वाधारत्वम्। तथाऽपि कुतो नैकत्वम्। न ह्येकत्वानेकत्वे स्वरूपेण विरुद्धे। एकस्यैव घटस्य स्वापेक्षया एकत्वस्यान्यापेक्षयाऽनेकत्वस्य च दर्शनात् । किन्तु यदपेक्षयानेकस्तदपेक्षयैक इत्येव विरुद्धम् । तत्र घटस्यान्यस्मात् प्रतियोगिन एव भेद इति तदपेक्षयैवानेकत्वं स्वापेक्षया त्वेकत्वमेवेति को विरोधः । अपि च अनेकत्वबलेनैकत्वाभावमुक्त्वा पुनस्तद्बलेनानेकत्वाभावं वदतः कथं न पूर्वोत्तरविरोधः । किञ्चैकत्वानेकत्वयोरभावेऽपि तस्य वस्तुनः कुतः शून्यत्वम्। वैशेषिकादीनां गुणादिवत् मायावादिनां ब्रह्मवदगुणस्यापि सत्त्वोपपत्तेरिति न कश्चिद्दोषः। एवं भेदस्य धर्मिस्वरूपत्वं युक्त्योपपाद्य तत्र बाधकानि परिहृतानि ।

## भाष्यम्

(वस्तुनाशे तत्स्वरूपभूतः भेदः न नश्यति)

**'भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम्।**
**नष्टानामपि वस्तूनां भेदो नैव विनश्यति ।।**
**अवस्तुनोऽपि रूपं स्वं भेद एव न चान्यथा।**
**विशेषरूपनाशेन भेदमात्रावसायिता ।।**
**नाश इत्युच्यते सद्भिः भेदो न हि विनश्यति ।**
**इत्याहुः केचिदज्ञानात्' तत्राहुः सूक्ष्मदर्शिनः ।।**
**सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः।**
**तस्माद् वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित् ।।'**

## पदार्थदीपिका

इदानीमागमसम्मत्याऽपि तद्द्रढयति- **भेदस्त्विति** ॥ यद्वा ननु तथाऽपि न भेदस्य धर्मिस्वरूपत्वं युक्तम् । अन्योन्याभावरूपस्य तस्य नित्यत्वात् घटादेश्च धर्मिणो विनाशित्वादित्याशङ्कां परहर्तुं तत्र ये घटादि धर्मि-स्वरूपभूतोऽपि भेदो घटादिनाशेऽपि न नश्यतीत्याहुः । तन्मतं तावद् प्रमाणेनानुवदति - **भेदस्त्विति** ॥ पूर्वं प्रकृतपदार्थापेक्षया भेदे वक्ष्यमाण-नित्यत्वरूपविशेषद्योतनाय तुशब्दः । अवधारणार्थो वा । स्वरूपमित्यनेन सम्बध्यते । तेनात्यन्ताभेदव्यवच्छेदः । नैजं संयोगादिवन्नागन्तुकमित्यनेन भेदाभेदव्यवच्छेदः ।

ननु यदि धर्मिणोऽव्ययत्वं स्यात् तदा तत्स्वरूपभूतभेदस्याप्यव्ययत्वं स्यात् । यदि घटादिरूपो धर्म्येव विनाशी स्यात् कथं तर्हि तत्स्वरूपभूतो भेदो नित्यः स्यादित्यत आह - **नष्टानामपीति** ॥ अवस्तुनोऽपीत्यत्रापिशब्दो यद्यपि तथापीत्यर्थे । तथा च यद्यपि भेदो वस्तुनो नाशप्रतियोगिवस्तुनो घटादेः स्वरूपं स्वरूपमेव, न चान्यथा, तथापि न केवलमनष्टानां किन्तु नष्टानामपि वस्तूनां भेदः धर्मिधर्मभावः षष्ठ्यर्थः । स धर्मिधर्मभावो नैव विनश्यतीति योजना । अयमाशयः । भेदो नाम अन्योन्याभावः । सचान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्यापत्तेरेवाऽभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । न च पदार्थानां कदाप्यन्योन्यतादात्म्यमस्तीत्य-नित्यानामपि भेदो नित्य एवेति । वस्तुनाशेऽपि तत्स्वरूपभूतो भेदो न नश्यतीति इत्येतदुपपादयति- **विशेषेति** ॥ रूपशब्दः आकारपरः । पृथुबुध्नोदराद्याकारविशेषनाशेन भेदमात्रस्योपादानरूपेणावसायिता अवसानं पर्यवसानम् । अवशेष एव नाश इत्युच्यते सद्भिर्हि यस्मात् तस्माद्वस्तुविनाशेऽपि भेदो न नश्यतीति केचिदाहुरित्यर्थः । उपादानं कारकव्यापारात् प्रागकार्यात्मकं

सत् कार्यरूपतामापद्यते यत् सा जनिः । ततः परिदृश्यमानविशेषरूपापगमेन कार्यस्योपादानरूपेण पर्यवसानमेव विनाश इति सदसत्कार्यवादो हि सतां सिद्धान्तः । तत्र विशेषरूपनाश एव विनाशशब्दार्थश्चेत् तर्हि तस्य कारणात्मत्वपर्यवसानस्यानुक्त्याऽसत्कार्यवादापत्तिः स्यात् अतो भेदमात्रावसायितेति भेदमात्रावसानमपि नाशशब्दार्थ इत्युक्तम् । घटस्वरूपभूतभेदावसानं च घटस्याप्यवसानं विना न युक्तमिति घटस्यापि कारणात्मनाऽवसानमप्यनेन गम्यते ।

इदमुक्तं भवति- अत्यन्तासत्कार्यवादो वा अत्यन्तसत्कार्यवादो वा न सद्भिरादृतः । किन्तु सदसत्कार्यवाद एव । उपादानं प्राक् कारक-व्यापारादकार्यात्मकं सत्कार्यरूपतामापद्यते यत्सा जनिरित्यङ्गीकारात् । ततः परिदृश्यमानविशेषरूपापगमेन कार्यस्योपादानरूपेण पर्यवसानमेव विनाश इत्युच्यते । एवं च घटनाशेऽपि घटस्वरूपभेदः उपादानरूपेण तिष्ठतीति न घटनाशेऽपि तन्नाश इति । अत्र केचिदिति ज्ञानिन एव विवक्षिताः । नऽह्यज्ञानिनः केऽपि भेदस्य धर्मिस्वरूपत्वमङ्गीकृत्य नित्यत्वमङ्गीचक्रुः । येनायं तन्मतानुवादः स्यात् । अतएव सुधायां प्रकृत्यधिकरणे टीकाकारास्तु-

मन्यन्त इत्यादिना अयं पक्षः टीकाकारमततयोक्तः । उक्तं च सन्न्याय-रत्नावल्याम्- 'विनाशिनोऽपि घटादेः धर्मरूपभेदः परवाद्यभ्युपगतघटत्वादि-जातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरतापत्त्यभावात् कालत्रयेऽपि' इति । अज्ञानादिति स्थूलां दृष्टिमाश्रित्येत्यर्थः । अत एव सूक्ष्मदर्शिन इति वक्ष्यति । एतन्मताभिप्रायेणैव सुधायां प्रकृतिरूपमूलकारणस्वरूपभेदस्य नित्यतोक्तेति ज्ञातव्यम् । सूक्ष्मदर्शनमाश्रित्याह- **तत्रेति** ।। भेदविषय इत्यर्थः। किमाहुरित्यत आह- **सत्यमिति** ।। तस्माद् भेदस्य वस्तुस्वरूपत्वादित्यर्थः। येन रूपेण कार्यस्योपादानात्मनाऽवस्थानं तद्रूपस्य भेदस्योपादानरूपेण

सत्वेऽपि येन रूपेणापगमद्रूपस्य भेदस्य न कुत्रापि अवस्थानमितिभावेन कुत्रचिदित्युक्तम् । अत्रानित्यस्वरूपभेदस्यानित्यत्वोक्तिस्तु उपादानरूपेण सतोऽपि भेदस्य व्यवहारानुपयोगित्वमभिप्रेत्यैव । अतो न पूर्वमतविरोधः । अत एतन्मताभिप्रायेणैव सुधायामनित्यप्रपञ्चस्वरूपभेदस्यानित्यताङ्गीकृतेति मन्तव्यम् ।

## भाष्यम्

**अविनष्टस्य तस्मात्तु भेदोऽस्त्येव स्वरूपतः ।**
**एवं भावादभावस्य न भेदो भावरूपवान् ॥**

## पदार्थदीपिका

नन्वेवं 'पञ्चभेदा इमे नित्याः' इत्यादिप्रमाणविरोधः । जीवेश्वरयोः परस्परं जीवानां च भेदस्य नित्यत्वेऽपि जडधर्मिकाणां जीवेश्वरजडप्रतियोगिकानां अनित्यत्वादिति चेन्न । नित्ये जडे प्रकृत्यादौ धर्मिणि जीवेश्वरभेदस्य जडान्तरभेदस्य च नित्यत्वोपपत्तेः । उक्तं च सुधायां 'नित्ये च त्रयाणां सिद्धिः' इति । ननु यदि घटनाशे घटनिष्ठो भेदो नश्यति तर्हि घटस्य पटतादात्म्यं स्यात् । तादात्म्यस्यान्योन्याभावप्रतियोगित्वात् । प्रतियोगिन एव अभावध्वंस-रूपत्वस्य प्रागभावे दृष्टत्वादित्यत आह-**अविनष्टस्येति** ॥ तस्मात् नष्टात् । घटादिनाशेन तदात्मकस्य भेदस्य विनाशेऽपि न नष्टघटस्य पटतादात्म्यमापद्यते । अविनष्टस्य पटस्य तस्माद्विनष्टात् घटाद्भेदस्य सत्वात् । तदपि कुतः? भेदस्य स्वरूपतो धर्मिस्वरूपत्वतः । धर्मिणश्च पटस्याविनष्टत्वादित्यर्थः । अयम्भावः । घटधर्मिकपटप्रतियोगिकभेदवत्पटधर्मिकघटप्रतियोगिकभेदस्यापि घटपटतादात्म्यविरोधित्वात्तस्य च घटनाशेऽपि सत्वान्नोक्तविरोध इति । न च प्रतियोगिनाशे कथं भेदानाश इति वाच्यम् । प्रतियोगिनः उपलक्षणमात्रत्वेन तन्नाशेऽपि धर्मिस्वरूपभूतभेदानाशोपपत्तेः ।

नन्वेवं तर्हि घटपटयोरुभयोरपि विनाशे तदात्मकभेदद्वयस्यापि विनाशात् घटपटतादात्म्यं स्यादिति चेत्। अत्र केचित्- यथा हि घटवत् घटध्वंसस्यापि घटप्रागभावविरोधित्वं एवं, 'भेदवत् भेदध्वंसस्यापि तादात्म्यविरोधित्वात्। अन्यथा प्रागभावध्वंसरूपघटविनाशे प्रागभावोन्मज्जनापत्तिरित्याहुः। वस्तुतस्तु यत्र घटपटौ उभावपि नष्टौ तत्र तत्स्वरूपभूतभेदनाशेन तत्तादात्म्यमापादयितुमशक्यम्। धर्मिण एवाभावात्। अन्यथा घटपटोभयनाशेन तत्संयोगनाशे तद्विभागापत्तेः। न चेष्टापत्तिरिति वाच्यम्। धर्मिणोरभावेन कयोर्विभागः स्यादिति। नन्वथापि भेदो न धर्मिस्वरूपम्। घटादिप्रतियोगिकान्योन्याभावस्य शशशृङ्गादावपि वक्तव्यत्वात्। न च तस्य धर्मिस्वरूपत्वं युक्तम्। धर्मिण एवाभावात्। न च धर्मिभिन्न एव स इति वाच्यम्। पूर्वोक्तिविरोधापत्तेरित्यत आह- **एवमिति**॥ भवतीति भावः सन्। न भवतीत्यभावोऽसन्। न भेदोऽस्तीति वर्तते। यथा घटादिनाशे तद्धर्मिको भेदो नास्ति। एवं भावात्सतो घटादेः सकाशादभावस्यासतः शशशृङ्गादेर्भेदो नास्ति। कुतः ? यतो भेदो भावरूपवान् सत्स्वरूप इत्यर्थः। अत एव भेदस्तु सर्ववस्तूनां स्वरूपमिति भेदस्य वस्तुस्वरूपत्वमेवोक्तमिति न पूर्वोक्तिविरोध इति भावः।

## भाष्यम्

**अभावाद् भावरूपस्य स्वरूपं भाव इष्यते।**
**नष्टभेदोऽप्यभावात्मा विद्यते च विनाशतः॥**

## पदार्थदीपिका

नन्वेवं शशशृङ्गादौ घटादिप्रतियोगिकभेदाभावे शशशृङ्गादेर्घटादितादात्म्यं स्यात् तदन्योन्याभावाभावे तत्तादात्म्यस्य ध्रौव्यादित्यत आह- **अभावादिति**॥ अत्रापि भावाभावशब्दौ सदसत्परौ भेदोऽस्तीति वर्तते घटादि-

प्रतियोगिकभेदस्य शशशृङ्गादावभावेऽपि न शशशृङ्गादेर्घटादितादात्म्यमापद्यते। कुतः ? यतो अभावादसतः शशशृङ्गादेः सकाशात् भावरूपस्य सद्रूपस्य घटादेर्भेदोऽस्ति। तदपि कुतः ? यतो भावरूपस्य घटादेः स्वरूपं भावःसन् इष्यते प्रामाणिकैः। भेदश्च तत्स्वरूपः। इदमुक्तं भवति। सत्प्रतियोगिकभेदस्याऽसत्यभावेऽपि असत्प्रतियोगिकभेदस्य सति सत्त्वान्न तयोस्तादात्म्यमिति। नन्वेवं तर्हि शशशृङ्गान्नृशृङ्गस्य भेदोस्ति न वा। नेति ब्रूमः। यथा घटपटयोर्विनष्टयोः सतोः तद्भेदोऽपि नास्ति तथा शशशृङ्ग-नृशृङ्गयोरपि भेदो नास्तीत्यङ्गीकारौचित्यात्।

नन्वेवं शशशृङ्गनृशृङ्गयोस्तादात्म्यापत्तिरिति चेन्न। सति धर्मिणि भेदाभावस्तादात्म्यापत्तौ प्रयोजकः। प्रकृते च धर्मिणोः शशशृङ्गनृशृङ्गयोरेवाभावान्नान्योन्यतादात्म्यापत्तिः। अत एव सति असत्प्रतियोगिको भेदः समर्थितः। अन्यथा धर्मिणः सत्त्वात्तत्रासत्प्रतियोगिकभेदाभावे सतो सत्तादात्म्यापत्तेर्दुर्वारत्वात्। किञ्च शशशृङ्गनृशृङ्गयोर्भेदाभावे तादात्म्यापत्तिरिति कुतः ? 'परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात्' इति चेत्। एवं तर्हि वन्ध्यासुतस्य श्यामत्वाद्यभावे गौररूपत्वस्यापत्तेः। यदि च रूपादीनां धर्मिसत्तासापेक्षत्वात्तत्र च धर्मिण एवाभावान्न गौररूपापत्तिः। परस्परविरुद्धयोरिति न्यायस्तु यत्र धर्मी सन् तत्रैवेत्युच्यते। तर्हि तादात्म्येऽपि समम्। एवं च शशशृङ्गनृशृङ्गेनेति प्रतीतिरपि नानुपपन्ना। भेदाभावेऽपि तादात्म्याभावेनैवोपपत्तेरिति।

एवं धर्मिनाशे तत्स्वरूपभूतो भेदो नश्यतीत्युक्तम्। इदानीं नष्टानामपि वस्तूनां भेदो नैव विनश्यतीति यदुक्तं तन्मतं पूर्वोक्तमभिप्रायमुद्घाट्याङ्गीकरोति- **नष्टभेदोऽपीति** ॥ नष्टस्य घटादेर्भेदो नष्टभेदः। अभावात्मा असदात्मा। चशब्द एवार्थे। नष्टस्य भेदोऽप्यसद्वस्त्वात्मा उपादानरूपेण विद्यत एव।

वस्तुनो सत्वं कुत इत्यत उक्तम् - **विनाशत इति** । इदमुक्तं भवति । सदसत्कार्यवादिनामस्माकं मते विनाशो नाम परिदृश्यमानविशेष-रूपापगमेनोपादानमात्रत्वापादनम्। एवं च यथा घटस्य विनाशतो निमित्तात् घटः अभावात्मा नष्टकार्याकारः सन् उपादानरूपेण विद्यत एव, एवं नष्टस्य घटादेर्भेदोऽप्यभावात्मा प्रध्वस्तघटस्वरूपभूतः उपादानरूपेण विद्यत एवेति यद्यभिप्रायस्तर्हि विद्यत एव । तदस्माभिरङ्गीक्रियत एवेति यावत् । अस्माभिरपि विशेषाकारापगमे सति विशेषाकारस्वरूपभूतभेदविनाश-स्यैवोक्तत्वात् उपादानरूपेण घटवत् भेदस्यापि सत्त्वाङ्गीकारादिति । उक्तं चानुव्याख्याने वैशेषिकपरीक्षायाम्- 'तस्मात्प्रध्वस्तभेदादि सदित्येवावगम्यते' इति । व्याख्यातं चैतत् सुधायाम्- ''प्रध्वस्तस्य घटादेर्भेदः प्रध्वस्तभेदः नष्टानामपि 'वस्तूनां भेदो नैव विनश्यति' इति यत्प्रध्वस्तभेदस्य सत्त्वमवगम्यते तत्तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव युज्यते । नह्यत्यन्तासत्त्वमापन्नस्य स्वरूपभूतो भेदः सन्निति युज्यते'' इति ।

## भाष्यम्

**स्वरूपत्वात्तु भेदस्य भेदे शङ्का न कस्यचित् ।**
**सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते ॥**
**तस्माद् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते ।**
**प्रतियोगिता त्वभावस्याप्यस्त्यभावतया स्फुटम् ॥**
**नह्यभावोऽप्यधर्मा स्यान्न तु स्याद्भावधर्मयुक् ।**

## पदार्थदीपिका

ननु उक्तरीत्याऽन्योन्याश्रयादिदोषदुष्टो भेद एव नाङ्गं धत्ते यः पश्चादस्ति न वेति विचार्यत इत्यत आह- **स्वरूपत्वादिति** ॥ तुशब्दश्चशब्दार्थः । न भेदविषये कस्यचिद्दूषणस्य शङ्का भेदस्य धर्मिस्वरूपत्वविषये

परोक्तदोषाणामाभासत्वाच्चेत्यर्थः । ननु भेदस्य धर्मिस्वरूपत्वं कुत इति चेन्न । सर्वस्य सर्वस्मात् व्यावृत्ततायाः सर्वैरनुभूयमानत्वात् । न च तदेव कुत इति वाच्यम् । तदनङ्गीकारे इदं सर्वं भवति न वेति पुरोवर्तिपदार्थस्य सर्वस्माद्भेदे कस्यचित् शङ्का स्यात् । न च साऽस्तीत्याह - **भेदे शङ्का न कस्यचिदिति ॥** ननु सर्वस्य सर्वस्मात् व्यावृत्तता सर्वैरनुभूयत इत्युक्तम् । सर्वव्यावृत्तिज्ञानस्य सर्वज्ञानसापेक्षत्वात् । न च सर्वेषां सर्वज्ञानमस्तीत्यत आह- **सर्वमिति ॥** सर्वं वाक्यं सावधारणमिति न्यायेन सामान्यत एवेति योज्यम् । यदि सर्वैरपि सर्वमनुभूयते तर्हि सर्वान्तर्गताशेषविशेषाणामपि ज्ञातत्वेन अयं घटो न वेत्यादि संशयादिकं न स्यादित्यत उक्तं **सामान्यत इति** । साक्षिणेति शेषः । सर्वैरपि सर्वं सामान्याकारेणैव साक्षिणाऽनुभूयते । न तु विशेषाकारेण । अतः संशयाद्युपपत्तिरित्यर्थः । सामान्यतः सर्वज्ञता चेष्टैवेति भावः । सामान्याकारेण सर्वविषयकं ज्ञानं साक्षिरूपमेव । न परमत इव सामान्यलक्षणप्रत्यासत्ति- जन्यम् । यथोक्तमनुव्याख्याने- ''अतः सर्वे पदार्थाश्च सामान्यात् साक्षिगोचराः'' इति । उक्तं च तत्वनिर्णयटीकायाम्- ''सर्वमिति सामान्यतो यत्सर्वविषयकं ज्ञानं तत्साक्षिरूपमेव'' इति । उक्तं च जयतीर्थीयवादावल्याम्- ''सामान्यतः सर्वस्य साक्षिसिद्धत्वाङ्गीकारात्'' इति ।

ननु कथमस्य ज्ञानस्य साक्षिरूपत्वमिति चेत् उच्यते । न तावदिदं ज्ञानं बाह्यप्रत्यक्षेण जायते । सर्वस्येन्द्रियासन्निकृष्टत्वात् । नापि मनसा तस्य बहिरस्वातन्त्र्यात् । नाप्यनुमानेन व्याप्त्याद्यनुसन्धानविधुराणामपि सर्वमिति ज्ञानस्यानुभूयमानत्वात् । नाप्यागमेन जातिबधिराणामपि तत्प्रत्ययोप- लब्धेः । तस्मात्साक्षिरूपमेवेदं ज्ञानमित्यङ्गीकरणीयम् । अयमत्र प्रयोगः । विप्रतिपन्नं सर्वं बाह्यप्रत्यक्षानुमानाद्यतिरिक्तप्रमाणगम्यम् । तेनानुपपद्य- मानग्रहणत्वे सति गृह्यमाणत्वात् । यद्येनानुपपद्यमानग्रहणत्वे सति गृह्यमाणं

तत्तदन्येन ग्राह्यम्। यथा चक्षुषानुपपद्यमानग्रहणो रसः तदन्येन ग्राह्य इति। ननु तथापि न भेदो वक्तुं युक्तः। भावादभावस्याभावात् भावस्य च भेदो वक्तव्यः। तत्र यद्यपि भावस्य धर्मित्वप्रतियोगित्वादयो धर्माः सन्ति। तस्य सधर्मकत्वात्। नत्वभावस्य। तस्य निषेधरूपत्वेन निर्धर्मकत्वादित्यत आह- **प्रतियोगिता त्विति ॥** यद्वा सर्वस्मात् व्यावृत्ततया वस्त्वनुभूयत इत्युक्तम्। तथात्वे सर्वपदार्थान्तर्गताभावस्यापि प्रतियोगित्वापत्तेः। न च तस्य प्रतियोगित्वं युक्तम्। अभावस्य निर्धर्मकत्वादित्यत आह- **प्रतियोगिता त्विति ॥** तुशब्दोऽप्यर्थः। तेन धर्मित्वसमुच्चयः। न केवलं भावस्य किन्त्वभावस्यापि। ननु तत्प्रतियोगितादि किमभावाद्भिन्नं नेत्याह- **अभावतयेति ॥** अभावाभिन्नत्वेनेत्यर्थः। स्फुटमस्तीत्युक्त्या तत्र प्रत्यक्षमेव प्रमाणमिति सूचयति। ननूक्तमत्राभावो निर्धर्मकस्तस्य निषेधरूपत्वादित्यत आह- **न हीति ॥** अभावोऽपि वस्तुनिषेधरूपोऽपीत्यर्थः। न विद्यन्ते धर्माः यस्यासावधर्मा। अत्र प्रमेयत्वादेरनुभवादिति हिशब्देनाह। एवं तर्ह्यभावस्य निर्धर्मकत्वोक्तेः का गतिरित्यत आह- **नत्विति ॥** अत्र भावशब्देन अभावभिन्नत्वमुच्यते। तथा चाभावः स्वापेक्षया भिन्नधर्मयुक् नैव स्यात्। अतः क्वचिन्निर्धर्मकत्वव्यपदेश इति भावः। यथाश्रुतं तु न युक्तम्। उक्तप्रतियोगित्वप्रमेयत्वादेर्वक्ष्यमाणास्तित्वादेश्चाभावनिष्ठधर्माणां भावरूपत्वात्। न चाभावनिष्ठोक्तधर्मजातस्यापि अभावस्वरूपत्वेन भावरूपत्वे विवाद इति वाच्यम्। विधिप्रत्ययविषयत्वात्। प्रतियोग्यनिरूप्यत्वाच्च। न चाभावाभिन्नत्वादभावरूपत्वमिति वाच्यम्। अभावाभिन्नस्यापि तस्य विशेषबलेन भावरूपत्वोपपत्तेः। उक्तं चानुव्याख्याने- ''अभावस्य च भावाः स्युर्धर्माः''इति। ''अभावस्य च भावोऽपि धर्मः'' इति च। व्याख्यातं च सुधायाम्- ''अभावस्य च भावाः प्रमेयत्वादिधर्माः सन्ति'' इति।

## भाष्यम्

अभावस्यास्तिता नाम स्यादेवाभावरूपिणी ॥
अभावताऽपि सैव स्यात् न तु स्याद्भावरूपिणी ।
अतस्स सर्वव्यावृत्तस्वरूपो भगवान् परः ।
येन ज्ञातः स तु ज्ञानी मुच्यते नात्र संशयः' इति
तत्त्वनिर्णये ।

॥ इति तैत्तिरीयोपनिषद्भाष्ये ब्रह्मवल्ली सम्पूर्णा ॥

## पदार्थदीपिका

नन्वभावस्स्वापेक्षया भिन्नधर्मयुक् न भवतीत्युक्तमयुक्तम् । अभावोऽस्तीतिप्रतीतेरभावेऽस्तित्वरूपधर्मस्याभावभिन्नस्य सत्त्वादित्यत आह- **अभावस्येति** ॥ सत्यम् । अभावे अस्तिता नाम धर्मोऽस्तीति । तथापि साऽभावरूपिण्येव अभावाभिन्नैव स्यात् । न तु ततो भिन्ना । नामेति प्रसिद्धिद्योतकमव्ययम् । तेनाभावेऽस्तित्वमभावस्वरूपमिति वैशेषिकादिमते प्रसिद्धमिति सूचयति । नन्वथाप्यभावेऽभावतारूपो धर्मोऽभावभिन्नोऽस्तीत्यतः सोऽप्यभावात्मक एव । न तु ततो भिन्नः । अतो नोक्तानुपपत्तिरित्याह- **अभावतापीति** ॥ सैवाभावरूपिण्येव । एवकारव्यावर्त्यमाह- **नत्विति** ॥ भावरूपिणीति अभावभिन्नेत्यर्थः । ननु किमर्थमयं भेदो विचार्यते । भगवद्ज्ञानस्यैव मोक्षोपयोगित्वेन तद्विचारस्यैव कर्तव्यत्वात् । न हि भेदज्ञानस्य किञ्चित्प्रयोजनं पश्यामो न वा तदज्ञानेऽनर्थमित्यत आह- **अत इति** ॥ भेदस्य धर्मिस्वरूपत्वादित्यर्थः । तु शब्दोऽवधारणार्थः । अन्यस्तु न मुच्यत इत्यर्थः । तथा च मोक्षाभाव एव तज्ज्ञानाभावेऽनर्थ इति भावः ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तैत्तिरीयोपनिषद्भाष्यस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीश्रीनिवासेन विरचितायां पदार्थदीपिकायां ब्रह्मवल्ली सम्पूर्णा ॥ २ ॥**

## ॥ अथ भृगुवल्ली ॥

### उपनिषत्

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।

(विष्णुरेव चक्षुर्मयः श्रोत्रमयः वाङ्मयश्च)

ॐ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेति स तपोऽतप्यत । स तपस्तप्त्वा । ॥ १ ॥

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंवि-शन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । ॥ २ ॥

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंवि-शन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि

भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ ३॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ ४॥

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ ५॥

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति॥

सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता। य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ ६॥

अन्नं न निन्द्यात्। तद् व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः।

तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ ७ ॥

अन्नं न परिचक्षीत। तद् व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ ८ ॥

अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ ९ ॥

## भाष्यम्

'चक्षुः स चष्टे यद्विष्णुः श्रोत्रं श्रोतृत्वतो विभुः।
वाक् च वक्तृत्वतो नित्यं मनो मन्तृत्वतस्तथा ॥
तपो ज्ञानस्वरूपत्वाद् विज्ञानं तु विवेचनात्।
ज्ञानानुसन्धानरूपतपसा तं जनार्दनम् ॥
क्रमाद् भृगुर्व्यजानात्तमन्नादिबहुरूपिणम्।
एवं विजानंस्तं विष्णुं तस्मिंस्तु प्रतितिष्ठति ॥
मुक्तो भूत्वाऽन्नवांश्च स्यादन्नादश्च सदैव तु।

अन्ननामा तु भगवान् विद्वांस्तमुपजीवति ॥
तद्वांश्च तेन गुप्तत्वाद् .................।' १-९ ॥

## पदार्थदीपिका

ॐ एवमन्नादिरूपिणो ब्रह्मण उपास्तिं ब्रह्मवल्ल्यामभिधाय तत्रैव समाख्यात्वेन भृगुवरुणसंवादरूपाख्यायिकोच्यते । **भृगुर्वै वारुणिरित्यादिना** ॥ अत एवात्र विज्ञानानन्दौ ग्राह्यौ । पूर्वत्र चक्षुःश्रोत्रवाचो ग्राह्याः । ननु 'अन्नं प्राणं चक्षुः श्रोत्रं मनोवाचम्' इति वरुणेनोक्तेष्वन्नादिषु अन्नप्राणमनांसि सन्तु ब्रह्मस्वरूपाणि । अन्नादिशब्दानामत्तृत्वाद्यर्थतया अनुपपत्त्यभावात् । चक्षुः श्रोत्रवाक्शब्दं तु कथं ब्रह्म स्यात् । चक्षुरादिशब्दानां चष्टे अनेनेति चक्षुः शृणोत्यनेनेति श्रोत्रं वदत्यनयेति वागिति करणार्थत्वात् । ब्रह्मणश्च कर्तृप्रयोज्यत्वाभावेन करणत्वानुपपत्तेरिति चेन्न । कर्तर्यपि तद्व्युत्पत्तिसम्भवादित्याह- **चक्षुरिति** ॥ स विष्णुर्यत् यस्माच्चष्टे पश्यति अतः चक्षुरित्यर्थः । तपो ब्रह्मेत्यत्र ब्रह्मणः सन्तापात्मकत्वेन तपःशब्दवाच्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तपःशब्दं ब्रह्मणि निर्वक्ति- **तपो ज्ञान-स्वरूपत्वादिति** ॥ धातूनामनेकार्थत्वादिति भावः । विवेचनादिति त्रिविधजीवानां फलदानेन तद्योग्यताविवेचनादित्यर्थः । 'स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्' इत्यादौ निरशनादिरूपशरीरसन्तापात्मकतपसा अन्नं ब्रह्मेति व्यजानादिति प्रतीयते तदयुक्तम् । निरशनादिरूपतपसः साक्षाद् ब्रह्मापरोक्षज्ञानसाधनत्वायोगादित्यतोऽत्र विवक्षिततपःशब्दार्थमाह- **ज्ञानेति** ॥ अत्र ज्ञानशब्देन श्रवणं ग्राह्यम् । तदनु तदनन्तरभावि । यत्सन्धानं भगवति मनःसन्धानं मननं ध्यानं चेति यावत् । तद्रूपतपसेत्यर्थः । यथोक्तं सुधायाम्- 'अतस्त्वया श्रवणमनननिदिध्यासनरूपं तपःकरणीयम्' इति । तं तं अतिप्रसिद्धं अन्नादिबहुरूपिणं अन्नप्राणाद्यष्टरूपिणं जनार्दनं भृगुर्व्यजाना-

दपरोक्षीकृतवानित्यर्थः । बहूनि च तानि रूपाणि च तान्यस्य सन्तीति कर्मधारयादिनिः । 'य एवं वेद प्रतितिष्ठति' इत्यत्र एवं वेत्ता यत्र कुत्रचित् भूम्यादौ प्रतितिष्ठतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे - **एवं विजानन्निति** ॥ तमन्नादिबहुरूपिणं बिष्णुं एवं 'अन्नाद्ध्येव खल्विमानिभूतानि जायन्ते' इत्याद्युक्तप्रकारेण सृष्ट्यादिकर्तृत्वरूपलक्षणविशिष्टतया इतरविलक्षणतया च जानन्नित्यर्थः । तस्मिंस्तु तस्मिन्नेव तिष्ठति सायुज्यभाग्भवतीत्यर्थः । मुक्तो भूत्वेति वक्ष्यमाणमत्रापि सम्बध्यते । 'अन्नवानन्नादो भवति' इत्युक्तं न ज्ञानिफलम् । अज्ञानिसाधारण्यादतो व्याचष्टे- **मुक्तो भूत्वेति** ॥ चशब्दौ परस्परसमुच्चये । तुशब्दोऽन्नवत्त्वादेर्ज्ञानिन्यतिशयद्योतनार्थः । ननु किमन्नं कीदृशं च ज्ञानिनस्तदत्तृत्वमित्यत आह- **अन्ननामा त्विति** ॥ अत्तृत्वादिप्रवृत्तिनिमित्तविशेषद्योतकस्तुशब्दः । विद्वान् मुक्तः । तथा चान्ननामकभगवदुपजीवकत्वं सदा तदनुसन्धातृत्वमिति यावत् । इदमेव चान्नादत्वम् । इदं च नाज्ञानिसाधारणमिति भावः । अन्नवानित्यस्यार्थमाह- **तद्वांश्चेति** ॥ अन्ननामकभगवद्वानित्यर्थः । तद्वत्त्वस्य सर्वसाधारण्यपरिहाराय तस्यैवाभिप्रायमाह- **तेन गुप्तत्वादिति** ॥ सदैवेति वर्तते । तेन अन्ननामकेन भगवता सदैव रक्षितत्वादित्यर्थः । गुपू रक्षण इति धातोः ॥ १-९ ॥

## उपनिषत्

(विद्यार्थे वसतीच्छयाऽगतं स्वागतीकुर्यात्)

**न कञ्चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद्वै**

मध्यतोऽन्नꣳराद्धम्। मध्यतोऽस्मा अन्नꣳराध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते। य एवं वेद॥ १०॥

## भाष्यम्

'......................विद्यर्थे वसतीच्छया।
आगतं नेति न ब्रूयात् तदेतद्विदुषो व्रतम्॥
स विष्णुः पृथिवीनामा पृथुत्वात् प्राणनामकः।
प्रकृष्टानन्दबलत आकाशः सर्ववेत्तृतः॥
शराख्यदेहिनश्चैव शरीरं प्रेरणात् स्मृतः।
एतैश्चतुर्भिर्भगवान् रूपैश्च चतुरात्मभिः॥
भोग्यभोक्तृस्वरूपेण तिष्ठति क्रीडया स्वयम्।
न च भोग्यत्वमात्रेण हीनत्वं तस्य कुत्रचित्॥
न हि भार्योपभोग्यस्तु भर्ता हीनत्वमाप्नुयात्।
एवं स भगवान् विष्णुरविशेषोऽखिलेष्वपि॥
रूपेषु क्रीडते नित्यं भोक्ता भोग्य इतीच्छया।
अन्नाख्यं तं नैव निन्द्याद् बहु मन्येत तं सदा॥
इति व्रतद्वयं ह्येतद् भाव्यं यदि सुखे स्पृहा।
येन केनापि विधिना बह्वित्येव जनार्दनम्॥
मत्वैव प्राप्नुयान्नित्यं मनोवाक्कायवृत्तिभिः।



## पदार्थदीपिका

'न कञ्चन वसतौ प्रत्याचक्षीत' इति वाक्यं 'अन्नादीच्छाया वसत्यर्थं प्राप्तं न प्रत्याचक्षीत' इति केचित् व्याचक्षते। 'वसत्यत्रेति वसतिर्गृहं तदिच्छया तल्लाभेच्छया प्राप्तं न प्रत्याचक्षीत' इत्यन्ये। तदुभयमप्यसदिति भावेन

प्रमाणेनैव विशेषमाह - **विद्यार्थ इति** ॥ विद्याभ्यासार्थे । वसतावित्यस्यार्थो वसतीच्छयेति । विद्याभ्यासार्थं गुरुकुलवासेच्छया आगतमित्यर्थः । न प्रत्याचक्षीतेत्यस्यार्थो नेति न ब्रूयादिति । तद्व्रतमित्युक्तं व्रतं नाविदुषो युक्तमित्यत उक्तं **विदुष इति** । 'अन्नं बहुकुर्वीत' इति प्रकरणस्थौ पृथिव्याकाशशब्दौ 'अन्नं न निन्द्यात्' इति प्रकारणस्थौ प्राणशरीरशब्दौ च तदभेदेन तच्छब्दवाच्यत्वप्रतीतिनिरासाय क्रममविवक्षित्वा व्याचष्टे - **स विष्णुरित्यादिना** ॥ पृथुत्वात् पृथु विस्तारे विस्तृत्वाद्व्याप्तत्वादित्यर्थः । प्राङोरर्थः प्रकृष्टेति । णश्च निर्वृतिवाचकः । 'णकारो बलम्' इति वाक्यं च हृदि निधाय णकारार्थः उक्तः- **आनन्दबलत इति** । काशृ दीप्तौ दीप्तिरिह ज्ञानम् । तस्य आङुपसर्गोक्तं सम्यक्त्वं च सर्वविषयकत्वमित्यभिप्रेत्योक्तम्- **सर्ववेत्तृत इति** । वेत्तृत्वत इत्यर्थः । शराः देहिनः । शॄ हिंसायां शीर्यते देहनाशेन नश्यतीति व्युत्पत्त्या शरशब्दवाच्यस्य जीवस्य प्रेरणादेव विष्णुः शरीरमिति स्मृतो न तु प्रसिद्धशरीराभेदेनेत्यर्थः । अयं चैवशब्दः पृथुत्वात् प्रकृष्टानन्दबलतः सर्ववेत्तृत इत्येतैरपि सम्बध्यते । तेन तदभेदेन तच्छब्दवाच्यत्वशङ्कापरिहारः । चतुर्भिः रूपैः पृथिव्यादिस्थितैः रूपैः । चतुरात्मभिः चतुरात्मनामभिः पृथिवीत्यादिभिः । भोग्यभोक्त्रिति अन्नान्नादशब्दार्थकथनम् । ननु प्राणशरीरशब्दवाच्ययोः भगवद्रूपयोः परस्परात्यन्ताभेदात्कथं भोक्तृभोग्यभावः तस्य भेदव्याप्तत्वात् । एवं अब्ज्योतिरादिशब्दवाच्यरूपादावपीत्यत उक्तम्- **क्रीडयेति** ॥ स्वयं स्वतन्त्रः । स्वेच्छयेति यावत् । अत एव वक्ष्यति इच्छयेति । ननु तथापि भोग्यभोक्तृभावे हीनोच्चभावः स्यादित्यत आह - **न चेति** ॥ तस्य प्राणादिशब्दवाच्यविष्णुरूपस्य । शरीरादिशब्दवाच्यस्य विष्णुरूपस्य भोक्तृत्वमात्रेणोच्चत्वं चेत्यपि द्रष्टव्यम् । कुतो ? न चेत्यतो भोग्यत्वेऽपि न हीनत्वमित्यत्र लौकिकं दृष्टान्तमाह - **न हीति** ॥ उपभोग्यः आलिङ्गनचुम्बनोपरिसुरतादिना । एवं भार्या उच्चत्वं नाप्नुयादित्यपि द्रष्ट-

व्यम् । एवं विष्णोर्भोग्यत्वादिमात्रेण हीनोच्चभावो नास्तीति प्रतिज्ञातं दृष्टान्तमुखेनोपपाद्योपसंहरति- **एवमिति** ।। अविशेषो हीनोच्चत्वविशेष-शून्यः। 'अन्नं न निन्द्यात्तद्व्रतं, अन्नं बहुकुर्वीत तद्व्रतम्' इत्यत्र प्रसिद्धमन्नं 'न निन्द्यात् भुक्तिसमये भुञ्जीतान्नमकुत्सयन्' इति स्मृतेः । तथा अन्नं बहु पक्वं कुर्वीत अतिथ्यभ्यागतभोजनार्थमित्यपव्याख्याननिरासाय तद्वाक्यद्वयं व्याचष्टे - **अन्नाख्यं तं विष्णुमिति** ।। तं भगवन्तं बहु मन्येत बहुगुणवत्त्वेन बहुकर्मवत्त्वेन मन्येत । तं भगवन्तं प्रतिपादयेदित्यर्थः । यदि सुखे मोक्षसुखे स्पृहा इच्छेति उपनिषदि शेषपूरणम् । अन्यथा नरकादिदुःखं भविष्यतीति भावः । 'तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' इति वाक्यं यया कया च विधया येन केनापि प्रकारेण न्यायेनाऽन्यायेन वा प्राणात्ययकाले बह्वन्नं प्राप्नुयात्। यथोक्तम्- 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति व्याख्या-तम् । तदसदिति भावेनाह - **येन केनापि विधिनेति** ।। येन केनापि विहितप्रकारेणगुरुसेवादिरूपातियत्नेनेति यावदित्यर्थः। यद्वा बहुभ्यः श्रोतव्यं बहुधा श्रोतव्यम् । 'न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् । ब्रह्मैतदद्वितीयं हि गीयते बहुधर्षिभिः' इति वचनात् । अनेकगुरुमुखैरनेक-प्रकारेण श्रवणरूपातियत्नेनेत्यर्थः । मननद्वारेति पूरणीयम् । बह्वित्येव पूर्ण-मित्येव। 'भूम्नः क्रतुवज्ज्यायस्त्वम्' 'भूमैव देवः परमो ह्युपास्यः' इति स्मृति-श्रुतिभ्यां पूर्णत्वोपासनस्यावश्यकत्वावगमादिति भावः । मत्वेति उपासनां कृत्वेत्यर्थः । 'य एवं समुपासीत' इत्युत्तरत्रानुवादात् । इदं च श्रुतौ शेष-पूरणम् ।

## भाष्यम्

(सर्वदृष्टये पूर्वे वयसि ब्रह्मोपास्यम्)

**य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् ।।**
**सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः ।**

प्रमाणेनैव विशेषमाह - **विद्यार्थ इति** ।। विद्याभ्यासार्थे । वसतावित्यस्यार्थो वसतीच्छयेति । विद्याभ्यासार्थं गुरुकुलवासेच्छया आगतमित्यर्थः । न प्रत्याचक्षीतेत्यस्यार्थो नेति न ब्रूयादिति । तद्व्रतमित्युक्तं व्रतं नाविदुषो युक्तमित्यत उक्तं **विदुष इति** । 'अन्नं बहुकुर्वीत' इति प्रकरणस्थौ पृथिव्याकाशशब्दौ 'अन्नं न निन्द्यात्' इति प्रकारणस्थौ प्राणशरीरशब्दौ च तदभेदेन तच्छब्दवाच्यत्वप्रतीतिनिरासाय क्रममविवक्षित्वा व्याचष्टे - **स विष्णुरित्यादिना** ।। पृथुत्वात् पृथु विस्तारे विस्तृत्वाद्व्याप्तत्वादित्यर्थः । प्राङोरर्थः प्रकृष्टेति । णश्च निर्वृतिवाचकः । 'णकारो बलम्' इति वाक्यं च हृदि निधाय णकारार्थः उक्तः- **आनन्दबलत इति** । काशृ दीप्तौ दीप्तिरिह ज्ञानम् । तस्य आङुपसर्गोक्तं सम्यक्त्वं च सर्वविषयकत्वमित्यभिप्रेत्योक्तम्- **सर्ववेत्तृत इति** । वेत्तृत्वत इत्यर्थः । शराः देहिनः । शॄ हिंसायां शीर्यते देहनाशेन नश्यतीति व्युत्पत्त्या शरशब्दवाच्यस्य जीवस्य प्रेरणादेव विष्णुः शरीरमिति स्मृतो न तु प्रसिद्धशरीराभेदेनेत्यर्थः । अयं चैवशब्दः पृथुत्वात् प्रकृष्टानन्दबलतः सर्ववेत्तृत इत्येतैरपि सम्बध्यते । तेन तदभेदेन तच्छब्दवाच्यत्वशङ्कापरिहारः । चतुर्भिः रूपैः पृथिव्यादिस्थितैः रूपैः । चतुरात्मभिः चतुरात्मनामभिः पृथिवीत्यादिभिः । भोग्यभोक्त्रिति अन्नान्नादशब्दार्थकथनम् । ननु प्राणशरीरशब्दवाच्ययोः भगवद्रूपयोः परस्परात्यन्ताभेदात्कथं भोक्तृभोग्यभावः तस्य भेदव्याप्तत्वात् । एवं अब्ज्योतिरादिशब्दवाच्यरूपादावपीत्यत उक्तम्- **क्रीडयेति** ।। स्वयं स्वतन्त्रः । स्वेच्छयेति यावत् । अत एव वक्ष्यति इच्छयेति । ननु तथापि भोग्यभोक्तृभावे हीनोच्चभावः स्यादित्यत आह - **न चेति** ।। तस्य प्राणादिशब्दवाच्यविष्णुरूपस्य । शरीरादिशब्दवाच्यस्य विष्णुरूपस्य भोक्तृत्वमात्रेणोच्चत्वं चेत्यपि द्रष्टव्यम् । कुतो ? न चेत्यतो भोग्यत्वेऽपि न हीनत्वमित्यत्र लौकिकं दृष्टान्तमाह - **न हीति** ।। उपभोग्यः आलिङ्गनचुम्बनोपरिसुरतादिना । एवं भार्या उच्चत्वं नाप्नुयादित्यपि द्रष्ट-

व्यम् । एवं विष्णोर्भोग्यत्वादिमात्रेण हीनोच्चभावो नास्तीति प्रतिज्ञातं दृष्टान्तमुखेनोपपाद्योपसंहरति- **एवमिति** ।। अविशेषो हीनोच्चत्वविशेष-शून्यः । 'अन्नं न निन्द्यात्तद्व्रतं, अन्नं बहुकुर्वीत तद्व्रतम्' इत्यत्र प्रसिद्धमन्नं 'न निन्द्यात् भुक्तिसमये भुञ्जीतान्नमकुत्सयन्' इति स्मृतेः । तथा अन्नं बहु पक्वं कुर्वीत अतिथ्यभ्यागतभोजनार्थमित्यपव्याख्याननिरासाय तद्वाक्यद्वयं व्याचष्टे - **अन्नाख्यं तं विष्णुमिति** ।। तं भगवन्तं बहु मन्येत बहुगुणवत्त्वेन बहुकर्मवत्त्वेन मन्येत । तं भगवन्तं प्रतिपादयेदित्यर्थः । यदि सुखे मोक्षसुखे स्पृहा इच्छेति उपनिषदि शेषपूरणम् । अन्यथा नरकादिदुःखं भविष्यतीति भावः । 'तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' इति वाक्यं यया कया च विधया येन केनापि प्रकारेण न्यायेनाऽन्यायेन वा प्राणात्ययकाले बह्वन्नं प्राप्नुयात् । यथोक्तम्- 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति व्याख्या-तम् । तदसदिति भावेनाह - **येन केनापि विधिनेति** ।। येन केनापि विहितप्रकारेणगुरुसेवादिरूपातियत्नेनेति यावदित्यर्थः । यद्वा बहुभ्यः श्रोतव्यं बहुधा श्रोतव्यम् । 'न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् । ब्रह्मैतदद्वितीयं हि गीयते बहुधर्षिभिः' इति वचनात् । अनेकगुरुमुखैरनेक-प्रकारेण श्रवणरूपातियत्नेनेत्यर्थः । मननद्वारेति पूरणीयम् । बह्वित्येव पूर्ण-मित्येव । 'भूम्नः क्रतुवज्ज्यायस्त्वम्' 'भूमैव देवः परमो ह्युपास्यः' इति स्मृति-श्रुतिभ्यां पूर्णत्वोपासनस्यावश्यकत्वावगमादिति भावः । मत्वेति उपासनां कृत्वेत्यर्थः । 'य एवं समुपासीत' इत्युत्तरत्रानुवादात् । इदं च श्रुतौ शेष-पूरणम् ।

**भाष्यम्**

(सर्वदृष्टये पूर्वे वयसि ब्रह्मोपास्यम्)

**य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् ।।**

**सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः ।**

प्रमाणेनैव विशेषमाह - **विद्यार्थ इति** ।। विद्याभ्यासार्थे । वसतावित्यस्यार्थो वसतीच्छयेति । विद्याभ्यासार्थं गुरुकुलवासेच्छया आगतमित्यर्थः । न प्रत्याचक्षीतेत्यस्यार्थो नेति न ब्रूयादिति । तद्व्रतमित्युक्तं व्रतं नाविदुषो युक्तमित्यत उक्तं **विदुष इति** । 'अन्नं बहुकुर्वीत' इति प्रकरणस्थौ पृथिव्याकाशशब्दौ 'अन्नं न निन्द्यात्' इति प्रकारणस्थौ प्राणशरीरशब्दौ च तदभेदेन तच्छब्दवाच्यत्वप्रतीतिनिरासाय क्रममविवक्षित्वा व्याचष्टे - **स विष्णुरित्यादिना** ।। पृथुत्वात् पृथु विस्तारे विस्तृत्वाद्व्याप्तत्वादित्यर्थः । प्राङोरर्थः प्रकृष्टेति । णश्च निर्वृतिवाचकः । 'णकारो बलम्' इति वाक्यं च हृदि निधाय णकारार्थः उक्तः- **आनन्दबलत इति** । काशृ दीप्तौ दीप्तिरिह ज्ञानम् । तस्य आङुपसर्गोक्तं सम्यक्त्वं च सर्वविषयकत्वमित्यभिप्रेत्योक्तम्- **सर्ववेत्तृत इति** । वेत्तृत्वत इत्यर्थः । शराः देहिनः । शॄ हिंसायां शीर्यते देहनाशेन नश्यतीति व्युत्पत्त्या शरशब्दवाच्यस्य जीवस्य प्रेरणादेव विष्णुः शरीरमिति स्मृतो न तु प्रसिद्धशरीराभेदेनेत्यर्थः । अयं चैवशब्दः पृथुत्वात् प्रकृष्टानन्दबलतः सर्ववेत्तृत इत्येतैरपि सम्बध्यते । तेन तदभेदेन तच्छब्दवाच्यत्वशङ्कापरिहारः । चतुर्भिः रूपैः पृथिव्यादिस्थितैः रूपैः । चतुरात्मभिः चतुरात्मनामभिः पृथिवीत्यादिभिः । भोग्यभोक्त्रिति अन्नान्नादशब्दार्थकथनम् । ननु प्राणशरीरशब्दवाच्ययोः भगवद्रूपयोः परस्परात्यन्ताभेदात्कथं भोक्तृभोग्यभावः तस्य भेदव्याप्तत्वात् । एवं अब्ज्योतिरादिशब्दवाच्यरूपादावपीत्यत उक्तम्- **क्रीडयेति** ।। स्वयं स्वतन्त्रः । स्वेच्छयेति यावत् । अत एव वक्ष्यति इच्छयेति । ननु तथापि भोग्यभोक्तृभावे हीनोच्चभावः स्यादित्यत आह - **न चेति** ।। तस्य प्राणादिशब्दवाच्यविष्णुरूपस्य । शरीरादिशब्दवाच्यस्य विष्णुरूपस्य भोक्तृत्वमात्रेणोच्चत्वं चेत्यपि द्रष्टव्यम् । कुतो ? न चेत्यतो भोग्यत्वेऽपि न हीनत्वमित्यत्र लौकिकं दृष्टान्तमाह - **न हीति** ।। उपभोग्यः आलिङ्गनचुम्बनोपरिसुरतादिना । एवं भार्या उच्चत्वं नाप्नुयादित्यपि द्रष्ट-

व्यम् । एवं विष्णोर्भोग्यत्वादिमात्रेण हीनोच्चभावो नास्तीति प्रतिज्ञातं दृष्टान्तमुखेनोपपाद्योपसंहरति- **एवमिति** ।। अविशेषो हीनोच्चत्वविशेष-शून्यः । 'अन्नं न निन्द्यात्तद्व्रतं, अन्नं बहुकुर्वीत तद्व्रतम्' इत्यत्र प्रसिद्धमन्नं 'न निन्द्यात् भुक्तिसमये भुञ्जीतान्नमकुत्सयन्' इति स्मृतेः । तथा अन्नं बहु पक्वं कुर्वीत अतिथ्यभ्यागतभोजनार्थमित्यपव्याख्याननिरासाय तद्वाक्यद्वयं व्याचष्टे - **अन्नाख्यं तं विष्णुमिति** ।। तं भगवन्तं बहु मन्येत बहुगुणवत्त्वेन बहुकर्मवत्त्वेन मन्येत । तं भगवन्तं प्रतिपादयेदित्यर्थः । यदि सुखे मोक्षसुखे स्पृहा इच्छेति उपनिषदि शेषपूरणम् । अन्यथा नरकादिदुःखं भविष्यतीति भावः । 'तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' इति वाक्यं यया कया च विधया येन केनापि प्रकारेण न्यायेनाऽन्यायेन वा प्राणात्ययकाले बह्वन्नं प्राप्नुयात् । यथोक्तम्- 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति व्याख्या-तम् । तदसदिति भावेनाह - **येन केनापि विधिनेति** ।। येन केनापि विहितप्रकारेणगुरुसेवादिरूपातियत्नेनेति यावदित्यर्थः । यद्वा बहुभ्यः श्रोतव्यं बहुधा श्रोतव्यम् । 'न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् । ब्रह्मैतदद्वितीयं हि गीयते बहुधर्षिभिः' इति वचनात् । अनेकगुरुमुखैरनेक-प्रकारेण श्रवणरूपातियत्नेनेत्यर्थः । मननद्वारेति पूरणीयम् । बह्वित्येव पूर्ण-मित्येव । 'भूम्नः क्रतुवज्ज्यायस्त्वम्' 'भूमैव देवः परमो ह्युपास्यः' इति स्मृति-श्रुतिभ्यां पूर्णत्वोपासनस्यावश्यकत्वावगमादिति भावः । मत्वेति उपासनां कृत्वेत्यर्थः । 'य एवं समुपासीत' इत्युत्तरत्रानुवादात् । इदं च श्रुतौ शेष-पूरणम् ।

## भाष्यम्

(सर्वदृष्टये पूर्वे वयसि ब्रह्मोपास्यम्)

**य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् ।।**

**सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः ।**

**यस्य तद् ब्रह्म संसिद्धं पूर्वं तेनाऽप्यतेऽग्रतः ॥**
**मध्ये वयसि चेत् सिद्धं मुक्तो मध्यं प्रपश्यति ।**
**वार्धक्ये चेद् विजानाति मुक्तः पादौ प्रपश्यति ॥**
**तेजोमण्डलमेवान्यत् अङ्गं विष्णोः प्रपश्यति ।**
**पूर्वे वयसि बोद्धव्यमामुखात् सर्वदृष्टये ॥' १० ॥**

## पदार्थदीपिका

'अराध्यस्मा अन्नम्' इत्येतद्व्याचष्टे - **य एवमिति** । अराधीत्यस्यार्थः सिद्ध इति । अपरोक्षतो ज्ञात इत्यर्थः । 'राध साध संसिद्धौ' इति धातोः । सम्यक् सिद्धिश्चापरोक्षज्ञानमेवेति भावः । आचक्षत इत्यत्र कर्तृपूरणं विद्वांस इति । परिनिष्ठिताः एतत्प्रमेये । 'परिनिष्ठा विनिश्चयः' इति वचनात् सम्यक् निश्चयवन्तः । आग्रहविशेषवन्त इति यावत् । 'एतद्वै मुखतः' इति वाक्यमप्रतीतेर्व्याचष्टे - **यस्येति** ॥ येनेत्यर्थः । आप्यते प्राप्यत इत्यर्थः । मुखत इत्यस्यार्थः पूर्वमिति । पूर्वस्मिन् वयसीत्यर्थः । बाल्य इति यावत् । राद्धमित्यस्यार्थः संसिद्धमिति । सम्यक् ज्ञातं श्रवणाय प्रारब्धमिति यावदिति सम्प्रदायः । 'मुखतोस्मान्न॒राध्यते' इति वाक्यमप्रतीतेर्व्याचष्टे - **तेनेति** ॥ अस्मा इत्यस्यार्थः तेनेति । मुखत इत्यस्यार्थोऽग्रत इति ॥ राध्यत इत्यस्यार्थः **आप्यत इति** । तथा च मुखतः अग्रतः । तसेः सार्वविभक्तिकत्वादग्रतोऽग्रम् । मुखमिति यावत् । आप्यते अपरोक्षीक्रियते । अनन्तरं मुक्तावपि तथैव पश्यतीति द्रष्टव्यम् । 'एतद्वै मध्यतोऽन्न॒राद्धम्' इत्येतद् व्याचष्टे - **मध्ये वयसीति** ॥ तत्र मध्यत इत्यस्यार्थो मध्ये वयसीति । सिद्धं ज्ञातं श्रवणाय प्रारब्धमिति यावत् । 'मध्यतोस्मान्न॒राध्यत' इत्येतद्व्याचष्टे- **मुक्त इति** ॥ मध्यत इत्यस्यार्थे मध्यमिति । राध्यत इत्यस्यार्थः प्रपश्यतीति । मध्यंप्रपश्यति सम्यक् साक्षात्करोति । एवमपरोक्षज्ञानानुसारेणैव

मुक्तोऽपि मध्यमेव सम्यक् प्रपश्यतीति योज्यम्। 'एतद्वा अन्ततोऽन्न९-राद्धम्' इत्येतद्व्याचष्टे- **वार्धके चेदिति** ।। अन्तत इत्यस्यार्थो वार्धक इति। राद्धमित्यस्यार्थो विजानातीति । श्रवणाय प्रारब्धमिति यावत् । 'अन्ततोऽस्मान्न९राध्यते' इत्यत्रान्तत इत्यस्यार्थः- **पादाविति** ।। राध्यत इत्यस्यार्थः प्रपश्यतीति। सम्यगपरोक्षीकरोति। एवमेव मुक्तोऽपि प्रपश्यतीति योज्यम्। नन्वेवमपरोक्षज्ञानकाले मुक्तौ च मुखादिमात्रदर्शने इतराङ्गदर्शनाभाव एव किमित्याशङ्कायां तत्र विशेषमाह - **तेजोमण्डलमेवेति** ।। यदङ्गं स्पष्टं पश्यति तदन्यदङ्गं तेजोमण्डलमेव तेजःपुञ्जमेव पश्यति न स्पष्टमित्यर्थः। य एवं वेदेत्येतन्नोक्तानुवादरूपम्। उत्तरत्र फलानुक्तेरित्यभिप्रेत्य तद्वाक्यं व्याचष्टे- **पूर्वे वयसीति** ।। आमुखात् मुखमारभ्य । सर्वदृष्टये सर्वावयवदृष्टये अनेन श्रुतौ य इत्यनन्तरं सर्वावयवापरोक्षज्ञानकामः स्यादिति शेषः पूरणीय इत्युक्तं भवति । एवमित्यस्यार्थः- **पूर्वे वयसीति** ।। पूर्वं वयः समारभ्य वार्धक-पर्यन्तमित्यर्थः। वेदेत्येतद् व्यत्ययेन विधिरूपतया व्याख्येयमिभिप्रेत्य बोद्धव्य-मिति तव्यप्रत्ययप्रयोग इति ज्ञातव्यम्।

अयमिह सम्प्रदायः। 'विद्युद्धन्मानुषा विद्युः' इति वचनात् यः सात्विक-प्रकृतिर्मनुष्योत्तमोऽनादिकालादारभ्य भगवज्ज्ञानशून्यो भगवदनुग्रहेणैव दैवादादौ बाल्य एव लब्धसत्सङ्गतिस्तद्वशादन्यदगणयन् स्थितो बाल्य एव श्रवणादियत्नं कृत्वा पश्चात्परित्यक्तवान् स एवमनेकजन्मभिः सिद्धस्सन् यदि भगवद्रूपं योग्यतापरिपाककाले पश्यति तर्हि मुखमेव सम्यगेव अपरोक्षीकरोति। इतराङ्गं तेजःपुञ्जमेव पश्यति न सम्यक्। एवं मुक्तावपि। यदि सात्विकप्रकृतिः पुमान् मध्ये वयसि सत्सङ्गतिं लब्ध्वा श्रवणादियत्नाय प्रारब्धवान् पश्चाच्च परित्यक्तवान् तर्हि सः योग्यतापरिपाकानन्तरं अपरोक्षज्ञानकाले मध्यमेवादौ सम्यक् प्रपश्यति इतराङ्गं तु तेजःपुञ्जमेव पश्यति

न सम्यक् । एवं मुक्तावपि । यदि च सात्विकप्रकृतिः पुमान् वार्धके सत्सङ्गतिं लब्ध्वा श्रवणादियत्नाय प्रारब्धवान् सः अपरोक्षज्ञानसमये पादावेवादौ सम्यक् प्रपश्यति । इतराङ्गं तु तेजः पुञ्जमेव पश्यति न सम्यगक् एवं मुक्तावपीति । उपासनाप्रारम्भपरमिदमित्याहुः ॥ १० ॥

## उपनिषत्

(अधिष्ठानविशेषे विष्णुरूपोपासनानिरूपणम्)

**क्षेम इंति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इंति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इंत्युपस्थे । सर्वमित्याकाशे ॥ ११ ॥**

## भाष्यम्

'क्षेमकृत्त्वात् क्षेमनामा वाचिस्थः स परो हरिः ।
योगनामा तथा प्राणे सर्वकामनियोजनात् ॥
क्षेमनामा क्षेमकृत्त्वात् अपाने हि हरिः स्वयम् ।
कर्मनामा हस्तगतः कर्मकृत्त्वात् जनार्दनः ॥
गतिदत्वाद् गतिर्नाम पादस्थः पुरुषोत्तमः ।
विसर्गकृद् विमुक्त्याख्यः पायुस्थः परमो विभुः ॥
अध्यात्मस्थ इति प्रोक्तोऽथाधिदैवगतं शृणु ।
पर्जन्ये तृप्तिनामाऽसौ तृप्तिदत्वाज्जनार्दनः ॥
वायौ तु बलनामा च बलदत्वात् सदैव हि ।
यशःप्रदत्वात् दक्षे तु यशः पश्वभिमानिनि ॥

**नक्षत्रेषु ज्योतिराख्यो ज्योतिर्दातृत्वतो हरिः ।**
**उपस्थमानिनि शिवे प्रजात्यानन्दसन्ततेः ॥**
**दातृत्वात् तत्तदाख्योऽसौ सन्ततिस्त्वमृतं स्मृतम् ।**
**सर्वः सर्वप्रदत्वात्तु प्रकृतौ पुरुषोत्तमः ॥' ११ ॥**

## पदार्थदीपिका

भगवदुपासनान्तराण्याह- **क्षेम इति वाचीत्यादिना** ॥ तत्र 'क्षेम इति वाचि' इत्येतत् व्याचष्टे- **क्षेमकृत्त्वादिति** ॥ भक्तानां क्षेमकृत्त्वादित्यर्थः । 'योगक्षेम इति प्राणापानयोः' इति वाक्यं उभयत्राप्युभयोपासनमुच्यते इत्यन्यथाप्रतीतिनिरासाय योग इति प्राणे, क्षेम इत्यपाने इत्येवं विविच्य व्याचष्टे - **योगनामेत्यादिना** ॥ प्राणे स्थित इति शेषः । एवमपाने पर्जन्ये वायौ दक्षे नक्षत्रेषु शिवे प्रकृतावित्यत्रापि शेषो द्रष्टव्यः । योगो योजनं नियोजनमित्येव योगशब्दार्थः । सर्वकामेति योग्यतया लाभः । 'कर्मेति हस्तयोः' इति वाक्यं व्याचष्टे- **कर्मनामेति** ॥ कर्मकृत्त्वात् कर्मकर्तृत्वात् । 'गतिरितिपादयोः' इति वाक्यं व्याचष्टे- **गतिदत्वादिति** ॥ गतिर्ज्ञानं मोक्षो वा तद्दातृत्वादित्यर्थः । 'विमुक्तिरिति पायौ' इति वाक्यं विमुक्तिपदं प्रसिद्धमुक्तिपरमिति प्रतीतिं वारयन् व्याचष्टे- **विसर्गकृदिति** ॥ मलादि-विसर्गकृदित्यर्थः । 'इति मानुषीः समाज्ञा' इति वाक्यतात्पर्यमाह- **अध्यात्मस्थ इति** ॥ मानुषशब्दार्थोऽध्यात्मेति । तथा चात्मानं मानुषं देहं अधिकृत्य विद्यमानं यद्वागादीन्द्रियं तत्रस्थो हरिरिति क्षेमादिशब्दवाच्यतयोपास्यत्वेन प्रोक्त इत्यर्थः । 'अथ दैवीः' इत्यस्य तात्पर्यम् - **अथाधिदैवगतमिति** ॥ हरिमिति शेषः । देवतासम्बन्धि दैवं बृष्ट्यादि तदधिकृत्य तदभिमानितया विद्यमाना देवा अधिदैवमित्युच्यन्ते । तद्गतं हरिमित्यर्थः । अथ दैवी-रित्युपक्रम्य वृष्ट्यादौ जडे तृप्त्यादिरूपेण भगवदुपासनं कथ्यत इति प्रतीति-

निरासाय तृप्तिरिति वृष्टाविति वाक्यं तावद् व्याचष्टे - **पर्जन्य इति** ॥ वृष्टिशब्दार्थः पर्जन्य इति । पर्जन्यः आदित्यः । 'पर्जन्यादन्नसम्भवः' इत्यत्र गीताभाष्ये तथोक्तत्वात् । 'बलमिति विद्युति' इति वाक्यं व्याचष्टे - **वायौ चेति** । विद्युच्छब्दार्थो वायाविति । सदाबलदत्वादेवेति सम्बन्धः । 'यश इति पशुषु' इति वाक्यं व्याचष्टे ॥ **यशः प्रदत्वादिति** ॥ पशुशब्दार्थो दक्ष इति । यशः प्रदत्वाद्यशः । यश इति नामवानित्यर्थः । किं पश्वभेदेन पशुशब्दवाच्यत्वं नेत्याह- **पश्वभिमानिनीति** ॥ 'ज्योतिरिति नक्षत्रेषु' इति वाक्यं व्याचष्टे- **नक्षत्रेष्विति** । अश्विन्यादिष्वित्यर्थः । ज्योतिर्दातृत्वतः प्रकाशदातृत्वतः । 'प्रजातिरमृतमानन्द इत्युपस्थे' इति वाक्यं व्याचष्टे - **उपस्थमानिनीति** ॥ उपस्थं गुह्येन्द्रियम् । प्रजात्यानन्दभ्यां सहिता सन्ततिः प्रजात्यानन्दसन्ततिस्तस्या इति व्याख्येयम् । 'प्रजातिःपुत्र उच्यते' इति वचनात्पुत्रदातृत्वात् प्रजात्याख्यः । आनन्ददातृत्वादानन्दाख्यः सन्ततिः सन्तानपरम्परा । तद्दातृत्वात्तदाख्य इत्यर्थः । ननु तर्हि सन्ततिशब्दवाच्यत्वमेव प्राप्तं न तु अमृतशब्दवाच्यत्वम् । नह्यत्र सन्ततिशब्दः श्रूयत इत्यत आह - **सन्ततिरिति** ॥ 'अमृतं सन्ततिरिति स्मृतम्' इत्यर्थः । पौत्रादिरूपसन्तानपरम्परा सन्ततिः । 'सर्वमित्याकाश' इति वाक्यं व्याचष्टे- **सर्वमिति** ॥ सर्वप्रदत्वात् सत्ताप्रतीतिप्रवृत्त्यादिसर्वप्रदत्वादित्यर्थः । आकाशशब्दार्थः प्रकृताविति ॥ ११ ॥

## उपनिषत्

**तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपा-**

सीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येण म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रियां भ्रातृव्याः ॥१२॥

## भाष्यम्

'स प्रतिष्ठा स्थापकत्वान्मनो मान्यत्वतो हरिः ।
नमो नम्यत्वतो नित्यं महश्चापि महत्त्वतः ॥
विरिञ्चमारकश्चासौ ब्रह्म पूर्णगुणत्वतः' ॥ १२ ॥

## पदार्थदीपिका

आकाशशब्दवाच्यप्रकृतिस्थः पुरुषोत्तमः सर्वमित्युपास्य इत्युक्त्या पुनस्तस्यैवोपास्यगुणानाह- **तत्प्रतिष्ठेत्युपासीतेत्यादिना** । तत्र तत्प्रतिष्ठेति वाक्यं व्याचष्टे- **स प्रतिष्ठेति** ॥ स आकाशस्थो हरिः स्थापकत्वात् तत्तत्पदे सर्वदेवादिस्थापकत्वादित्यर्थः । 'तन्मन इत्युपासीत' इति वाक्यं व्याचष्टे- **मन इति** ॥ मान्यत्वतः पूज्यत्वतः । तन्नम इत्युपासीतेत्येतद् व्याचष्टे- **नम इति** ॥ 'णमु प्रह्वत्वे शब्दे च' इति धातोः कर्मणि यत्प्रत्यये नम्यत्वतः शब्ध्यत्वतः सर्वदेवैः स्तुत्यत्वत इत्यर्थः । एतदभिप्रायेणैवाद्यपद्ये 'सर्वैर्देवैरीड्यम्' इत्युक्तमिति ज्ञातव्यम् । 'तन्मह इत्युपासीत' इति वाक्यं व्याचष्टे- **महश्चापीति** ॥ महत्त्वतः व्याप्तत्वादित्यर्थः । 'तद्ब्रह्मणः परिमर इत्युपासीत' इति वाक्यं व्याचष्टे- **विरिञ्चेति** ॥ 'तद्ब्रह्मेत्युपासीत' इति वाक्यं व्याचष्टे- **ब्रह्मेति** ॥ १२ ॥

## उपनिषत्

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं-वित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुप-

सङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो२ऽहमन्नादो२ऽहमन्नादः । अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत् ॥१३॥

## भाष्यम्

'वेदैनं तत्त्वतो ब्रह्मा स एनं पञ्चरूपिणम् ।
प्राप्य गायति मुक्तस्सन् अन्ननामाऽस्मि भोग्यतः ॥
यथेष्टमन्नभोक्ता च कीर्तिकर्ता हरेस्तथा ॥ १३ ॥

## पदार्थदीपिका

'स य एवंवित्' इति वाक्यं 'य एवं वित्' इत्यनेन 'स यश्चायम्' इत्युक्तप्रकार एव परामृश्यत इति प्रतीतिं सर्वसाधारण्यप्रतीतिं च वारयन् व्याचष्टे - **वेदैनमिति** ॥ पञ्चरूपिणमित्येतदत्रापि सम्बध्यते । तत्वत इति स्फुटमित्यर्थः । अत एव वक्ष्यति 'ब्रह्मैनं पश्यति स्फुटम्' इति । 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादेस्तात्पर्यं स एनं पञ्चरूपिणं प्राप्येति । पञ्च-रूपिणमिति कर्मधारयादिनिः । इदमुपलक्षणम् । अष्टरूपिणमिति द्रष्टव्यम् । 'एतत्सामगायन्नास्ते' इत्यादेस्तात्पर्यं गायतीति । 'अस्माल्लोकात्प्रेत्य' इत्यस्य तात्पर्यं मुक्तः सन्निति । अहमन्नमित्येतद्व्याचष्टे- **अन्ननामास्मीति** ॥ तत्र हेतुः भोग्यत इति । भोग्यत्वतः अद्यत्वतः । मुक्तस्वावरान् प्रत्युपजीव्यत्वादित्यर्थः । यथोक्तम् । उपजीव्यत्वमेव चाद्यत्वमिति । अहमन्नाद इत्येतद् व्याचष्टे- **यथेष्टमन्नभोक्ता चेति** ॥ यथेष्टभोगभोक्ता चेत्यर्थः । अहꣳश्लोक-

कृदित्येतद्व्याख्याति- **कीर्तिकर्तेति** ॥ कीर्तीति श्लोकशब्दार्थः । शिष्येषु भगवदुपदेशेन तत्कीर्तिविस्तारकर्तेत्यर्थः । यद्वा एतादृशमहिमोपेतोऽहं हरेः पुत्र इति हरेः कीर्तिकर्तेत्यर्थः । तथाहि । लोके पुत्रमहिम्ना पितुः कीर्तिर्दृष्टेति ॥ १३ ॥

## उपनिषत्

**अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्त-मा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥ १४ ॥**

**ओं सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥**

### ॥ इति तृतीया वल्ली सम्पूर्णा ॥

## भाष्यम्

ऋतरूपस्य विष्णोस्तु पुत्रः प्रथमजो ह्यहम् ॥
देवेभ्यः पूर्वजश्चाहं मुक्तानामाश्रयः सदा ।
यो ददाति च मां सम्यग् विष्णुतत्त्वप्रदर्शकः ॥
स इत्थमेव मां याति विष्णोरन्नमहं सदा ।
ममान्नं सर्वजीवास्तु भोग्या मम यतः सदा ॥
सर्वमभ्यभवं चाहं गुणैस्सर्वैश्च नित्यकैः ।
सुवर्णो भगवान् विष्णुर्ज्योतिः स मम रेचकः ॥

**योऽहमेवंविदभवं तस्य मे माधवः पतिः।**
**इति ब्रह्मा गायमानो मुक्तश्चरति सर्वदा॥'**
**इति यजुः संहितायाम्॥ १४॥**

## पदार्थदीपिका

'अहमस्मि प्रथमजा ऋता' इति वाक्यं व्याचष्टे - **ऋतरूपस्येति**॥ 'ऋतं यथार्थविज्ञानम्' इत्युक्तत्वेन यथार्थज्ञानस्वरूपस्येत्यर्थः। यद्वा 'ऋ गताविति धातोस्तु पूर्वावगतवत्सदा। स्थितेर्बह्मर्तमित्युक्तम्' इति वचनात् पूर्वावगतवत्सदा स्थितस्येत्यर्थः। किं मनुष्येभ्यः प्रथमजः पुत्र इति शङ्का परिहारायोक्तम्- **पूर्वं देवेभ्यः इति**। तद्व्याचष्टे - **देवेभ्य इति**॥ पूर्वभावव्यपेक्षयेदमिति ज्ञातव्यम्। 'अमृतस्य नाभौ' इत्येतद् व्याचष्टे - **मुक्तानामिति**॥ अनेनामृतस्येत्येकवचनं सुमुदायापेक्षमित्युक्तं भवति। नाभिशब्दार्थः आश्रय इति। 'यो मा ददाति स इ देव मा वा इत्येतद् दुर्गमार्थत्वाद् व्याचष्टे- **यो ददातीति**॥ यो माः ज्ञानानि ददात्युपदिशतीत्यर्थः। तस्य तात्पर्यं **विष्णुतत्वप्रदर्शक इति**। शिष्येषु विष्णुतत्वप्रदर्शकस्तदुपदेष्टेत्यर्थः। क्वचिद्विष्णुतत्वप्रदर्शिका इति पाठः। तत्र विष्णुतत्वविषयिका इत्यर्थः। इदं च माशब्दोक्तज्ञानविशेषणमिति ज्ञातव्यम्। स इ देवेत्यस्यार्थः- **स इत्थमेवेति**। इदित्यस्यार्थ इत्थमिति। इत्थमेव अतिनिश्चयेनेति यावत्। मा वा इत्यस्यार्थो मां यातीति। वा गतिगन्धनयोरिति धातोर्वातिर्गत्यर्थत्वादित्यर्थः। इदमपि पूर्वभावव्यपेक्षयेत्यवगन्तव्यम्। तथा च योऽधिकारी प्रतीकालम्बनो माः ज्ञानानि शिष्येभ्यो ददात्युपदिशति सः तदादिसाधनजनितापरेक्षज्ञानानन्तरं भुक्तप्रारब्धकर्म्मा चरमदेहादुत्क्रान्तः सन् अर्चिरादिपथा इदेव इत्थमेव अतिनिश्चयेनेति यावत्। मा मां वाः यातीति योजना द्रष्टव्या। यथोक्तम्। 'कार्यं बादरिरस्य

गत्युपपत्तेः' इति । अहमन्नमित्येतत्पुनरुक्तिपरिहाराय व्याचष्टे- **विष्णोरन्नमिति** ।। नृसिंहरूपिणा विष्णुनाऽहमद्यः संहार्यः । 'ब्रह्मचर्मशिरःपदि' इत्यादिवचनादित्यर्थः । सदेत्यविगानं सूचयति । यद्वा विष्णुकर्तृकभोगविषय इत्यर्थः । तथाहि । भगवान् कदाचित्स्वेच्छया गृहीतस्त्रीरूपवतामुक्तब्रह्मणा सह मिथुनीभूय क्रीडत इति प्रसिद्धम् । यथोक्तं छान्दोग्यभाष्ये सप्तमाध्याये- 'आत्मक्रीड-आत्ममिथुन' (७.३.२) इत्यत्र 'भूमोपासनयोग्यस्तु साक्षाद्ब्रह्मैव मुख्यतः । स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् । तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत्' (७.३.२) इति । अत एव 'कामरूप्यनुसञ्चरन्' इति मुक्तब्रह्मणः कामरूपत्वमुक्तमित्यवगन्तव्यम् । अन्नमदन्तं जीवजातमहमद्मीति अक्षरार्थमभिप्रेत्य तत्तात्पर्यमाह- **ममान्नमिति** ।। सर्वजीवा इत्यनेनान्नमदन्तमित्येकवचनं समुदायापेक्षमित्युक्तं भवति । सर्वजीवानां कुतोऽन्नत्वमित्यत आह - **भोग्या ममेति** ।। मदुपजीव्याः मया संहार्या एवेत्यर्थः । 'अहं विश्वं भुवनमभ्यभवाम्' इत्येतद्व्याचष्टे - **सर्वमभ्यभवमिति** ।। अहं नित्यकैः स्वार्थे कः, नित्यभूतैः सर्वैरानन्दादिभिर्गुणैः सर्वं भुवनं सरस्वत्यादिजीवजातं अभ्यभवं अभि परितः अभवं वरो भवं तदुत्तमोऽस्मीत्यर्थः । 'परिभवति सर्वानिति परिभूः सर्वतो वरः' (मं. ८) इत्येवमीशावास्ये व्याख्यातत्वेन तद्रीत्याऽत्रापि तथैव व्याख्येयम् । विश्वोत्तमत्वोक्त्या न मम स्वातन्त्र्यं मन्तव्यमित्याशयेनोक्तम्- **सुवर्णज्योतीरित्यादिना** ।। तत्र सुवर्णज्योतिः सुवर्णवत्प्रकाशवानित्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **सुवर्ण इति** ।। सुवर्णज्योतिश्च भगवान् विष्णुरित्यन्वयः । सुष्ठु परमानन्दरूपत्वप्रकाशरूपत्वनिमित्ताभ्यामिति शेषः । सः सुवर्णज्योतिःशब्दवाच्यो विष्णुः ईः इत्यस्यार्थः- **ईरक इति** । प्रेरक इत्यर्थः । तथा च सुवर्णज्योतिः विष्णुः ईः प्रेरको यस्य मम सोऽहं सुवर्णज्योतीरित्यर्थः । य एवं वेद इत्यनेन एतत्प्रमेयवेत्तुरन्यस्याधिकारिणः फलमुच्यत इत्यसत् । तददर्शनात् । य एवं

वेद स सुवर्णज्योतिर्भवति इति व्याख्याने तु सुवर्णो भगवानिति प्रमाणविरोधापत्तेः। तत्र तस्य भगवत्परत्वेन व्याख्याततत्वात्। अत इदमपि मुक्तब्रह्मवचनमेव। तर्हि य एवं वेदेत्ययुक्तमिति चेन्न। लकारव्यत्ययेन वेद्मीत्यर्थाङ्गीकारात्। न च साकाङ्क्षतया वाक्याभासत्वमिति वाच्यम्। योहमेवं अन्नमयादि पञ्चरूपिणं भगवन्तं सृष्ट्यादिलक्षणयुक्ततया सुवर्णज्यातीरित्युक्तप्रकारेण मत्प्रेरकत्वेन च वेद वेद्मि। तस्यैवं वेत्तुर्मम माधवो लक्ष्मीपतिर्विष्णुः पतिः स्वामी पालकश्चेत्यध्याहारकरणात्। न चैतदप्रामाणिकं व्याख्यानम्। प्रमाणे तथा व्याख्याततत्वादित्यभिप्रेत्याह - **योऽहमिति**॥ अतो मम भगवत्प्रेरितत्वेन स्वातन्त्र्याभावात् तदनुग्रहेणाहं विश्वं भुवनं अभ्यभवामित्युक्तं सामर्थ्यमुपपन्नमिति भावः। इत्युपनिषदित्यत्र इतीत्यस्यान्वयं दर्शयति - **इति ब्रह्मेत्यादिना**॥ अनेन इतीत्यस्य सामगायन्नास्त इति पूर्वेण सम्बन्ध उक्तो भवतीति ज्ञातव्यम्॥ १४॥

## भाष्यम्

('अन्नं न परिचक्षीत' इत्यादिमन्त्रार्थविमर्शः)

**अन्नं भगवन्तं न परिचक्षीत। न निराकुर्यात्। तद्गुणांस्तत्कर्माणि वा कुत्रापि बहु कुर्वीत। बहुगुणत्वेन प्रतिपादयेत् भगवन्तम्। यया कया च विधया बह्वन्नं प्राप्नुयात्। अतिप्रयत्नेनापि विहितप्रकारेण बहुतरां भगवद्विद्यां प्राप्नुयात्। 'प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसम्बभूव' 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव' इत्यादिना विरिञ्चस्यैवैतद्वानम्। अन्यो न परिबभूवेति निषेधात्।**

## पदार्थदीपिका

'अन्नं न परिचक्षीत' इत्यस्य प्रमाणेनाव्याख्याततत्वादन्यथाप्रतीतिनिरासाय स्वयं व्याचष्टे-**अन्नमिति**॥ निराकरणं नामायोग्येषु उपदेश एव।

तन्न कुर्यादित्यर्थः । एवमन्याख्याने 'अन्नं न निन्द्यात्' इत्यनेन पौनरुक्त्यापत्तेरिरिति ज्ञातव्यम् । 'अन्नं बहु कुर्वीत' इत्येतत् 'बहुमन्येत तं सदा' इति प्रमाणेन व्याख्यातमपि तात्पर्याप्रतीतेः स्वयं स्पष्टं व्याकुर्वन्नेव तात्पर्यमाह- **तद्गुणानिति** ।। 'कुत्रापि' यत्र कुत्रापि सत्सभायाम् । बहुगुणत्वेनेत्युपलक्षणम् । बहुकर्मत्वेनेत्यपि द्रष्टव्यम् । 'तस्माद्यया कया च विधया' इत्येतत् न्यायेन वा अन्यायेन वा बह्वन्नं प्राप्नुयादित्यन्यथा-प्रतीतिनिरासाय 'येन केनापि विधिना बह्वित्येव जनार्दनम् । मत्वैव प्राप्नुयान्नित्यम्' इति प्रमाणेन व्याख्यातम् । इदानीं तदनूद्य स्वयं प्रकारान्तरेण व्याख्याति- **यया कया चेति** ।। यया कया च विधयेत्यत्र चशब्दोऽप्यर्थ इत्यभिप्रेत्य विहितप्रकारेणापीत्युक्तम् । तस्यैव विवरणमतिप्रयत्नेनापी-त्यर्थः। गुर्वादिसेवारूपातिप्रयत्नेनापीत्यर्थः । बह्वित्यस्यार्थो बहुतरामिति । अन्नमित्यस्य तात्पर्यं भगवद्विद्यामिति । 'अहमस्मि प्रथमजा ऋतस्य' 'अन्नमदन्तमाद्मि' 'अहं विश्वं भुवनमभ्यभवाम्' इति वाक्यत्रयं मुक्तविरिञ्चिपरतया प्रमाणेन व्याख्यातम् । तत् तदा युक्तं स्यात् यदि ब्रह्मणः प्रथमजातत्वमन्नादातृत्वं विश्वोत्तमत्वं च सिद्धं स्यात् तदेव कुत इत्यतस्तत्र प्रमाणमाह- **प्रजापतिरिति** ।। प्रजापतिश्चतुर्मुखः ऋतस्य यथार्थज्ञानरूपस्य विष्णोः प्रथमजाः प्रथमपुत्र इत्यर्थः । आत्मशब्दस्य 'यच्चात्ति विषयानिह । तस्मादात्मेति भण्यते' इति वचनेन 'अद भक्षणे' इति धातुनिष्पन्नतया आत्मानं अन्नादिविषयात्तारं जीवजातम् । अभि प्रति आत्मना स्वेच्छया सम्बभूव अदनायेति शेषः । सम्यक् स्थितो बभूव । अभक्षयदिति यावदि-त्यर्थः । यद्वा 'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तत' इति वचनेनोपसर्गाणां धात्वर्थबाधकताया उक्तत्वादभीत्युपसर्गबलेन भू धातुरेवादनार्थः तथा चाभि-सम्बभूव अभक्षयदित्यर्थः । परिता बभूवेत्यत्र परि ता इति पदच्छेदः । हे प्रजापते भवान् एतानि प्रत्यक्षसिद्धानि तानि परोक्षाणि अतीन्द्रियाणीति

यावत् । जातानि उत्पत्तिमन्ति विश्वा विश्वानि सर्ववस्तूनि परिबभूव परितो भूतवान् वशीकृतवान् । तत्स्वामित्वेन वर्तते तदुत्तम इति यावत् । त्वत् त्वत्तोऽन्यस्तु न परि बभूव तदुत्तमो न भवतीत्यर्थः । छन्दसि परेऽपि व्यवहिताश्चेति वचनात्परीत्युपसर्गस्य ता इत्यनेन व्यवधानं न दोषायेति ज्ञेयम् । इत्यादिना वाक्येन एतद्गानं अहमस्मि प्रथमजा इत्यादिगानं विरिञ्चस्यैव । तत्कर्तृकमेवेत्यवसीयत इति शेषः । आदिपदेन 'यो ब्रह्माणं विदधाति पूर्वम्' (श्वेता. ६.१८) इत्यादिवाक्यग्रहणम् । ननु 'अहं विश्वं भुवनमभ्यभवाम्' इत्युक्तं विश्वस्वामित्वं विरिञ्चस्यैव कुतः । अन्यस्यापि किन्नस्यादित्यत आह- **अन्य इति** ।। इत्येवं प्रजापतिशब्दोक्तविरिञ्चान्यस्य विश्वस्वामित्वनिषेधात् युक्तमवधारणमित्यर्थः ।

## भाष्यम्

**'विद्युद्वन्मानुषा विद्युस्सूर्यमण्डलवत्सुराः ।**
**प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ।।**
**ब्रह्मा हि स्थिरचिद्रूपो बहुलात्मा विशेषतः ।**
**अन्ये क्रमादबहुलाः तथा [1]चञ्चलतेजसः ।**
**तस्मात् सम्यङ् न पश्यन्ति हरिं ब्रह्मा तु पश्यति ।।'**

**इति हरिवंशवचनाच्च ब्रह्मैवैनं सम्यग्वेद ।**

## पदार्थदीपिका

'स य एवं वित्' इति वाक्यं प्रमाणे 'वेदैनं तत्वतो ब्रह्म' इति ब्रह्मपरत्वेन व्याख्यातम् । इतोऽपि तत् ब्रह्मपरमेव न सर्वसाधारणम् । स य एवं विदित्यत्र 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायेन स्फुटापरोक्षज्ञानरूपसम्यक्-

१. 'चञ्चलतेजसः' इति श्रीनिवासतीर्थीयः पाठः- 'चेतसः' अथवा 'चेतनाः' इति कश्चित् ।

ज्ञानस्यैव विवक्षितत्वात् तादृशं च सम्यक् ज्ञानं ब्रह्मण एव नान्येषाम् । अत एव प्रमाणे तत्वत इत्युक्तमित्यभिप्रेत्य मानुषानारभ्य ब्रह्मपर्यन्तम् अपरोक्षज्ञाने तारतम्यं प्रमाणेन दर्शयति- **विद्युद्वदिति** ।। विद्युद्वत् सूर्यमण्डलवत् इत्यादिकं अपरोक्षज्ञाने स्पष्टतातिशयापेक्षयेति ज्ञातव्यम् । ब्रह्मज्ञाने पुनर्विशेषमाह- **ब्रह्मा हीति** ।। स्थिरचिद्रूपः स्थिरज्ञानरूपः । भगवद्विषयकज्ञानस्य न कदापि चञ्चलीभाव इत्यर्थः । विशेषतः इतरापेक्षया विशेषेण । बहुले पूर्णे भगवति आत्मा इन्द्रियगणो यस्य ब्रह्मणः स तथोक्तः। यथोक्तम्- 'न मे हृषीकाणि पतन्त्यसत्पथे' (भाग. २.७) इति । यद्वा वेदानुक्तभारतोक्तबहुलभगवद्गुणविषयकज्ञानवत्त्वाद् बहुलात्मा । अथवा ईशादन्यत्रालोचने बहुलविषयिणी आत्मा बुद्धिर्यस्यासौ तथोक्तः । अन्ये रुद्राद्याः अबहुलाः अबहुलात्मान अबहुलज्ञाना इत्यर्थः । 'चञ्चलतेजसः' चञ्चलज्ञाना न ब्रह्मवत्स्थिरचिद्रूपा इत्यर्थः । हरिमित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । तु विशेषेण एनं हरिं सम्यक् स्फुटम् । अतः 'स य एवं वित्' इति वाक्यं ब्रह्मपरमेवेति भावः ।। **।। इति भाष्यार्थः ।।**

**ततश्चेयं अक्षरयोजना**

('भृगुर्वै वारुणिः' इत्यादिमन्त्रखण्डार्थः)

**ॐ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेति स तपोऽतप्यत । स तपस्तप्त्वा ।**

।। १ ।।

## खण्डार्थः

एवमन्नमयादिपञ्चरूपिणो ब्रह्मण उपास्तिं ब्रह्मवल्यामभिधाय तत्रैव समाख्यात्वेन भृगुवरुणसंवादरूपमाख्यायिकां वक्तुं वेदपुरुषः पूर्वोक्तमेव शान्तिं पठति - सहनाववत्वित्यादिना ॥ व्याख्यातम् ॥ १ ॥ तामेवाख्यायिकामाह - **भृगुर्वै वारुणिरित्यादिना** ॥ वरुणस्यापत्यं पुमान् वारुणिर्भृगुः । वैशब्देन भृगोर्वरुणपुत्रत्वं प्रसिद्धमित्याचष्टे । पितरं वरुणमुपससार समीपं गतवान् । किं वदन् उपससारेत्यत आह - **अधीहीति** ॥ हे भगवः 'मतुवसोरुःसम्बुद्धौ छन्दसि' । हे भगवन् पूज्य ब्रह्म परं ब्रह्म अधीहि अध्यापयेति णिजर्थस्यान्तर्णीतत्वात् । एवं पृष्टो वरुणः तस्मै भृगवे एतत् ब्रह्म प्रोवाच उपदिष्टवान् । तदेव दर्शयति - **अन्नमित्यादिना** ॥ अत्र विज्ञानानन्दौ ग्राह्यौ । पूर्वत्र चक्षुःश्रोत्रवाचो ग्राह्याः । उक्तार्थे समाख्यारूपत्वात् । अत्तृत्वादन्नं प्राणं प्रकृष्टचेष्टकत्वात् चष्ट इति चक्षुः श्रवणात् श्रोत्रं मन्तृत्वान्मनः वक्तृत्वाद्वाक् विवेचनात् विज्ञानं आनन्दरूपत्वादानन्दं एतन्नामकं ब्रह्मे-त्युवाच । वस्तुसिद्धेर्लक्षणाधीनत्वात्तं प्रति ब्रह्मलक्षणमप्युवाच । यथोक्तं सुधायाम्- 'वरुणोप्युद्देशलक्षणाभ्यां भृगवे ब्रह्मोपदिश्य' इति । तदेव लक्षणजातं दर्शयति- **यत इत्यादिना** ॥ जीवन्ति चेष्टन्ते यत्प्रयन्ति प्रलये । अभिस्वेच्छया संविशन्ति मुक्तौ । तद्ब्रह्मेति ज्ञात्वा तद्ब्रह्म विजिज्ञासस्व मनननिदिध्यासनरूपां जिज्ञासां कुर्वित्यर्थः । न श्रवणमात्रेण कृतीभवान् श्रवणमात्रस्य ब्रह्मसाक्षात्कारसाधनत्वात् । साक्षात्कारस्यैव मोक्षहेतुत्वादतः तत्साधनीभूतां जिज्ञासां कुर्विति भावः । एवमुपदिष्टाष्टरूपो भृगुर्युगपत्सर्वस्य साक्षात्कर्तुमशक्यत्वादादौ अन्ननामकभगवत्साक्षात्काराय तपः मनननिदि-ध्यासनरूपं तपो तप्यत चकार । सः भृगुः तपस्तप्त्वा कृत्वा ॥ १ ॥

## उपनिषत्

अन्नं ब्रह्मेति व्यंजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । ॥ २ ॥

प्राणो ब्रह्मेति व्यंजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ३ ॥

मनो ब्रह्मेति व्यंजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ४ ॥

विज्ञानं ब्रह्मेति व्यंजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ५ ॥

**आनन्दो ब्रह्मेति व्यंजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ॥**

**सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ६ ॥**

## खण्डार्थः

अन्नं अत्तृत्वादन्ननामकमन्नस्थमनिरुद्धाख्यं भगवद्रूपं ब्रह्मेति व्यजानात् साक्षात्कृतवान् । कुतो ब्रह्मेति व्यजानादित्यत उक्तं ब्रह्मलक्षणयोगित्वादित्यभिप्रेत्य तत्र तल्लक्षणं ज्ञातवानित्याह- **अन्नाद्ध्येवेत्यादिना** ॥ तद्विज्ञाय मनननिदिध्यासनाभ्याम् अन्नाख्यं भगवद्रूपं साक्षात्कृत्य गुरुप्रसादलब्धपूर्वतमं धनं तस्मै निवेदितुं प्राणाख्यरूपान्तरसाक्षात्काराय मनननिदिध्यासने चिकीर्षुर्गुरोरनुज्ञामादातुं च पुनरेव वरुणं पितरमुपससार- **अधीहीति** ॥ अन्नादिरूपाष्टकमपि पुनरधीहि अनुजानीहि । तत्राऽनुजानीहीति वक्तव्ये यदधीहि भगवो ब्रह्मेति वदति तदहङ्कारनिरासार्थम् । यथोक्तमनुव्याख्याने - 'दृष्ट्वैकैकं स्वरूपं तु समस्तोक्तानुदर्शनम् । इच्छता ज्ञां गुरोः प्राप्य तपसैवापरोक्षितम्' (ब्र.सू.अनु. १.१.६, श्लो. २२८) इति । एवमुपसरणानन्तरं पुनर्वरुणोऽन्नं प्राणं चक्षुःश्रोत्रं मनोवाचमितीत्येवं विज्ञानानन्दसहितं अन्नादिरूपाष्टकमपि पुनरादिशच्चेति ग्राह्यम् । कुत एवं व्याख्येयमिति चेदुच्यते । एतदवष्टम्भेनैव 'लिङ्गाच्च' (ब्र.सू. ४.२.२) इति सूत्रे श्रवणाद्यावृत्तेः कर्तव्यतायाः सूत्रकारेण साधितत्वात् । उक्तं च तत्वप्रकाशिकायाम् - 'श्रुतान्नादिरूपविषय एव भृगोः पुनःपुनः प्रश्नात् ।

तथैव वरुणोक्तेश्च' इति। अत एवात्रादिशच्चेति पूर्वटीकाकारैः पूरितमित्यवगन्तव्यम्। एवं ब्रह्मोपदिश्य तं भृगुं प्रति वरुण उवाच- **तपसेत्यादिना** ।। मनननिदिध्यासनरूप तपसेत्यर्थः। बह्म तपो ज्ञानस्वरूपमिति ज्ञात्वा विजिज्ञासस्वेति सम्बन्धः। एवमेवोत्तरत्रापि योजना द्रष्टव्या। प्राणादिशब्दाः प्रद्युम्नादिरूपपराः द्रष्टव्याः। एवं 'चक्षुर्ब्रह्मेति व्यजानात्। चक्षुषो ह्येव खल्विमानि भूतानि जायन्ते' इत्यादिकम्। 'श्रोत्रं ब्रह्मेति व्यजानात्। श्रोत्राद्ध्येव खलु' इत्यादिकम्। 'वाचं ब्रह्मेति व्यजानात्। वाचो ह्येव खलु' इत्यादिकं च ग्राह्यम्। उक्तं चानुव्याख्याने - 'तच्च वाधूलशाखायामष्टरूपमुदाहृतम्। विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः आवापोद्वापतःशाखा यत आहुः परम्पदम्' (ब्र.सू.अनु. १.१.६, श्लो. २२६) इति।

उपसंहरति - **सैषेति** ।। सैषा भार्गवी भृगुणानुष्ठिता। वारुणी वरुणोपदिष्टा विद्या। परमे व्योमन् व्योम्नि। 'व्योमेति व्याप्तशब्दः स्यात्' इति वचनात् व्याप्ते परमे व्योम्नि परमात्मनि तद्विषये प्रतिष्ठिता। तत्प्रतिपादिकेत्यर्थः। एवं वरुणोक्तप्रकारेण भृग्वपरोक्षीकृतान्नादिरूपाष्टकज्ञानिनः फलमाह- **य एवं वेदेति** ।। एवं भृगुणा ज्ञातमन्नादिबहुरूपिणं विष्णुं वेद सः मुक्तो भूत्वा तस्मिन् विष्णावेव प्रतितिष्ठतीत्यर्थः। अन्नवान्मुक्तावन्ननामकभगवद्वान् भवति। तेन सर्वदा गुप्तो भवतीत्यर्थः। अन्नादः अन्ननामकभगवन्तमत्ति तमुपजीवतीत्यन्नादो भवति। सदा तदुपजीवकत्वानुसन्धानवान् भवतीत्यर्थः। प्रजया प्रकृष्टत्वेन जननान्नित्योदिततया स्थितत्वाद् प्रजेति ज्ञानं तया। पशुभिः पान्ति शं साधनं चेति पशवो वेदास्तैः। ब्रह्मवर्चसेन ब्रह्मणो विष्णोः वरुणादेव सम्यक् चायितं अभिवृद्धं यत्स्वरूपं तेजस्तद् ब्रह्मवर्चसं तेन महान् भवति। संसृतावल्पं अल्पतेजश्च जीवरूपं भगवान्मुक्तौ

महन्महातेजश्च करोतीति हि । 'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोतीशो महत्तदा' (बृह.भा. ६.४.४) इति प्रमाणप्रसिद्धम् । कीर्त्या च महान् भवति । लौकिकफलेप्सूनां एतद् ज्ञानात्प्रसिद्धप्रजादिकमपि फलं यथायोग्यं भवतीत्यपि व्याख्येयम् ।। २-६ ।।

## उपनिषत्

**अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ७ ।।**

**अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ८ ।।**

## खण्डार्थः

प्रकृतान्ननामकस्य भगवतो बह्वीरुपास्तीराह - **अन्नं न निन्द्यादित्यादिना** ।। यदि मोक्षसुखे स्पृहा तर्ह्यन्नं अन्ननामकं भगवन्तं न निन्द्यात् । दोषित्वनिर्गुणत्वाल्पगुणत्वादिना निन्दां न कुर्यात् । तन्निन्दने च नरकादिदुःखमिति भावः । तद्व्रतं अन्नाख्यभगवदनिन्दनं व्रतत्वेन भाव्यमित्यर्थः । प्राणो वा इत्यादिनोपास्त्यन्तरमुच्यते । शरीरस्थित प्राणे स्थितः प्रकृष्टानन्द-

बलत्वेन प्राणनामा विष्णुरन्नं भोग्यः। यस्य शरीरं शीर्यते देहनाशेन नश्यतीति शरो जीवस्तं ईरयति प्रेरयतीति शरीरम्। तच्छब्दवाच्यरूपम्। अन्नादं भोक्तृ। एवं शरीरमन्नं 'प्राणो वा अन्नादः' इत्यपि द्रष्टव्यम्। उभयोः प्राणशरीरनामकरूपयोरुक्तमन्नत्वमन्नादत्वं च स्पष्टमाह - **प्राण इत्यादिना** ॥ प्राणे तदाख्ये रूपे भोग्ये सति शरीरं तन्नामकं रूपं भोक्तृतया प्रतिष्ठितम्। शरीरे तन्नामके रूपे भोग्ये सति प्राणस्तन्नामा विष्णुः भोक्तृतया प्रतिष्ठितः। उपसंहरति - **तदेतदिति** ॥ तत्तस्मात्तदुक्तरीत्या प्राणशरीरयोरूभयोरप्यन्नत्वादेस्तदन्नमन्ने प्रतिष्ठितमिति जानीयादित्यर्थः। एवं वेत्तुः फलमाह- **स य एतदिति** ॥ प्रतितिष्ठतीत्यादिकं पूर्वोक्तवद् योजनीयम्॥७॥

विद्यान्तरमाह - **अन्नमिति** ॥ न परिचक्षीत न निराकुर्यात्। निराकरणं चायोग्येषूपदेशः। तन्न कुर्यादित्यर्थः। इत्थमव्याख्याने न निन्द्यादित्यनेन पुनरुक्त्यापत्तेः। तद्व्रतं अपरिचक्षणं व्रतमित्यर्थः॥ **आप इति विद्यान्तरम्** ॥ आ पालनादापः। ज्योतिः प्रकाशस्वरूपत्वात्। एवमेव ज्योतिरन्नं आपो वा अन्नादा इत्यपि द्रष्टव्यम्। उभयोरब्ज्योतिर्नामकरूपयोरुक्तमन्नत्वमन्नादत्वं च स्पष्टमाह - **अप्स्विति** ॥ भोग्यभूतासु सतीषु ज्योतिः प्रतिष्ठितं भोक्तृतया। ज्योतिषि भोग्ये सति आपः भोक्तृतया। उपसंहरति- **तदेतदिति** ॥ तत्तस्मादुक्तरीत्या अब्ज्योतिषोरुभयोरन्नत्वादित्यर्थः। स य एतदित्यादि पूर्ववत्॥ ८॥

## उपनिषत्

**अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं**

**वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ ९॥**

**न कञ्चन वसतौ प्रत्याचक्षीत। तद् व्रतम्। तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्न ँ राद्धम्। मुखतोऽस्मा अन्न ँ राध्यते। एतद्वै मध्यतोऽन्न ँ राद्धम्। मध्यतोऽस्मा अन्न ँ राध्यते। एतद्वा अन्ततोऽन्न ँ राद्धम्। अन्ततोऽस्मा अन्न ँ राध्यते। य एवं वेद॥ १०॥**

## खण्डार्थः

विद्यान्तरमाह - **अन्नमिति** ॥ यदि मोक्षसुखे स्पृहा तर्हि अन्ननामकं भगवन्तं बहु कुर्वीत। धातूनामनेकार्थत्वात् तद्गुणांस्तत्कर्माणि च पूर्णानि मन्येत। बहुगुणत्वेन बहुकर्मवत्त्वेन यत्र कुत्रापि सत्सभायां भगवन्तं प्रतिपादयेदित्यर्थः। तद्बहुत्वेन मननं व्रतमित्यर्थः -**पृथिवीत्यादि विद्यान्तरम्** ॥ पृथिवी पृथुत्वात् पृथिवीनामकं रूपम्। आकाशः सर्ववेत्तृत्वात्तन्नामकं रूपम्। एवमाकाशोऽन्नं पृथिवी वा अन्नादेत्यपि ग्राह्यम्। उभयोः पृथिव्याकाशयोरुक्तमन्नत्वमन्नादत्वं च विशदमाह - **पृथिव्यामिति** ॥ पृथिव्यां भोग्यभूतायां सत्यां आकाशो भोक्तृतया। आकाशे भोग्ये सति पृथिवी भोक्तृतया। तदेतदित्युपसंहारः। तत्तस्मात्पृथिव्याकाशयोरुभयोरप्यन्नत्वादित्यर्थः। एकस्यापि भगवतो भोक्तृभोग्यभावः क्रीडयेति न कोऽपि दोष इति भाष्ये स्पष्टम्। स य एतदित्यादि पूर्ववत्॥ ९॥

भगवज्ज्ञानिनः आवश्यकं कर्तव्यमाह- **न कञ्चनेति** ॥ विद्वान् विद्यार्थे वसतौ गुरुकुलवासेच्छया आगतं कञ्चन योग्यं पुरुषं न प्रत्याचक्षीत नेति न

ब्रूयात् । तदेतत्प्राप्तसच्छिष्य प्रत्याख्यानं विदुषो व्रतमित्यर्थः । तस्माज्ज्ञानार्थी यया कया च विधया येन केनापि विहितप्रकारेण गुरुसेवादिरूपातियत्नेन । यद्वा बहुभ्यो गरुभ्यो बहुधा श्रवणरूपातियत्नेन मननद्वारा अन्नं भगवन्तं बहु पूर्णमित्युपासां कृत्वा तं प्राप्नुयादित्यर्थः । यद्वा यया कया च विधया विहितप्रकारेण उक्तरूपातियत्नेनापि बहु बहुतरमन्नं अन्ननामकभगवद्विषयिणीं विद्यां प्राप्नुयादित्यर्थः । अस्मा अस्मै उपासकाय । अन्नं भगवद्रूपम् । अराधि सिद्धम् । अपरोक्षतो ज्ञातं भवतीति विद्वांस आचक्षते प्राहुरित्यर्थः । अपरोक्षज्ञाने विशेषमाह - **एतद्वै मुखत इत्यादिना** ॥ यदीति शेषः । एतदन्नं भगवत्स्वरूपं यदि मुखतः उपक्रमात् सप्तम्यर्थे तसिः । पूर्वे वयसि । येन सात्विकप्रकृतिना पुरुषेण सत्सङ्गत्याराद्धं सिद्धं ज्ञातम् । श्रवणाय प्रारभ्य पश्चात् त्यक्तमिति यावत् । अस्मा अस्मै । चतुर्थी तृतीयार्थे । अनेन अधिकारिणा अन्नं भगवद्रूपं अनेकजन्मभिः साधनसम्पूर्त्यनन्तरं अपरोक्ष-ज्ञानकाले मुखतः अग्रतः उपक्रमात् प्रथमार्थे तसिः मुखं राध्यते आप्यते । अपरोक्षीक्रियत इत्यर्थः । इतराङ्गं विद्युद्वत्तेजःपुञ्जमेव पश्यति न स्पष्टमिति भावः । अपरोक्षज्ञानानुसारेण मुक्तावपि तथैव पश्यतीति द्रष्टव्यम् । एतदन्नं यदि मध्यतो मध्ये वयसि राद्धं सिद्धं ज्ञातम् । श्रवणाय प्रारभ्य पश्चात्त्यक्तमिति यावत् । तर्हि अस्मा अस्मै अनेन अपरोक्षज्ञानकाले अन्नं मध्यतः राध्यते मध्यतोऽपरोक्षीक्रियते । मध्यमेवाङ्गं स्पष्टं पश्यति । इतरदङ्गं विद्युद्वत्तेजःपुञ्जमेव पश्यति । न स्पष्टमिति भावः । अपरोक्षज्ञानानुसारेण मुक्तावप्येवमेव पश्यतीति ज्ञातव्यम् । एतदन्नं यदि अन्ततः वार्धके राद्धं श्रवणाय प्रारब्धमिति यावत् । तर्हि अस्मा अस्मै अनेनाधिकारिणा अपरोक्षज्ञानकाले अन्नं राध्यते । कथं राध्यते । अन्ततः अन्ते पादद्वयमिति यावत् । तदेव राध्यते अपरोक्षी-क्रियते । पादावेव स्पष्टं पश्यति । इतराङ्गं तु विद्युद्वत्तेजःपुञ्जमेवेति भावः । अपरोक्षज्ञानानुसारेण मुक्तावप्येवमेव पश्यतीति ज्ञातव्यम् । अत्र

मुखतोऽस्मान्न ँराध्यते मध्यतोस्माअन्न ँराध्यते । अन्ततोऽस्मान्न ँराध्यते इत्येव सर्ववैदिकसम्मतपाठः । सर्वपुस्तकस्थः । 'तस्मा अरङ्गमामवः' 'तस्मा एतत्प्रोवाच' इत्यादाविव अस्मै अन्नमिति पदच्छेदसम्भवात् । अस्मान्नमिति पाठे कथमित्थं पदच्छेदो भविष्यतीति विचार्यम् । यो मुखमाराभ्य पादपर्यन्तं सर्वावयवापरोक्षज्ञानकामः स्यादिति शेषः । स एव पूर्ववयः समारभ्यैव वार्धकपर्यन्तं वेदविद्यात् श्रवणादिकुर्यादित्यर्थः । अत एव भाष्ये बोद्धव्यमिति विधिपरतव्यप्रत्ययप्रयोगः ॥ १० ॥

## उपनिषत्

**क्षेम इंति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इंति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे ॥ ११ ॥**

**तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येण म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः ॥ १२॥**

## खण्डार्थः

भगवदुपासनान्तराण्याह - **क्षेम इति वाचीत्यादिना** ॥ वाचि वागिन्द्रिये स्थितो हरिः क्षेमकृत्त्वात् क्षेमनामेत्युपास्यः । प्राणापानयोर्योगक्षेम इत्युपास्यः।

तत्र प्राणे स्थितः सर्वकामनियोजनाद्योगनामेत्युपास्यः । अपाने स्थितस्तु क्षेमकृत्त्वात् क्षेमनामेत्युपास्य इति विवेकः । हस्तयोः स्थितो जनार्दनः कर्मकृत्त्वात्कर्मनामेत्युपास्यः । पादयोः स्थित्वा पुरुषोत्तमो गतिर्ज्ञानं मोक्षे वा तद्दातृत्वात् गतिनामेत्युपास्यः । पायौ स्थितो हरिर्विसर्गकृत्वात् विमुक्तिनामेत्युपास्यः । इति मानुषीः मनुष्यदेहसम्बन्धिवागादीन्द्रियस्थितभगवत्सम्बन्धिन्यः । आध्यात्मिक्य इति यावत् । समाज्ञाः उपासना उक्ताः। अथ दैवीः अधिदैवगतभगवत्सम्बन्धिन्यः समाज्ञा उपास्तयः कथ्यन्त इत्यर्थः। ता एवाह - **तृप्तिरितीत्यादिना** ।। वृष्टौ तदभिमानिनि पर्जन्ये । तन्नामके आदित्ये स्थितो जनार्दनः तृप्तिदत्वात् तृप्तिनामेत्युपास्यः । विद्युति वायौ स्थितो जनार्दनः बलप्रदत्वाद्बलमित्युपास्यः । पशुषु पशुसमुदायाभिमानिनि दक्षे स्थितो हरिर्यशप्रदत्वात् यशो नामेत्युपास्यः । नक्षत्रेषु अश्विन्यादिषु स्थितो हरिः ज्योतिःशब्दवाच्यप्रकाशप्रदातृत्वात् ज्योतिर्नामेत्युपास्यः । उपस्थे गुह्येन्द्रियाभिमानि शिवे स्थितो हरिः पुत्रदातृत्वात् प्रजापतिनामक अमृतं सन्ततिः, तथा पौत्रादिरूपसन्तानपरम्परादातृत्वादमृतं अमृतनामकः । आनन्ददातृत्वादानन्दनामक इत्युपासीत । आकाशे प्रकृतौ स्थितं परब्रह्म सत्ताप्रतीत्यादिसर्वप्रदत्वात्सर्वनामकमित्युपासीत ।। ११ ।।

आकाशशब्दवाच्यप्रकृतिस्थपरब्रह्मण एवोपास्त्यन्तराण्याह-**तदिति** ।। तत् आकाशस्थं परं ब्रह्म तत्तत्पदेषु देवादिस्थापकत्वेन प्रतिष्ठाशब्दवाच्यमित्युपासीत। एवमुपासकस्य फलमाह- **प्रतिष्ठावानिति** ।। एवमुपासको लोकः स्वयमपि प्रतिष्ठावान् स्वावरस्थापकत्वगुणवान् भवतीत्यर्थः । तदाकाशस्थं परं ब्रह्म महत्त्वान्मह इत्युपासीत । स उपासको महान् भवति । तदाकाशस्थं परं ब्रह्म मान्यत्वान्मन इत्युपासीत । स उपासको मानवान् सन्मानवान् भवति । सर्वैर्मान्यो भवतीत्यर्थः । तत् आकाशस्थं परं ब्रह्म 'णमु प्रह्वत्वे शब्दे च' इति धातोः नम्यत्वात् शब्द्यत्वात् सर्वदेवैः स्तुत्यत्वादिति

यावत् । नम इत्युपासीत अस्मै उपासकाय । उपासकेनेति यावत् । कामाः काम्याः कामितविषयाः नम्यन्ते धातूनामनेकार्थत्वात्प्राप्यन्ते । यद्वा अस्मै कामाः नम्यन्ते नम्रा भवन्ति प्राप्ताः भवन्तीति यावत् । तदाकाशस्थं भगवद्रूपं पूर्णगुणत्वाद्ब्रह्मेत्युपासीत । स उपासको ब्रह्मवान् भवति तेन सदा गुप्तो भवतीत्यर्थः । तदाकाशस्थं परं ब्रह्म ब्रह्मणो विरिञ्चस्य परिमरो मारक इत्युपासीत । तमेनमुपासकं परि परितः समन्तात् स्थिता द्विषन्तः प्रतीपबुद्धिं कुर्वन्तो बाह्याः सपत्ना वैरिणो म्रियन्ते । तथा एनं परि परितः स्थिताः अप्रिया दुःखाद्यप्रियकारिणो भ्रातृव्याः कामक्रोधाद्यन्तरशत्रवस्तेऽपि म्रियन्ते नश्यन्तीत्यर्थः ॥ १२ ॥

## उपनिषत्

**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स यं एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो२ऽहमन्नादो२ऽहमन्नादः । अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत् ॥१३॥**

## खण्डार्थः

एवमध्यात्मं वागादौ अधिदैवं वृष्ट्यादौ च स्थितः परमात्मा परस्परं भिन्नो न मन्तव्य इत्याह - **स यश्चायमिति** ॥ स यः पुरुषे अध्यात्मं पुरुषस्थितवागादौ

विद्यमानः अयं यश्चासावधिदैवं वृष्टिशब्दोक्तादित्ये तदुपलक्षितविद्युदादिषु स्थितः स एकः परस्परं मूलरूपेण चात्यन्ताभिन्न एवेत्यर्थः । एवमन्नमयादिरूपाष्टकविषयकस्फुटापरोक्षज्ञानवांश्चतुर्मुख एव नान्योऽतस्तद्वेत्तुस्तस्यैव तत्प्रसादाय तं महिमानमाह - **स य एवं विदित्यादिना** ॥ य एवं पूर्वोक्तप्रकारेणान्नमयादिरूपाष्टकवित् । 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायेनातिस्फुटं तत्साक्षात्कारवान् स ब्रह्मा अस्माल्लोकात् चरमत्वेन प्रसिद्धाद्देहात् प्रेत्य मुक्तःसन्निति यावत् । एतमन्नमयमात्मानं अनिरुद्धम् । प्राणमयमात्मानं प्रद्युम्नम् । मनोमयमात्मानं सङ्कर्षणम् । विज्ञानमयमात्मानं वासुदेवम् । आनन्दमयमात्मानं नारायणम् । उपलक्षणमेतत् । चक्षुर्मयमात्मानं श्रोत्रमयमात्मानं वाङ्मयमात्मानं उपसङ्क्रम्य तत्समीपं प्राप्य कामान्नी अन्नाद्युपलक्षितकामितसमस्तभोगवान् कामरूपी कामितसमस्तरूपी भूत्वा इमान् प्रमाणप्रसिद्धान् लोकान् 'लुकृ प्रकाशे' इति धातोः प्रकाशरूपत्वान्मुक्ताः लोकशब्देनोच्यन्ते । यथोक्तमनुव्याख्याने- 'लोकाभिधाश्चापि यतो हि मुक्ताः प्रकाशरूपाः सततं च सर्वे' इति । तान् अनु तद्योग्यतानुसारेण सम्यक् चरन् णिजन्तमेतत् । चारयन्, 'चर गतिभक्षणयोः' गमयन् नियामयन्निति यावत् । यथोक्तमनुव्याख्याने- 'मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरःसराणाम्' (ब्र.सू.अनु. ४.४.९) इति । यद्वा इमान् स यदि पितृलोककामो भवतीत्यादि प्रमाणप्रमितान् लोकान् सञ्चरन् तत्र सञ्चारयन्नित्यर्थः । इमान् लोकान् प्रसिद्धान् भूरादीन् अनुसञ्चरन् अप्रत्यक्षतया तत्र सञ्चारं कुर्वन् सन्नित्यप्यर्थमाहुः । एतत् वक्ष्यमाणं साम गायन्नास्ते । तदेव साम दर्शयति - **हावु इत्यादिना** ॥ हावु इत्यादि त्रिरुक्तिः सामत्वात् सुखातिशयास्वादनाद्वा । उत्तरत्र त्रिरुक्तिस्तु सामत्वाद्वा तात्पर्यातिशयद्योतनाय वेति द्रष्टव्यम् । अहमन्नं भोग्यः अद्यः मुक्तस्वावरान्प्रत्युपजीव्यत्वादिति भावः । अहमन्नादः यथेष्टमन्नभोक्ता यथेष्टभोगभोक्तेत्यर्थः ।

अह९श्लोककृत् शिष्येषु भगवदुपदेशेन तत्कीर्तिविस्तारकर्तेत्यर्थः ।यद्वा एतादृशमहिमोपेतोऽहं हरेः पुत्र इति हरेः कीर्तिकर्तेत्यर्थः । तथा हि लोके पुत्रमहिम्नो पितुः कीर्तिर्दृष्टेति ॥ १३ ॥

## उपनिषत्

**अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्त-मा३द्मि । अहं विश्वं भुवनमभ्यंभवाम् । सुवर्णज्योतीः । य एवं वेदं । इत्युंपनिषंत् ॥ १४ ॥**

## खण्डार्थः

अहम् ऋतस्य 'ऋतं यथार्थविज्ञानम्' इति वचनात् यथार्थविज्ञान-रूपस्य । यद्वा 'ऋगताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तम्' इति वचनात् पूर्वावगतवत्सदा स्थितस्येत्यर्थः । विष्णोः प्रथमजाः प्रथमजः पुत्र इत्यर्थः । किं मनुष्येभ्यः प्रथमजः पुत्र इत्याशङ्क्य नेत्याह - **पूर्वं देवेभ्य इति ॥** देवेभ्यः पूर्वः पूर्वज इत्यर्थः । पूर्वभावव्यपेक्षयेदमिति ज्ञातव्यम् । अहं अमृतस्य समुदायापेक्षमेकवचनम् । अमृतानां मुक्तानां नाभा इ नाभिराश्रय इत्यर्थः । प्रतीकालम्बनप्राप्यत्वरूपं स्वमहिमानमाह - **यो मा इति** ॥ यः मा ददाति सः इत् एव माः वा इति पदच्छेदः । यः अधिकारी प्रतीकालम्बनो माः ज्ञानानि विष्णुतत्त्वविषयकाणि शिष्येभ्यो ददाति उपदिशति । स तदादिसाधनजनितापरोक्षज्ञानानन्तरं भुक्तप्रारब्धकर्मा चरमदेहात् उत्क्रान्तः सन् अर्चिरादि पथा इत् एव इत्थमेव अतिनिश्चयेनेति यावत् । मा मां वाः वातेर्गत्यर्थत्वात् यातीत्यर्थः । यथोक्तं 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र.सू. ४.३.७) इति । पूर्वभावव्यपेक्षयेदम् । अहमन्नम् । विष्णुनाहमद्यः संहार्य

इत्यर्थः । ब्रह्मचर्मशिरःपदीत्यादिवचनात् । इदमपि पूर्वभावव्यपेक्षयेति ज्ञातव्यम् । यद्वा अहमन्नं भोग्यः । तथा च विष्णुकर्तृकभोगविषय इत्यर्थः । तथा हि- भगवान् स्वेच्छया गृहीतस्त्रीरूपवता मुक्तब्रह्मणा सह मिथुनीभावेन क्रीडत इति छान्दोग्योपनिषद्भाष्येऽभिहितम् । अत एव कामरूपीति मुक्तब्रह्मणः कामरूपत्वमुक्तमित्यवगन्तव्यम् । अहमन्नमदन्तं प्रसिद्धान्नोपजीविनं जीवजातं आद्मि आ अद्मि । 'अद भक्षणे' । सम्यक् भक्षयामि संहरामीत्यर्थः । इदमपि पूर्वभावव्यपेक्षयेति ज्ञातव्यम् । अहमानन्दादिगुणैर्विश्वं भुवनं सरस्वत्यादिजीवजातं अभ्यभवां अभि प्रति अभवां स्वाम्यभवं वरोऽभवम् । तदुत्तमोऽस्मीत्यर्थः । एतावता न मम स्वातन्त्र्यं मन्तव्यमित्यभिप्रेत्याह- **सुवर्णज्योतीरित्यादिना** ।। सुष्ठु परमानन्दरूपत्वात्प्रकाशरूपत्वाच्च सुवर्णज्योतिर्विष्णुः ईः ईरकः प्रेरको यस्य मम सोऽहं सुवर्णज्योतीरित्यर्थः । योऽहं एवं अन्नमयादिरूपिणं भगवन्तं सृष्ट्यादिलक्षणयुक्ततया सुवर्णज्योतीरित्युक्तप्रकारेण मत्प्रेरकत्वेन वा वेद लकारव्यत्ययः । वेद्मि । योऽहमेवंविदभवमिति यावत् । तस्यैवं वेत्तुर्मम माधवः पतिरिति शेषः । अतो मम भगवत्प्रेरितत्वेन स्वातन्त्र्याभावात्तदनुग्रहेणोक्तं सरस्वत्यादिविश्वोत्तमत्वमुपपन्नमिति भावः । इति 'साम गायन्नास्ते' इति पूर्वेण सम्बन्धः । इतीत्येतदुपनिषदित्यनेनापि सम्बध्यते । तथा च एवं भृगुं प्रत्युपदिश्योपसंहरति वरुणः- **इत्युपनिषदिति** ।। एवं पूर्वोक्तप्रकारेण उपनिषत् त्वद्योग्यरहस्यभूता च ब्रह्मविद्या त्वां प्रति मयोपदिष्टेति शेषः ।

## भाष्यम्

(स्वस्वरूपनिदेशपुरस्सरं भगवन्नमनम्)

**यस्योच्चोऽथ समो वा कश्चिन्नैवास्त्यनन्तसच्छक्तेः ।**
**तं वन्दे परमेशं प्रेयांसं प्रेयसश्च मे विष्णुम् ।।**

(बळित्थासूक्तार्थकथनम्)

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम् ।**
**बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ॥**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः ।**
**मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥**
**हनशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।**

## पदार्थदीपिका

एवं समापितभाष्यो भगवानाचार्यो यद्गुणविशिष्टतया भगवन्तमेतदुपनिषदर्थत्वेन प्रतिपादितवान् यस्मिंश्चात्मनोऽतिशयेन प्रीतिस्तादृशभगवद्वन्दनरूपमेव मङ्गलमन्तेऽप्याचरति- **यस्येति** ॥ अत एव परमेशं प्रेयसः सकाशात् मे मम प्रेयांसं अतिशयेन प्रियमित्यर्थः । अथ स्वभाषितभाष्यस्याप्तिमूलकत्वसमर्थनाय श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्नाह - **यस्य त्रीणीति** ॥ यस्य वायोः । वेदस्य बळित्थेत्यादिवचने । दिव्यानि क्रीडादिगुणयुतानि त्रीणि रूपाणि उदितानि । तस्य यद् तृतीयकं वपुः तेनेदं भाष्यं प्रभौ प्रभुविषयतया कृतं हीत्यन्वयः । कीदृशं चास्य मूलरूपं कानि च त्रीणि रूपाणि कीदृशानि चेति तत्राह - **अलमिति** ॥ तस्य वायोः मूलरूपं अलं सम्यक् बट् बलात्मकं दर्शतं ज्ञानरूपं भर्गः भरणगमनकर्तृ महत् श्रेष्ठम् । तदित्थमेव रूपत्रयावताराय भगवता निहितं प्रेरितम् अवतीर्णं च । तत्र प्रथमकं हनुमदाख्यं वपुः रामवचोनयं रामवचांसि सीतां प्रति नीतवत् । रामवचसि यो नयो न्याय आज्ञारूपस्तद्युक्तं वा । रामविषयकवचांसि मूलरामायणरूपाणि शिष्येषु नीतवद्वा । द्वितीयं भीमनामकं पृक्षः कुरुपृतनाक्षयकारि । तृतीयं रूपं आनन्दरूपस्य हरेःप्रतिपादकशास्त्रनिर्मातृ मध्वाभिधमिति । अतः परमाप्तप्रणीतत्वादिदं भाष्यं सकलसुजनैरादरेणाङ्गी-

कार्यमिति भावः ।। ननु बलित्थेत्यादिवचने वायोः त्रीणि रूपाण्युदितानीत्यसत् । तस्य सूक्तस्य त्रेताग्निपरत्वादित्यतस्तद्सूक्तं वायुरूपत्रयपरतया प्रमाणेन व्याकुर्वन् 'यदीमुपह्वरते साधते मतिः' इत्युक्तमतिशब्दं तावत् व्याचष्टे - **हनशब्द इति** ।। हन हिंसागत्योर्भावि, अप्रत्यये सति निष्पन्नो हनशब्दो ज्ञानवाची । गत्यर्थस्यावगत्यर्थत्वादिति भावः । अत्र हन् हिंसागत्योरित्येव धातुः । न तु हन हिंसागत्योरिति । तथात्वे हनधातुर्ज्ञानवाचीति वक्तव्यम् । न तु हनशब्द इति । प्रत्ययानिष्पन्ने केवलधातौ शब्दव्यवहाराभावेन हनशब्दो ज्ञानवाचीत्यस्यायोगात् । इदमुपलक्षणम् । उशब्द उत्कृष्टत्ववाची । 'उत्कृष्टत्वमुकारार्थः' इति बृहद्भाष्योक्तेः । ज्ञानस्योत्कृष्टत्वं च ईशादन्यत्रालोचने सर्वविषयकत्वादित्यपि द्रष्टव्यम् । तथा च हन उ इत्यत्र निर्वचनत्वात् नकारस्थाकारलोपे हनु इति जाते तदस्यास्तीत्यर्थे 'तदस्यास्मिन्' इति सूत्रेण मतुप् प्रत्यये उप् इत्यस्य लोपे हनुमदिति प्रातिपदिकनिष्पत्तौ हनुमानिति भवति । तथा च हनुमान् ईशादन्यत्रालोचने सर्वविषयकत्वेनोत्कृष्टज्ञानवान् हनुमान् मतिशब्दितः मतिशब्देनोच्यते । अथवा गत्यर्थाद्धनधातोस्ताच्छील्यार्थे उन्प्रत्ययः । 'ताच्छील्यार्थादुनस्तथा' इत्यनुव्याख्यानोक्तेः । तथा च न् इत्यस्य लोपे हनु इति जाते तदस्यास्तीत्यर्थे उक्तसूत्रेण मतुप्प्रत्यये सति हनुमानिति भवति । तथा च हनुमान् अनादिकालाभिव्यक्तवैदिकेश्वरज्ञानवत्त्वेन ज्ञानस्वभाववानित्यर्थः । स च मतिशब्दितः मतिशब्देनोच्यत इत्यर्थः । ननु तर्ह्युक्तरीत्या) हन हिंसागत्योरिति धातोर्गत्यर्थस्य चावगत्यर्थतया हनुशब्दस्य ज्ञानवाचित्वेन मतिशब्दसमानार्थत्वात् हनुमान्मतिशब्दोनोच्यत इत्यर्थः । हनु शब्दस्य ज्ञानवाचित्वे हनुमान्मतिमच्छब्दवाच्यः स्यान्नतु मतिशब्दित इति चेन्न । ज्ञानवतो ज्ञानरूपताप्रकटनाय मतिशब्दप्रयोगात् ।

## भाष्यम्

रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ॥
भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥
प्रोक्तास्सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥
मध्व आनन्दतीर्थस्स्यात् तृतीया मारुतीतनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ॥' इति च ।

## पदार्थदीपिका

'ऋतस्य धेना अनयन्त सस्रुत' इत्येतद् व्याचष्टे- **रामस्येति** ॥ ऋतस्येत्यस्यार्थः **स्वृतरूपस्येति** । सुष्टु सर्वदा सर्वत्र च सत्यरूपस्य । यद्वा सुष्टु सम्यक् पूर्वावगतवत्सदा स्थितस्येत्यर्थः । यथोक्तम् - 'ऋ गताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तम्' इति । धेना इत्यस्यार्थो वाच इति । अनयन्त सीतां प्रतीति शेषः । रामस्य वाचो रामप्रतिपादक-मूलरामायणरूपाः । तेन हनुमता शिष्यान्प्रति अनयन्तेति वा । एवं यदीमुपह्वरते इत्यर्धर्चस्य हनुमदाख्यप्रथमावतारप्रतिपादकत्व मुक्त्वा इदानीं पृक्षो वपुरित्यस्य भीमाख्यद्वितीयावतारप्रतिपादकत्वसिद्ध्यर्थं 'आशये द्वितीयमा सप्तशिवासु मातृषु' इत्येतत् भीमशब्दार्थप्रतिपादकमिति भावेन तावद् भीमशब्दार्थमाह- **भृतम इति** ॥ भृताः पूर्णाः माः प्रमाणानि यस्मिन्नसौ तथोक्तः । अस्त्वेवं भीमशब्दार्थः किं तत इत्यतो मातृष्वित्युक्तमातृशब्दार्थं तावदाह- **वाच इति** ॥ माः प्रमाणभूता वाचः । मापकत्वान्मातरः स्मृता इत्यर्थः । सप्तशिवास्वित्युक्तसप्तशिवाशब्दार्थमाह- **ऋगाद्या इति** ॥ ऋगाद्याश्चत्वारः । अस्त्वेवं सप्तशिवाशब्दार्थः तथाऽपि किमित्यत आह -

**तत्रेति** ।। यतो 'भृतमो भीम इत्युक्तः' ततो भीमशब्दसमानार्थत्वात् तत्रोक्तासु सप्तशिवासु मातृषु शयो निष्ठा अतो भीमः स्मृत इत्यर्थः । तृतीयमस्येत्यादेरानन्दतीर्थाख्यतृतीयावतार-प्रतिपादकत्वसिद्ध्यर्थं 'प्रदिवो मध्व आधव' इत्युक्तमध्वशब्दस्य आनन्दतीर्थशब्दसमानार्थत्वमाह- **मध्वित्यानन्द इति** । 'मधु द्यौरस्तुनः पिता' इति प्रयोगात् । मधु अनन्दकरं वातेरवगत्यर्थत्वात् घञर्थे क विधानात् इति करणे कप्रत्यये कित्वाद्धात्वाकारलोपे निष्पन्नस्य वशब्दस्य शास्त्राऽपरपर्यायतीर्थवाचित्वात् तीर्थं शास्त्रमस्येति मध्व इत्यर्थः। स्वरित्यत्रेव धकारस्थोकारलोपो द्रष्टव्यः । अन्यथा मधुव इति स्यात् । **आनन्दतीर्थः स्यादिति** ।। आनन्दकरं तीर्थं यस्यासावानन्दतीर्थ इत्यर्थः । तथा च मध्वानन्दतीर्थशब्दौ समानार्थाविवेति भावः । तृतीयमस्येत्यत्र वपुरित्येतदनुवर्तत इति भावेनोक्तं तृतीया मारुतीतनुरिति । तृतीया मारुतीतनुः, मध्व आनन्दतीर्थः स्यादिति सम्बन्धः । तात्पर्यद्योतनाय तद्ज्ञानफलमाह- इतीति ।।

## भाष्यम्

**साधको रामवाक्यानां तत्समीपगतस्सदा ।**
**हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।।**
**पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।**
**पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।।**
**दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।**
**प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।।**
**आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।**
**असत्यमप्रतिष्ठञ्च जगदेतदनीश्वरम् ।।**
**वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।**
**येन विष्णोस्तु वर्पाख्यान् गुंणानज्ञासिषुः परान् ।।**

**ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः।**
**त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः॥**
**एतेषां परमो विष्णुः नेता सर्वेश्वरेश्वरः।**
**स्वयम्भुर्ब्रह्मसञ्ज्ञोऽसौ परस्मै ब्रह्मणे नमः॥' इति च।**

## पदार्थदीपिका

'यदीमुपह्वरते साधते मतिः' इत्यस्यार्थमाह - **साधक इति** । साधत इत्यस्यार्थोऽयम् । इदं कार्यं कुर्वित्यादिरूपाणां रामवाक्यानाम् । उपह्वरत इत्यस्यार्थः तत्समीपगत इति । मतिशब्दार्थो हनुमानिति । 'पृक्षो वपुः पितुमान्' इत्येतद्भीमज्ञापकमिति भावेन व्याचष्टे - **भीमस्त्विति** ॥ भीमस्तु द्वितीयो ज्ञेयः ॥ **बहुभुक्पितोरिति** ॥ पितुरित्यन्नसंज्ञा । 'अन्नं वै पितुः' इति श्रुतेः । पितोरन्नस्य बहुभुक् बुद्ध्या विवेकेन बहोरन्नस्य भोक्तेति व्याख्येयम् । बकासुरवधादौ दर्शनात् । ननु कथमिदं लभ्यते । उच्यते - 'भूम निन्दा प्रशंसासु भवन्ति मतुबादयः' इति वचनात् भूमार्थे मतुबयम् । भूमा बाहुल्यम् । तथा च बह्वन्नमिति सिद्ध्यति । तद्वत्तं च तद्भोक्तृत्वेनेति द्रष्टव्यम् । पृतना क्षयकारीत्यनेन पृक्ष इत्यस्य 'तृतीयमस्य वृषभस्य दोहस' इत्यनेन दशप्रमतिशब्दो व्याख्यातः । तदुपपादयति - **दशेतीति** ॥ इह दशेति शब्देन सर्वमुद्दिष्टम् 'दशेति सर्वम्' इति श्रुतेः । सर्वमिति शब्देन पूर्णमुच्यते । दशसर्वपूर्णशब्दाः पर्याया इति यावत् । ततो दशशब्दस्य पूर्णवाचित्वात् दशप्रमतिशब्देन पूर्णप्रज्ञ एवोच्यत इत्यर्थः । 'यदीमनु प्रदिवो मध्वआधवे गुहासन्तं मातरिश्वा मथायति' इति व्याचष्टे-**आसमन्तादिति** ॥ आधव इत्यस्यार्थोऽयम् । भावप्रधानत्वमभ्युपेत्य पतित्वे इत्युक्तम् । गुहा सन्तमित्यस्यार्थो गूढं हरिमिति । तत्र निमित्तमाह- **कलियुग इति** । न केवलं कालबलाद्गूढः किन्त्वित्यत आह- **असत्यमिति** ॥ अनीश्वरं जीवव्यतिरिक्तेश्वररहितं जीवेश्वरैक्यमिति यावत् । ननु जगत्सत्यत्वे

तदन्तःपातिनां सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वात् कथं जीवेश्वरैक्यमित्यत उक्तम्- **असत्यमिति** ।। असत्यत्वं नाम न शशविषाणादीनामिवात्यन्तासत्त्वमपरोक्षप्रतीतिविरोधादित्यभिप्रेत्यासत्यत्वमेव व्याचष्टे - **अप्रतिष्ठमिति** ।। ज्ञानबाध्यमित्यर्थः । मातरिश्वेत्युक्त्या मूलवायुप्रतीतिनिरासाय तृतीयोऽसुरित्युक्तम् । तृतीयोऽसुः कलियुगे कालबलाद्गूढं तदेतज्जगदनीश्वरं वदद्भिः गूहितं सन्तं हरिं आसमन्तात् सर्वप्रकारेण पतित्वे सर्वस्वामित्वविषये यथामति ब्रह्मसूत्रोपनिषदादि-व्याख्यानेन हरेः पुरुषोत्तमत्वमाविष्करोतीत्यर्थः । 'निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासश्शवसाऽऽक्रन्त सूरयः' इत्येतद्व्याचष्टे- **येनेति** ।। यदित्यस्यार्थो येनेति । तृतीयावतारेणेत्यर्थः । महिषस्येत्यस्यार्थो विष्णोरिति । वर्पस इत्यस्यार्थो वर्पाख्यान् गुणान् इति । निराक्रान्त इत्यस्यार्थः आज्ञासिषु-रिति । ज्ञातवन्त इत्यर्थः । ईशानास इति 'बहुवचनमाद्यर्थे । ईशानाद्याः देवाः अन्ये सूरयश्च 'ब्रह्मनिर्गुणम्' इत्युक्तिभिर्निगूढान् गुणानित्यन्वयः । अवतारत्रयस्य कालभेदमाह - **त्रेतायामिति** ।। क्रमादेवेत्यन्वयः । त्रयो जाता इति शेषः । 'प्रयत्पितुः परमान्नीयते' इत्यस्य तात्पर्यमाह- **एतेषा-मिति** ।। स्वयम्भ्वित्यादिना 'ब्रह्म स्वयम्भु ब्रह्मणे नमः' इति उपनिषदन्तरगतं व्याख्यातं भवति । असौ विष्णुः स्वयं भवतीति व्युत्पत्त्या गुणपूर्णत्वेन च निमित्तेन स्वयम्भुब्रह्मसञ्ज्ञ इत्यर्थः । ब्रह्मणे नम इत्युपनिषदन्तरगत-ब्रह्मशब्दस्य चतुर्मुखपरत्वप्रतीतिनिरासाय परस्मा इत्युक्तमित्यवगन्तव्यम् ।

**ॐ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतोजनि ।**
**यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ।। १ ।।**
**पृक्षो वपुः पितुमान् नित्य आ शये द्वितयमा सप्त शिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।। २ ।।**

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ ३ ॥
प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद् घृणा शुचिः
॥ ४ ॥
आदिन्मातृराविशद्यास्वा शुचिरहिंस्यमान उर्विया विवावृधे ।
अनु यत् पूर्वा अरुहत् सनाजुवो नि नव्यसीष्व वरासु धावते ॥५॥

ततश्चायं सूक्तार्थः-

बलित्था इत्यादि सस्रुत इत्यन्तस्यार्थः । सहसः सहोरूपस्य । देवस्य क्रीडादिगुणसम्पन्नस्य । वायोर्मूलरूपं बट् बलात्म-कम् । दर्शतं ज्ञान-रूपम् । भर्गः जगद्भरणगमनगुणम् । इत्था इत्थंभूतमेव । वपुषे रूपत्रयावताराय यतो यस्माद्भगवतोऽधायि निहितं भगवता प्रेरितमित्यर्थः । तस्मादजनि । यद्वा यतो वायोर्भगवानजनि व्यक्तोऽभूत्तस्य वायोरिति सम्बन्धः । प्रथमा-वताररूपं मतिः यदीयं देवमतिः हनुमदाख्यं प्रथमरूपम् । उपह्वरते रामस्य समीपे तिष्ठति । साधते रामकार्याणि साधयति । तेन हनुमता ऋतस्य सत्यरूपस्य रामस्य सस्रुताः अमृतस्रावयुक्ताः धेनाः वाचो नयन्त । सीतां शिष्यांश्च प्रतीति शेषः । पृक्षो वपुः पितुमानित्यस्यार्थः । द्वितीयावतार-स्वरूपमाह- **पृक्ष इति** ॥ द्वितीयं वपुर्भीमाख्यं पृक्षः पृतना क्षयकारी पितुमान् अन्नवान् बह्वन्नभोक्तेत्यर्थः । नित्यः नित्यम् । सप्तशिवासु परममङ्गल-रूपासु । मातृषु प्रमाणभूतासु ऋगादिषु । आशये शेते । तद्विचाररत इति भावः । अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तो भवति । तृतीयावतार-स्वरूपमाह- **तृतीयमिति** ॥ अस्य ऋषभस्य श्रेष्ठस्य वायोस्तृतीयं वपुर्दोहसे ज्ञानदोहाय । दशप्रमतिं पूर्णप्रज्ञनामकम् । योषणो मध्यगेहभट्टपत्न्यः ।

गुरुत्वाद्बहुवचनम् । जनयन्त अजनयन्त । निर्यर्दी बुध्नादित्यस्यार्थः । बुध्नात् ज्ञानरूपात् । यर्दी यस्मादेव महिषस्य महितषड्गुणस्य हरेः । वर्पसो वरणीयत्वात्पालकत्वाद्वर्पोनामकान् गुणान् । ईशानासः रुद्राद्या देवाः । अन्ये सूरयो ज्ञानिनश्च । शवसा सुखेन निराक्रान्त ज्ञातवन्तः । धातूनामनेकार्थत्वात् । तत्तृतीयं वपुरिति पूर्वेण सम्बन्धः । यर्दी यदेव । प्रदिवः प्रकृष्टप्रकाशरूपो मध्वः आनन्दतीर्थाख्यः । मातरिश्वा मातरि प्रमाणभूते ऋगादौ श्वयति गच्छतीति मातरिश्वा वायुर्गुहा सन्तं जीवेश्वरैक्यं वदद्भिर्गूहितं हरिम् । आधवे आसमन्तात्पतित्वे । मथायति विचार्य निश्चाययतीति भावः। प्रयत्पितुः परमान्नीयत इत्यस्यार्थः । यत् रूपत्रयं पितुः स्वोत्पादकात् परमात् उत्तमात् विष्णोः । प्रनीयते प्रकर्षेण प्रेर्यते । पृक्षु धः प्रश्नरूपान् वीरुधः स्तम्बादीन् दंसु दन्तेषु पर्यारोहति चर्वितवच्छकलीकरोतीत्यर्थः । यत् यस्मात् कारणात् । यस्य वायोः जनुषं जन्म अवतारं उभा उभौ लक्ष्मीनारायणौ इन्वतः प्रेरयतः । तस्मादिति शेषः । घृणा शुचिः लक्ष्मीनारायणयोः कृपया शुद्धः सन् आदित् आभ्यां लक्ष्मीनारायणाभ्यामेव । यविष्ठो भवदवरोऽभवदित्यर्थः । आदीन्मातृराविशदित्यस्यार्थः गर्भसम्बन्धनिमित्तकदुःखलेशोऽपि नास्तीत्युच्यते । आदिन्मातृरिति । यतो वायुरादित् प्रकृतलक्ष्मीनारायणप्रेरणादेव मातृराविशत् । न पुनस्तस्य गर्भवासनिमित्तकं विकर्मास्तीति भावः । यासु मातृषु आविष्टोऽपि आसमन्ताच्छुचिः शुचित्वमेवाह । **उर्वियेति** । उर्विया उत्कृष्टया गर्भवासपीडया । अहिंस्यमानः अबाध्यमानः विवावृधे विशेषेणाभिवृद्धोऽभूदित्यर्थः । सप्तशिवासु मातृष्वशय इत्युक्तम् । तत्र विशेषमाह - **अन्विति** ॥ सनाजुवः सनातनं भगवन्तं जुषते जुषी प्रीतिसेवनयोरितिधातुव्याख्यानात् । सेवन्ते प्रतिपादयन्तीति यावत् । सनाजुवः पूर्वाः सप्तमातृषु पूर्वं गणिताः ऋगाद्याः आरुहत् प्रारुहदिति यावत् । तत् अनुक्रमादेव उपक्रमादिलिङ्गैः क्रमेणैव ऋगादिवेदं

विचारयामासेत्यर्थः । नव्यसीषु पौरुषेयत्वेन नूतनासु । अवरासु त्रिषु इतिहासपुराणपञ्चरात्राख्यासु मातृषु । विधावते उपक्रमादिविपर्यालोचनां विनैव शीघ्रमेवार्थं विचारयतीत्यर्थ इति । न चेतिहासशब्दोक्तभारतस्य ऋगाद्युत्तमत्वात् पुराणान्तर्गतस्य भागवतस्य च ऋगादिवेदसमत्वात् कथमवरास्वित्युक्तमिति चेत् । अत्र केचिच्छत्रिन्यायेनोपचरितमेतदित्याहुः। वस्तुतस्तु पौरुषेयत्वेनैवावरत्वं न वस्तुतः । तथा च नव्यासीष्ववरास्विति व्याख्येयमिति सम्प्रदायः ।

## भाष्यम्

(मङ्गलाशंसनम्)

**पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।**
**अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥**

**॥ इति तैत्तिरीयोपनिषद्भाष्ये भृगुवल्ली सम्पूर्णा ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तैत्तिरीयोपनिषद्भाष्यं सम्पूर्णम् ॥**

## पदार्थदीपिका

परमात्मस्तवनमननाभ्यामेव ग्रन्थस्समापनीयो न तु स्वस्तुत्यैवेति भावेन पुनः भगवन्तं प्रणमति भगवानाचार्यः- **पूर्णेति** ॥ पूर्णाः प्रत्येकं निरवधिकाः । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इति वचनात् । पूर्णागण्यगुणैः उदारं उत्कृष्टं धाम स्वरूपं यस्यासौ तथोक्तस्तस्मै वेधसे सर्वज्ञायेत्यशेषमतिमङ्गलम् ॥

यः सर्ववेदान् सम्प्रेर्य कारयामास सत्कृतिम् ।
श्रीपतिं तं गुरूपास्यं भजेऽहं बादरायणम् ॥
श्रीमदानन्दतीर्थार्यहृत्सरोजाख्यमन्दिरः ।
इन्दिराराध्यपादाब्जः प्रीयतां बादरायणः ॥

श्रीमदानन्दतीर्थार्यचरणावाश्रयेऽनिशम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥
वेदेशमुनिसम्प्रोक्तसम्प्रदायप्रवर्तकाः ।
ये यादवाचार्यगुरवस्तान् भजामो निरन्तरम् ॥
श्रीमदानन्दतीर्थीयाः क्व वाचो [1]देवदुर्गमाः ।
क्वाहमल्पमतिर्व्यासानुग्रहः किं न साधयेत् ॥
तैत्तिरीयोपनिषदो यद्भाष्यं विवृतं मया ।
तज्जन्यपुण्यमखिलमवाप्नोतु गुरुर्मम ॥
यादवार्यगुरोः शिष्यश्रीनिवासाख्यसूरिणा ।
कृतेयं भाष्यविवृतिर्भूयाद् व्याख्योपकारिणी ॥
तैत्तिरीयोपनिषदो भाष्यस्य विवृतिस्त्वियम् ।
पदार्थदीपिकाह्वा स्यात्सम्प्रीत्यै कृष्णमध्वयोः ॥
वेदेशतीर्थीयसुपादभक्तश्रीयादवाचार्यगुरूपदिष्टः ।
अर्थो निबद्धोऽत्रविचार्य सद्भिरार्यैरुपेक्ष्यो न भवेदतोऽयम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य तैत्तिरीयोपनिषद्भाष्यस्य टीकायां श्रीनिवासतीर्थविरचितायां पदार्थदीपिकायां भृगुवल्ली सम्पूर्णा ॥**

१. 'वेददुर्गमाः' इति मुद्रिते ।

## ॥ श्री राघवेन्द्रयतिविरचिततैत्तिरीयोपनिषत्खण्डार्थः ॥

श्रीब्रह्मशेषरुद्रादिदैवतैस्सर्ववेदगैः ।
वचोभिरीडितं विष्णुं नानारूपमुपास्महे ॥
प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।
तैत्तिरीयोपनिषदः करिष्याम्यर्थसङ्ग्रहम् ॥
भाष्यस्यार्थो व्यासतीर्थटीकातो ह्यवगम्यते ।
विक्षिप्तत्वादुपनिषदर्थस्यैवात्र सङ्ग्रहः ॥

अस्या उपनिषदो रविमण्डलगो विष्णुर्ब्रह्मा वरुणो भृगुश्चेति क्रमादृषयश्चत्वारः । स एव हरिर्देवता । वाक्यरूपत्वान्न च्छन्दोऽन्वेषणं 'शं नो मित्र' 'आवहन्ति' इत्यादौ । छन्दोबद्धस्थलेऽक्षरपरिगणनयाऽनुष्टुबादि बोध्यम् । ब्रह्मविद्यामभ्यस्यन् भृगुर्विघ्नविघातार्थं देवान् प्रार्थयते- **शन्नो मित्र** इत्यादिना ॥

## उपनिषत्

**ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद् वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ॥ १ ॥**

**(खं.)** मित्रः नोऽस्माकं शं सुखकरो भवत्विति सर्वत्रान्वेति । एवमग्रेऽप्यर्थो बोध्यः । वायोर्ब्रह्मविद्याप्रवर्तकेषु मुख्यत्वात् परब्रह्मणो मुख्याधिष्ठानत्वाच्च तन्नतिस्तुती कुर्वन् पृथक् प्रार्थयते - **नम इत्यादिना** ॥ तत्र वदिष्यामीत्यन्तेन स्तुतिः, तन्मामित्यादिना प्रार्थनेति विवेकः । ब्रह्मणे परब्रह्माधिष्ठानाय, ज्ञानादिगुणबृंहिततया ब्रह्मपदवाच्यायेति वा, 'प्राणो ब्रह्म' इति श्रुतेः ।

अध्यात्मरूपं नत्वा अधिदैवरूपं नमति- **नमस्त** इति वा, परोक्षतो नत्वाऽपरोक्षतो नमति- **नमस्त** इति वाऽर्थः। 'वाग् वै ब्रह्म' इति काण्वश्रुतेः वाण्यै नम इति वा, विरिञ्चायेति वा। नतं वायुं स्तौति- **त्वमेवेति**॥ प्रत्यक्षभूतप्राणापानादिवायुवृत्तिशरीरकत्वात् प्रत्यक्षमित्युक्तिः। मुख्यवायोः प्राणादिपञ्चात्मना वक्ष्यमाणानां संहितायाः पञ्चाधिकरणानाम् अभिमानिदेवतात्वं, 'पृथिव्यन्तरिक्षं द्यौः' इत्यादिनोक्तं पाङ्क्तत्वं चास्ति, अभिमन्यमानोक्तिरेवाभिमान्युक्तिरिति तदभिप्रायेणाऽह भृगुः- **'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि'** इति। अक्षि अक्षि प्रति प्रत्यक्षं, 'प्रतिपरसमनुभ्योऽक्ष्णः' इति समासान्तः, प्रतिगृहं कूप इतिवत्। नियामकतया सर्वेन्द्रियस्थमिति वा प्रत्यक्षमित्यस्यार्थः। त्वमित्यस्य त्वामित्यर्थो व्यत्ययात्, ऋतं यथार्थज्ञानवन्तम्, सत्यं यथार्थज्ञानपूर्वकं वक्तारं कर्तारं चेत्यर्थः, प्रत्येकं क्रियाभ्यास आदरार्थः, तत् तस्मात्, त्वन्नन्तृत्वात्तद्वदितृत्वाच्च मां वक्तारमिति सामानाधिकरण्यं वा, मां वक्तारम् आचार्यं चेति वा, अभ्यासः प्राग्वत्। ओं वाय्वादौ सर्वत्र व्याप्ततया रक्षकत्वेन च ओम् पदवाच्येन विष्णुना शान्तिरस्त्वित्यर्थः। दिव्यान्तरिक्षभौमानिष्टनिरासाय शान्तिरिति त्रिरुक्तिः। आध्यात्मिकाधिभौतिकाधिदैविकानिष्टनिरासार्थं त्रिरुक्तिरित्येके॥ १॥

ब्रह्मविद्याभ्यासार्थिनः पूर्वं शिक्षणीयमर्थं प्रतिज्ञापूर्वकमाह-**शीक्षामिति**॥

## उपनिषत्

**शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तश्शीक्षाध्यायः॥ २॥**

**(खं.)**शिक्ष्यत इति शिक्षा, शिक्षणीयमर्थं विविच्य स्पष्टं वक्ष्याम इत्यर्थः। शीक्षेति दैर्घ्यं च्छान्दसम्। प्रतिज्ञातमाह- **वर्ण** इत्यादिना॥ वर्ण अकारादिवर्णोच्चारणस्थानानि कण्ठताल्वादीनि, ज्ञातव्यपदं सर्वत्र योज्यम्। स्वर

उदात्तादिः, मात्रा एकमात्रादिः, बलं वर्णोच्चारणप्रयत्नो विवृतादिः, साम वर्णानां सन्धिः, सन्तानो वर्णमाला । न केवलं वर्णोत्पत्तिस्थानादिकमेव ज्ञातव्यम् । किन्तु वरणीयत्वहेतुना वर्णनामकं वर्णस्थं वर्णवाच्यं पुरुषे वर्णोच्चारणक्रियाप्रदं विष्णो रूपं वर्ण इति ज्ञेयम् । स्वस्मिन् रमत इति व्युत्पत्त्योदात्तादिस्वरनामकं स्वरवाच्यं स्वरगतं पुरुषे स्वरोच्चारणक्रियाप्रदं रूपं स्वर इत्यनेन ज्ञेयम् । मानात् ज्ञानान्निमित्तात् त्रातेति व्युत्पत्त्या मात्रानामकं मात्रास्थितं मात्रावाच्यं मात्रोच्चारणक्रियाप्रदं रूपं मात्रेत्यनेन ज्ञेयम् । बलरूपतया बलनामकं बलस्थं विवृतादिपुरुषगतप्रयत्नरूपक्रियाप्रदं रूपं बलमित्यनेन ज्ञेयम् । सर्वरूपेषु समत्वहेतुना सामनामकं सामवाच्यं सामशब्दितसन्धिस्थं पुङ्गतसन्ध्युच्चारणक्रियाप्रदं रूपं सामेति ज्ञेयम् । गुणादिना सन्ततत्वनिमित्तेन सन्ताननामकं वर्णसन्ततिस्थं सन्तानवाच्यं पुरुषगत-सन्तानोच्चारणक्रियाप्रदं रूपं सन्तान इत्यपि ज्ञेयम् । शीक्षाध्यायः । अध्याय इति ग्रन्थसन्दर्भनाम । शीक्षा शिक्षणीयोऽर्थो यस्मिन्नध्याये स शीक्षाध्यायः इत्येवमुक्त इत्यर्थः । प्रतिज्ञोपसंहारयोरुक्तिरुक्तेऽर्थेऽव-धारणद्योतनार्था । एवमग्रेऽपि ज्ञेयम् ।। २ ।।

आदावेवाविघ्नत्वार्थं कृतेऽपि प्रार्थने प्रतिविद्यमविघ्नता प्रार्थनीयेति भावेन 'अथाऽत' इति वक्ष्यमाणविद्याया अविघ्नत्वाय प्रार्थयते - **स हेति** ।।

## उपनिषत्

**स ह नौ यशः । स ह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधि-प्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते ।। ३ ।।**

**(खं.)** स प्रागुक्तो मित्रादिर्नौ गुरुशिष्ययोर्यशस्करो ब्रह्मवर्चस्करो भवत्वित्यर्थः। इदानीं सामेति प्रकृतवर्णसन्धिनिष्ठां ब्रह्मविद्यामाह- **अथेति** ।। वर्णादि-

शिक्षोक्त्यनन्तरम् अतः फलवत्त्वात् संहितायाः पूर्वोत्तरवर्णसन्धिसन्धानभेदेन चतूरूपायाः संहिताया उपनिषदं रहस्यं प्रतिपाद्यत्वेन वा तन्निष्ठत्वेन वा स्थितं रूपजातं व्याख्यास्याम इत्यर्थः । व्या ख्येयसंहितासम्बन्धिरूपजातस्य स्थानान्याह- **पञ्चस्वधिकरणेष्विति** ॥ स्थितामुपनिषदमिति पूर्वेणान्वयः । तान्याह- **अधिलोकमित्यादिना** ॥ लोकेष्वधि अधिकृत्य स्थितं अधिलोकम् । ज्योतिष्वधि अधिज्यौतिषमित्यादिविग्रहो ध्येयः । लोकेषु ज्योतिस्सु विद्यास्वित्यादिरर्थः । चतुरात्मकलोकादिवर्गपञ्चके प्रत्येकं चतुरात्मतया स्थितं नारायणाद्यनिरुद्धान्तं रूपपञ्चकं चतुरात्मकसंहिताप्रतिपाद्यत्वेन तत्संस्थत्वेन वा व्याख्यास्याम इति समुदायार्थः । आदरजननाय संहितां स्तौति - **ता इति** ॥ ताः उक्तविधभगवद्रूपप्रतिपादिकाः पूर्वोत्तरवर्णसन्धिसन्धानभेदेन चतुरात्मिकाः सकलवेदगताः संहिताः महद् ब्रह्मप्रतिपादकतया महासंहिता इत्याचक्षत इत्यर्थः ॥ ३ ॥

'अधिलोकम्' इत्याद्युक्तं विवृणोति - **अथाधिलोकमिति** ॥

## उपनिषत्

**अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ॥ ४ ॥**

**(खं.)** लोकेषु स्थितं भगवद्रूपचतुष्टयं चतूरूपसंहिताप्रतिपाद्यं तत्स्थं वा, अथ महासंहितात्वादेव व्याख्यास्याम इत्यनुषङ्गः । **पृथिवीति** । पृथिवीस्थितं पृथिवीनामकं नारायणवासुदेवाख्यं रूपं पूर्वरूपम् संहितायाः पूर्ववर्णेन रूप्यते प्रतिपाद्यत इति पूर्वरूपम् । द्यौर्द्युलोकस्थं द्युनामकं नारायणसंकर्षणाख्यं रूपं संहिताया उत्तररूपम् उत्तरवर्णप्रतिपाद्यम् । आकाशः आकाशस्थम् आकाशनामकं नारायणप्रद्युम्नाख्यं सन्धिः सन्निकर्षप्रतिपाद्यम् । वायुः वायुस्थं वायुनामकं नारायणानिरुद्धाख्यं रूपं सन्धानं सन्धिकार्यप्रतिपाद्यम् , इति

प्रतिपाद्यप्रतिपादकाभिप्रायेण 'पृथिवी पूर्वरूपम्' इत्याद्युक्तिः । यद्वा पृथिव्यादिषु चतुर्षु स्थितानि पृथिव्यादिनामकानि नारायणवासुदेवनारायण-सङ्कर्षणनारायणप्रद्युम्ननारायणानिरुद्धाख्यानि चत्वारि रूपाणि संहितायाः पूर्वोत्त(रवर्ण)रार्णसन्धिसन्धानेषु तिष्ठन्तीत्याधाराधेयाभिप्रायेण पृथिवीपूर्वरूपमित्याद्युच्यत इति ज्ञेयम् । **इत्यधिलोकमिति** । इति एवं प्रकारेण लोकेष्वधिकृत्य स्थितं रूपचतुष्टयं चतूरूपसंहितास्थं व्याख्यातमित्यर्थः । अत्र पृथिव्यादीनामभिमानिनयन्यायेन देवतापरत्वमुपेत्य पृथिवीदेवतास्थ-मित्यादिरर्थ इत्याहुः ॥ ४ ॥

## उपनिषत्

**अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपस्सन्धिः । वैद्युतस्सन्धानम् । इत्यधिज्यौतिषम् ॥ ५ ॥**

**(खं.)** अथाधिज्यौतिषमिति । अथेत्यर्थान्तरे, अधिलोकोक्त्यनन्तरमिति वा । चतुरात्मकज्योतिर्गतरूपचतुष्टयं चतुःस्वरूपसंहितासम्बन्धीत्येतद् व्याख्यास्याम इत्यर्थः । अग्निः पृथिवीगताग्निस्थमग्निनामकं वासुदेववासुदेवाख्यं संहितायाः पूर्वरूपम् । पूर्ववर्णप्रतिपाद्यमिति वा पूर्ववर्णस्थमिति वा द्वेधा पूर्वरूपत्वं ध्येयम् । एवमुत्तररूपमित्यादावप्यर्थो बोध्यः । **आदित्य इति** । द्युलोकस्थादित्यस्थमादित्यनामकं वासुदेवसङ्कर्षणात्मकं रूपं संहिताया उत्तररूपम् । आपः अप्सु स्थितम् अम्नामकं वासुदेवप्रद्युम्नात्मकं रूपं सन्धिः संहितायाः सन्निकर्षः । वैद्युतः विद्युत्समूहगतं वैद्युताख्यं वासुदेवानिरुद्धाख्यं सन्धानमित्यर्थः । इत्यधिज्यौतिषमिति । इत्यधिलोकमित्यत्रेव व्याख्या ।

## उपनिषत्

**अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् । इत्यधिविद्यम् ॥ ६ ॥**

**(खं.)** अथाधिविद्यमिति पूर्ववद् व्याख्येयम् । आचार्यः आचार्यस्थम् आचार्यनामकं संकषर्णवासुदेवात्मकं रूपं संहितायाः पूर्वरूपं पूर्ववर्णस्थं पूर्ववर्णप्रतिपाद्यमिति वा । अन्तेवासी अन्तेवासिस्थम् अन्तेवासिनामकं सङ्कर्षणसङ्कर्षणात्मकं रूपं संहिताया उत्तररूपम् । विद्या गुरुशिष्यसङ्कर्षजं ज्ञानं विद्या, विद्यास्थं विद्यानामकं सङ्कर्षणप्रद्युम्नाख्यं रूपं सन्धिः सन्निकर्षः। प्रवचनं प्रवचनस्थं प्रवचननामकं सङ्कर्षणानिरुद्धाख्यं रूपं सन्धानं सन्धिकार्यम् । इत्यधिविद्यम् । व्याख्यानं प्राग्वत् ।। ६ ।।

## उपनिषत्

**अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननंऽ सन्धानम् । इत्यधिप्रजम् ।। ७ ।।**

**(खं.)** अथाधिप्रजमित्यपि प्राग्वत् । माता मातृस्थं मातृनामकं प्रद्युम्नवासुदेवात्मकं रूपं संहितायाः पूर्वरूपम् । पिता पितृस्थं पितृनामकं प्रद्युम्नसङ्कर्षणात्मकं रूपं संहितोत्तररूपम् । प्रजा प्रजास्थं प्रजानामकं प्रद्युम्नप्रद्युम्नात्मकं रूपं सन्धिः । प्रजननं प्रजननस्थं प्रजनननामकं प्रद्युम्नानिरुद्धात्मकं रूपं सन्धानम् । इत्यधिप्रजम् इत्युक्तार्थः[१] ।। ७ ।।

## उपनिषत्

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ।। इतीमा महासंऽहिताः । य एवमेता महासंऽहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ।। ८ ।।**

**(खं.)** अथाध्यात्ममिति प्राग्वत् । आत्मनि देहे अधीति विग्रहः । अधरा

---

१. इत्युक्तार्थम्-क.

हनुः तत्स्थं तन्नामकम् अनिरुद्धवासुदेवात्मकं रूपं पूर्वरूपम् । उत्तरा हनुः तत्स्थं तन्नामकम् अनिरुद्धसङ्कर्षणात्मकं रूपम् उत्तररूपम् । वाक् वागिन्द्रियस्थं वाङ्नामकम् अनिरुद्धप्रद्युम्नात्मकं रूपं सन्धिः । जिह्वा जिह्वास्थं जिह्वानामकम् अनिरुद्धानिरुद्धात्मकम् रूपं सन्धानं सन्धिकार्यम् । इत्यध्यात्ममिति प्राग्वत् । संहिताः स्तौति - **इतीमा इति** ।। विष्णुरूपमहार्थकत्वान्महासंहिता इति । न केवलं महार्थत्वान्महत्त्वं संहितानाम् । किन्तु महाफलवत्त्वाच्च महत्त्वमिति भावेन अथात इत्यत्र अतःशब्देन सूचितं फलमाह - **य एवमिति** ।। यः कश्चित् सात्विकोऽधिकारी एवं नारायणादीन्यनिरुद्धान्तानि प्रत्येकं वासुदेवादिचतुरात्मतया पृथिव्यादिवर्गपञ्चकगतानि चतूरूपसंहितास्थानीति व्याख्याता 'महासंहिता' महासंहितारूपाणि 'वेद' उपास्ते साक्षात्करोति च स इति शेषः । प्रजयेत्यादिना स्वयोग्यसर्वभोग उपलक्ष्यते । सुवर्गलोकपदेन श्वेतद्वीपादिविष्णुस्थानग्रहः । विष्णुलोकेन प्रजाद्युपलक्षितस्वयोग्यसर्वभोगेन च सन्धीयते संयुक्तो भवतीत्यर्थः । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्-प्रत्ययविधानात् ब्रह्मवर्चसेनेति साधुः । अन्नाद्येन अन्नादिनेत्यर्थः ।। ८ ।।

विद्याभ्यासिनो मेधाप्राप्त्यर्थं काञ्चन विद्यामाह- **यश्छन्दसामिति** ।।

## उपनिषत्

**यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । समेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय ।। ९ ।।**

**(खं.)** य इन्द्रः परमेश्वरः छन्दसामृषभोऽधिपतिर्नियन्तेति यावत् । विश्वरूपः पूर्णविग्रहस्वरूपः, नानारूप इति वा, 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादेः।

अमृतात् अमृतेभ्यः व्यत्ययात् नित्येभ्यः छन्दोभ्यः वेदेभ्यः अधिसम्बभूव अधिकतया सुव्यक्तः स इन्द्रः मा मां मेधया प्रज्ञया स्पृणोतु, 'स्पृक् प्रीतिरक्षणयोः' इति धातुपाठात् । 'स्पृक् प्रीतिरक्षणयोः' इति क-विकल्पद्रुमोक्तेः । प्रीणयतु, प्राणनं बलम्, बलयतु, मेधाविनं करोतु । हे देव अमृतस्य नित्यस्य वेदस्य धारणः धारको भूयासम्, तत्त्वज्ञानी भूत्वा क्षिप्रं मुक्तः स्यामिति भावः । मे शरीरं विचर्षणं विशिष्टाश्चर्षणयः प्रजाः यस्य तत् विशिष्टशिष्यप्रजायुक्तं भूयादिति विपरिणामेनान्वयः । मे जिह्वा मधुमत्तमा अतिशयेन मधुमती मधुरभाषिणी सुखसाधनभगवद्बोधकवेदोच्चारणवती भूयादित्यर्थः । कर्णाभ्यां भूरि ब्रह्म विश्रुवम् । विशेषेण शृणवानीति । व्याख्यातैषा श्रुतिः कर्मनिर्णयटीकायाम् । त्वत्तो मे वेदप्रार्थनं त्वद्विषय-मेधाप्रार्थनं च युक्तम् । तव तदुभयवत्त्वादिति भावेनाऽह- **ब्रह्मण इति** ॥ ब्रह्मणो वेदस्य कोशोऽसि आवासोऽसि । मेधया प्रज्ञया पिहितः आच्छादितः, सम्पूर्णज्ञानोऽसीत्यर्थः । मे श्रुतं मया श्रुतं गोपाय रक्ष । गुपू रक्षणे, 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति आयप्रत्ययः, फलवत्कुर्वित्यर्थः ॥९॥

विद्याभ्यासिनो मनःक्षोभनिरासाय अन्नादिना भाव्यम् । अतस्तदर्थं काञ्चनविद्यामाह - **आवहन्तीति** ॥

## उपनिषत्

**आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमा वह । लोमशां पशुभिस्सह स्वाहा ॥ १० ॥**

**(खं.)** आत्मनो जीवजातस्य चीरं चिरं सर्वभोगानावहन्ती आनयन्ती, वितन्वाना सनातनी, विपूर्वात्तनोतेर्लटः शानच् , उ विकरणं यणादेशः, विस्तारवतीत्यर्थः, विस्तारश्च कालतो विवक्षितः । मम वासांसि गावश्च

गाश्च अन्नपाने च कुर्वाणा यतस्ततः स्वाहा सुष्ठु आहूयते वेदैः प्रतिपाद्यत इति स्वाहेत्युक्तो गोविन्दः, सु आङ् इत्युपसर्गद्वयपूर्वकात् ह्वयतेः कर्मणि डाप्रत्यये वलोपे च सति स्वाहेति सिद्धेः शब्दस्वाभाव्यादव्ययत्वम्। लोमशां बहुकेशवर्तीं 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति मत्वर्थे शप्रत्ययः। सुशिखण्डाम्, वा। 'चतुष्कपर्दा युवतिः' इत्यादिश्रुतेः, 'चतुःशिखण्डा' इति श्रुत्यन्तराच्च, एवम्भूतां श्रियं पशुभिस्सह सदा मे मयि आवह आनयेत्यर्थः ॥ १० ॥

अभ्यस्ता विद्या प्रवचनादधिकफलाय भवति। प्रवचनं च शिष्यसापेक्षम्। अतः शिष्यसम्पत्तये काञ्चन विद्यामाह- **आ मेति** ॥

## उपनिषत्

**आ मा यन्तु ब्रह्मचारिणः स्वाहा। वि मा यन्तु ब्रह्मचारिणः स्वाहा। प्रमा यन्तु ब्रह्मचारिणः स्वाहा। दमा यन्तु ब्रह्मचारिणः स्वाहा। शमा यन्तु ब्रह्मचारिणः स्वाहा। यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा। तस्मिन् सहस्रशाखे। नि भगाहं त्वयि मृजे स्वाहा॥ ११ ॥**

**(खं.)** ब्रह्मचारिणो मा माम् आयन्तु। ते कीदृशाः वि विविधाः, प्र प्रकृष्टाः, दमाः इन्द्रियनिग्रहवन्तः, 'अर्श आदिभ्योऽच्' इति मत्वर्थेऽच्-प्रत्ययः, शमा विष्णुनिष्ठावन्तः। शिष्यागत्यर्थं यशो यशस्वी जने जनेषु असानि। व्याख्याताऽयं गुरुरिति कीर्तिमान् भवानीत्यर्थः। अस्तेर्लोटि उत्तमपुरुषैकवचनमसानीति। स्वाहेत्युक्तार्थम्। अभ्यास आदरार्थः। यश इत्यत्र मतुपो लुक् छान्दसः। वस्यसः सुखस्य विषये, श्रेयान् प्रशस्ततरः श्रेष्ठो वा असानि अविरतसुखवान् स्यामित्यर्थः। तथात्व एव मनसोऽक्षोभेण नित्यं प्रवचनं भवति। नान्यथेत्यर्थः। हे भग षड्गुणपूर्ण त्वं ब्रह्मकोशत्वादिगुणकं

मया प्रार्थितं च त्वा त्वां प्रविशानि । हे भग स त्वं मा मां प्रविश । भगवति स्वस्य प्रवेशोक्तेः फलमाह- **तस्मिन्निति** ॥ सहस्रशाखे सहस्राणि शाखा इव शाखाः रूपाणि यस्य तस्मिन्निति बहुरूपतया सहस्रशाखपदोक्ते तस्मिन् भगपदोक्ते त्वयि प्रविष्टोऽहं निमृजे पापमिति शेषः, प्रक्षालये त्वदुपासनादिना निवृत्तकल्मषो मुक्तो भवानीति भावः ॥ ११ ॥

शिष्यागमनमप्रयत्नेनास्त्विति सदृष्टान्तं प्रार्थयते- **यथाऽऽप इति** ॥

## उपनिषत्

**यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥१२॥**

**(खं.)** यथा प्रवताः निम्नभूमीः प्रति आपो यन्ति, अहर्जरम् अहानि जीर्यन्त्यत्रेत्यहर्जरं संवत्सरं प्रति यथा मासा यन्ति, एवं हे धातः मां ब्रह्मचारिणः सर्वत आयन्त्विति । प्रतिवेशोऽसि प्रवेष्टुं त्वं योग्योऽसि । श्रमापनयनस्थानम् आसन्नगृहं प्रतिवेशः, तादृशोऽसीत्यर्थः । मां प्रति प्रभाहि [1]अभिव्यक्तो भव । मां प्रपद्यस्व प्राप्नुहि, मयि सन्निहितो भवेत्यर्थः । भाष्ये तु प्रमाणानुरोधेनाऽमायन्त्विति विद्यां पूर्वं लेशतो व्याख्याय पश्चादावहन्तीति विद्या व्याख्याता । तदनुरोधेन **व्यासतीर्थटीकाऽपि** तथैव प्रवृत्तेति ज्ञेयम् ॥ १२ ॥

वेदविद्याभ्यासार्थिनस्तत्प्राप्त्यर्थं तत्पूर्वभाविनीं व्याहृतिनिष्ठोपास्तिमाह- **भूर्भुवः सुवरिति** ॥

## उपनिषत्

**भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मै तां चतुर्थीम् ।**

१. व्यक्तो भवेति क.

**माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ॥ १३ ॥**

**(खं.)** इत्येता निर्दिष्टा भूरित्यादि त्रयः शब्दाः व्याहृतयः अनिरुद्धादिचतुरात्मनो विष्णोर्व्याहरणाद्वा, 'व्याहृत्यर्था ऋगादयः' इति वचनात् सर्ववेदोक्तसर्वस्वव्याहरणाद्वा, विशेषेणाऽऽहरन्ति विष्णुं भक्तं प्रतीति वा व्याहृतय इत्युच्यन्ते । वै प्रसिद्धमेतत् । तासां व्याहृतीनां महरित्येतां व्याहृतिं चतुर्थीम्, माहाचमस्यः ब्रह्मा प्रवेदयते, स्वार्थे णिच् प्रवेत्ति । भूरादिव्याहृतित्रयं जानन्नपि ब्रह्मा महरिति व्याहृतिं चतुर्थतया जानातीति भावेनैतां चतुर्थीं महाचमस्यः प्रवेदयते मह इति विशिष्योक्तिः, न तु भूरादिव्याहृतित्रयं न जानातीति भावेनेति ज्ञेयम् । प्रवेदयते वरुणादीन् बोधयतीति वाऽर्थः । 'णिचश्च' इत्यात्मनेपदम् । उ ह स्मेति निपातसमुदायः प्रसिद्धिद्योतकः । केन निमित्तेन भूरादयश्चत्वारः शब्दाः विष्णुं व्याहरन्तो व्याहृतिशब्दवाच्या अभूवन्निति चेदुच्यते । 'भुक् शुद्धिचिन्तयोः' इति कविकल्पद्रुमोक्तेः चिन्तार्थकस्य भूधातोः क्विपि ज्ञानरूपत्वाद् भूः । 'भू बहौ' इति छान्दोग्यभाष्योक्तेः भूशब्दो बहुत्ववाची, वशब्दो वीर्यवाची, भूः भूरि वः वीर्यं यस्येति व्युत्पत्तौ भूशब्दे ह्रस्वत्वे सति भूरिवीर्यत्वात् भुव इति ज्ञेयम् । वशब्दो बलवाची, तेन तत्कार्यमारब्धान्तगामित्वं वीर्यं लक्षयित्वा भूरिवीर्यत्वात् भुव इति वा व्याख्येयम् । सुवः सुष्ठु वं बलं यस्येति विग्रहेण सुबलरूपत्वात्सुवः, पूर्णत्वान्महः, इत्यादिप्रवृत्तिनिमित्तेन विष्णोर्व्याहर्तृत्वात् भूरादेः व्याहृतिशब्दितत्वं ध्येयम् । उक्तं हि - 'भूर्नामा स्फूर्तिरूपत्वात्' इत्यादि ॥

स्थलान्तरे च 'भावनाच्चैव सुत्वाच्च' इति । 'पूर्णो भूतिवरोऽनन्तसुखः' (ऋ.भा.) इति च । चमदित्यव्ययात् करोत्यर्थे [1]असप्रत्यये 'अव्ययानां

---

१. असुन्- क.

भमात्रे टिलोपः' इति टिलोपे चमस इति सिद्धेः । चमसशब्दस्य महत्पदेन समासे सति महाचमसशब्देनातिचमत्कृतित्त्वात् व्याहृतिचतुष्टयप्रतिपाद्यो वक्ष्यमाणदिशा षोडशात्मा हरिरुच्यते । तं महाचमसं जानातीत्यर्थे ण्यप्रत्यये आदिवृद्धौ 'यस्य' इति पूर्वान्तलोपे माहाचमस्यो व्याहृत्यर्थविष्णुज्ञानी ब्रह्मेति ध्येयम् । भूरादिचतुष्टयेन व्याहृतं विष्णुरूपं कुतः ? येन तेषां व्याहृतित्वमित्यत आह- **तद् ब्रह्मेति** ॥ भूरादिचतुश्शब्दव्याहृतमनिरुद्धादिरूपचतुष्टयं ब्रह्म, गुणैर्बृंहितत्वाद् ब्रह्मेत्यर्थः । स चतुरात्मा ब्रह्मपदोक्तः आत्मा देवादीनां सर्वेषां स्वामी । अन्या देवता ब्रह्मादयः अङ्गानि गुणभूतानि तत्परिवारभूतानीत्यर्थः । 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' (ब्र.सू. ३.३.५७) इत्युक्तेः। यद्वा तद् ब्रह्मेत्यत्र तत्पदेन महरिति चतुर्थव्याहृतिवाच्यं सन्निहितं विष्णुरूपं परामृश्य तस्य ब्रह्मेति वासुदेवाख्यचतुर्थरूपत्वमुच्यते, 'ब्रह्म पन्थाः सत्यं कर्मेति क्रमेण वासुदेवाद्याश्चतस्रो मूर्तयः' इत्यैतरेयभाष्योक्तेः । 'वासुदेवो महो नाम' इतीहैवोक्तेश्च स इति तस्यैव परामर्शः । स वासुदेवः आत्मा मध्यदेहः, अन्या देवता अनिरुद्धप्रद्युम्नसंकर्षणरूपा देवता अङ्गानि शिरोबाहुपादरूपाङ्गानीत्यर्थः । भूरित्येकवर्णप्रतिपाद्यमनिरुद्धरूपं शिरस्त्वेन, भुव इति वर्णद्वयप्रतिपाद्यं प्रद्युम्नरूपद्वयं बाहुद्वयतया सुवरिति वर्णद्वयप्रतिपाद्यं संकर्षणरूपद्वयं पादद्वयतयाऽस्तीत्यर्थः । रूपाणां 'न स्थानतोऽपि' इति न्यायेनाभेदेऽपि चत्वार इति विशेषशक्त्या संख्यामात्रविशेषेणान्या देवता इत्यन्यत्वोक्तिरिति ज्ञेयम् । 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः' (ब्र.सू.भा. १.१.६) इति सूत्रभाष्योक्तेः । 'अङ्गाङ्गित्वेन भगवान् स्वानन्दानुभवे स्थितः । स एव व्यूह्य चाऽऽत्मानं पृथग्रूप इव स्थितः' इत्यैतरेयभाष्योक्तेश्च ॥ १३ ॥

भूरादिशब्दचतुष्टयवाच्यरूपचतुष्टयस्य लोकज्योतिर्वेदप्राणाख्यवर्गचतुष्टयरूपस्थानान्याह - **भूरित्यादिना ॥ अयं लोक इति ॥**

## उपनिषत्

**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते ।। भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः। ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।। १४ ।।**

**(खं.)** समीपस्थत्वसर्वाधारत्वहेतुभ्यामयं लोक इति शब्दवाच्यो भूलोकस्थोऽनिरुद्धः भूरित्युक्तानिरुद्धात्मा वै अनिरुद्धानिरुद्ध इति प्रसिद्ध इत्यर्थः । अन्तरीक्षणीयत्वहेतुनाऽन्तरिक्षनामाऽन्तरिक्षस्थोऽनिरुद्धः भुवः भुव इति शब्दवाच्य प्रद्युम्नात्मा सोऽयमनिरुद्धप्रद्युम्नः । प्राणस्थितत्व-सर्वाधारत्वभ्याम् असौ लोक इत्युक्तो द्युलोकस्थोऽनिरुद्धः सुवरित्युच्यते । सुवश्शब्दवाच्यसंकर्षणात्मा सोऽयमनिरुद्धसङ्कर्षणः । आदित्यः अदिति-सुतत्वहेतुना आदित्यस्थ आदित्यनामाऽनिरुद्धः । महरितिशब्दवाच्य-वासुदेवात्मा सोऽयमनिरुद्धवासुदेव इति । तस्य महिमानमाह- **आदित्ये-नेति** ।। आदित्येन महरिति शब्दवाच्यवासुदेवात्मना स्थितेन अनिरुद्ध-वासुदेवाख्येन सर्वे लोकाः पृथिव्यादिलोकत्रयस्थाः अनिरुद्धानिरुद्धानिरुद्ध-प्रद्युम्नानिरुद्धसङ्कर्षणाख्यास्तिस्रो मूर्तयः सर्वे लोका इत्युच्यमाना महीयन्ते पूज्यन्ते, क्रीडया पूज्यपूजकभावेन वर्तन्त इत्यर्थः । वावेति किलार्थे, वस्तुतो न पूज्यपूजकभावकृतोच्चनीचत्वादीति भावः । भूरिति वा अग्निरिति । अङ्गनेतृत्वादिनाऽग्निनामाऽग्निस्थः प्रद्युम्नः भूरित्युक्तानिरुद्धः सोऽयं

प्रद्युम्नानिरुद्धः वै प्रसिद्धः । 'वय बन्धने' इत्यतो वयति बध्नाति जगदिति वायुनामा वायुस्थः प्रद्युम्नः । भुवः भुवःशब्दवाच्यप्रद्युम्नात्मा सोऽयं प्रद्युम्न-प्रद्युम्नः । आदित्यस्थः आदित्यनामा प्रद्युम्नः सुवरिति शब्दवाच्यसङ्कर्षणात्मा सोऽयं प्रद्युमसङ्कर्षणः । आह्लादरूपत्वेन चन्द्रमाः तच्छब्दवाच्यः चन्द्रस्थः प्रद्युम्नः महरितिशब्दवाच्यवासुदेवात्मा सोऽयं प्रद्युम्नवासुदेवः । चन्द्रमसा वावेति पूर्ववज्ज्ञेयम् । ऋचः अर्च्यत्वशब्दितपूज्यत्वहेतुना ऋङ्नामा ऋक्स्थितः सङ्कर्षणः भूरिति व्याहृतिवाच्यानिरुद्धात्मा सोऽयं सङ्कर्षणानिरुद्धः । समत्व-हेतुना सामनामा सामस्थितः सङ्कर्षणः भुव इति शब्दोक्तप्रद्युम्नात्मा सोऽयं सङ्कर्षणप्रद्युम्नः । याज्यस्वरूपतया यजुर्नामा यजुषि स्थितः सङ्कर्षणः सुवरिति शब्दोक्तसङ्कर्षणात्मा सोऽयं सङ्कर्षणसङ्कर्षणः । बृहत्त्वादखिलवेदाद्युक्तत्वहेतुना ब्रह्मनामा ब्रह्मशब्दिताखिलवेदसमुदायस्थः सङ्कर्षणः महरित्युक्तवासुदेवात्मा सोऽयं सङ्कर्षणवासुदेवः । ब्रह्मणा वावेति प्राग्वत् । प्रकृष्टनयनहेतुना प्राणनामा प्राणस्थो वासुदेवः भूरित्युक्तानिरुद्धात्मा सोऽयं वासुदेवानिरुद्धः वै प्रसिद्धः। अवाङ्नयनहेतुनाऽपाननामा अपानस्थः वासुदेवः भुव इत्युक्तप्रद्युम्नात्मा सोऽयं वासुदेवप्रद्युम्न इति प्रसिद्धः । विविधनयनहेतुना व्याननामा व्यानस्थितः वासुदेवः सुवरित्युक्तसंकषर्णात्मा सोऽयं वासुदेवसङ्कर्षणः । सर्वजीवोप-जीव्यत्वरूपाद्यत्वहेतुना अन्ननामा अन्नस्थो वासुदेवः महरित्युक्तवासुदेवात्मा सोऽयं वासुदेववासुदेवः । अन्नेन वावेति प्राग्वत् । प्रागुक्तं बुध्यारोहाय सङ्गृह्योक्त्वा तदनुवादेन फलवत्तामाह- **ता वा एता इत्यादिना** ॥ ताः भूर्भुवःसुवरिति वा इत्यत्र निर्दिष्टा एता भूरिति वाऽयं लोक इत्यादिना लोकज्योतिर्वेदप्राणेषु प्रत्येकं चतुरात्मकस्थानेषूक्ताः चतस्रो व्याहृतयः, व्याहृतिशब्दवाच्यभूरादिशब्दवाच्या मूर्तयोऽनिरुद्धादयः प्रत्येकमनिरुद्धादि-भेदेन चतुर्धा भवन्ति । वै खल्विति । कियन्त्यो मूर्तयो जाता इत्यत आह -

**चतस्रश्चतस्रो व्याहृतय इति ।** व्याहृतयः, व्याहृतिभिर्वाच्या भगवन्मूर्तयः चतस्रश्चतस्रः षोडश भवन्ति । ताः षोडशमूर्तीर्यो वेद ब्रह्मपदयोग्यो यः कश्चिद्वेद उपास्ते साक्षात्करोति च स एव ब्रह्म गुणबृंहितं विष्णुं वेद, विशेषतो जानाति । अस्मै मुक्तब्रह्मणे सर्वे मुक्तौ स्थिता देवाः बलिं पूजाम् आवहन्ति आहरन्तीति । तथा च सूत्रं 'प्रत्यक्षोपदेशादिति चेन्नाऽधिकारिकमण्डलस्थोक्तेः' इति (४-४-१९) ॥ १४ ॥

भूरादिव्याहृतिचतुष्टयवाच्यस्य अनिरुद्धादेः देहेऽपि स्थानविशेषानुप्रास्त्यर्थमाह - **स य एष इति** ॥

## उपनिषत्

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवाव-लम्बते । सेन्द्रयोनिः । यत्रासौ केशान्ते वि वर्तते । व्यपो ह्य शीर्षकपाले ॥ १५ ॥**

**(खं.)** सः प्रसिद्धो य एष हृदयेऽन्तराकाशः तस्मिन्नाकाशे अयं भूरित्युक्तः, मनोमयः ज्ञानप्रचुरः, अमृतः नित्यः, हिरण्मयः विलक्षणानन्दप्रचुरः, 'हिरुक् सुखं हिरण्यं स्यात्' इति स्मृतेः । पुरुषोऽनिरुद्धः वर्तत इत्याकृष्यते । तालुके तालुकयोः अन्तरेण मध्ये य एष स्तन इवावलम्बते सा इन्द्रयोनिः इन्द्रस्य परमेश्वरस्य प्रद्युम्नस्य योनिः स्थानम्, विधेययोन्यपेक्षया सेति स्त्रीलिङ्गोक्तिः । यत्रासौ केशान्तः, बहुव्रीहिः, केशमूलम्, तत्रेति शेषः । वि अविभक्तिको निर्देशः, विः सुपर्णरूपः सङ्कर्षणो वर्तते, अशीर्षकपाले, शिरःकपालान्यदेशे, कपालादुपरीति यावत् । व्यपः, व्यप इत्युक्तो वासुदेवो वर्तते, हि प्रसिद्धमेतदिति । 'उपसर्गा हि धातुसम्बन्धेन तदर्थबोधादिहेतवः, केवलास्तु ससाधनक्रियावाचिनो भवन्ति' इति 'यो व्यतीरफाणयत्' इत्यत्र कर्मनिर्णये टीकाकृदुक्तेः । व्यपगतवाचिव्यपशब्दे उपपदे अस्तेः क्विपि,

अन्तलोपे, शकन्ध्वादित्वात् [1]''अतो गुण' इति पररूपे व्यप इति रूपसिद्धेः । व्यपगतेऽपि जगति स्थातेति व्यपो वासुदेवो ज्ञेयः ॥ १५ ॥

भूरादिव्याहृतिवाच्यानामनिरुद्धादीनामुपासनार्थं स्थानान्तराण्याह - **भूरित्यग्नावित्यादिना** ॥

## उपनिषत्

**भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति ॥ १६ ॥**

**(खं.)** प्रागुक्तनिरुक्त्या भूरित्युक्तोऽनिरुद्धोऽग्नौ प्रतितिष्ठति । भुव इत्युक्तः प्रद्युम्नः वायौ प्रतितिष्ठतीत्यनुषङ्गः । सुवरित्युक्तः सङ्कर्षणः आदित्ये महरित्युक्तो वासुदेवः ब्रह्मणि चतुर्मुखे प्रतितिष्ठति । चतुर्मुखस्थोऽपि वासुदेवः न परिच्छिन्न इत्याह - **आप्नोतीति** ॥ स्वाराज्यं जगत् आप्नोति व्याप्नोति, जगद् व्याप्य वर्तत इत्यर्थः । मनसस्पतिमनिरुद्धं चाऽऽप्नोतीत्यर्थः । नित्यैश्वर्यबलात् स्वव्यापी जगद् व्यापी च यतस्ततः वाक्पतिः वाचि स्थितः वाङ्नियन्ता, चक्षुष्पतिः श्रोत्रपतिः विज्ञानपतिरित्येतद् भवति इत्येवंरूप एष भवतीत्यर्थः ॥ १६ ॥

वासुदेवस्य गुणानाह - **आकाशशरीरमित्यादिना** ॥

## उपनिषत्

**आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्व ॥ १७ ॥**

---

१. 'अतो गुण इति' इति नास्ति –क.

**(खं.)** 'ब्रह्म' वासुदेवाख्यं ब्रह्म 'आकाशशरीरम्' आकाशवद् व्याप्तदेहम् । 'सत्यात्म' साधुगुणपूर्णम्, 'सद्भावे साधुभावे च' इत्युक्तेः सच्छब्दपर्यायसत्यशब्दस्य साधुगुणवाचित्वात् । प्राणारामं प्राणस्य वायोः आ समन्तात् विशेषेण रामं रमकं रमतेर्ण्यन्तादच् प्रत्ययः । यद्वा प्राणशब्दो बलवाची । बलात्मकत्वात् सुखात्मकत्वात् प्राणारामम् । मन आनन्दं ज्ञानानन्दात्मकम् । सुखोन्नतिरूपत्वाच्छान्त्यात्मकं स्वतः पूर्तेः समृद्धम् । अमृतं देहतोऽपि नित्यम् इत्येवं रूपेण हे प्राचीनयोग्य अधिकारिणां प्राथमिकयोग्य चतुर्मुख उपास्वेति प्राह - भगवान्नृषिर्विष्णुश्चतुर्मुखमिति ज्ञेयम् ॥ १७ ॥

वेदविद्याप्राप्त्यर्थं पूर्वभाविविद्यान्तरमाह - **पृथिवीत्यादिना** ॥

## उपनिषत्

**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳस्नावाऽस्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥ १८ ॥**

**(खं.)** पृथिव्याद्यधिभूतपञ्चकत्रये प्राणाद्यध्यात्मपञ्चकत्रये च क्रमान्नारायणादिवासुदेवान्ताः मूर्तयः पृथुत्वादिनिमित्तैः पृथिव्यादिषु स्थिताः पृथिव्यादिशब्दैः पञ्चभिः पञ्चभिरुच्यन्त इति ज्ञेयम् । इत्यधिभूतमिति भूतपञ्चकत्रये स्थितानि पञ्चरूपाण्युक्तानीत्यर्थः । तत्राऽत्मशब्दोऽहङ्कारतत्त्वपरः भूताधिकारत्वात् । अथेत्यर्थान्तरे तदाह- **अध्यात्ममिति** ॥ आत्मनि देहे स्थितानि नारायणादिरूपाणि साधिष्ठानान्युच्यन्त इत्यर्थः । एतत् पृथिव्यादिपञ्चकषट्कम् अधिविधाय अधिकृत्य ऋषिरादिऋषिर्विष्णुः, इदं

सर्वं पृथिव्यादिवर्गषट्कं पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तं वै खलु पाङ्क्तेन पञ्चत्वसंख्यायुक्तेन नारायणादिरूपेणैव पाङ्क्तं पञ्चसंख्यायुक्तं पृथिव्यादिकं स्पृणोति 'स्पृकू प्राणने' इत्युक्तेः बलयति स्वस्वव्यापारशक्तं करोति इत्यवोचदिति योजना ॥ १८ ॥

वेदविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह - **ओमिति ब्रह्मेति** ॥

## उपनिषत्

**ओमिति ब्रह्म । ओमितीद९ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओ९ शोमिति शस्त्राणि श९सन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनु- जानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥ १९ ॥**

**(खं.)** ब्रह्म विष्णुः ओम् इत्युच्यते । अकारोकारौ अधिकोच्चत्ववाचकौ. योग्यतया गुणानामन्वयः । अधिकोच्चगुणत्वहेतुनेति भावः । न केवलं मूलरूपी विष्णुरेव ओंनामा । इदं सर्वं मत्स्यादिसर्वरूपजातम् ओमित्युच्यते । सर्वरूपाणाम् अधिकगुणपूर्णत्वादिति भावः । तथा च सूत्रम्- 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (३.२.११) इति । कुतो विष्णोरोन्नामत्वं ज्ञायत इत्यतो विष्णुमुद्दिश्य कर्माणि कुर्वद्भिः नियमेन तदा तदा ओमित्युच्चार्य-माणत्वादिति भावेनाऽऽह - **ओमित्येतदनुकृतीत्यादि** । ओम् अधिकोच्च-होतृस्थविष्णो श्रावय स्वमूलरूपं श्रावयेति आश्रावयन्ति उच्चैरुच्चारयन्ति अध्वर्यवो होतृस्थं हरिं प्रतीत्यर्थः । यदि हरिरोन्नामा न स्यात् तदाऽध्वर्युः तथा न ब्रूयादिति भावः । ओ श्रावयेति वाक्ये ओंकारो नोपलभ्यत इत्यत उक्तम्- **ओमित्येतदनुकृतीति** ॥ एतदनुरूपं ह स्म वै, ओ इत्येतदोंकारानु-करणरूपं प्रसिद्धमित्यर्थ । अपिर्वक्ष्यमाणमन्त्रसमुच्चये । **ओमिति सामा-**

**नीति** । उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याख्याश्चत्वारः उद्गातारः । ओमिति विष्णुमुद्दिश्य सामानि गायन्ति- **ओंशोमितीति** ॥ होतृमैत्रावरुणाच्छावाक-ग्रावसुतश्चेति चत्वारो होतृगणस्थाः ॐशोशावेति ओं अधिकोच्च शं सुखरूप ॐ शं अत्युच्चसुख विष्णो अव रक्ष, इत्युक्त्वा शस्त्राणि शंसन्तीत्यर्थः । **ओमितीति** ॥ 'ओ धामो देव' इति 'ओ' अधिकोच्च 'धाम' महाधाम 'ओ देव' सूच्चदेवेति प्रतिगरं मन्त्रम् अध्वर्युः प्रतिगृणाति उच्चारयति । ओमति विष्णुमुद्दिश्य ब्रह्मा ब्रह्माख्यऋत्विक् प्रसौति सोममभिषुणोतीत्यर्थः । **ओमित्यग्निहोत्रमिति** ॥ विष्णुः कर्म साङ्गं सफलं करोत्विति भावेन ओमित्यग्निहोत्रादिकमनुजानाति तत्कर्मकृतावनुज्ञाम् ओमित्यनेन करोतीत्यर्थः । ब्राह्मणः प्रवक्ष्यन् व्याकरिष्यन् स्वाध्यायाध्ययनादिकं करिष्यन् ब्रह्म विष्णुम् उपाप्नवानीति भावेनोमित्याहेत्यर्थः । तत्किं तदभिसन्धिर्मृषा भवति ? नेत्याह- **ब्रह्मैवोपाप्नोतीति** ॥ एतच्चोपलक्षणम् । यद्यध्वर्युप्रभृतयोऽप्युक्तज्ञानपूर्वकं ब्रह्मोपाप्नवानीत्यभिसन्धिपूर्वकं मन्त्रानुच्चारयेयुः तदा ब्रह्म प्राप्नुवन्त्येवेत्यपि ध्येयम् ॥ १९ ॥

वेदाख्यब्रह्मविद्याकामस्य तत्प्राप्त्यर्थं तत्पूर्वभाविनो यमनियमानाह - **ऋतं चेत्यादिना** ॥

## उपनिषत्

**ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्याय-प्रवचने च ॥ २० ॥**

**(खं.)** ऋतं यथार्थज्ञानम्, स्वाध्यायो गुरूच्चारणानूच्चारणम्, प्रवचनं व्याख्यानम्, ऋतं च स्वाध्यायप्रवचने चेत्यादीनि कर्तव्यानीति सर्वत्र शेषः। सत्यं चेति यथार्थज्ञानपूर्वकं वचनम्, तत्पूर्वकं करणं चेति ज्ञेयम् । ध्यानं सत्यं पूज्यपूजा च तपः, दम इन्द्रियनिग्रहः, शमः भगवन्निष्ठा, अग्नयः अग्नीनाम् आधानम् । अग्निहोत्रम् अग्निहोत्रानुष्ठानम् । अतिथयः अतिथिपूजनम्, मानुषं मनुष्यस्येदं मानुषम्, देवादेरुत्तमस्य मनुष्यत्वे प्राप्ते ज्ञानाद्यतिशये सत्यपि तदप्रकाशेन मनुष्यसम्बन्धिधर्मप्रदर्शनं मानुषमित्यर्थः। प्रजा सुतोत्पत्तिः, प्रजननं तद्रक्षणम्, प्रजातिः पित्रा पुत्रस्य द्विजत्वसंस्कारेण प्रकृष्टजातिकरणम्, सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यताज्ञापनार्थं सर्वत्रानुषङ्गः ॥ २० ॥

सत्यादीनां श्रेयस्साधनत्वं सममुतैकस्याधिकमित्यपेक्षायां मुनिमतोक्तिपूर्वं कस्यचित् तदाह- **सत्यमित्यादिना** ॥

## उपनिषत्

**सत्यमिति सत्यवचा राथीतरः । तप इति तपोनिष्ठः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ २१ ॥**

**(खं.)** सत्यवचाः सत्यवचनो राथीतरो नाम मुनिः सत्यं यथार्थज्ञानपूर्वकं वचनं करणं च श्रेय इत्याह - **तप इति** ॥ तपोनित्यः तपसि नित्यः तपः परः । पौरुशिष्टिर्नाम ऋषिः ध्यानादिरूपं तपः श्रेय इत्याह । **नाको मौद्गल्यः**। मुद्गलपुत्रो मौद्गल्यः नाको नाम मुनिः स्वाध्यायप्रवचने एव श्रेयसी इत्याहेत्यर्थः। तत्राऽऽद्ययोस्समत्वेऽपि तृतीयं मतमतिशयितमित्याह- **तद्धि तपस्तद्धि तप इति** ॥ ऋतादेः सर्वस्यानयोरेवान्तर्भावादेतयोरेवानुष्ठाने सर्वं तेन कृतं भवत्येवेति भावः । तदुक्तम् - 'सम्यक् ज्ञात्वा तु यो विष्णुं

व्याख्यायीत जपेत वा। न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः' (तै.भा.) इति ॥ २१ ॥

स्वाध्यायप्रवचनयोराधिक्यमित्युक्तेऽर्थे आख्यायिकामाह- **अहमिति** ॥

## उपनिषत्

**अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि। द्रविण सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम् ॥ २२ ॥**

**(खं.)** वृक्षस्य संसारवृक्षस्य रेरिवा छेत्ता, 'रर् च्छेदने' इत्यतो लिटि 'लिटः क्वसुः' इति क्वस्वादेशे द्विर्वचने एत्वाभ्यासलोपयोः स्वाद्युत्पत्तौ उगित्वान्नुमि 'अत्त्वसंतस्येति दीर्घे रेरिवेति सिद्धेः। कीर्तिः मत्कीर्तिः, गिरेः पृष्ठमिव विस्तीर्णा। संसारनिवर्तनादिकं न मत्सामर्थ्यात् किन्त्वीश-प्रसादादिति भावेनोक्तम् - **ऊर्ध्वेत्यादि** ॥ ऊर्ध्वेन उत्कृष्टेन हरिणा पवित्रः पावितोऽस्मि यतोऽत इति योज्यम्। किं च वाजिनीवस्वमृतमस्मि। वाजी चासौ अश्वरूपश्चासौ नीश्च नेता च वाजिनीः, नयतेः क्विप्, वाजिन्यां सूर्ये वासतीति वाजिनीवसुः, वसते रुः, सूर्यस्थो विष्णुः, तेन वाजिनीवसुना अमृतम् अमृतोऽस्मि। प्रारब्धकर्मनिर्मुक्तोऽस्मि। कथम् ? सुवर्चसं शोभनकान्तियुक्तं द्रविणं स्वर्णमिव जातोऽस्मि। नित्यानन्दस्वरूपत्वादिति भावः। व्याख्यातैषा श्रुतिः गीताभाष्यटीकायां पञ्चदशेऽध्याये। सुमेधा अस्मि। अमृतोक्षितः अमृतेन हरिणा उक्षितः, उक्ष सेचने, सिक्तः अमृतेन व्याप्तोऽस्मीति यावत्। इति एवं त्रिशङ्कोर्मानवस्य नृपस्य वेदानुवचनं वेदव्याख्यानफलम् ॥ २२॥

वेदश्रवणानन्तरभाविनो यमनियमानाह - **वेदमनूच्येत्यादिना** ॥

## उपनिषत्

वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकꣳ सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि। ये के चास्मच्छ्रेयांꣳसो ब्राह्मणाः। तेषां त्वयासने न प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्॥ २३॥

**(खं.)** अनूच्य व्याख्याय, आचार्यः शिष्यमनुशास्ति शिक्षयति। अनुशासनप्रकारमेवाऽऽह - **सत्यं वदेत्यादिना**॥ स्वाध्यायान्मा प्रमदः। प्रमादं मा कार्षीः। स्वाध्यायं मा विस्मार्षीरित्यर्थः। आचार्येष्टं धनमाहृत्य आनीय गुरुदक्षिणां दत्वा तदनुज्ञातोऽनुरूपदारानुद्वाह्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः। प्रजासन्ततेरविच्छित्तिः कार्या। आवश्यकत्वज्ञापनाय 'सत्यात्' इत्यादि पुनर्वचनम्। कुशलात् श्रेयोहेतुव्यापारात्, भूत्यै भूत्यर्थम् ऐश्वर्यार्थम्, न्यायोपायेन द्रव्यार्जनं कार्यमित्यर्थः। स्वाध्यायेत्यादि व्यक्तम्। मातृदेव इत्यादेः माता पूज्या यस्यासौ मातृदेव इत्यादिरर्थो ज्ञेयः। अनवद्यानि अनिन्दितानि, इतराणि सावद्यानि नो न कार्याणि। अस्मच्छ्रेयांसः मत्तोऽपि श्रेष्ठाः, तेषां त्वयाऽसनेन आसनादिना आसनाद्युपचारेण प्रश्वसितव्यम्, प्रश्वासः श्रमापनोदः। महात्मनामागमने तच्छ्रमापनोदो यथा तथा कर्तव्यमित्यर्थः। अश्रद्धया देयमिति। अश्रद्धयाऽपि देयमेव।

गुणभूतश्रद्धाभावेन प्रधानदानलोपो न कार्य इति भावः। केचिददेयमिति पदं छिन्दन्ति। श्रिया देयमिति। प्रसन्नेन मनसेत्यर्थः॥ २३॥

## उपनिषत्

**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥ २४॥**

**शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्माऽवादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ओं शान्तिः शान्तिः शान्तिः॥ २५॥**

**॥ इति प्रथमवल्ली सम्पूर्णा॥**

**(खं.)** अथेत्यर्थान्तरे। मां विहाय देशान्तरं गतस्य ते यदि कर्मविचिकित्सा यज्ञादिभगवदाराधनकर्मविषये सन्देहः, वृत्तविचिकित्सा कर्माङ्गाचारविषये सन्देहः, स्यात् भवेत् तदेति शेषः। संमर्शिनो विमर्शकारिणः, युक्ता योगयुक्ताः, आयुक्ताः, स्वधर्मानुष्ठानाग्रहयुक्ताः, अलूक्षाः अरूक्षाः प्रश्ने कृते कोपरहिताः, धर्मकामा अदृष्टार्थिनः, ते महात्मानः तत्र विचिकित्सितकर्मणि वृत्ते वा यथा वर्तेरन्, तथा त्वमपि वर्तेथाः। अथेत्यर्थान्तरे, अभ्याख्यातेषु निन्दितेषु विचिकित्सा स्यादिति वर्तते। ये तत्रेत्यादि प्राग्वत्। एष आदेशः

इयमाज्ञा, हरेः । न केवलमाज्ञा, किन्तु एष उपदेशः नायं यादृशतादृश उपदेशः अपि तु एषा वेदोपनिषत्, वेदरहस्यमेतत् । एतदनुशासनं शिक्षेत्यर्थः । प्रागुक्तं सत्यत्वादिकं अवश्यमुपास्यमिति द्विरुक्त्याऽवधारयति- **एवमिति** ।। उपासितव्यं प्रागुक्तसत्यवचनादिकमवश्यानुष्ठेयमित्यर्थः । यथा शान्त्या विद्योपक्रम्य समापिता तामेव विघ्ननिवृत्तौ शक्तेति भावेनान्तेऽपि पठति - **शं नो मित्र इति** ।। अत्र वायो त्वामेव प्रत्यक्षं ब्रह्मावादिषमित्युक्तेः बीजं उपक्रम एवोक्तम् ।। २४ ।।

**।। इति प्रथमावल्ली सम्पूर्णा ।।**

**(शान्तिमन्त्राः)**

यस्या विद्यायाः पूर्वं कर्तव्या विद्या उक्ता तामेव वक्तुं विघ्नविघातिनीं शान्तिं पठति - **सह नाविति ।।**

## उपनिषत्

**ओं सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।। १ ।।**

**(खं.)** नौ गुरुशिष्यौ अवतु, 'अव-रक्षणगतिकान्तिप्रवेशेत्यादिधातुपाठात् प्रविशतु, आवयोः सन्निधीयतामित्यर्थः । नौ सहैव भुनक्तु पालयतु, 'भुज परिपालनाभ्यवहारयोः' इति धातोः । व्याख्यानविषये वीर्यं सामर्थ्यं सह करवावहै । तेजस्विनौ भवावेति योज्यम् । अधीतं फलप्रदमस्तु । नौ आवाभ्यामधीतं तेजस्व्यस्त्विति वा । मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्य गुरोर्वा प्रमादकृतापराधात् प्राप्तं विद्वेषं नैव करवाव इत्यर्थः । त्रिःशान्तिपाठस्य बीजमुक्तमेव ध्येयम् ।। १ ।।

प्रधानब्रह्मविद्यामाह- **ब्रह्मविदिति** ।।

## उपनिषत्

**ॐ ॥ ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥ २ ॥**

**(खं.)** ब्रह्मवित् परब्रह्मज्ञानी (परं ब्रह्मेत्यन्वेति) परंब्रह्म प्राप्नोति । एतेन परब्रह्मप्राप्तिकामः परं ब्रह्म विद्यादित्युक्तं भवति । तत्र किंलक्षणकं ब्रह्म ? कथं च तद्वेदनम् ? न हि ब्रह्मपदेन प्रतीतस्यापरिच्छिन्नस्य साक्षात्कारो युक्तः । कीदृशी च तत्प्राप्तिः ? या ज्ञानसाध्या सर्वगतत्वेन नित्यप्राप्तत्वादित्युत्पन्नशङ्कात्रयस्य क्रमेण परिहारार्थं प्रस्ताव्यमन्त्रमुदाहरत्युपनिषत्- **तदेषाऽभ्युक्तेत्यादिना** ॥ तदभि, तदाशङ्कात्रयं प्रति तत्समाध्यर्थमिति यावत्, एषा ऋक् उक्ता उच्यत इत्यर्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणशङ्काया उत्तरम् । प्रत्येकं लक्षणत्वात् त्रीणि लक्षणान्यवश्यं ज्ञातव्यत्वादुक्तानि । सत्यत्वं नाम जगत्स्रष्टृत्वं जगज्जीवनप्रदत्वं जगच्चेष्टकत्वं जगत्संहर्तृत्वं चेति ज्ञातव्यम् । सदिति सद्भावः जन्मेति यावत्, सत्वं जीवनं प्रवर्तनं च, सत्वं विशरणं नाशमिति यावत्, 'षद्लृ विशरण' इति धातोः, यापयतीति व्युत्पत्त्या सत्यशब्देनार्थचतुष्टयस्यापि प्रतीतेः । ज्ञानत्वं तु स्वपरगताशेषसामान्यविशेषविषयकज्ञानरूपत्वम्, अनन्तत्वं च देशकालगुणापरिच्छिन्नत्वम् । द्वितीयशङ्कोत्तरम् - **यो वेदेति** ॥ अपरिच्छन्नपरिमाणस्यापि स्वशक्त्या भक्तानुकम्पयाऽल्पपरिमाणम् अक्षरनयोक्तदिशा विद्यमानमेव प्रकटयत्सर्वजीवोपकारि कार्यकारणप्रेरकतया तद्धृदयगुहावस्थितं यो वेदेत्यर्थः । तृतीयशङ्कोत्तरम् - **सोऽश्नुत** इति ॥ न संयोगादिमात्रं तत्प्राप्तिः । येन ज्ञानसाध्या न स्यात् । किं तु विपश्चिता सर्वज्ञेन ब्रह्मणा स्थलविशेषे अभिव्यक्ततया स्थितेन परब्रह्मणा, विरिञ्चेन वा सह सर्वान् स्वयोग्यान् कामान् भुङ्क्ते इति

तेन सह तदधीनतया सुखभोग एव तत्प्राप्तिरिति तदभिप्रायः । इति शब्दस्य इत्येषाऽभ्युक्तेति पूर्वेणान्वयः ॥ २ ॥

सत्यमित्यत्र सच्छब्दः 'सद्भावे साधुभावे च' (भ.गी. १७.२६) इति गीतोक्तेः 'सद्भावशब्देन प्रजननं सूचितम्' इति गीताभाष्योक्तेश्च प्रजनन-रूपसद्भाववाचीत्युपेत्य सद्भावं जन्म यापयतीति । यातेरन्तर्णीतण्यर्थस्य 'धातोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे 'अयस्मयादीनि' इति भसंज्ञायाम् अपदत्वेन जश्त्वाभावे सत्यमिति रूपमुपेत्य जगत्स्रष्टृत्वं सत्यपदेनोच्यत इत्ययुक्तं पञ्चमहाभूतानामेव जगत्कारणत्वादित्यतस्तेषामपि ब्रह्मैव कारणं, तदन्तर्गतं तत्सत्तादिप्रदं चेति भावेन सत्यपदोक्तं जगत्कारणत्वं विवृणोति - **तस्मादित्यादिना** ॥

## उपनिषत्

**तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात् पुरुषः॥ ३॥**

**(खं.)** तस्माद् 'ब्रह्मविदाप्नोति परम्' इति परब्रह्मप्राप्तिकामेन ज्ञातव्यतयोक्तादेतस्मात् सत्यत्वादिना लक्षिताद् आत्मन आकाशः सम्भूतः जातः। अत्र प्रकरणे आकाशादिशब्दैः भूतं भूताभिमानी तद्देहस्तत्त्रितयान्तर्गतो हरिश्चेति चत्वारो ग्राह्याः। हरेस्तत्त्रितयान्तर्गतिश्च तत्सत्ताशक्त्यादिप्रदत्वेनेति ज्ञेयम्। सम्भूतपदोक्तं जन्म च यथासम्भवं हरेरभिव्यक्तिरभिमानिनोऽभिमानः तद्देहस्य भूतस्य च परिणाम इति ज्ञेयम्। आकाशाच्चतुर्विधाच्चतुर्विधो वायुः सम्भूतः। चतुर्विधाद्वायोश्चतुर्विधोऽग्निः सम्भूतः। चतुर्विधादग्नेः चतुविधा आपः सम्भूताः। चतुर्विधाभ्योऽद्भ्यः चतुर्विधा पृथिवी सम्भूता। चतुर्विधायाः पृथिव्याः चतुर्विधा ओषधयः सम्भूताः। चतुर्विधौषधीभ्यश्चतुर्विधमन्नं सम्भू-

तम् । चतुर्विधान्नात्पुरुषशब्दितो देहस्तदभिमानी जीवः तदुभयान्तर्गतो हरिश्चेति त्रितयं सम्भूतमिति ज्ञेयम् । तदाह सूत्रकारः- 'कारणत्वेन चाऽकाशादिषु यथा व्यपदिष्टोक्तेः' (१-४-१५) इति 'तेजोऽतस्तथा ह्याह' (२-३-१०) इति च । तत्राऽद्यनये आकाशाद्वायुरित्यादेः 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' (१.४.२२) इति न्यायेन मुख्यवृत्त्या भूतोत्पत्तिपरत्वम् अभिमानिनयन्यायेन अभिमानिपरत्वं चोपेत्य समाकर्षन्यायेन परममुख्यवृत्त्या आकाशादिपुरुषान्तशब्दानां ब्रह्मपरत्वं च द्युभ्वादिनयन्यायेन प्रादुर्भावं जनिं चोपेत्य कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वसमर्थनात्, तेजोनये तेजःपदोपलक्षिताशेषभूत-तदभिमानिनामुपादानशक्तिकर्तृत्वशक्त्यादेः ईशायत्तत्वोक्तेः ॥ ३ ॥

एवं सत्यपदोक्तं जगज्जन्महेतुत्वम् आत्मन इत्यादिप्रकरणेन समर्थ्य 'अस्ति चैत्र' इत्युक्ते जीवतीति प्रतीतेः, अस्तेः शत्रन्तस्य सदिति रूपमुपेत्य सत्त्वं जीवनं यापयतीति षद्लृ विशरणगतीति धातोर्भावे क्विबन्तत्वमुपेत्य सद्गतिं विशीर्णत्वं यापयतीति च व्युत्पत्त्याश्रयेण उक्तमन्यदर्थत्रयं ज्ञानत्वानन्तत्व-रूपलक्षणद्वयं च विवरितुं पुरुषपदेन परममुख्यवृत्त्योक्तस्य जीवदेहस्थस्य हरेः जीवदेहे पञ्चरूपतया स्थितिं वक्तुं प्रकरणान्तरमारभते- **स वा एष पुरुष इति** ॥

## उपनिषत्

**स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ॥ ४ ॥**

**(खं.)** स 'अत्मान' इति सर्वभूतमूलकारणत्वेनोक्तः, वै प्रसिद्धः, एष आकाशादिपदैर्मुख्यवाच्यतया प्रकृतः पुरुषः जीवदेहस्थः पुरुषनामा हरिः अन्नरसमयः, मयट् प्राचुर्यार्थः, 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट्

त्रिधा' इत्युक्तेः । अन्नशब्दोऽत्र अद्यतेऽत्ति चेति वाक्यशेषात् 'अद भक्षणे' इत्यतः कर्मणि कर्तरि वा निष्ठाप्रत्यये 'रदाभ्यां निष्ठातो नः' इति निष्ठातकारस्य नत्वे अन्नमिति सिद्ध्या भूतोपजीव्यत्वरूपाद्यत्वभूतातृत्वरूपसंहर्तृत्वपरः । रसशब्दः सारवाची । 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' इत्युक्तेः। तथा चान्नेषु अन्नशब्दार्थेषु रसः सारोऽन्नरसः तत्प्रचुरोऽन्नरसमयः । सर्वभूतोपजीव्यत्वेन सर्वभूतसंहर्तृत्वेन च निमित्तेनान्नरसमयशब्दवाच्यः, प्राकृतान्नविकारदेहस्थोऽनिरुद्ध इत्यर्थः । अन्नपदस्य प्राकृतान्नपरत्वनिवृत्त्यर्थम् अन्नमय इत्यनुक्त्वा अन्नरसमय इत्युक्तम् । एतेन स वा एष पुरुषः सर्वाद्यत्वसर्वात्तृत्वरूपसर्वोपजीव्यत्वसर्वसंहर्तृत्वाभ्यां निमित्ताभ्याम् अन्नरसमय इति कथनेन सत्यपदस्य सर्वजीवनहेतुत्वसर्वसंहर्तृत्वरूपार्थद्वयमपि विवृतं ध्येयम् । अन्नमयकोशस्थस्यानिरुद्धस्यान्नरसमयशब्दवाच्यस्य शिरः-प्रभृत्यवयवानां कोशशिरःप्रभृत्यवयवा एव स्थानानीत्याह- **'तस्येदमेव शिरः'** इति ।। प्राकृतान्नविकारशरीरशिर एव तस्य शिर इत्यर्थः । दृश्यमान-जीवदेहशिरान्तस्थत्वेन तदावृततया स्थितत्वाद्धरेः शिरसो वस्त्रप्रावृतजानुनि इदं जान्विति निर्देशवदुपचारेणायं निर्देशः । एवमग्रेऽपि ज्ञेयम् । अयं दृश्यमानान्नविकारदेहसम्बन्धी दक्षिणः पक्षः दक्षिणबाहुः, अन्नरस-मयस्यानिरुद्धस्य दक्षिणबाहुः तदन्तरस्तीत्यर्थः । अयमुत्तरः पक्षः परिदृश्य-मानदेहसम्बन्ध्युत्तरः पक्षो वामबाहुः अन्नरसमयस्यानिरुद्धस्य वामबाहुः तदन्तर्वर्तत इत्यर्थः । अयमात्मा मध्यदेहः जीवदेहमध्यदेहः तस्य मध्य-देहः । इदं पुच्छं, तस्य विवरणं - **प्रतिष्ठेति** ।। प्रतितिष्ठत्याभ्यामिति प्रतिष्ठा पादौ, 'सुपां सुलुक्' इत्यादिना द्विवचनस्याऽकारादेशः, जीवदेहपादयोरस्य पादौ वर्तेते इत्यर्थः । अन्नविकारदेहः तदवयवाश्चानिरुद्धाधीना इति भावः ।। ४ ।।

सत्यपदस्य जगज्जन्मस्थितिलयगतिहेतुत्वमर्थमुपेत्य जन्महेतुत्वमात्मन आकाश इत्यादिना अन्यदर्थद्वयं स वा एष इत्यादिना च व्याख्यातम् । तस्मिन्नर्थत्रये श्लोकमुदाहरत्युपनिषत् - **तदप्येष श्लोक** इत्यादिना ॥

## उपनिषत्

**तदप्येष श्लोको भवति । अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीँ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नँ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषध-मुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नँ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ॥ ५ ॥**

**(खं.)** तत् तत्र उक्तेऽर्थे एष श्लोकोऽपि भवति । तमेवोदाहरति - **अन्नाद्वा इत्यादिना** ॥ नामैकदेशे नामग्रहणम्, अन्नरसमयाद्वा इत्यर्थः । भौतिकान्नविकारदेहस्थादन्नरसमयनामकादनिरुद्धात् प्रजाः देहयोगेन जायन्ते, वै प्रसिद्धमेतत् । याः काश्च पृथिवीं श्रिताः ताः प्रजा इत्यर्थः । अथो जाताश्च प्रजाः अन्नरसमयेन जीवन्ति प्राणान् बिभ्रति । अथ पश्चादन्ततः प्रलयकाले एनत् अन्नरसमयाख्यमनिरुद्धम् अपियन्ति । इतराङ्गेयतया तदुदरं प्रविशन्तीत्यर्थः । अन्नं हि [१]अन्नमयनामानिरुद्धो हि भूतानां ज्येष्ठं भूतेभ्यो ज्यायः हि यस्मात् तस्मात् सर्वौषधमुच्यते । 'उष दाहे' इत्यतः कर्मणि घञि पुगन्तेति गुणे ओषाः संसारे दह्यमानाः, सर्वे च ते ओषाश्च सर्वौषाः धीयन्ते अस्मिन्निति सर्वौषधम्, संसारदग्धानामाश्रयम् । भवभयनिवर्तकमुच्यत इत्यर्थः । अन्नमयस्य ब्रह्मत्वं जानतः फलमाह - 'सर्वं वा' इति । येऽधि-कारिणः अन्नम् अन्नरसमयाख्यमनिरुद्धं ब्रह्म गुणपरिपूर्णमुपासते । ते वै त

---

१. अन्नरसेति- ख.

एव सर्वं पूर्णम् अन्नरसमयं हरिं प्राप्नुवन्तीति । उपसंहरति- अन्नं हि भूतानां ज्येष्ठमिति । हि यतोऽन्नरसमयो भूतेभ्यो ज्यायान् तस्मात् सर्वौषधमुच्यते । तात्पर्यार्थं वा अन्नं हीत्यादि पुनर्वचनम् । अन्नशब्देनात्र न प्रसिद्धान्नमुच्यते । किन्तु अलौकिकं वस्त्विति भावेन तन्निर्वक्ति- **अद्यतेऽत्ति चेति** ॥ भूतैरिति विपरिणामेन अनुषङ्गः। अद्यते उपजीव्यते भूतान्यत्ति च संहरति । संहारस्योर्णनाभिवददनरूपत्वादत्तीत्युक्तम् । तस्मादद्यात्तृत्वरूपत्वात् तद्रूपमन्नमुच्यत इत्यर्थः । इति शब्दस्य इत्येष श्लोक इति पूर्वेणान्वयः ॥५॥

॥ **इत्यन्नमयप्रकरणम्** ॥

सत्यं ज्ञानमिति लक्षणवाक्यस्थसत्यपदेन जगत्स्रष्टृत्वं जगज्जीवनदत्वं जगत्प्रवृत्तिरूपगतिहेतुत्वं संहर्तृत्वं चेति विवक्षितार्थचतुष्टयमध्ये स्रष्टृत्वं जीवनदत्वं संहर्तृत्वं चेति त्रयम् आकाशाद्युत्पत्तिप्रकरणे अन्नमयप्रकरणे च विवृतम् । जगत्प्रवर्तकत्वरूपगतिहेतुत्वरूपमर्थं प्राग्विवृतजीवनदत्वं च स्फुटं विवरितुं देहस्थप्रद्युम्नाख्यरूपप्रतिपादनपरं प्रकरणान्तरमारभते - **तस्माद्वा एतस्मादित्यादिना** ॥

## उपनिषत्

**तस्माद्वा एतस्मादन्नंरसमयात् । अन्योन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुंषविध-ताम् । अन्वयं पुरुषविधः। तस्य प्राणं एव शिरः । व्यानो दक्षिंणः पक्षः । अपान उत्तंरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । ॥ ६ ॥**

**(खं.)** तस्मात् सत्यत्वेन लक्षितात् एतस्मात् प्रकरणद्वयेन प्रतिपादितात् अन्नरसमयात्, प्राकृतान्नविकारदेहे नियन्तृतया स्थितात् अन्नरसमयनामकात्, अनिरुद्धात् अन्यः अन्तरः तदन्तस्थः आत्मा नियामकः प्राणमयः वायुविकारप्राणमयकोशस्थः । 'प्राणं देवा अनुप्राणन्ति' इति वाक्यशेषोक्तदिशा

प्राणन्ति प्रवर्तन्ते जीवन्ति वा बाहुल्येन भूतान्यनेनेति व्युत्पत्त्या प्राणमयशब्दवाच्यः प्रद्युम्नाख्यस्तिष्ठतीत्यर्थः । तेन प्राणमयेन प्राणमयकोशस्थेन प्रद्युम्नेन एष अन्नमयकोशस्थोऽन्नरसमयोऽनिरुद्धः निश्छिद्रतया पूर्णः । स वा एष पुरुषविधः । प्राणमयकोशस्थो प्राणमयनामा प्रद्युम्नः पुरुषविध एव पुरुषाकार एव । तस्य प्राणमयस्योक्तरूपप्रद्युम्नस्य पुरुषविधतामनु पुरुषाकारतानुसारेण अयम् अन्नमयकोशस्थः तन्नामाऽनिरुद्ध; पुरुषाकारः । तस्माद् भूत इत्युपलक्षणतया ग्राह्यम् । प्राणमयशब्दित(स्य) प्रद्युम्नस्यावयवानां स्थानान्याह- **तस्य प्राण एव शिर इत्यादिना** ।। प्राणस्थं प्रणेतृत्त्वेन प्राणनामकं शिर इत्यर्थः । एवं व्यानस्थो विशेषेण अनतीति व्युत्पत्त्या व्यानाख्यो दक्षिणबाहुरित्यर्थः । अपानतीति व्युत्पत्त्याऽपानाख्योऽपानस्थः सव्यबाहुः। आकाशपृथिवीशब्दाभ्याम् उदानसमानौ ग्राह्यौ तस्य प्राणमयाख्यप्रद्युम्नस्य मध्यदेहः उदाननामोदानस्थः पुच्छमिवान्तिमतया स्थितौ । प्रतिष्ठा प्रतिष्ठौ पादौ समाननामकौ समानस्थौ । प्राणमयकोशप्राणादयः प्रद्युम्नाधीना इति भावः ।। ६ ।।

जगद्धृतिजीवनयोर्हेतुत्वनिमित्तेन प्राणमयनामकः तन्नामकोशस्थ इत्युक्तेऽर्थे श्लोकमुदाहरति- **तदप्येष श्लोको भवतीत्यादिना** ।।

## उपनिषत्

**तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ७ ।।**

**(खं.)** तदपि तत्रापि उक्तेऽर्थे इत्यर्थः । ये मनुष्याः पशवो देवाश्च प्राणं

प्राणमयमनुप्राणन्ति प्राणमयप्रेरणया प्राणन्ति चेष्टन्ते हिताहितप्राप्तिपरिहारार्थं प्रवृत्तिमन्तो भवन्ति जीवन्ति चेत्यर्थः । प्राणो हि प्राणमयो हि भूतानामायुः जीवनहेतुः । तस्माद्भूतानां जीवनहेतुत्वात् सर्वायुषमुच्यते । प्राणमयः सर्वायुषः उच्यत इति विपरिणामः । प्राणमयज्ञानिनः फलमाह - **सर्वमिति** ॥ येऽधिकारिणः प्राणमयकोशस्थं प्रागुक्तनिमित्तेन प्राणमयशब्दवाच्यं प्रद्युम्नं ब्रह्म देशकालगुणापरिच्छिन्नतया ब्रह्मपदवाच्यम् उपासते जानन्ति च । ते सर्वमेव आयुर्मोक्षं यान्ति । उपसंहरति - **प्राणो हीति** ॥ तात्पर्यार्थमभ्यासो वा । यद्वा सर्वायुःप्रदत्वे हेतुकथनाय पुनर्वचनम् । इतिशब्दः इत्येष श्लोक इत्यन्वेति । प्राणमयप्रकरणसमाप्तौ वा । यद्वा इतिशब्देन श्लोकं समाप्य प्राणमयस्य धर्मान्तरमाहोपनिषत् - **तस्येति** ॥ तस्यान्नमयकोशस्थस्य तन्नामकानिरुद्धस्य एष प्राणमयकोशस्थः तन्नामा प्रद्युम्नः । शारीर आत्मा देहिरूपात्मा । अन्नमयाख्यकोशस्थमनिरुद्धं देहवत्कृत्वा तदन्तस्थप्राणमय-कोशस्थः प्रद्युम्नो देहिवद् वर्तत इत्यर्थः । रूपयोरभेदेऽपि देहदेहिभावान्य-त्वान्तरत्वादिकमधिष्ठानभूतकोशयोः तथात्वात्तन्निष्ठरूपयोरपि तथात्वम् उपचरितं वा । भेदप्रतिनिधिविशेषेणैश्वर्यबलेन च मुख्यमेवेति वा ज्ञेयम् । एवमग्रेऽपि । तस्यैष इत्यत्र तच्छब्दार्थं व्यनक्ति- **यः पूर्वस्येति** ॥ पूर्वस्यान्न-विकारकोशस्य । यः अनिरुद्धः शारीरात्मतया वर्तते अन्नविकारदेहं शरीर-वत्कृत्वाऽन्तर्वर्तते तस्यैवेति ॥ ७ ॥

॥ **इति प्राणमयप्रकरणम्** ॥

एवं लक्षणवाक्यस्थसत्यपदार्थं प्रकरणत्रयेण विवृत्येदानीम् अखिलवस्तुगताखिलसामान्यविषयकत्वरूपं ज्ञानत्वलक्षणं विवृणोति - **तस्मादित्यादिना** ॥

## उपनिषत्

**तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविध-ताम् ।अन्वयं पुरुष-विधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ॥ ८ ॥**

**(खं.)** तस्मान्मन्त्रवर्णलक्षितात् । एतस्मात्प्राणमयप्रकरणेन व्याख्यातात् प्राणमयकोशस्थात् तन्नामकात्प्रद्युम्नात् अन्योऽन्तरोऽन्तस्स्थः आत्मा व्याप्तः मनोमयः । 'मन अवबोधने' इत्यतोऽसुन्प्रत्यये मनसा ज्ञानेन प्रचुरो मनोमय इति व्युत्पत्त्या अशेषवस्तुगतसामान्याकारगोचरज्ञानप्राचुर्यवत्त्वनिमित्तेन मनोमयनामको मनोमयाख्यकोशस्थः सङ्कर्षणस्तिष्ठतीत्यर्थः । तेन मनोमयेनोक्तरूपेण सङ्कर्षणाख्येन एष प्राणमयकोशस्थः तन्नामा प्रद्युम्नः निश्छिद्रतया पूर्णः । स वा एष मनोमयः सङ्कर्षणः पुरुषाकार एव । तस्य पुरुषाकारताम् अनुसृत्य अयं प्राणमयः पुरुषाकारः तत उद्भूत इत्यपि ध्येयम् । मनोमयस्थस्य तन्नाम्नः सङ्कर्षणस्य शिरआद्यवयवानाम् स्थानान्याह-**तस्येत्यादिना** ॥ तस्य मनोमयकोशस्थस्य संकर्षणस्य शिरः यजुः यज्ञहरणनिमित्तेन यजुर्नामकं यजुस्संस्थितम् । एवशब्दो यजुश्शब्दस्य मुख्यत्वार्थः । अर्चनस्वीकारहेतुना ऋङ्नामकः ऋक्स्थः दक्षिणबाहुः । दोषात्सम्यक् करणहेतुना सामनामा सामस्थः उत्तरबाहुः । शतकोटि-तयाऽतिविस्तृतत्वहेतुना उपदेशत्वरूपहेतुना च आदेशाख्य आदेश-शब्दितपञ्चरात्रस्थो मध्यदेहः । अधरत्वाङ्गिरसत्वहेतुभ्याम् अथर्वाङ्गिरस-नामकौ अथर्वाङ्गिरसस्थौ पुच्छं पुच्छमिवान्त्यतया स्थितौ । प्रतिष्ठा प्रतिष्ठौ पादौ । यजुरादिकं तस्य शिरःप्रभृत्येकैकावयवप्रतिपादकं न साकल्येन तत्स्वरूपप्रतिपादनक्षममिति तात्पर्यार्थः ॥ ८ ॥

यजुरादिभिः साकल्येनाप्रतिपाद्यत्वरूपोक्तार्थे श्लोकं संवादयन् तज्ज्ञानिनः फलं चाऽऽह - **तदप्येष इति ॥**

## उपनिषत्

**तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ ९ ॥**

**(खं.)** तदपि तत्रापि पूर्वोक्तार्थेऽपीत्यर्थः । ब्रह्मणः मनोमयकोशस्थस्य संकर्षणरूपब्रह्मणः आनन्दम् । भेदप्रतिनिधिविशेषात् ब्रह्मण इति षष्ठी-प्रयोगः । आनन्दरूपं ब्रह्म विद्वान् न कदाचन बिभेति मुक्तो भवति । कथं विद्वान् भयहीनो भवतीत्यतो मनोवाचामगोचरत्वेनापरिच्छिन्नत्वेनेति भावेनोक्तम्- **यतो वाच इत्यादि ॥** इतिशब्दस्य इत्येष श्लोक इति पूर्वेणान्वयः। मनोमयस्थितिप्रकारमाह - **तस्येति ॥** प्राणमयस्य प्रद्युम्नस्य एष मनोमयः संकर्षणः शारीर आत्मा देहिवत्तिष्ठतीत्यर्थः । पूर्वस्यान्नरसमयाख्यस्यानि-रुद्धस्य । यः प्राणमयः प्रद्युम्नः शारीर आत्माऽभवत् । तस्य प्रद्युम्नस्येत्यर्थः॥९॥

॥ इति **मनोमयप्रकरणम्** ॥

स्वपरगताशेषविशेषविषयकत्वरूपविज्ञानत्वमपि लक्षणवाक्यस्थज्ञानपद-स्यार्थ इति भावेन तद्विवृणोति- **तस्माद्वा एतस्मादित्यादिना ।**

## उपनिषत्

**तस्माद्वा एतस्मान्मनोमयात् । अन्योन्तर आत्मा विज्ञान-मयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविध-ताम् ।अन्वयं पुरुष-विधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ॥ १० ॥**

**(खं.)** प्राग्वद्व्याख्या ध्येया । विशेषज्ञानप्राचुर्येण निमित्तेन विज्ञानमयशब्दाभिधेयो विज्ञानमयकोशस्थो वासुदेवः तेन विज्ञानमयाख्येन वासुदेवेन एष मनोमयो निश्छिद्रत्वेन पूर्णः । स वा इत्यादि प्राग्वत् । अन्वयं पुरुषविध इत्यनन्तरं तत उद्भूत इत्यपि ग्राह्यम् । तस्यावयवस्थानान्याह - **तस्य श्रद्धैवेति** ।। तस्य विज्ञानमयस्य वासुदेवस्य शिरः श्रुतिधर्तृत्वयोगेन श्रद्धानामकं श्रद्धास्थम् । एवकारार्थः प्राग्वत् । ज्ञानदातृत्वयोगेन ऋतनामकः ऋतस्थो दक्षिणबाहुः । सतां नियामकत्वहेतुना सत्यनामकः सत्यस्थः सव्यबाहुः । सर्वलोकयुक्तत्वहेतुना योगनामको योगस्थो मध्यदेहः । महनीयत्वतो महर्नामकौ पुच्छमिवान्तिमौ प्रतिष्ठा प्रतिष्ठौ पादाविति । श्रद्धा ऋतमित्यादि विज्ञानमयाख्यवासुदेवाधीनमिति तात्पर्यार्थः ।। १० ।।

तदेव श्लोकेन व्यनक्ति - **विज्ञानमिति** ।।

## उपनिषत्

**तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ११ ।।**

**(खं.)** विज्ञानमयकोशगतः तन्नामा वासुदेवः यज्ञं समुदायाभिप्रायं, यजमानऋत्विगादिषु सर्वत्र स्थित्वा यज्ञान् तदङ्गकर्माण्यपि च तनुत इत्यर्थः। विज्ञानं विज्ञानमयं वासुदेवं ब्रह्म गुणपूर्णं चेद् वेद वेद चेत् साक्षात्करोति चेदित्यर्थः । तस्माज्ज्ञानात् न प्रमाद्यति न विस्मरति च इत्यर्थः । शिष्टं स्पष्टम् । तस्यैष इत्यादि प्राग्वत् ।। ११ ।।

**।। इति विज्ञानमयप्रकरणम् ।।**

देशकालगुणापरिच्छिन्नत्वरूपानन्तत्वं लक्षणवाक्यस्थानन्तपदस्यार्थ इत्युक्तम्। तत्कुतः प्रमाणात्प्रतिपत्तव्यमित्यतः पूर्णानन्दत्वहेतुनेति भावेनाऽह- **तस्माद्वा इत्यादिना ॥**

## उपनिषत्

**तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्द-मयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।**

**तदप्येष श्लोको भवति। असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य ॥ १२ ॥**

**(खं.)** प्राग्वद् व्याख्या । आनन्दप्राचुर्यहेतुना आनन्दमयनामकः आनन्दमयकोशस्थः नारायणस्तिष्ठतीत्यर्थः । तेनैष पूर्ण इत्यादि प्राग्वत् । तदुद्भूत इत्यपि ग्राह्यम्। तस्याऽनन्दमयनाम्नो नारायणस्य शिरः प्रियमेव परैः प्राप्यत्वहेतुना प्रियनामकम् । उपकारजप्रियशब्दितसुखे स्थितम् । मोदत इति व्युत्पत्त्या मोदनामको दक्षिणबाहुः । विषयजमोदनामके सुखे तिष्ठतीत्यर्थः। प्रकर्षेण मोदत इति व्युत्पत्त्या प्रमोदनामा सव्यबाहुः । प्रकृष्टविषयजे प्रमोदनामके सुखे तिष्ठतीत्यर्थः । आतत्वहेतुना आत्मा मध्यदेहः स्वरूपानन्देऽस्तीत्यर्थः । सृष्ट्या जगद्बृंहणहेतुना ब्रह्मनामकौ पुच्छमिव स्थितौ प्रतिष्ठा प्रतिष्ठौ पादौ । ब्रह्माख्यप्रधानवायौ तिष्ठत इत्यर्थः । आनन्दमयकोशः प्रियमोदादिसुखविशेषा वायुश्चेत्येते सर्वे आनन्द-मयस्थनारायणाधीना इति तात्पर्यम्। सूत्रभाष्ये तु आनन्दमयाख्यो नारायणः पुनः नारायणादिरूपेण पञ्चधा भिन्नः शिरःप्रभृत्यात्मना तिष्ठतीत्युक्तम् ।

**(खं.)** प्राग्वद्व्याख्या ध्येया । विशेषज्ञानप्राचुर्येण निमित्तेन विज्ञानमयशब्दाभिधेयो विज्ञानमयकोशस्थो वासुदेवः तेन विज्ञानमयाख्येन वासुदेवेन एष मनोमयो निश्छिद्रत्वेन पूर्णः । स वा इत्यादि प्राग्वत् । अन्वयं पुरुषविध इत्यनन्तरं तत उद्भूत इत्यपि ग्राह्यम् । तस्यावयवस्थानान्याह - **तस्य श्रद्धैवेति** ।। तस्य विज्ञानमयस्य वासुदेवस्य शिरः श्रुतिधर्तृत्वयोगेन श्रद्धानामकं श्रद्धास्थम् । एवकारार्थः प्राग्वत् । ज्ञानदातृत्वयोगेन ऋतनामकः ऋतस्थो दक्षिणबाहुः । सतां नियामकत्वहेतुना सत्यनामकः सत्यस्थः सव्यबाहुः । सर्वलोकयुक्तत्वहेतुना योगनामको योगस्थो मध्यदेहः । महनीयत्वतो महर्नामकौ पुच्छमिवान्तिमौ प्रतिष्ठा प्रतिष्ठौ पादाविति । श्रद्धा ऋतमित्यादि विज्ञानमयाख्यवासुदेवाधीनमिति तात्पर्यार्थः ।। १० ।।

तदेव श्लोकेन व्यनक्ति - **विज्ञानमिति** ।।

## उपनिषत्

**तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।। ११ ।।**

**(खं.)** विज्ञानमयकोशगतः तन्नामा वासुदेवः यज्ञं समुदायाभिप्रायं, यजमानऋत्विगादिषु सर्वत्र स्थित्वा यज्ञान् तदङ्गकर्माण्यपि च तनुत इत्यर्थः। विज्ञानं विज्ञानमयं वासुदेवं ब्रह्म गुणपूर्णं चेद् वेद वेद चेत् साक्षात्करोति चेदित्यर्थः । तस्माज्ज्ञानात् न प्रमाद्यति न विस्मरति च इत्यर्थः । शिष्टं स्पष्टम् । तस्यैष इत्यादि प्राग्वत् ।। ११ ।।

**।। इति विज्ञानमयप्रकरणम् ।।**

देशकालगुणापरिच्छिन्नत्वरूपानन्तत्वं लक्षणवाक्यस्थानन्तपदस्यार्थ इत्युक्तम्। तत्कुतः प्रमाणात्प्रतिपत्तव्यमित्यतः पूर्णानन्दत्वहेतुनेति भावेनाऽह-**तस्माद्वा इत्यादिना ॥**

## उपनिषत्

**तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्द-मयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।**

**तदप्येष श्लोको भवति। असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य॥ १२॥**

**(खं.)** प्राग्वद् व्याख्या। आनन्दप्राचुर्यहेतुना आनन्दमयनामकः आनन्दमयकोशस्थः नारायणस्तिष्ठतीत्यर्थः। तेनैष पूर्ण इत्यादि प्राग्वत्। तदुद्भूत इत्यपि ग्राह्यम्। तस्याऽनन्दमयनाम्नो नारायणस्य शिरः प्रियमेव परैः प्राप्यत्वहेतुना प्रियनामकम्। उपकारजप्रियशब्दितसुखे स्थितम्। मोदत इति व्युत्पत्त्या मोदनामको दक्षिणबाहुः। विषयजमोदनामके सुखे तिष्ठतीत्यर्थः। प्रकर्षेण मोदत इति व्युत्पत्त्या प्रमोदनामा सव्यबाहुः। प्रकृष्टविषयजे प्रमोदनामके सुखे तिष्ठतीत्यर्थः। आतत्वहेतुना आत्मा मध्यदेहः स्वरूपानन्देऽस्तीत्यर्थः। सृष्ट्या जगद्बृंहणहेतुना ब्रह्मनामकौ पुच्छमिव स्थितौ प्रतिष्ठा प्रतिष्ठौ पादौ। ब्रह्माख्यप्रधानवायौ तिष्ठत इत्यर्थः। आनन्दमयकोशः प्रियमोदादिसुखविशेषा वायुश्चेत्येते सर्वे आनन्द-मयस्थनारायणाधीना इति तात्पर्यम्। सूत्रभाष्ये तु आनन्दमयाख्यो नारायणः पुनः नारायणादिरूपेण पञ्चधा भिन्नः शिरःप्रभृत्यात्मना तिष्ठतीत्युक्तम्।

ननु लक्षणवाक्योक्तसत्यत्वादिलक्षणानाम् अनेकरूपस्थतया एकत्रैवाभावात् कथं तेषां लक्षणत्वमिति चेत्। रूपाणामभेदात्सर्वरूपाणां प्रत्येकं सत्यत्वादि-लक्षणवत्त्वेऽपि भेदप्रतिनिधिविशेषबलेन अदनप्राणनादितत्तद्गुणदातृत्वस्य व्यवस्थया प्रकाशनान्नामभेदः पञ्चरूपत्वसंख्यादिकं च युक्तमिति ज्ञेयम्। 'स वा एष पुरुषः' इत्युपक्रम्य रूपपञ्चकनिरूपणेन सत्यत्वादिलक्षणानि विवृत्येदानीं पञ्चरूपमपि ब्रह्म न जीवाद्भिन्नमिति जानतां, भिन्नमिति जानतां चोभयेषां फलभेदोक्त्या जीवान्यब्रह्मत्वं पञ्चानां श्लोकेन स्थापयति - **तदप्येष इति** ॥ पञ्चरूपं ब्रह्म जीवान्यदित्यत्रार्थेऽपि श्लोकोऽप्यस्तीत्यर्थः। ब्रह्म जीवव्यतिरेकेणासत् नास्तीति वेद चेत्। सोऽसन्नेव दुःख्येव भवतीत्यर्थः। जीवादन्यद् ब्रह्मास्तीति वेद चेत् एनं सन्तं सुखिनं मुक्तियोग्यं विदुरित्येष श्लोक इतीति शब्दस्यान्वयः। सूत्रभाष्यादौ तु आनन्दमयमात्रपरः श्लोको व्याख्यातः। तस्यैष एवेत्यादि प्राग्वत् ॥ १२ ॥

॥ **इत्यानन्दमयप्रकरणम्** ॥

'ब्रह्मविदाप्नोति परम्' इत्युक्तौ उत्पन्नशङ्कात्रयं मन्त्रोदाहरणपूर्वक-मन्त्रोक्तलक्षणप्रपञ्चनेन निरस्य जीवान्यत्वेन तदनन्यत्वेन च ज्ञानिनो मुक्ति-तमोरूपफलोक्तौ अवसरप्राप्तं प्रष्टव्यमर्थं पृष्टवान् वरुणो ब्रह्माणमित्याह- **अथातोऽनुप्रश्ना इति** ॥

## उपनिषत्

**अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित् समश्नुता३उ ॥ १३ ॥**

**(खं.)** अथ अवसरप्राप्ताः अतः प्रश्नबीजवत्त्वात् गुरुभूतब्रह्मोक्त्यनुसारिप्रश्नाः वरुणेन कृता इत्यर्थः। तदाह- **उतेति** ॥ उताविद्वान् अविद्वानपि यः कश्चन

प्रेत्यामुं लोकं गच्छति । आहो विद्वान् प्रेत्यामुं लोकं गच्छतीत्यनुकर्षः । अयमेकः प्रश्नः । विद्वानित्यत्रापि किं सर्वोऽपि गच्छति कश्चिदेवेति द्वितीयः प्रश्नः । सर्वोऽपीत्यत्रापि किं सर्वोऽपि सम्यक् अश्नुते प्राप्नोति ब्रह्मेति शेषः । उत कश्चिदेव समश्नुते न सर्वोऽपीति तृतीयः प्रश्नः । इति प्रश्नत्रयं ध्येयम् । प्रश्ना इति बहुवचनानुरोधात् । समाधिमाह ब्रह्मा- **उ इति** ।। अभ्युपगमवाची अयमुकारः । सर्वोऽपि ज्ञानी सम्यगश्नुते कश्चिदेव वा सम्यगश्नुत इति चरमप्रश्नानन्तरम् उ इत्युक्त्या कश्चिदेव ज्ञानी विरिञ्चपदयोग्यः समश्नुत इति पक्षस्याङ्गीकारप्रतीत्या अज्ञानी नैव ब्रह्माऽप्नोति । ज्ञानिनोऽखिलाः प्राप्नुवन्तीत्यर्थस्य लाभात् । अन्यथा ज्ञानी कश्चिदिति समिति च विशेषणवैयर्थ्यापातात् ।। १३ ।।

एवं वरुणकृतचरमप्रश्नस्य सङ्क्षेपेण उ इत्यभ्युपगमरूपेण सङ्क्षिप्योत्त-रोक्त्या प्रश्नान्तरोत्तरमपि लब्धमिहेत्यभिप्रेत्य भगवन्महिमज्ञान्येव मुच्यते । नाज्ञानी । तत्रापि हि सम्यक्कश्चिदिति संक्षेपेणोक्तमर्थं 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादौ विस्तरेण वक्तुं विष्णोः स्वातन्त्र्यादि-महिमज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं चाऽह- **सोऽकामयतेत्यादिना** ।।

## उपनिषत्

**सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ।। १४ ।।**

**(खं.)** स आत्मा प्रजायेय अन्तर्णीतण्यर्थोऽयम् । जगत्प्रजनयेय जगत्-सृजानि । तन्नियामकतया चाहं बहु स्यां बहुरूपः स्यां भवेयमिति अकामयत

ऐच्छदित्यर्थः । यद्वा प्रजायेय प्रादुर्भवानीत्यर्थः । स तपः आलोचनम् अतप्यताकरोत् । जगत्सृष्ट्वा तन्नियामकतया बहुरूपो भवानीति व्यचिन्तयदित्यर्थः । स तपः तप्त्वा पर्यालोच्य यदिदं किञ्च जगदस्ति तत्सर्वमसृजत । स्वोदरस्थं जगत् बहिर्निर्यापयामासेत्यर्थः । स्वोदराद्बहिर्निष्क्रमणरूपत्वात्सृष्टेः । तज्जगत्सृष्ट्वा तदेवानु तत्सृष्टमन्वेव प्राविशत् । प्रविश्य किमभवदित्यतः सत्त्वादिगुणयोगेन सदादिपदवाच्यः सन् स्वसम्बन्धेन जगतोऽपि सदादिशब्दवाच्यतासम्पादकोऽभवदित्याह - **सच्चेत्यादिना** ॥ स्रीदत्यवसादयतीति सत् । सन्नामा सन् सन्नामकजगद्गतोऽभवदित्यर्थः । एवमग्रेऽपि । षद्लृ विशरणगत्यवसादनेष्वित्यतोऽन्तर्णीतण्यर्थात्क्विप् । (तनोति नि) ततो नियामकश्चेति त्यत् त्यन्नामा सन् त्यन्नामकजगद्गतोऽभवत् । 'तनु विस्तारे' इत्यतो डिवच्प्रत्ययः कर्तरि । 'या प्रापणे' इत्यतो डत्प्रत्ययः । कर्मधारयः । जगतो निरुक्ततत्वप्रदत्वान्निरुक्तनामा सन् निरुक्तवस्तुगतोऽभवत् । [1]अनन्तत्वाद्धेतोः साकल्येन निर्वक्तुमशक्यत्वहेतोर्वाऽनिरुक्तनामा सन् अनिरुक्तजगद्गतोऽभवत् । सर्वाधारत्वान्निलयननामा सन् निलयनजगद्गतोऽभवत् । श्रीब्रह्मप्राणेभ्योऽन्यजगतो साधुताप्रदत्वादनिलयननामा सन् तन्नामक(जगद्गतो)वस्तुगतोऽभवत् । सर्वं जानातीति विज्ञाननामा सन् विज्ञानाख्यजगद्गतो विज्ञाननामकवस्तुगतोऽभवत् । जगतः अविज्ञप्तिदातृत्वादविज्ञाननामा (सन्) अविज्ञानाख्य (जगद्गतो) वस्तुगतोऽभवत् । साधुस्वरूपत्वात्सत्यनामा (सत्याख्यवस्तुगतो) सन् तन्नामकजगद्गतोऽभवत् । जगतो दौर्बल्यदातृत्वहेतुना अनृतनामा अनृताख्यवस्तुगतोऽभवदित्यर्थः । अत्र त्यच्चानिरुक्तं निलयनं विज्ञानमिति महान् ब्रह्मोच्यते । सत्यमिति श्रीप्राणरूपं जगत् । सन्निरुक्तानिलयनाविज्ञानानृतशब्दैस्तु प्रकृतिप्राणमहद्भ्योऽन्यज्जगदिति ज्ञेयम् । तत् सर्वत्रानुप्रविष्टं

१. अनन्तत्वाद् हेतोः निर्वक्तुमशक्यत्वात्

रूपं तद्दोषेण लिप्यते किम् ? नेत्याह- **तत्सत्यमभवत्** ॥ साधुस्वरूपं निर्दोषस्वरूपं सत् सत्यनामाऽभवदित्यर्थः । प्रकृत्यधिकरणानुव्याख्याने तु- 'सत्वात्ततेर्वैदिकत्वात्सम्यग्वक्तुमशक्यतः । आश्रयत्वात्स्वाश्रयत्वाज्ज्ञान- त्वाद्दुर्विदत्वतः । सत्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः । नित्यसाधुगुण- व्याप्तियन्तृरूपत्वतः सदा' (ब्र.सू.अनु. १.४.२४. श्लो. ७६-७७) इति प्रकारान्तरेणार्थ उक्तः । ननूक्तरीत्याऽवसादनादिनिमित्तेन सन्निरुक्ता- निलयनाविज्ञानानृतशब्दवाच्यत्वे अवसादनान्तवत्त्वाज्ञानादिदोषिता स्यादित्यत आह - **यदिदं किञ्चेति** ॥ यदिदं किञ्च सन्निरुक्तादिशब्दार्थत्वमुक्तं तत्सर्वं सत्यं साध्वेवेत्याचक्षते वृद्धा इत्यर्थः । तदधीनत्वादिति न्यायेन अन्यगतावसादनादिकं प्रति स्वातन्त्र्यहेतुना तच्छब्दवाच्यत्वोक्तौ दोषाभावादिति भावः ॥ १४ ॥

बहुः स्यामित्यात्मनो बहुरूपात्मना भवनमुक्त्वा प्रद्युम्नरूपेण जगत्सृष्टिमुक्त्वा सृष्टस्य सत्ताशक्त्यादिप्रेरणाय रूपान्तरेण प्रवेशं चोक्त्वा इदानीं स्वरूपबहुभवनं श्लोकोक्त्या व्यनक्ति - **तदप्येष श्लोक इति** ॥

## उपनिषत्

**तदप्येष श्लोको भवति । असद्वा इदमग्रं आसीत् । ततो वै सदजायत ॥ तदात्मानꣳ स्वयंमकुरुत । तस्मात्तत् सुकृतमुच्यंत इति । यद्वै तत्सुकृतम् । रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनंन्दी भवति । कोह्येवान्यांत् कः प्राण्यात् यदेष आकाश आनंन्दो न स्यात् । एष ह्येवानंन्द याति ॥ १५ ॥**

**(खं.)** स्वरूपबहुभवनरूपेऽर्थेऽपीत्यर्थः । इदमग्रे अस्य जगतोऽग्रे पूर्वम् । असत् नञ्पूर्वस्य गत्यर्थस्य सीदते रूपम् । तथा चानासाद्यत्वरूपाप्राप्यत्व- हेतुना असन्नामा नारायणो मूलरूपी आसीत् । वै प्रसिद्धम् । ततो नारायणात्

मुमुक्षुणा आसाद्यत्वरूपप्राप्यत्वहेतुना सन्नामा वासुदेवोऽजायत प्रादुरभवत् । तद्वासुदेवाख्यं रूपमात्मानं स्वयं संकर्षणप्रद्युम्नादिरूपेणाकुरुत । तस्मात्स्वात्मानं रूपान्तरात्मत्वेन अकुरुतेति हेतोः तद्वासुदेवाख्यं रूपं सुकृतमुच्यत इत्यर्थः । इतिशब्दस्य इत्येष श्लोक इत्यन्वयः ॥

सन्नाम्नो मुमुक्षुसाध्यत्वं हेतूक्त्या व्यनक्ति - **यद्वै तत्सुकृतं रसो वै स इति** ॥ यदेतत्सुकृतं स वासुदेवः 'रसो वै' आनन्दरूपो वै । हिर्हेतौ । तत एव अयं ज्ञान्येव रसमेव लब्ध्वाऽऽनन्दीभवति नान्यथेत्यर्थः । तावता कथमस्याऽनन्दरूपत्वमित्यतो जगच्चेष्टकत्वयुक्त्या साधयति- **को हीति** ॥ यत् यदि एष आकाशः आदीप्तत्वहेतुना आकाशनामा (भगवान्) आनन्दो न स्यात् सुख (स्व) रूपो न स्यात् । तर्हि जगन्न चेष्टयेदिति शेषः ।

चेष्टारूपप्रवृत्तिहेतूनां रागद्वेषदुःखोद्रेकसुखोद्रेकरूपाणां चतुर्णां मध्ये 'निरनिष्टो निरवद्यः' इत्यादिश्रुत्या आद्यत्रयस्याभावनिश्चयेन सुखोद्रेकस्याप्यभावे जगत्प्रवृत्तिनिर्हेतुका नोत्पद्येत । उत्पद्यते च । अतो भवति जगत्प्रवर्तक आनन्दरूप इति ॥ माऽस्त्वयं जगत्प्रवतर्क इत्यत आह- **को हीति** ॥ अयं चेन्न चेष्टयेत्तर्हि इति शेषः । को ह्येवान्यात् । अन चेष्टायां चेष्टयेत् । कः प्राण्यात् । प्रकृष्टचेष्टां यज्ञदानादिप्रेरणां कुर्यात् । न कोऽपि । अतो जगन्निश्चेष्टमापद्येतेति । कार्यानुसारात् कारणस्य महाप्रवृत्त्या महानन्दरूपोऽयमिति भावः । परेषां सुखहेतुत्वाच्चायं सुखोद्रिक्त इत्याह - **एष ह्येवाऽनन्द यातीति** ॥ अखिलमानन्दयति हि यतोऽतश्चाऽऽन्दरूप इति ॥ १५ ॥

ज्ञान्येव मुच्यते न त्वज्ञ इत्युपसंहरन् प्रतिष्ठितमेव ज्ञानं मुक्तिहेतुरित्याह- **यदा ह्येवैष इति** ॥

## उपनिषत्

**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति। भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति॥ १६॥**

**(खं.)** तस्मादित्यादौ योज्यम्। हेत्वर्थो वा हिशब्दः। रसं लब्ध्वैवाऽऽनन्दीभवति तल्लब्धिश्च तन्महिमज्ञानादेव यस्माद्भवति तस्मात्। अदृश्ये साकल्येन ज्ञानागोचरे। अनात्म्ये आत्मनो जीवस्येमे गुणा आत्म्याः तद्रहिते जीवगुणहीने। आत्मैवात्म्यं स्वामी तद्रहिते वा। अनिरुक्ते साकल्येन निर्वचनागोचरे। अनिलयने अनन्याश्रये एतस्मिन् हरौ अभयं यथा भवति तथा ध्यानरूपां प्रतिष्ठां विन्दते लभते। अथानन्तरं स उपासकः अभयं भगवन्तं गतः प्राप्तो भवति नाज्ञ इत्यर्थः। न केवलं सम्यज्ज्ञानाभावे परप्राप्त्यभावः। विपरीतज्ञानेनानर्थप्राप्तिश्चेत्याह - **यदा ह्येवैष इति**॥ उदरम् उत् उत्कृष्टः अः अकारवाच्यो विष्णुः येभ्यो जीवेभ्यः ते उदाः जीवा विष्णुतो नीचा इत्यर्थः। मयूरव्यंसकादयश्चेति समासः। तेषु जीवेषु रमत इत्युदरं जीवेषु परस्परं विद्यमानम् अन्तरं भेदमेतस्मिन्विष्णौ एषः ज्ञान्यज्ञो वा कुरुते मन्यते भगवद्रूपाणामन्योन्यं मूलरूपस्य च भेदं जानीते। अथानन्तरमेव तस्य भयं भवति। कुत एवमेतावन्मात्रेण भयमित्यतो भगवतः सामर्थ्यमाह- **तत्त्वेवेति**॥ तदेव तु ब्रह्म विदुषः ज्ञानिनः अमन्वानस्याज्ञानिनश्चेति सर्वस्य भयं भयंकरं भवति। एतावान्विशेषः - विदुषो यावन्मुक्ति किञ्चिद्भयकृत् पश्चादभयकृत्। अज्ञस्य संसारभयकृत्। विपरीतज्ञस्य तु महाभयकृदिति। विदुषोऽपि भयकृदित्युक्तेऽर्थे श्लोकं प्रमाणयति- **तदपीति**॥ तत्रोक्तार्थे एष

श्लोकोऽपि भवतीत्यर्थः । अस्मात् अस्य ब्रह्मणः भीषा भयेन वातः पवते भीषोदेतीत्यत्राप्यस्मादित्यन्वेति । अग्निः पचनादिव्यापारं करोति । इन्द्रः त्रैलोक्यपालनवर्षणादिव्यापारं करोतीति च योज्यम् । पञ्चमो मृत्युः यमोऽपि स्वव्यापारकरणाय धावति । भीषाऽस्मादित्यनुषङ्गः । एतच्चोपलक्षणम् । सर्वेऽपि देवादयः अस्य भयेनैव स्वस्वव्यापारान्कुर्वन्तीत्यपि ध्येयम् । इत्येष श्लोक इति इतिपदस्यान्वयः ।। १६ ।।

पूर्वं ज्ञानिनः सर्वेऽपि मुच्यन्ते तत्रापि कश्चिदेव सम्यगिति उकारेण संक्षिप्योत्तरमुक्तम् । तदिदानीं विदुषामुक्तं भयकर्तृत्वम् आमुक्त्येवेति ज्ञापयितुं विवृणोति - **सैषाऽऽनन्दस्य मीमांसा भवतीत्यादिना** ।।

## उपनिषत्

**सैषाऽऽनन्दस्य मीमा॑ꣳसा भ॒वति । युवा स्यात्साधु यु॑वाऽध्या॒यकः । आशिष्ठो दृढिष्ठो॑ बलि॒ष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य॑ पू॒र्णा स्यात् । स एको मानुष॑ आन॒न्दः । ते ये शतं मानुषा॑ आन॒न्दाः । स एको मनुष्यगन्धर्वाणांमान॒न्दः । श्रोत्रियस्य चाकामहतस्य ।। १७ ।।**

**(खं.)** यद्वा ब्रह्मणो यज्जगच्चेष्टकत्वादिना पूर्णानन्दत्वमुक्तम्, तज्ज्ञानिनां मुक्तानां च सुखतारतम्योक्तिपूर्वं विवृणोति - **सैषेति** ।। एष ह्येवाऽनन्द यातीत्यानन्दयितृत्वमुक्तम् । तन्मुक्तावेव मुख्यमिति तत्र सर्वेषां किमेकधा नैकधेति विचारो भवति । एवं विचारे अनेकधेत्युच्यते । तत्र मानुषोत्तममारभ्य विरिञ्चिपर्यन्तम् आनन्दतारतम्यं वक्तुं मनुष्योत्तमचक्रवर्त्यानन्दं पूर्वावधिभूतं वक्तुं मुक्तचक्रवर्तिनो विशेषणान्याह- **युवा स्यादित्यादिना** ।। युवा 'यु मिश्रणे' कर्मणि क्विप् । वातेः कनिन् । युश्चासौ वा च युवा विष्णुना सह गच्छतीति युवा । 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्याति' इति श्रुतेः । साधुभिः गुणैर्युक्तत्वात् साधुयुवा । साधुपदोपपदाद् 'यु मिश्रण' इत्यतो वा युजेर्वा

क्वनिप् । जलोपः छान्दसः । अनुव्याख्याने तु 'युवा नित्यतरुणः । साधुना विष्णुना युतः साधुयुवा' इत्युक्तम् । आध्यायकः आङ्ध्युपसर्गद्वयपूर्वकात् 'इङ् अध्ययने' इत्यतो ण्वुल्प्रत्यये अकादेशे वृद्ध्यायादेशयोः निष्पत्तेः । सम्यगध्ययनकर्तेत्यर्थः । सम्यक्त्वं च मुक्त्याख्याध्ययनफलवत्त्वम् । आ समन्तात् शमस्येत्याशः । अतिशयेन आशः आशिष्ठः नित्यपूर्ण-सुखवानित्यर्थः । अतिशयेन दृढो दृढिष्ठः 'र ऋतो हलादेर्लघोः' इति रभावाभावः छान्दसः । अतिशयेन बली बलिष्ठः । युवा स्यादित्यादेः यदि मुक्तः स्यादित्यर्थः । तस्यैवंरूपविशेषणयुक्तस्य मुक्तचक्रवर्तिनः त्रेतायुगे संसारदशायामियं सर्वा पृथिवी वित्तस्य वित्तेन पूर्णा स्यात् । तदा तस्य यत्सुखं स एको मानुष आनन्दः । मनुष्यमुक्तचक्रवर्तिसम्बन्धी एक आनन्द इत्यर्थः । ते प्रसिद्धाः ये शतं मानुषा मनुष्यमुक्तचक्रवर्तिसम्बन्धिनः आनन्दाः स एको मनुष्यगन्धर्वाणां मुक्तानामानन्द इत्यर्थः ॥ १७ ॥

मुक्तत्वज्ञापनाय विशेषणद्वयमाह - **श्रोत्रियस्येति** ॥

## उपनिषत्

**ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देव-गन्धर्वाणामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोक-लोकानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानां-मानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ॥ १८ ॥**

**(खं.)** श्रोत्रियाणामकामहतानां चेति वचनव्यत्ययेन योज्यम् । एवमग्रेऽपि सर्वत्र विशेषणद्वयस्य वचनव्यत्ययेन पूर्वोक्तसामानाधिकरण्यं ध्येयम् । यद्यप्येकवचन-चशब्दयोः स्वारस्यानुरोधेन पूर्वोक्तबहुवचनान्तवाक्यं

संसारिपरम् उत्तरमेकवचनान्तोपेतवाक्यं मुक्तपरमिति भिन्नविषयं वाक्यद्वयमिति व्याख्यानं स्वरसम् । तथैव ज्ञानपादे सुधानुव्याख्यानयोः बृहद्भाष्ये चामुक्तादमुक्तस्य मुक्तान्मुक्तस्य तारतम्यमाहेत्युक्तम् । तथाऽपि परैस्सर्वममुक्तविषयतयैव व्याख्यातमिति तद्व्युदासायैकविषयत्वेऽपि मुक्तपरत्वमेव युक्तम् । तल्लिङ्गानां श्रोत्रियत्वाकामहतत्वादीनां श्रवणादित्यभ्युपेत्यवादेनेति सुधायामेवोक्तमस्य तात्पर्यम् । ये साक्षाद्देवप्रेष्याः ते देवगन्धर्वाः तेषां मनुष्यगन्धर्वापेक्षया शतगुणोत्कृष्ट आनन्द इत्यर्थः । एवमग्रेऽपि पूर्वपूर्वेभ्य उत्तरोत्तरं शतगुणोत्कर्षो ध्येयः । **चिरलोकेति** ॥ चिरकालीनो लोकः स एव लोको येषां ते चिरलोकलोकाः तेषां पितॄणामित्यर्थः । देवेष्वनाख्याता अकथिता या देवताः देवकुले जाताः ते आजानजदेवाः तेषामित्यर्थः ॥ १८ ॥

के ते कर्मदेवाः कुतश्च कर्मदेवत्वं तेषामित्यत उक्तम् - **ये कर्मणेत्यादि** ॥

## उपनिषत्

**ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाऽकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं बृहस्पतेरानन्दाः ॥ १९ ॥**

**(खं.)** ये बल्यादयः । कर्मणा मध्ये देवान् देवत्वम् अपियन्ति प्राप्नुवन्ति ते कर्मदेवा इत्यर्थः- **देवानामिति** ॥ सृष्ट्यादौ देवत्वं प्राप्तानां तत्त्वाभिमानिदेवानामित्यर्थः । **इन्द्रस्येति** ॥ इन्दुं रावयतीति व्युत्पत्त्या दक्षप्रजेश्वरस्येत्यर्थः । **बृहस्पतेरिति** ॥ महेन्द्रत्वहेतुना बृहंश्चासौ पतिश्चेति बृहस्पतिशब्दितपुरन्दरस्येत्यर्थः ॥ १९ ॥

## उपनिषत्

**स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाऽकामहतस्य ॥ २० ॥**

**(खं.) प्रजापतेरिति ॥** प्रजननेशितृत्वहेतुना प्रजापतिनाम्नो रुद्रस्येत्यर्थः । **ब्रह्मण इति ॥** चतुर्मुखस्येत्यर्थः । अत्र आनन्दनीचोच्चतोक्तिरुपलक्षणं ज्ञानभक्तिबलादावपि ध्येयम् ॥ २० ॥

एवं लक्षणवाक्यस्थसत्यादिपदत्रयार्थम् 'आत्मन आकाशः' इत्यादिप्रकरणषट्केन विवृत्य 'यो वेद निहितं गुहायाम्' इत्युक्तवेदनं कथमित्यतो न जीवैक्येन किन्तु ततो भेदेनेति 'असद् ब्रह्मेति' श्लोकेनोक्त्वा 'अथातोऽनुप्रश्नाः' इत्यादिना 'सोऽश्नुते' इत्युक्तो ज्ञानिनः सर्वकामभोगः सर्वज्ञानिनां समान उत कस्यचिदेव सम्यगिति कृतप्रश्नस्य 'सैषाऽऽनन्दस्य' इत्यादिनोत्तरमुक्त्वा अथेदानीं ब्रह्मज्ञानं न तद्रूपादौ भेदेन' इत्युदरमन्तरं कुरुत' इत्यादिनाऽभिहिते कथं तर्हीत्यतः सर्वत्र स्थितभगवद्रूपाणामभेदेनैव जीवादिभ्यो भेदेनैव च ज्ञानं पुमर्थहेतुर्नान्यथेति भावेनाऽऽह- **स यश्चाय-मिति ॥**

## उपनिषत्

**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रा-मति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रा-मति । एतमानन्दमयमात्मान-मुपसङ्क्रामति ॥ २१ ॥**

**(खं.)** 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यत्र यत्प्रसादात् स्वरूपानन्दावाप्तिः ब्रह्मादीनामुक्ता स प्रसिद्धः योऽयं पुरुषे सर्वजीवसमूहे

यश्चासौ आदित्यपदोपलक्षितदेवेषु स्थितः स एव। सर्वैः स्वातन्त्र्यादिगुणैः विशिष्टः योऽधिकारी एवंवित् जानन्। जीवांश्च तारतम्येन च वित्। स अस्माल्लोकात् भौतिकदेहात् प्रेत्य तं देहं त्यक्त्वा निर्गत्य।एतमन्नमयात्मानम् अनिरुद्धमुपसङ्क्रामति प्राप्नोति। एवं प्रद्युम्नादीनि प्राणमयादिशब्दितान्यपि रूपाणि प्राप्नोतीत्यर्थः ॥ २१ ॥

पूर्णानन्दत्वेनापि तज्ज्ञानमावश्यकमानन्दमयप्राप्ताविति भावेनाऽऽह - **तदप्येष इति ॥**

## उपनिषत्

**तदप्येष श्लोको भवति। यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति। एतꣳ ह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳस्पृणुते। य एवं वेद। इत्युपनिषत्॥ ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥२२॥**

॥ **इति द्वितीया वल्ली सम्पूर्णा** ॥ २ ॥

**(खं.)** पूर्णानन्दत्वज्ञानिन एव तत्प्राप्तिरित्यर्थे श्लोकोऽप्यस्तीत्यर्थः। यतो यस्मात् ब्रह्मानन्दतो वाचो वचनानि मनसा सह निवर्तन्ते। अप्राप्य साकल्येनाविषयीकृत्य ब्रह्मण आनन्त्यहेतुना वाङ्मनसागोचरमानन्दं विद्वान्। कुतश्चन न बिभेति मुक्तो भवतीत्यर्थः। ज्ञानिनोऽपि पूर्वार्जितपुण्यपापरूपकर्मसत्वात् कथं ब्रह्मप्राप्तिरित्यत आह- **एतꣳह वाव न तपतीति ॥** अहं किं साधु पुण्यं नाकरवं न कृतवान्। पापं वा किमकरवमित्येवंरूपेण पश्चात्तापेन। एतं ज्ञानिनं कर्म न तपति तापकरं न भवतीत्यर्थः। वावेत्यवधारणे नैवेति। अत एवोक्तं पूर्वश्लोके- 'कुतश्चन न बिभेति' इति। कुतो नेत्यत

आह- **स य इति ॥** य आत्मानम् परमात्मानम् एवमुक्तरीत्या विद्वान् जानन्नास्ते । स एते पुण्यपापे स्पृणुते जहाति । प्रियाप्रियेषु नृष्विति शेषः । 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यादेः । तदेव पुनराह- **उभे इति ॥** य आत्मानम् एवमपरिच्छिन्नानन्दादिस्वरूपत्वेन वेद एष ज्ञानी उभे एते पुण्यपापे स्पृणुते जहाति हि यतोऽतस्तस्य कर्मकृततापो नेति । यद्वा य एवं वेद ज्ञानिनः पुण्यपापत्यागात्तत्कृततापो नास्तीति वेद एषोऽपि पुण्यपापे आत्मानम् आत्मनः स्पृणुते जहातीति । उपसंहरति - **इत्युपनिषत् रहस्यमुक्तमिति ॥** यथा शान्त्या ब्रह्मविद्योपक्रम्य समापिता तामन्तेऽपि प्रचयसिद्ध्यर्थं पठति- **सह नाविति ॥** २२ ॥

॥ इति ब्रह्मवल्यर्थसङ्ग्रहः ॥

## ॥ अथ भृगुवल्ली ॥

ब्रह्मवल्युक्तार्थे संवादितया काञ्चनाऽऽख्यायिकां प्रागुक्तशान्तिपठनपूर्वकमाह- **सह नावित्यादिना ॥**

### उपनिषत्

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः । ॐ भृगुर्वै वारुणिः। वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेति स ॥ १ ॥**

**(खं.)** वारुणिः वरुणस्यापत्यं भृगुः वरुणं पितरमुपससार उपसादितवान् । किमिति ? अधीहि अध्यापय । भगवः भगवन् । 'मतुवसो रुः सम्बुद्धौ

छन्दसि' इति भगव इति साधु । ब्रह्मोपदिशेत्युपसत्तिमगादित्यर्थः । तस्मै भृगवे वरुण एतत् वक्ष्यमाणं रूपाष्टकं प्रोवाच । तदाह - **अन्नमिति** ॥ अन्नमयं प्राणमयं चक्षुर्मयं श्रोत्रमयं मनोमयं वाङ्मयं विज्ञानमयम् आनन्दमयं चेत्येवं नामैकदेशे नामग्रहणन्यायेनायं निर्देशो ध्येयः । विज्ञानमयानन्दमयावप्युपलक्ष्यौ । एतेन ब्रह्मवल्यां पञ्चरूपोक्तिरुपलक्षणम् । चक्षुर्मयश्रोत्रमयवाङ्मया अपि ग्राह्या इत्युक्तं भवति । तथा ह्युक्तं वाधूलशाखायां 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा वाङ्मयः । तस्माद्वा एतस्माद्वाङ्मयात् अन्योऽन्तर आत्मा चक्षुर्मयः। तस्माद्वा एतस्माच्चक्षुर्मयात् । अन्योऽन्तर आत्मा श्रोत्रमयः । तस्मात्प्राणमयः । तस्मान्मनोमयः । तस्माद्विज्ञानमयः तस्मादानन्दमयः' इति । भगवत्यन्नमयादेर्निरुक्तिः प्राग्वज्ज्ञेया । चक्षुर्मयत्वादेस्तु 'पूर्णदर्शनशक्तित्वाच्चक्षुर्मय इतीरितः' इत्यैतरेयभाष्योक्तरीत्या पूर्णदर्शनशक्तित्वपूर्णश्रवणशक्तित्वपूर्णवक्तृत्वशक्तिकत्वरूपा वा । 'चक्षुः स चष्टे यद्विष्णुः' इत्येतद्भाष्योक्तदिशा वा निरुक्तिर्ध्येया । कुत एतद्रूपाष्टकस्य ब्रह्मत्वमित्यतो ब्रह्मप्रश्नोत्तरत्वेनैव सिद्धेऽपि ब्रह्मत्वे ब्रह्मलक्षणमप्येष्वस्तीत्याह - **तꣳहोवाच यतो वा इति** ॥ यत्प्रयन्ति प्रलये । यदभि स्वेच्छया संविशति मुक्तौ । तद्विजिज्ञासस्व । तद्विषयकश्रवणमनननिदिध्यासनरूपजिज्ञासां कुरु । कुतः ? तद् ब्रह्म अत (तद्विजिज्ञासस्व)इत्युवाचेति पूर्वेणान्वयः ॥ १ ॥

ततः किं जातमित्यत आह - **स तप इति** ॥

## उपनिषत्

**तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं**

**प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त१ँ होवाच । तपसा ब्रह्म विजिज्ञासस्व ॥ २ ॥**

**(खं.)** एवमुपदिष्टो भृगुः । तप आलोचनम् अतप्यत अकरोत् । स तपस्तप्त्वा आलोचनं कृत्वा । अन्नम् अन्नमयमनिरुद्धं ब्रह्मेति व्यजानात् । साक्षात्कृतवान् कथमित्यतो जगज्जन्मादिकर्तृत्वरूपगुरूपदिष्टलक्षणवत्त्वेनेत्याह - **अन्नाद्ध्येवेति** ॥ अन्नमयादेव हीति । पुनः किमकरोदित्यतो द्वितीयरूपमपि साक्षात्कर्तुं गुर्वनुज्ञार्थं पुनर्गुरुमुपसाद्यानुज्ञामादाय तपःशब्दितमालोचनं कृत्वा प्राणमयाख्यं द्वितीयं प्रद्युम्नरूपमपरोक्षीकृतवानित्याह-**तद्विज्ञायेत्यादिना** ॥ **अधीहीति** ॥ अनुज्ञां देहीत्यर्थः । अनुजानीहीत्येव वाच्ये अन्तर्णीतण्यर्थतया अधीहीत्युक्तिः विनयप्रदर्शनाय । भगवः भगवन् ब्रह्म प्राणमयाख्यं रूपं ध्यानेन साक्षात्कर्तुमिति शेषः । तपसा ज्ञातानुसन्धानरूपालोचनेन ॥२॥

## उपनिषत्

**तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंवि-शन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त१ँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंवि-शन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त१ँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभि-संविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो**

**ब्रह्मेति । त१ँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात् ।**

**आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ॥ ३ ॥**

**(खं.) तपो ब्रह्मेति ।** ज्ञानरूपं ब्रह्मेत्यर्थः 'तपसो ब्रह्मज्ञानहेतुत्वात् तपो ब्रह्मेत्यभेदोपचारः' इति ग्रन्थान्तरे । अत्र प्राणं प्रयन्ति प्राणमभिसंविशन्तीत्यर्थः । एवमन्नप्राणप्रकरणद्वयानन्तरं 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति । तं होवाच तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा चक्षुर्ब्रह्मेति व्यजानात् । चक्षुषो ह्येव खल्विमानि भूतानि जायन्ते' इत्यादिरूपेण चक्षुर्मयश्रोत्रमयवाङ्मयप्रकरणानि यथोद्देशं ध्येयानि । त्रीणि रूपाणि कानीत्याकांक्षायां प्राज्ञैरुपदेष्टव्यानि मनः प्रभृतिशब्दितसङ्कर्षणादिरूपत्रयपरतया प्रकरणत्रयमपि व्याख्येयम् ॥ ३ ॥

अत्रान्नादौ सर्वत्राब्रह्मणि ब्रह्मत्वमुपास्त्यर्थमुक्तमिति भ्रमनिरासायाऽऽह-**सैषेति ॥**

## उपनिषत्

**सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ४ ॥**

**(खं.)** भार्गवी भृगुणाऽनुशिष्टा । वारुणी वरुणेनोपदिष्टा । 'सैषा अन्नं प्राणम्' इत्यादिनोक्ता विद्या परमे व्योमन् व्योम्नि अच्छेद्यत्वादिना व्योमनिभे हरौ प्रतिष्ठिता तत्परेति यावत् । ब्रह्मप्रश्नोत्त(रत्वात्)रात् । 'ब्रह्मलक्षणात्'

'ब्रह्मशब्दाभ्यासात्' 'तपसाऽपरोक्षीकृतत्वलिङ्गाच्च' इति भावः । 'सुपां सुलुक्' इत्यादिना सप्तम्या लुकि 'न ङि सम्बुध्योः' इति नलोपाभावे व्योमन्निति साधु । अन्नादिरूपाष्टकस्य ब्रह्मत्वज्ञानिनः फलमाह - **य एवं वेदेत्यादिना** ।। योऽधिकारी एवमुक्तरूपाष्टकं जगज्जन्मादिहेतुत्वलक्षणयुक्तं ब्रह्मत्वेन वेद स इति शेषः । प्रतितिष्ठति मुक्तस्सन् हरौ प्रतिष्ठितो भवति । अन्नवान् रक्षकत्वेनान्ननामकविष्णुमान् तद्रक्ष्य इति यावत् । अन्नादः अन्ननामकं हरिम् अत्ति उपजीवतीत्यन्नादः । प्रजया शिष्यप्रजया पशुभिः ब्रह्मवर्चसेन च महान् भवति । कीर्त्या च महान् भवतीत्यर्थः ।। ४ ।।

अन्नवानन्नाद इति प्रकृतान्नाख्यभगवन्निष्ठाः बह्वीः विद्याः व्रतपूर्वमाह- **अन्नमित्यादिना** ।।

## उपनिषत्

**अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति-तिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या । अन्नं न परिचक्षीत । प्रत्याचक्षीत । तद् व्रतम् ।। ५ ।।**

**(खं.)** अन्नं भगवन्तं न निन्द्यात् । तद् व्रतं ज्ञानिनः सुखेप्सोः व्रतमित्यर्थः। प्राणः देहस्थप्राणगतः प्राणनामा हरिः । अन्नं वै अन्ननामको वै । शरीरं शरो जीवः तम् ईरयति प्रेरयतीति शरीरं जीवप्रेरकं जीवस्थं रूपम् अन्नादम् अन्नाख्यरूपानुभवितृ । शरीरम् अन्नं प्राणोऽन्नाद इत्यपि योज्यम् । द्वयोरप्यन्नत्वमन्नादत्वं च व्यनक्ति- **प्राण इति** ।। प्राणे प्राणस्थे प्राणाख्यरूपे शरीरं शरीराख्यं जीवनियन्तृरूपं प्रतिष्ठितम् । शरीरे शरीराख्ये रूपे प्राणः प्राणाख्यो हरिः प्रतिष्ठितः । अन्योन्यान्नत्वमन्योन्यप्रतिष्ठितत्वम् । उक्त-

मुपसंहरति - **तदेतदन्नमन्ने प्रतिष्ठितमिति** ॥ तदेतद्रूपद्वयम् अन्योन्यमन्नमन्ने प्रतिष्ठितं चेति । अन्योन्यभोग्यभोक्तृत्वशब्दितमन्योन्यप्रतिष्ठितत्वं लीलया हरेर्युक्तमिति भावः । तात्पर्यद्योतनाय तज्ज्ञानिनः फलमाह - **स य इति** ॥ स इत्यस्य प्रतितिष्ठतीत्यादावन्वयः । व्याख्यानं प्राग्वत् । अन्नं न परिचक्षीत । अन्नाख्यभगवत्परिवर्जनं न कार्यम् । **तद्व्रतम्** । वक्ष्यमाणब्रह्मज्ञानिन इत्यर्थः ॥ ५ ॥

## उपनिषत्

**आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या । अन्नं बहु कुर्वीत । तद् व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ६ ॥**

**(खं.)** 'आपो वाऽन्नम्' इत्यादेः प्राग्वद्योजनाध्याहारः । अप्स्वित्यादेः अन्नत्वादिविवृतिपरत्वम् अबादिपदानां तन्निष्ठभगवद्रूपपरत्वं च प्राग्वद्व्याख्येयम् । एवमग्रेऽपि । अन्नं बहु कुर्वीतेति । महदिति तत्र बहुमानबुद्धिः कार्या । तद्गुणान् तत्कर्माणि वा बहु कर्वीतेति । बहुगुणकर्मवत्त्वेन अन्ननामकं प्रतिपादयेदिति यावत् ॥ ६ ॥

## उपनिषत्

**न कञ्चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद् यया कया च विधया**

**बहून्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद् वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद् वै मध्यतोऽन्नꣳराद्धम् । मध्यतोऽस्मा अन्नꣳराध्यते । एतद् वा अन्ततोऽन्नꣳराद्धम् । अन्ततोऽस्मा अन्नꣳराध्यते । य एवं वेद ॥ ७ ॥**

**(खं.) न कञ्चन वसताविति ।** विद्यार्थित्वेन आगतस्य वसतौ वासविषये कञ्चन कमपि न प्रत्याचक्षीत प्रत्याख्यानं न कार्यमित्यर्थः । तस्माज्ज्ञातस्यान्नस्य प्रतिष्ठाहेतुत्वात् । यया कया च विधया येन केनापि विधिना अन्नं बहु बहुत्वेन मत्वा प्राप्नुयादन्नमित्यर्थः । अतिप्रयत्नेनापि विहितप्रकारेण बहुतरां भगवद्विद्यां प्राप्नुयादिति यावत् । अन्नाख्यरूपं बहुमन्यमानस्यान्नं प्रसीदत्येवेत्याह - **अराधीति** ॥ अस्मै अन्नं बह्विति मन्यमानस्य । 'अन्नम्' अन्नाख्यं भगवद्रूपम् । अराधि 'राध साध संसिद्धौ' सिद्धं भवतीति विद्वांस आचक्षते प्राहुरित्यर्थः । भगवदुपासने प्रयत्नः सदा कार्य इति फलभेदोक्तिपूर्वकमाह- **एतद्वा इति** ॥ मुखत उपक्रमात् ल्यब्लोपनिमित्ता पञ्चमी । बाल्यमारभ्य बाल्यवयसीति यावत् । एतदन्नाख्यं रूपम् । राद्धं सिद्धं तीव्रोपासनया विज्ञातं चेत् तदाऽस्मै उपासकाय मुखतः पादमारभ्य अन्नाख्यं रूपं राध्यते सिध्यति । पादावारभ्य शिरःपर्यन्तं सर्वावयवोपेतं रूपं दृश्यते । अतो बाल्य एव प्रथम एव वयसि प्रयत्नः कार्य इत्यर्थः । मध्यतः मध्ये वयसि अन्नं राद्धम् उपासनया येन ज्ञातम् अस्मै मध्यावयवो हरेरुपलभ्यते । अन्यदङ्गजातं तेजोमण्डलवदेव दृश्यते न सम्यक् । एतदन्नम् अन्ततः चरमवयसि येन राद्धम् उपासनया ज्ञातम् । अस्मै अन्ततः पादावेव राध्येते सिध्यतः पादावेवोपलभ्येते अन्यत्सर्वं तेजोमण्डलवदेव दृश्यते । न तु सम्यगित्यर्थः । एतज्ज्ञानिनोऽप्यन्नाख्यरूपसिद्धिः फलमित्याह- **य एवं**

**वेदेति** ।। एवं प्रथमादिवयस्येव प्रयतमानस्योक्तरूपभगवद्दृष्टिप्रकारम् । योऽधिकारी वेद सोऽपि भगवदुपासनया तद्दृष्टिं लभत इति योज्यम् ।।७।।

भगवदुपास्त्यन्तराण्याह - **क्षेम इति** ।।

## उपनिषत्

**क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्यु-पस्थे । सर्वमित्याकाशे ।। ८ ।।**

**(खं.)** वाचि वागिन्द्रिये क्षेमकृत्त्वहेतुना क्षेमनामको हरिरस्तीत्युपासीतेति सर्वत्र योज्यम् । काम्ययोजकत्वहेतुना योगनामा देहगतप्राणे । क्षेमकृत्त्वेन क्षेमनामाऽपाने । कर्मकृत्त्वेन कर्मनामा हस्तयोः । गतिदत्वेन गतिनामा पादयोः । विसर्गकृत्त्वेन विमुक्त्याख्यः पायौ अस्तीत्युपासीतेत्यर्थः । इति मानुषीः मनुष्यदेहसम्बन्धिन्यः समाज्ञाः उपास्तय उक्ता इत्यर्थः । अथेत्यर्थान्तरे । दैवीः दैव्यः समाज्ञा इत्यनुषङ्गः उच्यन्त इति शेषः । तृप्तिप्रदत्वेन तृप्तिनामा हरिः वृष्टौ वृष्ट्यभिमानिनि पर्जन्येऽस्तीति उपासीतेति शेषः । एवमग्रेऽपि । बलदत्वेन बलनामा विद्युति विद्युदभिमानिनि वायौ । यशः यशःप्रदत्वहेतुना यशोनामा पशुषु । यज्ञपश्वाभिमानिनि दक्षप्रजापतौ । ज्योतिःप्रदत्वेन ज्योतिराख्यः नक्षत्रेषु । प्रजातिः पुत्रः । अमृतं सन्ततिपरम्परा । आनन्दः सुखं प्रजासन्तत्यानन्दानां दातृत्वात्प्रजातिरित्यादिनामकः सन् उपस्थे उपस्थाभिमानिनि शिवे अस्तीत्यर्थः । सर्वदत्वेन सर्वनामा सन्नाकाशे प्रकृतावस्तीत्यर्थः ।। ८ ।।

प्रकृतौ स्थितस्य गुणानाह - **तत्प्रतिष्ठेति** ।।

## उपनिषत्

**तत् प्रतिष्ठेत्युपासीत। प्रतिष्ठावान् भवति। तन्मह इत्युपा-सीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः। तद् ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत। पर्येण म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः ॥ ९ ॥**

**(खं.)** तत् स्थापकत्वेन हेतुना प्रतिष्ठा इत्युपासीत । प्रतिष्ठावान् भवति स्थितिमान् भवति । तत् महः महत्त्वगुणयुक्तत्वात् मह इत्युपासीत । स ज्ञानादिना महान् भवति । तत् मान्यत्वहेतुना मन इत्युपासीत । मानवान् भवति पूज्यो भवतीत्यर्थः । तत् नम्यत्वहेतुना नम इत्युपासीत ।कामाः काम्यमाना अर्थाः अस्मै नम्यन्ते । नमन्ति आयान्तीत्यर्थः । तत् आकाशे स्थितं ब्रह्मेति पूर्णमित्युपासीत । ब्रह्मवान् रक्षकत्वेन तद्वान् वा स्वयोग्यपूर्तिमान् वा भवतीत्यर्थः। तत् आकाशस्थं ब्रह्मणो विरिञ्चस्य परिमरो मारक इत्युपासीत। एनं परि परितः स्थिताः द्विषन्तः सपत्नाः बाह्यशत्रवः म्रियन्ते प्राणान् जहति। ये अप्रिया भ्रातृव्याः देहस्थितशत्रवः कामक्रोधाद्याः तेऽपि म्रियन्ते ॥ ९ ॥

(वागादौ वृष्ट्यादौ च स्थितरूपाणां न भेदः)

वागादौ वृष्ट्यादौ स्थितरूपाणां भेदो न मन्तव्य इत्याह - **स यश्चेति ॥**

## उपनिषत्

**स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवं-वित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रम्य। एतं प्राणमयमात्मानमुपसङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य ।**

**एतमानन्द-मयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यंनु-सञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वुं । अहमन्नमहमन्न-महमन्नम् । अहमन्नादो२ऽहमन्नादो२ऽहमन्नादः । अह९श्लोककृदह९-श्लोक-कृदह९श्लोककृत् ॥१०॥**

**(खं.)** व्याख्यातमेतद् ब्रह्मवल्याम् । अन्नमयादिभगवद्रूपज्ञानिनस्तत्प्राप्ति-रुक्ता । तामनूद्य तदनन्तरस्थितिमाह - **स य एवंविदित्यादिना** ॥ एवंवित् उक्तरीत्या अन्नमयादिरूपज्ञानी विरिञ्चादिः लोकाद्देहात्प्रेत्य निर्गत्य । पञ्चरूपाप्तिरुपलक्षणम् । वाङ्मयादिरूपत्रयप्राप्तिरपि ध्येया । कामान्नी काम-भोगवान् कामरूपी इच्छाधीनरूपवान् इमान् लोकान् अनुसञ्चरन् । एतद्वक्ष्य-माणं सामगायन्नास्ते वर्तते । किं तत्सामेत्यत आह - **हा३वु इत्यादिना** ॥ भोग्यत्वहेतुना अहमन्नम् । अहमन्नादो यथेष्टान्नभोक्ता । श्लोककृत् हरेः कीर्तिप्रकाशकृत् । हा३वु इत्यादौ त्रिस्त्रिरुक्तिः सामत्वात् । सुखातिशयास्वादनाद्वेति ध्येयम् ॥ १० ॥

ऋतस्य ज्ञानरूपस्य विष्णोः प्रथमजोऽहमस्मि । किं मनुष्येभ्यः पूर्वं जात इत्यत आह - **पूर्वमिति** ॥

## उपनिषत्

**अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्त-मा३द्मि । अहं विश्वं भुवनमभ्यंभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् । ओं सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥ ॥ ११ ॥**

॥ इति तृतीया वल्ली सम्पूर्णा ॥

**(खं.)** देवेभ्यः पूर्वं जातोऽस्मीत्याह मुख्योऽधिकारी विरिञ्चः अमृतस्य मुक्तवर्गस्य नाभिः आश्रयः। योऽधिकारी माः प्रमाः विष्णुमहिमप्रतिपादकप्रमाणानि ददाति भक्तेभ्य उपदिशति। स इदेव इत्थमेव जीवन्मुक्तदशायां मा माम्। अवाः आगच्छति। 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र.सू. ४.३.७) इति सूत्रात्। 'वा गतिगन्धनयोः' इत्यस्येदं रूपं अवा इति। अहमन्नं हरेरिति योज्यम्। मुक्तस्यावरोपजीव्यत्वाद्वा। अदन्तं जीवजातम् अहमद्मि। ममान्नं सर्वजीवा इत्यर्थः। अहं विश्वं भुवनं सर्वं जगत्। सर्वैर्गुणैः अभ्यभवम् अभिभूतवानस्मि श्रेष्ठोऽस्मीत्यर्थः। तर्हि किं स्वतन्त्रः नेत्याह- **सुवर्णज्योतीरिति**॥ सुवर्णः शोभनोत्तमानन्दरूपः स्वर्णकान्तिश्च हरिः ज्योतिः प्रेरकः अस्येति स तथोक्तः। य एवं वेद। सम्यक् जानाति विरिञ्चः। स एव मुख्यज्ञानी। एवं साम गायन्नास्त इति पूर्वेणान्वयः। यद्वा वेदेत्युत्तमपुरुषैकवचनम्। योऽहमेवं वेद सोऽहं सुवर्णज्योतीरिति योजना। इत्येवं प्रकारेण उपनिषत् रहस्यमुक्तमित्युपसंहारः॥ ११॥

'तैत्तिरीयोपनिषदो भाष्याद्युक्तार्थसङ्ग्रहः।
राघवेन्द्रेण यतिना कृतः सज्जनसंविदे॥'

**॥ इति श्रीराघवेन्द्रयतिविरचितः श्रीतैत्तिरीयोपनिषत्खण्डार्थः सम्पूर्णः॥**

**॥ श्री कृष्णार्पणमस्तु॥**

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# मुण्डकोपनिषद्भाष्यम्

## (आथर्वणोपनिषद्भाष्यम्)

(आथर्वभाष्ये मङ्गलाचरणम्)

**आनन्दमजरं नित्यमजमक्षयमच्युतम् ।**
**अनन्तशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ॥**

### श्रीनिवासतीर्थविरचिता पदार्थदीपिका

आनन्दादिगुणोद्रिक्तं स्वाश्रितानन्ददायकम् ।
आनन्दमुनिपं व्यासं स्वानन्दाय भजे मुहुः ॥ १ ॥
श्रीमदानन्दतीर्थार्यचरणावाश्रयेऽनिशम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सदा ॥ २ ॥
येन वेदान्तभाष्याणि विवृतानि महात्मना ।
तं वन्दे व्यासतीर्थाख्यं जयराजनिषेवकम् ॥ ३ ॥
वेदव्यासकरोद्भूतान् वेदेशाभिधयोगिनः ।
छान्दोग्यभाष्यसट्टीकाकर्तॄन् वन्दे निरन्तरम् ॥ ४ ॥
श्रीमध्वाास्त्रं समुदीर्य मेऽस्मिन् विश्वासहेतोः समदर्शयन् ये ।
प्रदानसूत्रप्रतिपाद्यभावान् वन्दे गुरूंस्तान् यदुवर्यसञ्ज्ञान् ॥ ५ ॥
अथैतत्कृपया श्रीनिवासाख्यायुतसूरिणा ।
आथर्वणोपनिषदो भाष्यं व्याक्रियते मया ॥ ६ ॥

इह विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्तिहेतुभूतभगवत्स्वरूपज्ञापनाय प्रवृत्तापीयमाथर्वणी मन्त्रोपनिषदन्यैरन्यथाव्याख्यातत्वेन न तज्ज्ञापन-

समर्थेति मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद्व्याचिख्यासुः स्वयम् अन्तरायविधुरोऽप्यनवरतमीश्वरप्रवणकायकरणवृत्तिरपि निरन्तराय-प्रारिप्सितपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परावगत-मेतदुपनिषत्प्रतिपाद्यगुणवद्भगवत्स्तुतिनतिरूपं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादावुपनिबध्नाति- **आनन्दमिति** ॥ अहं पुरुषोत्तमं नित्यं सर्वदा नमस्ये नमामीति सम्बन्धः । नित्यं नमस्य इत्यनेन न मम पुरुषोत्तमवन्दनं प्रत्यूह-विरहादिप्रयोजनोद्देशेन किन्तु स्वभावादेवेति सूचयति । यद्वा नित्यं स्वरूपतः । अजमुत्पत्तिरहितम् । अत एवाजरम् । स्वरूपनित्यत्वेऽपि गुणद्वारा नाशः किन्न स्यादित्यत उक्तम्- **अच्युतमिति** ॥ गुणतश्च्युति-रहितमित्यर्थः । अक्षयं देहतोऽपि क्षयरहितम् । तत्र हेतुमाह- **आनन्दमिति** ॥ आनन्दात्मकविग्रहवन्तमित्यर्थः । यद्वा गुणानां च्युत्यभावेऽपि ह्रासः किन्न स्यात् स्वोत्तमद्रोहादिना मौक्तमानुषानन्दादिवदित्यत उक्तम्- **अक्षयमिति** ॥ अर्शआद्यजन्तोऽक्षयशब्दः । तथा च क्षयो ह्रास एषामस्तीति क्षयाः गुणास्तैः रहितोऽक्षयस्तमित्यर्थः । स्तुतिपदानां च विशेष्यप्रशंसैव प्रयोजनमिति प्रसिद्धमेव । वक्ष्यते चैतत् । 'आनन्दरूपममृतं यद्विभाति' इत्यानन्दत्वम् । 'विरजं ब्रह्म' इत्यत्र वर्णव्यत्यासेनाजत्वा-द्युक्तार्थाद्वा अजरत्वम् । 'नित्यं विभुम्' इति नित्यत्वम् । 'स बाह्याभ्यन्तरो ह्यजः' इत्यजत्वम् । 'यया तदक्षरमधिगम्यते' 'तदव्ययम्' इत्यत्राक्षर-शब्दाव्ययशब्दाभ्यामक्षयत्वमच्युतत्वं च । 'यथा सुदीप्तात्' इत्यादिना सृष्ट्याद्युक्ताऽनन्तशक्तित्वम् । 'यः सर्वज्ञः' इति सर्वज्ञत्वं चेत्यवगन्त-व्यम् । अधिकृतैव हि देवता स्वविषयकग्रन्थप्रबोधादिकं सम्पादयतीति भावः । अनेन पुरुषोत्तमो विषयस्तत्प्राप्तिः प्रयोजनम् । योग्यस्तदिच्छु-रेवाधिकारी यथायोग्यं सम्बन्ध इति सूचनेन निर्विषयत्वादिप्रयुक्ताना-रम्भणीयताशङ्का परिहृतेति ज्ञातव्यम् ॥

## उपनिषत्

(आथर्वणोपनिषद आगतिक्रमः)

ॐ ॥ ब्रह्मा देवानां प्रथमः सम्बभूव
विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

## भाष्यम्

'मनोर्वैवस्वतस्याऽदावथर्वा ब्रह्मणोऽजनि ।
'मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च ॥

'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः [१]सुतः ।
'सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः ॥'

इति ब्रह्माण्डे ॥

**श्री.टी.-** तत्र 'अथर्वाय ज्येष्ठपुत्राय प्राह' इत्यत्रार्थेऽथर्वणस्य चतुर्मुख-ज्येष्ठपुत्रत्वमुच्यते तदयुक्तम् । पुराणादौ क्वचिच्छिवस्य ज्येष्ठपुत्रत्वोक्तेः । क्वचिच्च सनकादीनामतो विरोध इत्याशङ्क्य व्यवस्थोक्त्या तं विरोधं परिहरति- **मनोरिति** ॥ अन्तर इति शेषः । वैवस्वतस्य मनोरन्तरे । आदौ ब्रह्मणश्चतुर्मुखस्य सकाशादथर्वाऽजनि । तथा चाथर्वा वैवस्वत-मन्वन्तरे ज्येष्ठपुत्र इत्यर्थः । अस्यर्षेरथर्वेति अथर्व इति च नामद्वय-मस्तीत्युभयथापि व्यवहारो युक्त इति द्रष्टव्यम् । ननु वैवस्वतमन्वन्तरेऽपि क्वचिन्मित्रावरुणयोः क्वचित्प्रहेतिहेतिसञ्ज्ञकराक्षसयोर्ज्येष्ठपुत्रत्वमुच्यतेऽतो विरोध इत्यत आह- **मित्रश्चेति** ॥ अथो अथर्वणः उत्पत्त्यनन्तरं मित्रादय-

१. स्मृतः. क.

श्चत्वारो जाताः । अतो वैवस्वतमन्वन्तरेऽथर्वानन्तरमेते ज्येष्ठपुत्रा इति भावः । शिवस्य प्रथमपुत्रत्वोक्तिविरोधं परिहरति- **ब्रह्मण इति** ॥ प्रथमे कल्पे । वराहकल्पापेक्षया प्रथमे पूर्वपरार्धस्यान्तिमे कल्पे पद्मकल्प इत्यर्थः । सनकादीनां प्रथमपुत्रत्वोक्तिविरोधमपि परिहरति- **सनकाद्यास्त्विति** ॥वाराहे कल्पे इत्यनुवर्तते । द्वितीयपरार्धस्य प्रथमे कल्पे स्वायम्भुवमन्वन्तर इति शेषः । ननु चतुर्मुखकर्तृकसृष्टौ नीचानामप्यग्रजत्वमस्ति तथा विष्णुकर्तृकसृष्टावपि चतुर्मुखापेक्षयान्यस्याप्यग्रजत्वे 'ब्रह्मा देवानां प्रथमं सम्बभूव' इत्ययुक्तं स्यादित्याशङ्कायामाह- **ब्रह्मेति** ॥ तुशब्दस्यात्रापि सम्बन्धः । स चात्रावधारणार्थः । ब्रह्माण्डाद्बहिः ब्रह्माण्डान्तः पद्मकल्पे च ब्रह्मैव विष्णोरग्रजः सुत इत्यर्थः ॥

## खण्डार्थः

**श्री.**- 'यो ह वा अविदितार्षेच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति अधीतेऽध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवामीयते पापीयान् भवति तस्मादेतानि मन्त्रे विद्यात्' इति श्रुतौ ऋष्यादीनज्ञात्वा विद्याभ्यासिनोऽनर्थोक्तेस्तज्ज्ञानं तावदावश्यकम् । तत्र ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यत्यक्षरगणनया छन्दोऽवगतेः 'यया तदक्षरम्' इत्यादिना देवतावगतेश्च तदुभयं विहाय ऋषीनाह वेदपुरुषः- **ब्रह्मा देवानामित्यादिना** ॥ इयमाख्यायिका श्रोतॄणां श्रद्धातिशयजननार्था । स्मर्यते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं 'श्रद्धावान् लभते ज्ञानम्' (भ.गी. ४.३९) इति । ततश्च ब्रह्मा देवानामित्यादेरियमक्षरयोजना । ब्रह्मा आदिसृष्टौ देवानामपेक्षया पूर्वं विष्णोः सकाशात् सम्बभूव । अत एव देवानां मध्ये प्रथमः सम्बभूव । उत्तमो जातः । यत्स्वजातौ प्रथमं हरेर्निःसरति तत्तत्रोत्तमं यथा वर्णेषु ॐकार इति न्यायादित्यर्थः । प्रथमत्वमेवोपपादयति- **विश्वस्य कर्तेत्यादिना** ॥ भुवनस्य गोप्ता रक्षकः । यद्वा

विश्वस्य समस्तस्य भुवनस्याधिकारिजनस्य ज्ञानोपदेशकर्ता । अत एव गोप्ता संसारभयाद्रक्षकः । किमधिकारिवर्गस्य सर्वस्यापि साक्षात्स्वयमेव ज्ञानोपदेशकर्ता । नेत्याह- **स इत्यादिना** ॥ स ब्रह्मा सर्वा विद्या यस्यां प्रतितिष्ठन्ति सा सर्वविद्याप्रतिष्ठा ताम् । यस्यां विद्यायां लब्धायामन्याः सर्वा विद्या विदितप्राया भवन्ति सफला भवन्तीति यावत् । एतादृशीं ब्रह्मविद्यां स्वस्य यो ज्येष्ठः पुत्रो वैवस्वतमन्वन्तरे तस्मै अथर्वणाय ऋषये प्रकर्षेणाह उपदिदेश । तस्यर्षेरथर्वणेत्यथर्वेति च नामद्वयमस्ति । अतोऽथर्वण इत्युक्तम् । अथर्वशब्दस्येयं चतुर्थी ॥ १ ॥

## उपनिषत्

**अथर्वणे यां प्रवदेत ब्रह्माऽ-**
**थर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।**
**स भारद्वाजाय सत्यवहाय प्राह**
**भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥**

## खण्डार्थः

**श्री.**- यां ब्रह्मविद्यां पुरा पूर्वं प्रवदेत प्रावदत् । तां ब्रह्मविद्यामथर्वा अङ्गिरे उवाच । अङ्गीः अङ्गिरौ अङ्गिर इत्यङ्गीशब्दस्य रेफान्तस्येयं चतुर्थी । सोऽङ्गीर्भारद्वाजाय भरद्वाजस्यापत्याय नाम्ना सत्यवहाय ऋषये प्राह । भारद्वाजः सत्यवहोऽङ्गिरसे । अङ्गिरा अङ्गिरसौ अङ्गिरस इत्यङ्गिरस् शब्दस्येयं चतुर्थी । परावरां विवक्षाभेदात्परामवरां च ब्रह्मविद्यां प्रोवाच ॥२॥

## उपनिषत्

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा (चापरा)चैवापरा च ॥ ४ ॥**

(अपरविद्यास्वरूपम्)

**तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।**

(परविद्यास्वरूपम्)

**अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥**

## भाष्यम्

**'ऋगाद्या अपरा विद्या यदा विष्णोर्न्न वाचकाः ।**
**'ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥'**

**इति परमसंहितायाम् ।**

## प्रकाशिका (श्रीवादिराजीया)

**नमस्कृत्य हयग्रीवं समस्तसुरनायकम् ।**
**आथर्वणोपनिषदः पोष्यं भाष्यं विवृण्महे ॥**

**॥ अथर्वाय ज्येष्ठपुत्रायेति ॥** 'अथर्वणे यां प्रवदेत' इत्युक्त्या अकारान्तं नकारान्तं च तत्पदमस्तीति सूचितम् । 'शौनको ह वै महाशालः' इत्यत्र महती दृढा शाला यज्ञशाला यस्येति महाशालः । कदाचिद्यज्ञकर्ता अभिनवतात्कालिकवंशादिकृतशालावान् भवति । अयं न तथेत्यनेन प्रत्यब्दं यज्ञकर्तृत्वं लभ्यते । **ज्योतिषमिति** आपाततः प्रतीयमानकर्म-देवताप्रतिपादकस्य परब्रह्मप्रतिपादकस्य वेदस्य पाठापाठयोग्याध्ययनकर्म-सुमुहूर्तदुर्मुहूर्तादिकालज्ञापकत्वेन ज्योतिषस्यापि वेदाङ्गत्वमिति ज्ञेयम् ।

'अथ परा यया तदक्षरमधिगम्यते' इत्यत्र आपातत एव प्रतीयमानकर्मदेवताप्रतिपादकत्वमेव जानतः ऋगादिरूपा या अपरविद्या, परमप्रतिपाद्यभगवतोऽज्ञानात्, सैवाक्षरशब्दितपरमात्मपरत्वे ज्ञाते परविद्येति ज्ञेयम्। ननूपनिषद्रूपा परविद्या, संहितारूपा त्वपरविद्येति चेत् ऋक्शाखिभिः सर्वैः पठ्यमानसंहितोपनिषद्ब्राह्मणापौरुषेयविद्यायाः ऋग्वेदपदेनैव गृहीतत्वे त्वदुक्तविभागस्यानवकाशात्। तद्धि तदा स्यात् संहिताऽपरविद्या उपनिषत् परविद्येति, यदि श्रुतिर्ब्रूयात्। न चैतदस्ति। ऋग्वेदपदस्यैव ऋक्सम्बन्धिसर्वसङ्ग्राहकत्वे त्वदभिलषितविभागानवकाश एव। एवं यजुर्वेदादावपि ज्ञेयम्। किञ्च यदि परविद्या अन्या स्यात्तर्हि ऋग्वेदो यजुर्वेद इत्यादिनाऽपरविद्याकथनवदियमियं परविद्येति विभज्य प्रदर्शयेत्। न हि श्रुतिरकुशला येनानपेक्षिताधमापरविद्यां विभागेन निरूप्यापेक्षितोत्तमपरविद्यायां सङ्कुचितप्रवृत्तिमती स्यात्। तस्मादुक्त एव विभागः श्रुतेरभिमतः।

**श्री.टी.**- अत्र 'द्वे विद्ये वेदितव्ये' इति प्रतिज्ञाय 'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना ऋगादीनामपरविद्यात्वमुक्त्वा, 'अथ परा यया तदक्षरमधिगम्यते' इत्यनेन परविद्योच्यते सा च परविद्या ऋगादिव्यतिरिक्ता उपनिषदित्यपरे व्याचक्षते। तदयुक्तम्। ऋगादिग्रहणेनैव तासामपि गृहीतत्वात्। ब्राह्मणपरिव्राजकन्यायस्य चागतिकगतित्वात्। तज्जन्यं ज्ञानं परविद्येत्यपि न युक्तम्। 'यया तदक्षरमधिगम्यते' इत्युक्ताक्षराधिगतिकरणत्वानुपपत्तेः। 'द्वे विद्ये वेदितव्ये' इति सकृदुक्तविद्याशब्दस्यानेकार्थताकल्पनापत्तेश्च। अतोऽपरविद्यात्वेनोक्ता ऋगादय एव परविद्याः। नच वाच्यमृगादीनामेवापरविद्यात्वं परविद्यात्वं च विरुद्धमिति। यदा ब्रह्ममीमांसाव्युत्पादितन्यायानुपकृता ऋगादिवेदादयो भगवदन्यापातप्रतीतकर्मादिविषयतया योज्यन्ते तदा तेषामपरविद्यात्वम्। यदा तु त एव वेदाद्याः ब्रह्ममीमांसाव्युत्पादितन्यायोपकृताः सन्तो भगवद्विषयतया

योज्यन्ते तदा तेषामेव परविद्यात्वमित्याशयेनाह- **ऋगाद्या इति** ॥ यथोक्तं सुधायाम्- 'ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृता वेदादयो विष्णोरवाचकास्तदुपकृतास्तु तस्य वाचका भवन्ति' इति ॥

**भाष्यम्**

**'ऋग्भिर्हौत्रेण शंसन्ति तथौद्गात्रैः स्तुवन्ति ये ।**
**विष्णुमेव च तथा तस्मै यजुर्भिरपि जुह्वति ।**
**स्तुवन्त्याथर्वणैश्चैनं सेतिहासपुराणकैः ॥**
**न विष्णुसदृशं किञ्चित् परमं वाऽपि मन्वते ।**
**सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः ॥'**

**श्री.टी.** - ऋगादीनां सर्वेषां विष्णुवाचकत्वेन परविद्यात्वमुक्तं तदेव कुत इत्यतस्तत्र प्रमाणमाह- **ऋग्भिरित्यादिना** ॥ हौत्रेणेति तृतीया सप्तम्यर्थे । हौत्रे कर्मणि होतार इति शेषः । तथा च होतारः हौत्रे कर्मणि विष्णुमेव शंसन्तीत्यर्थः । स्तुवन्ति उद्गातारः सामभिरिति शेषः । तथा चोद्गातारः सामभिरौद्गात्रे कर्मणि विष्णुमेव स्तुवन्ति गायन्तीत्यर्थः । ये इत्यस्य ते हीत्यनेनान्वयः । तस्मै विष्णवे तदर्थमित्यर्थः । अध्वर्यव इति शेषः । तथा चाध्वर्यवो यजुर्भिर्विष्णूद्देशेनैव जुह्वति होमं कुर्वन्तीत्यर्थः । एनं विष्णुमेव । तथा च यदि ऋगादीनां विष्णुपरत्वं न स्यात्तर्हि विष्णूद्देशेन कर्म कुर्वाणा भागवतोत्तमा होत्रादयो हौत्रादौ कर्मणि ऋगादिभिर्विष्णोः शंसनं न कुर्युः । तदप्रतिपादकवाक्यैस्तच्छंसनेऽप्रेक्षावत्त्वप्राप्तेरतस्तदन्यथा-नुपपत्त्या ज्ञायते ऋगादीनां सर्वेषां विष्णुवाचकत्वमेवेति ।

**भाष्यम्**

**'वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥'**

'एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम् ।
ऋगादि पञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति ॥
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
स्तुवन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥'

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ॥'

'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥'

इत्यादि च भारते ॥

'चतुर्दशमहाविद्यास्थानानि वेदितव्यानि भवन्ति' ॥

इति च मूलश्रुतिः ॥

**श्री.टी.**- नन्वथापीदमयुक्तम् । विष्णुवाचकवेदभागैर्विष्णुसूक्तादिभिरेव होत्रादयो विष्णुं शंसन्ति न त्विन्द्रादिवाचकसूक्तैरित्यपि सम्भवेन सर्वेषामपि वेदादीनां विष्णुपरत्वालाभादित्यतस्तत्र स्पष्टं प्रमाणान्याह- **वेद इत्यादिना ॥** सर्वत्र वेदादौ विष्णुरेव गीयत इति सम्बन्धः । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वचनादृगादीनां रूपेण पञ्चधा संस्थं शब्दब्रह्म वेदराशिर्वेदपुरुष इति यावत् । एतद्ब्रह्मैवादावन्ते मध्ये चेति सर्वत्र विजानतां, कर्मणि षष्ठी, विजानतः प्रत्यधिकारिणः प्रतीति यावत् । उक्त्वा प्रशाम्यति प्रकर्षेण सन्तुष्टो भवतीत्यर्थः । वाकानुवाकाः यजुर्वेदवाक्यविशेषाः । निषदित्याथर्वणवाक्यविशेषाः । सत्यकर्माणम् अबाधितकर्माणम् । 'यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा' इति श्रुतेः । सत्यं निर्दुःखनिरतिशयानन्दानुभवरूपम् । यथोक्तं भागवततात्पर्ये- 'सत्यं परं धीमहि' इत्यत्र 'सत्यं निर्दुःखनित्यनिरतिशयानन्दानुभवरूपम्' इति । सत्येषु यथार्थप्रतिपादकेषु । सामसु सामवेदेषु । तथा

च वाकादिषु सत्येषु सामसु च सत्यकर्माणं सत्यं यं विष्णुं स्तुवन्तीत्यर्थः । यच्छब्दस्योत्तरेणान्वयः । यत्पदं यस्य भगवतः स्वरूपम् । आमनन्ति सम्यक्परममुख्यवृत्त्या प्रतिपादयन्ति । यत्प्रति कर्तव्यतया वदन्ति वेदाः । सर्ववेदानां भगवत्परत्वे भारतवाक्यं प्रमाणयति- **यदिच्छन्त इति** ॥ 'पद गतौ' इति धातोः सर्वैर्वेदैः प्रतिपद्यते गम्यत इति पदमित्यर्थः । इत्थमव्याख्याने उक्तार्थेऽस्य वाक्यस्य सम्मतित्वालाभादित्यवगन्तव्यम् ।

विष्णुप्रतिपादका ऋगादय एव परविद्या न तदतिरिक्ता काचिदस्तीत्यत्र प्रमाणान्तरमाह- **चतुर्दशेति** ॥ पुराणं न्यायो मीमांसा धर्मशास्त्रं चेति चत्वारि । शिक्षादि षडङ्गानि । ऋगाद्याश्चत्वार इति चतुर्दश महाविद्याख्यानि च तानि स्थानानि च महाविद्यास्थानानि । परविद्याशब्दवाच्यानि । ज्ञानजनकत्वेन स्थानशब्दवाच्यानि चेत्यर्थः । तथा च महाविद्यापरविद्या चेतीत्यनयोरेकार्थत्वादृगादीनामेव परविद्यात्वमनया श्रुत्या गम्यत इति भावः । महाविद्याजनकस्थानानीत्यर्थाङ्गीकारे ऋगादिजन्यज्ञानस्यैव महाविद्याशब्दोक्तपरविद्यात्वापत्त्या ऋगादीनां तदभावापातेन प्रकृतासङ्गतेः । परविद्याजनकत्वादेतेषामपि परविद्यात्वमिति व्याख्याने ऋगादिषु परविद्याशब्दस्य लाक्षणिकत्वापत्तेरिति ज्ञातव्यम् ।

## भाष्यम्

(कृते समग्रमपि वैदिकवाङ्मयं विष्णुपरम्)

**पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराऽभवत् ।**
**मूलवेद इति ह्याख्या काले कृतयुगे तदा ॥**
**नैवर्क्सामादिनामानि तदा वेदस्य चाभवन् ।**
**नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित् ॥**

ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः ।
देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः ॥
वक्तृत्वेन पितृत्वेन कारित्वेनैव चाऽऽदरात् ।
इज्यन्ते देवताः सर्वा नतु देवतया क्वचित् ॥
अनन्ययाजिनस्त्वेते तस्मात्कार्त्तयुगा जनाः ।
प्राप्नुवन्ति हरिं तं च तस्माद्भेदे न किञ्चन ॥
पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात् ।
ऋगाद्या अनुव्याख्यान्तास्तस्मात्सर्वैर्हरिं यजेत् ॥

**श्री.टी.**- मूलश्रुतिस्वरूपे विप्रतिपन्नं प्रति प्रमाणान्तरमाह- **पञ्चरात्रमित्यादिना** ॥ ऋगाद्याश्चेति सर्वम् । एकं भगवद्रूपैकार्थप्रतिपादकम् । पुरा कृतयुगे ऋगादीनां तत्कालीनं नाम दर्शयति- **मूलवेद इतीति** ॥ इति इत्येवास्य नाम । तद्व्यावर्त्यमाह- **नैवेति** ॥ नन्विन्द्रादिनाम्नामिन्द्रादिवाचकत्वात् कथं सर्वमेकम् अभवदित्युच्यत इत्यत आह- **नैव चेति** ॥ इन्द्रपूर्वैः । इन्द्र इति पूर्वैः । भगवत एव सर्ववेदप्रतिपाद्यत्वे समस्तवेदैर्भगवानेवेज्य इति प्राप्तमिति चेत् सत्यमित्याह- **देवतात्वेनेति** ॥ चशब्द एवार्थे । या तेनोच्यते सा देवतेति वचनान्मुख्यतः समस्तवेदप्रतिपाद्यत्वेन निमित्तेन स विष्णुरेवेज्य इत्यर्थः । तर्हि ब्रह्मादियजनाभाव एव प्राप्त इत्यतस्तद्यजने तदा विशेषमाह- **ब्रह्माद्या इति** ॥ ब्रह्माद्या देवताः सर्वा इत्यन्वयः । 'वक्तृत्वेन' भगवत्स्वरूपव्याख्यातृत्वेन 'कारित्वेन' भगवत्पूजाकारित्वेन, हरिभक्तत्वेनेति यावत् । एवकारव्यावर्त्यं दर्शयति- **न त्विति** ॥ 'देवतया', 'हिरण्यगर्भः समवर्तताग्रे' (म.ना.), 'एको रुद्रः' (श्वे. ३.२) इत्यादिवेदप्रतिपाद्यतया 'न तु' नैवेज्यन्त इत्यर्थः । यथाहीतरयुगेषु व्याख्यातारो गुरवः स्वपित्रादयो वा वेदादिप्रतिपाद्यतया नेज्यन्ते किन्तु वक्तृत्वादिनैव तद्वत् कृतयुगेऽपि ब्रह्माद्या

इति भावः । कश्चिद्भक्तृत्वादिना कृतयुगे मनवः पूज्यन्त इत्युक्तिरस्ति तद्गतिप्रदर्शनाय 'मनुनामकाः' इत्युक्तम् । यथोक्तं छान्दोग्यभाष्ये- 'मनवो बोधवैशेष्यात्' इत्यादि । 'तस्मात्तु' तस्मादेव । एवं सर्ववेदानां भगवत्स्वरूपमात्रप्रतिपादकत्वादेव कार्तयुगाः कृतयुगस्थजना भगवद्व्यतिरिक्तदेवतायाजिनो न भवन्तीत्यनन्ययाजिनः प्रसिद्धाः । अन्यथा तन्न स्यात् । अनन्ययाजित्वादेव तं हरिं च हरिमेव प्राप्नुवन्ति नान्यदेवता इति प्रसिद्धम् । अन्यथेदमपि न स्यात् । किन्तु त्रेतादाविव 'देवान् देवयजो यान्ति' इति न्यायेनान्यदेवताप्राप्तिरपि स्यादिति भावः।

उपसंहरति- **तस्मादिति** ॥ तस्मादृगादिसर्ववेदानां भगवन्मात्रप्रतिपादकत्वेन प्रतिपाद्यभेदस्य कृतयुगेऽभावादेव किञ्चन पारावर्यं परावरभावः पारावर्यं परविद्यात्वापरविद्यात्वभेदो नास्तीत्यर्थः । किन्नाम भगवत्स्वरूपमात्रप्रतिपादकत्वेन परविद्यात्वमेव न कर्मादिप्रतिपादकत्वेनापरविद्यात्वमिति भावः । इतोऽपि न वेदेषु पारावर्यमित्याह- **हरेर्यस्मादिति** ॥ यथा हि लोके केनचिदुत्तमपुरुषेणोक्ता विद्याः परा इत्युच्यन्ते नीचपुरुषेणोक्ता विद्या अपरा इत्युच्यते नैवं वेदेष्वस्ति । यतो ऋगाद्या अनुव्याख्यान्तास्तुरगाननात् श्रीहयवदनाद्धरेरेवोत्थिता उद्गतास्तस्मादतिपरमपुरुषेण श्रीहयवदनेनोदितत्वेन वक्तृभेदाभावात् परविद्यात्वमेव नापरविद्यात्वमिति भावः । ऋगाद्या अनुव्याख्यान्ताः तथा 'अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषच्छ्लोकाः सूत्राण्यनुव्याख्यानानि' इति बृहदारण्यकोपनिषदुक्ता द्रष्टव्याः । तदर्थस्तु तद्भाष्यादेवावगन्तव्यः ।

## भाष्यम्

**तस्माद् ब्रह्मादयः सर्वे मनवो मानवास्तथा ।**
**यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात् ॥**

अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाऽथ तं यजेत् ।
ऋगाद्यैरेव सर्वत्र भिन्नैरिष्टो जनैर्हरिः ॥
द्वापरीयैर्ज्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः ।
कलौ तु नाममात्रेण पूज्यते भगवान् हरिः ॥
एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् ।
स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् ।
उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः ॥
मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि ।
त्रैतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रवर्त्तितः(कीर्तितः) ॥
कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा ।
त्रेतायां भिन्नविषयास्ततस्त्रैविद्यतां गताः ॥
तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुः सनातनः ।
पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा ॥'

इति नारायणसंहितायाम् ॥

'वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतिः'

इति च भारते ॥

'वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च ।
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि ॥'

इत्यादि वाराहे ॥

**श्री.टी.-** सर्वैर्वेदैर्हरियजनस्यैव कर्तव्यत्वे परकृतिरूपार्थवादमाह- **तस्मादिति** ॥ 'मनु अवबोधने' इति धातोर्बोधवैशेष्यान्मनुशब्दवाच्याः मानवाः । मनुनामकब्रह्मादिदेवजन्यत्वान्मानवा वसिष्ठाद्या ऋषयः यजन्ति । कृतयुग इति शेषः । तं तमेव । ऋगादीनामेव परविद्यात्वे पुनः प्रमाणान्तरमाह- **वेदैश्चेति** ॥ दृश्यो ज्ञातव्यः । 'पश्यार्थैश्चानालोचने''

इति ज्ञानमात्रेऽपि दृशेः प्रयोगादिति ज्ञातव्यम् । इति वाराहे वराहदेव-वचनमिति शेषः । अतोऽहमिति युक्तम् ।

## भाष्यम्

(ता एव परमा विद्याः)

**अत्रापि 'तदेतत्सत्यम् मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्' इत्यादिना कर्मविषयामपरविद्यामुक्त्वा, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इत्याद्यारभ्याऽथर्वणानेव मन्त्रान् परविद्यात्वेनाऽह ॥ चतुर्वेदसंस्कारवतामेव च परविद्यायामधिकार उक्तः– 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोब्रतं विधिवद्यैस्तु चीर्णम्' इति । शिरोव्रतमित्युपलक्षणत्वेन–**

**'स्ववेदव्रतयुक्तस्य सर्व्ववेदगतास्वपि ।**
**अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित् ॥'**

**इति व्यासस्मृतौ ॥**

**श्री.टी.-** किञ्चैतदुपनिषद्गतपूर्वोत्तरवाक्यपर्यालोचनया ऋगादीनामेव परविद्यात्वमपरविद्यात्वं चावगम्यत इत्याह- **अत्रापीति** ॥ 'कर्मविषयाम्' आपाततः कर्मप्रतिपादिकाम् आथर्वणमन्त्ररूपामिति शेषः । **आहेति** ॥ ब्रह्मविद्यामित्युक्तत्वादिति भावः । आथर्वणानेव मन्त्रानिति वचनेनेयमाथर्वणी मन्त्रत्वे सत्युपनिषदित्युक्तं भवति । आथर्वणशाखिनां संहितात्वान्मन्त्रत्वं गोप्यार्थप्रतिपादकत्वादुपनिषत्त्वं चेत्युक्तं भवति । इतोऽपि ऋगादय एव विवक्षाभेदेन परविद्याः नोपनिषद इत्याशयेनाह- **चतुर्वेदेति** ॥ चतुर्वेदसम्बन्धिसंस्कारवतामेवेत्यर्थः । स्वस्वशाखाध्ययनार्थं कृतसंस्कारवतामेवेति यावत् । तथा च स्वस्वशाखाध्ययनार्थं कृतसंस्कारवतामेव स्वस्वशाखोपनिषद्विद्यायामधिकारस्योक्तत्वात्

संहितोपनिषदोः परापरविद्यात्वेन भेदाङ्गीकारेऽधिकार्यैक्यं न स्यादिति भावः। स्वस्वसंहिताध्ययने यः संस्कारः स एवोपनिषदादिसर्ववेदाध्ययन-संस्कार इत्यत्रैतदुपनिषद्गतमेव वाक्यं प्रमाणत्वेन पठति- **तेषामेवेति** ॥ 'शिरोव्रतम्' चौलोपनंयनादि ।

नन्वत्र वाक्ये 'शिरोव्रतं विधिवद्यैस्तु चीर्णम्' तेषामेवैतामाथर्वर्णीं ब्रह्मविद्यां वदेतेत्येवं यैराथर्वणशाखाध्ययनार्थं शिरोव्रतं चीर्णं तेषाम् आथर्वणोपनिषदध्ययन एवाधिकारोऽस्तीत्येवं प्राप्तं न त्वाथर्वणशाखा-संहिताध्ययनार्थं कृतशिरोव्रतानां समस्तवेदाध्ययनाधिकारोऽस्तीत्या-शङ्क्याह- **शिरोव्रतमितीति** ॥ यैराथर्वणशाखासंहिताध्ययनार्थं शिरोव्रतं चीर्णं तेषां शाखोपनिषदाद्यधिकारोऽस्तीत्येतत्समस्तवेदाध्ययनाधिकारोऽ-स्तीत्यस्योपलक्षणत्वेनोक्तमित्यर्थः। उपलक्षणत्वेनोक्तमित्यत्र ज्ञापकमाह- **स्ववेदेति** ॥ स्वस्वशाखाध्ययनार्थं विहितचौलोपनयनादिव्रतयुक्तस्येत्यर्थः। सर्ववेदगतासु विद्यास्विति सम्बन्धः । अवेदव्रतिनः स्वस्वशाखा-संहिताध्ययनार्थं विहितचौलोपनयनादिव्रतशून्यस्य । कचिदपि नाधि-कारोऽस्तीत्यर्थः। अत एव संहितोपनिषदोरेकाधिकारिकत्वोक्त्या तयोरेव परविद्यात्वमन्यथाधिकार्यैक्यं न स्यादिति प्रसिद्धमिति भावः ॥ ३-५ ॥

## खण्डार्थः

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा (चापरा)चैवापरा च ॥ ४ ॥**

**तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति।**

**अथ परा यया तदक्षरमधिगम्यते** ॥ ५ ॥

**श्री.**- शुनकस्यापत्यं शौनको नामतो महाशालः 'प्रत्यब्दं यज्ञकृत्सम्यङ्महाशाल इतीरितः' (छां.भा.) इति वचनात् प्रत्यब्दयज्ञकृद् विधिवद् विध्युक्तप्रकारेणोपसन्नः समित्पाणित्वादिरूपगुरूपसत्तियुक्तः सन् पप्रच्छ । ह वा इति वृत्तार्थस्मरणार्थौ निपातौ । किं प्रमेयं पप्रच्छेत्यत आह- **कस्मिन्निति** ॥ हे भगवः 'मतुवसोरुः सम्बुद्धौ छन्दसि' । हे भगवन् पूज्य, सर्वमिदं कर्मादिकं कस्मिन् शास्त्रे विज्ञाते विज्ञातं भवति । तथा च कर्मादिज्ञानकरणं किमिति करणप्रश्नः । तथा सर्वमिदं कर्मादिकं विज्ञातमपि कस्मिन् विषये ज्ञाते सफलं भवतीति विषयप्रश्नः । कर्मादेरस्वतन्त्रत्वेन तज्ज्ञानमात्रस्यैवापुरुषार्थत्वादिति प्रश्नाशय इति तत्त्वप्रकाशिकानुसारेण द्वेधा व्याख्येयम् । तत्र सर्वं कर्मादिकमपरविद्यया विज्ञातं भवति विज्ञातं च कर्मादिकं परविद्याविषयपरमात्मज्ञानेनैव सफलं भवति । 'कर्मणा ज्ञानमातनोति' इति कर्मणां ज्ञानेनैव सफलत्वश्रुतेः ॥ ३ ॥

अतो द्वे विद्ये अङ्गाङ्गिभाववत्तया वेदितव्ये इत्याशयवानाह- **तस्मा इति** ॥ यद्यस्माद्ये द्वे विद्येऽवश्यं वेदितव्ये इति ब्रह्मविदो वदन्ति तस्मात्ते द्वे विद्येऽवश्यं वेदितव्ये एवेति तस्मै शौनकाय सोऽङ्गिरा उवाचेत्यर्थः । के ते द्वे विद्ये इत्यत आह- **परा चैवेति** ॥ ४ ॥

का परा विद्येत्यतस्तां दर्शयति- **तत्रापरेति** ॥ परापरविद्ययोर्मध्ये परा विद्यादौ निरूप्यत इति शेषः । अत्र ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृता ऋगादयो यदा भगवदितरकर्मादिविषयतया योज्यन्ते तदा तेषामपरविद्यात्वम् । यदा तु तदुपकृतास्सन्तो विष्णुविषयतया योज्यन्ते तदा तेषामेव ऋगादीनां परविद्यात्वमित्यवगन्तव्यम् । अयं वर्णोऽस्मिन्

स्थाने एतेन प्रयत्नेनोच्चार्य इति निरूपकं शास्त्रं शिक्षा । कल्पः कल्पसूत्रम् । शब्दसाधुत्वासाधुत्वव्युत्पादनपरं शास्त्रं व्याकरणम् । शब्दनिर्वचनकरं शास्त्रं निरुक्तम् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीनां तत्प्रभेदानां च छन्दसां लक्षणनिरूपकं शास्त्रं छन्दः । कालनिर्णयकरं शात्रं ज्यौतिषम् । परविद्या केत्यतस्तां निरूपयति-**अथेति** ॥ अपरविद्यानिरूपणानन्तरं परविद्या निरूप्यत इति शेषः । यया विद्यया तत्प्रसिद्धमक्षरमधिकत्वेन गम्यतेऽवगम्यते सा परविद्येत्यर्थः ॥ ५ ॥

## उपनिषत्

(ब्रह्मस्वरूपम्)

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण्ण-**
**मचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मम्**
**तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥**

## खण्डार्थः

**श्री.**- प्रसिद्धाकारादेरत्रोक्ताक्षरत्वाशङ्कानिरासायाक्षरस्वरूपं निरूपयति-**यत्तदद्रेश्यमित्यादिना** ॥ यत्तत्पूर्वोक्तमक्षरं अद्रेश्यम् अग्राह्यं केनापि गृहीतुमशक्यम्, अगोत्रं भारद्वाजादिप्रसिद्धगोत्रशून्यम् अवर्णं प्राकृतवर्णशून्यम् अचक्षुःश्रोत्रं तदुपलक्षितप्राकृतज्ञानेन्द्रियरहितम्, अपाणिपादं तदुपलक्षितप्राकृतकर्मेन्द्रियरहितम्, अपाणिपादं पाणिपादाद्युपलक्षितप्राकृतशरीररहितमित्यर्थः । नित्यं स्वरूपतो देहतश्चाविनाशि । विभुं समर्थम् । सर्वगतं सर्वत्र व्याप्तम् । सुसूक्ष्मं जीवादप्यतिशयेन सूक्ष्मम् । अव्ययं गुणतो नाशशून्यम् । नन्वेवमक्षरस्यादृश्यत्वे 'यया तदक्षरमधिगम्यते' इति दृश्यत्वोक्तिर्विरुद्धा स्यादित्यत आह-

यद्भूतयोनिमिति ॥ भूतयोनिं जगत्कारणं यदक्षरं तद्धीराः परिपश्यन्ति। अनेनाधीराणामदृश्यमित्यर्थत्वान्न विरोध इति भावः ॥ ६ ॥

## उपनिषत्

(ब्रह्म जगतः नोपादानं न वा विवर्तकारणम्)

**यथोर्ण्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात् केशलोमानि**
**तथाऽक्षरात् सम्भवतीह विश्वम्** ॥ ७ ॥

## खण्डार्थः

**श्री.**- 'यद्भूतयोनिम्' इत्यक्षरस्य भूतस्रष्टृत्वमुक्तम्, तथा च संहर्तृत्वं तदन्यस्यैवेति प्राप्नोति। लोके पितुरन्यस्यैव मारकत्वदर्शनादित्याशङ्क्य विष्णौ लोकपितृवैलक्षण्याद्युक्तं तस्य संहर्तृत्वमिति भावेन स्रष्टृत्वं संहर्तृत्वं च सदृष्टान्तमुपपादयति- **यथेति** ॥ स दृष्टान्तो, यथा ऊर्णनाभिः स्वभुक्तमन्नादिकं तन्त्वाद्याकारेण सृजते पुनर्गृह्णते। संहरति चेति द्रष्टव्यम्। स्रष्टृत्वं पुनः सदृष्टान्तमुपपादयति- **यथा पृथिव्यामिति** ॥ कुलालवन्नाक्षरस्य क्लेशेन स्रष्टृत्वमिति सदृष्टान्तमाह- **यथा सत इति** ॥ पुरुषाद्देहात् केशलोमानि अनायासेन भवन्तीत्यर्थः। मृतदेहाल्लोमाद्यनुत्पत्तेः सत इत्युक्तम्। चेतनाधिष्ठितादित्यर्थः ॥ ७ ॥

## उपनिषत्

(ज्ञानपूर्विका विश्वसृष्टिः)

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।**
**अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम्** ॥ ८ ॥

## खण्डार्थः

**श्री.**- नन्वत्रोर्णनाभ्युपभुक्तान्नस्यैव तन्त्वाकारेण परिणामेनोर्णनाभेश्चेतनस्य तदभावात्तद्दृष्टान्तोक्त्याक्षरस्य निमित्तत्वप्रतीतेस्तद्दृष्टान्तोपादानमेव युक्तं न तु पृथिव्यादिदृष्टान्तोपादानं तेनोपादानत्वस्यैव प्रतीतेरित्याशङ्कां ज्ञानपूर्वकं स्रष्टृत्वोपपादनेन निराकरोति- **तपसेति** ॥ अक्षरशब्दोक्तं ब्रह्म आदौ तपसा चीयते सम्बद्ध्यते । तत्तप्यतेति यावत् । ततस्तपोयुक्ताद् ब्रह्मणः सकाशादन्नमभिजायते । अत्रान्नादिशब्दैर्देवाः जडानि च गृह्यन्ते । कर्मस्वित्यनुवादात् कर्म च जातमिति वक्तव्यम् । कर्मसु निमित्तभूतेषु सृष्टेषु सत्सु तत्फलभूतममृतं स्वर्गो मन्वन्तरकालपर्यन्तं मरणशून्यत्वेन तस्यामृताब्दवाच्यत्वात्तदादिकं जातमित्यर्थः ॥ ८ ॥

## उपनिषत्

**यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।**
**तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

**॥ इति प्रथमः खण्डः ॥**

## भाष्यम्

**एतद् ब्रह्म चतुर्मुखः ॥**

**॥ इति प्रथममुण्डके प्रथमः खण्डः ॥**

## प्रकाशिका (श्रीवादिराजीया)

'शब्दब्रह्म प्रशाम्यति' इत्यत्र शब्दब्रह्म शब्दब्रह्माभिमानिनी श्रीः प्रशाम्यति प्रशान्ता भवति । अन्यथा प्रकुपिता भवतीत्यर्थः । 'ब्रह्माद्या मनुनामकाः' इत्यत्र मनुनामकाः मनुसूक्तादिमन्त्रेषु नाम हिरण्यगर्भसूक्तं रुद्रसूक्तमिन्द्रसूक्तमित्यादिना सम्बद्धं नाम येषां ते तथोक्ताः । हिरण्य-

गर्भादीनां तत्सूक्तवक्तृत्वादिनैव तेषां सूक्तानां हिरण्यगर्भादिसूक्तत्वोक्तिः, न तु तत्तत्प्रतिपाद्यत्वेन । यथा भागवतविद्या परमहंसपाठयोग्यत्वात् पारमहंस्येत्युच्यते तथेति भावः । वक्तृत्वं स्वयं पाठकत्वम् । पाठकभृत्त्वं पितृत्वं, गुरुत्वमुपदेष्टृत्वमिति यावत् । कारित्वं तत्तत्सूक्तमन्त्रैः भगवत्पूजाकारित्वमिति भावः । तदुक्तं भागवते -

**'त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।**
**यजन्ते विविधैर्यज्ञैः नानारूपामराख्यया ।।'** इति ।।

**तस्मात्** इन्द्रादिनामभिरपि हरेरेव पूजाकारित्वादित्यर्थः । अनुव्याख्यान्ता इत्यत्रानुव्याख्यापदेन संहिताव्याख्यानरूपं ब्राह्मणं गृह्यते । त्रैतैः त्रेतायुगे विद्यमानैः । 'स एव पञ्चधा जातः' इत्यत्र स वेदः इतिहासपुराणेन सह पञ्चधा जातः । कृष्णद्वैपायानकृतेतिहासपुराणयोः त्रेतायामभावाच्चतुर्धा विभागस्यापि व्यासकृतत्वेनाथर्ववेदस्यापि त्रेतायां पृथक् विभागाभावात् त्रेतायां त्रिधाऽभवदित्युक्तम् । त्रेतायामपि व्यासावतारस्य विद्यमानत्वेन ईषदशक्ततदानीन्तनजनापेक्षया व्यास एव त्रिधा विभागं कृतवान् । द्वापरे तु युगसामर्थ्येन गौतमस्य शापसामर्थ्येन च जनानां मन्दमतित्वाच्चतुर्धा विभज्य तांश्च पुनरनेकधा विभज्य तत्सर्वं चतुर्वेदेष्वन्तर्भाव्यात्राप्यशक्तानामितिहासपुराणाख्यं पञ्चमं वेदं कृत्वा पञ्चधा वेदं प्रवर्तयामासेति ज्ञेयम् । 'वर्तितव्यः कलावपि' इत्यत्र कार्तयुगः मुख्यो धर्मः कार्यवशात्कलौ जातैरुत्तमाधिकारिभिः कलावपि प्रवर्तयितुं शक्यः। किमु त्रेतादाविति भावः । कथमन्यथा त्रेतायां सर्वज्ञा वसिष्ठादयः, द्वापरे पाण्डवाः, कलौ व्यासशिष्यो मध्वमुनिश्च कार्तयुगमुख्यधर्ममेव प्रवर्तयाञ्चक्रुः? 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यत्र तां 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादिना मन्त्रपदोदितकर्मविषयकऋगादिविद्यामेव तत्त्वतः तत्त्वार्थमुदीर्य ब्रह्मविद्यामुवाचेति

## खण्डार्थः

**श्री.**- नन्वत्रोर्णनाभ्युपभुक्तान्नस्यैव तन्त्वाकारेण परिणामेनोर्णनाभेश्चेतनस्य तदभावात्तदृष्टाम्तोक्त्याक्षरस्य निमित्तत्वप्रतीतेस्तद्दृष्टान्तोपादानमेव युक्तं न तु पृथिव्यादिदृष्टान्तोपादानं तेनोपादानत्वस्यैव प्रतीतेरित्याशङ्कां ज्ञानपूर्वकं स्रष्टृत्वोपपादनेन निराकरोति- **तपसेति** ॥ अक्षरशब्दोक्तं ब्रह्म आदौ तपसा चीयते सम्बद्ध्यते । तत्तप्यतेति यावत् । ततस्तपोयुक्ताद् ब्रह्मणः सकाशादन्नमभिजायते । अत्रान्नादिशब्दैर्देवाः जडानि च गृह्यन्ते । कर्मस्वित्यनुवादात् कर्म च जातमिति वक्तव्यम् । कर्मसु निमित्तभूतेषु सृष्टेषु सत्सु तत्फलभूतममृतं स्वर्गो मन्वन्तरकालपर्यन्तं मरणशून्यत्वेन तस्यामृताब्दवाच्यत्वात्तदादिकं जातमित्यर्थः ॥ ८ ॥

## उपनिषत्

**यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।**
**तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

**॥ इति प्रथमः खण्डः ॥**

## भाष्यम्

एतद् ब्रह्म चतुर्मुखः ॥

॥ इति प्रथममुण्डके प्रथमः खण्डः ॥

## प्रकाशिका (श्रीवादिराजीया)

'शब्दब्रह्म प्रशाम्यति' इत्यत्र शब्दब्रह्म शब्दब्रह्माभिमानिनी श्रीः प्रशाम्यति प्रशान्ता भवति । अन्यथा प्रकुपिता भवतीत्यर्थः । 'ब्रह्माद्या मनुनामकाः' इत्यत्र मनुनामकाः मनुसूक्तादिमन्त्रेषु नाम हिरण्यगर्भसूक्तं रुद्रसूक्तमिन्द्रसूक्तमित्यादिना सम्बद्धं नाम येषां ते तथोक्ताः । हिरण्य-

गर्भादीनां तत्सूक्तवक्तृत्वादिनैव तेषां सूक्तानां हिरण्यगर्भादिसूक्तत्वोक्तिः, न तु तत्तत्प्रतिपाद्यत्वेन । यथा भागवतविद्या परमहंसपाठयोग्यत्वात् पारमहंस्येत्युच्यते तथेति भावः । वक्तृत्वं स्वयं पाठकत्वम् । पाठकभृत्त्वं पितृत्वं, गुरुत्वमुपदेष्टृत्वमिति यावत् । कारित्वं तत्तत्सूक्तमन्त्रैः भगवत्पूजाकारित्वमिति भावः । तदुक्तं भागवते -

**'त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।**
**यजन्ते विविधैर्यज्ञैः नानारूपामराख्यया ॥'** इति ॥

**तस्मात्** इन्द्रादिनामभिरपि हरेरेव पूजाकारित्वादित्यर्थः । अनुव्याख्यान्ता इत्यत्रानुव्याख्यापदेन संहिताव्याख्यानरूपं ब्राह्मणं गृह्यते । त्रैतैः त्रेतायुगे विद्यमानैः । 'स एव पञ्चधा जातः' इत्यत्र स वेदः इतिहासपुराणेन सह पञ्चधा जातः । कृष्णद्वैपायनकृतेतिहासपुराणयोः त्रेतायामभावाच्चतुर्धा विभागस्यापि व्यासकृतत्वेनाथर्ववेदस्यापि त्रेतायां पृथक् विभागाभावात् त्रेतायां त्रिधाऽभवदित्युक्तम् । त्रेतायामपि व्यासावतारस्य विद्यमानत्वेन ईषदशक्ततदानीन्तनजनापेक्षया व्यास एव त्रिधा विभागं कृतवान् । द्वापरे तु युगसामर्थ्येन गौतमस्य शापसामर्थ्येन च जनानां मन्दमतित्वाच्चतुर्धा विभज्य तांश्च पुनरनेकधा विभज्य तत्सर्वं चतुर्वेदेष्वन्तर्भाव्यात्राप्यशक्तानामितिहासपुराणाख्यं पञ्चमं वेदं कृत्वा पञ्चधा वेदं प्रवर्तयामासेति ज्ञेयम् । 'वर्तितव्यः कलावपि' इत्यत्र कार्तयुगः मुख्यो धर्मः कार्यवशात्कलौ जातैरुत्तमाधिकारिभिः कलावपि प्रवर्तयितुं शक्यः। किमु त्रेतादाविति भावः । कथमन्यथा त्रेतायां सर्वज्ञा वसिष्ठादयः, द्वापरे पाण्डवाः, कलौ व्यासशिष्यो मध्वमुनिश्च कार्तयुगमुख्यधर्ममेव प्रवर्तयाञ्चक्रुः? 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यत्र तां 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादिना मन्त्रपदोदितकर्मविषयकऋगादिविद्यामेव तत्त्वतः तत्त्वार्थमुदीर्य ब्रह्मविद्यामुवाचेति

ज्ञापनार्थमादाय कर्मविषया उक्ता । तस्या एव तत्वार्थविचारे सति ब्रह्मविद्यात्वोक्तेराथर्वणानेव मन्त्रान् परविद्यात्वेनाऽहेत्युक्तम् । अन्यथा मन्त्रपदोदितऋग्यजुःसामाथर्वाख्यवेदचतुष्टयस्याप्यपरविद्यात्वे तदतिरिक्त-वेदरूपविद्याया अभावेन पौरुषेयविद्यैव परविद्येत्युक्तं स्यात् । तत्तु सर्वथा असम्भावितम् । अतो नीचकर्मविषयत्वेन या अपरविद्या सैवोत्तम-ब्रह्मविषयतया व्याख्याने परविद्येत्यनिच्छताऽप्यङ्गीकार्यम् । अत एव अपरविद्यां विभज्य दर्शयन्ती श्रुतिः न परविद्यां विभज्य दर्शितवती । अस्माभिश्च दृढाभिसन्धेः गम्भीरभाष्यकारवाक्यार्थस्य प्रपञ्चनाय विद्याद्वयप्रस्ताव एव सर्वमिदमुदितमिति ज्ञेयम् । 'शिरोव्रतं विधिवद्यैश्च चीर्णम्' इत्यत्र शिरोव्रतपदेन नूतनब्रह्मचारिभिः स्वस्वशाखाध्ययनाधिकार-सिध्यर्थं श्रावणपौर्णमास्यां, श्रवणनक्षत्रे वा, भाद्रपदे मासि हस्तानक्षत्रे वा शिरोमुण्डनपूर्वकमुपाकर्माख्यं यत्कर्म क्रियते तदुच्यते । तर्हि तादृशकर्मणा स्वस्वशाखाध्ययनाधिकार एव सिद्ध्यति । सर्ववेदेष्वधिकारसिद्धिः कथमित्यत आह- **शिरोव्रतमित्युपलक्षणत्वेनेति** ।। स्वस्व-शाखाध्ययनाधिकारार्थमिति यच्छिरोव्रताख्यं कर्म कर्तव्यमित्युक्तं तत्सर्ववेदाध्ययनाधिकारस्याप्युपलक्षणत्वेनोक्तम् । न तु स्वस्व-शाखाध्ययनाधिकारमात्रार्थम् ।

'ततोऽन्नमभिजायते' इत्यत्रान्नशब्देन अन्नाभिमानिनी श्रीश्च गृह्यते । तस्याः जननं नाम स्वाभिमन्यमानप्रकृतिप्रवर्तनेन सृष्ट्यभिमुखी-करणम् । सतो वस्तुनः ज्ञाकत्वात् व्यापकत्वाच्च सत्यपदेन दशेन्द्रियाणि तदभिमानिनो देवाश्च गृह्यन्ते । लोकपदेन लोक्यन्ते अवलोक्यन्त इति व्युत्पत्त्या मात्रापञ्चकं भूतपञ्चकं तदभिमानिनो देवाश्च गृह्यन्ते । तथा पुनर्लोकपदेनैव अण्डान्तश्चतुर्दश लोकाः, लोकाभिमानिनो देवास्तद्गत-

जनाश्च गृह्यन्ते। 'लोकस्तु भुवने जने' इत्यनुशासनम्। कर्मपदेन यज्ञादि-कर्माणि तदभिमानिदेवाश्च गृह्यन्ते इति ज्ञेयम्। 'एतद् ब्रह्म नामरूपमन्नञ्च' इत्यत्रान्नञ्च एतद् ब्रह्म चतुर्मुखः नाम रूपं च जायत इति योजना ॥९॥

## खण्डार्थः

**श्री.**- अत्र 'तपसा चीयते ब्रह्म' इत्युक्तम् । तत्र 'तप आलोचने' 'तप सन्तापे' इति धातोरालोचनात्मकं सन्तापात्मकं वा तपो ब्रह्मणः प्रतीयते । तदयुक्तम् । तथात्वे ब्रह्मणोऽज्ञानित्वाऽप्राप्तकामत्वयोः प्राप्तेरतस्तपसेत्यस्याभिप्रायमाह- **यः सर्वज्ञ इत्यादिना** ॥ सर्वज्ञः सर्वविदिति जगति सामान्यविशेषाकारयोः सत्वाज्जगन्निष्ठौ यौ सामान्यविशेषाकारौ तद्विषयकज्ञानवत्तोच्यते। यद्वा 'विद्लृ लाभे' इति धातोः सर्वं लब्धमनेनेति व्युत्पत्त्या सर्ववित् आप्तकाम इत्यर्थः । अयं भावः । यस्य तपो ज्ञानमयं ज्ञानस्वरूपं न त्वालोचनात्मकं कुतः यतोऽयं सर्वज्ञः । अज्ञो ह्यालोच-यते। तथा यस्य तपो ज्ञानमयमेव नतु सन्तापात्मकं कुतः यतोऽयं सर्ववित् आप्तकामः, अप्राप्तकाम एव हि लोके तपस्यतीति। तस्मादक्षरशब्दवाच्याद् ब्रह्मणः सकाशादेतद् ब्रह्म चतुर्मुखाख्यं जायते । तस्य यन्नाम यच्च रूपं तदपि जायते तथा नामरूपं तदात्मकं यद् अन्नम् अद्यत इत्यन्नं पूर्वानुक्तं सर्वं जगत् तदपि जायत इत्यर्थः । तथा चैवं ज्ञानपूर्वकं जगत्स्रष्टुरक्षरनामकस्य ब्रह्मणो न पृथिव्यादिदृष्टान्तेन परिणामिकारणत्वं मन्तव्यम् । किन्तु कारणत्वमात्र एव पृथिव्यादिदृष्टान्तस्य तात्पर्यमिति भावः । यथोक्तं तत्त्वप्रकाशिकायाम्- 'यदपि पृथिव्यादिदृष्टान्तेन जगत्कारणत्ववचनं तत्कारणत्वमात्रतात्पर्यम्' इति ॥ ९ ॥

॥ इति प्रथमखण्डमन्त्रार्थः ॥

॥ इति प्रथममुण्डके प्रथमः खण्डः ॥

॥ अथ प्रथमे द्वितीयः खण्डः ॥

## उपनिषत्

(यदा अक्षर(ब्रह्म)प्रतिपादकाः वेदाः तदा परविद्या उच्यन्ते)

ॐ ॥ तदेतत् सत्यम् ।
मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्
तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतं सत्यकामा
एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥

## भाष्यम्

तदेतत् सत्यं भगवान् । तत्कामाः कर्माण्याचरथ । तदा साऽपि परविद्या । अन्यथा 'प्लवा ह्येते अदृढा यज्ञरूपाः' ।

श्री.टी.- किं तत्सत्यमित्यत उक्तम्- तदेतदिति ॥ यदक्षरं प्रकृतं तदेतदक्षरमेव सत्यम् । तथा च नित्यनिरतिशयानन्दानुभवरूपत्वाद् भगवानेव सत्यशब्दार्थ इत्यर्थः । एषः ज्ञानद्वारा भगवत्प्रीत्यर्थमनुष्ठितो निवृत्तकर्मसन्दर्भो वो भवतां सुकृतस्य सुकृतलभ्यस्य लोके लोकस्य । यद्वा सुकृतस्य फलभूते लोके लोकप्राप्तिविषये तदर्थमिति यावत् । पन्थाः मार्गोऽपरोक्षज्ञानद्वारा भवतीत्यर्थः । तदेतत्सत्यमिति वाक्यं तदेतद्वक्ष्यमाणं प्रमेयं सत्यं यथार्थं न मृषेति परेण व्याख्यातम् । तदसत् । तथात्वे पूर्वप्रकृतपरामर्शकतच्छब्दानुपपत्तेः । 'भगवत्प्रीतिकामैस्तु कार्यं कर्माखिलैर्नृभिः' इत्यादिवाक्यानुसारेण सत्यनामकभगवत्प्रीतिकामास्तानि कर्माण्याचरथेत्यवश्यं तदर्थस्य वक्तव्यत्वे एकप्रकरणोक्तसत्यशब्दस्यानेकार्थकल्पनापत्तेरित्याशयेन तद्वाक्यं सम्यग् व्याचष्टे- तदेतदित्या-

**दिना** ॥ निर्दुःखनित्यनिरतिशयानन्दानुभवरूपत्वाद् भगवान् सत्यमित्युच्यत इत्यर्थः । यथोक्तं भागवततात्पर्ये- 'सत्यं परं धीमहि' इत्यत्र 'सत्यं निरतिशयानन्दानुभवरूपम्' इति । तत्कामाः अपरोक्षज्ञानद्वारा तत्प्रीतिकामाः । तथा च सत्यकामाः कर्माण्याचरथेति उक्ते किं तत्सत्यमित्यपेक्षायां यदेतत्सर्वं प्रकृतमक्षरनामकं परं ब्रह्म तदेव सत्यमित्युच्यत इत्युक्तमङ्गिरसेत्यर्थः । 'तदेतत्सत्यं यथा सुदीप्तात् पावकात्' इत्युत्तरत्र तु एतादृशबाधकाभावात्तत्राबाधितत्वार्थक एव सत्यशब्द इत्यवगन्तव्यम् ।

ननु सत्यनामकभगवत्प्रीतिकामाः कर्माण्याचरथेति व्याख्यानमयुक्तम् । 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिनोत्तरत्र कर्मणां निन्दितत्वादिति चेत्, तत्राह- **तदा सापीति** ॥ भगवत्प्रीत्यर्थं कर्मप्रतिपादनदशायां कर्मप्रतिपादिकापि सा विद्या परविद्यैव । अन्यथा भगवत्प्रीत्यर्थत्वेन तद्विषयकनिवृत्तकर्माऽप्रतिपादकत्वे काम्यकर्मप्रतिपादनपरत्व इति यावत् । 'प्लवा' इत्यादि निन्दा प्रवृत्तेति शेषः । तथा च सा तदानीमपरविद्येति भावः॥१॥

## खण्डार्थः

**श्री.**- अपरविद्यया विज्ञातं कर्मादिकं परविद्याविषयपरमात्मज्ञानेन सफलं भवतीत्येवमपरविद्या परविद्याङ्गमित्युक्तम् । तत्कथमित्यतस्तत्प्रकारं दर्शयति- **तदेतत्सत्यमित्यादिना** ॥ कवयो ज्ञानिनो मन्त्रेषु यानि कर्माण्यपश्यन् प्रतिपाद्यत्वेन ज्ञातवन्तस्तानि कर्माणि त्रेतायां बहुधा सन्ततानि । कृतयुगे भगवन्मात्रविषयत्वेन सन्ततानि, त्रेतायां बहुधा भगवत्तदितरदेवताविषयकत्वेन सन्ततानि सम्यक्प्रवृत्तानीत्यर्थः । अतः हे सत्यकामाः सत्यस्यापरोक्षज्ञानद्वारा भगवत्प्रीतिकामाः यूयं नियतं नियमेन तानि कर्माण्याचरथ ॥ १ ॥

## उपनिषत्

(यज्ञानुष्ठानप्रकारनिरूपणम्)

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।**
**तदाऽऽज्यभागावन्तरेणाऽहुतीः प्रतिपादयेत् ॥ २ ॥**

## खण्डार्थः

**श्री.**- प्रकृतकर्माचरणप्रकारं दर्शयति- **यदेति** ॥ हव्यवाहनेऽग्नौ समिद्धे फूत्कारादिना सम्यगिद्धे सति यदार्चिर्ज्वाला लेलायते 'ली परिवर्तने' इति धातोः परिवर्तते तदा तस्मिन्नर्चिषि आज्यभागावन्तरेण आज्यभागयोर्मध्ये आहुतीः क्षीरचरुपुरोडाशाद्याहुतीः प्रतिपादयेद् दद्यात् । आदावेकमाज्याहुतिं हुत्वानन्तरं क्षीरचर्वाद्यवदानं दत्वा पुनरप्याज्याहुतिं दद्यादित्यर्थः । अनेनाग्निहोत्रकरणमुक्तं वेदितव्यम् ॥ २ ॥

## उपनिषत्

(विहितयज्ञकर्माद्यननुष्ठाने प्रत्यवायः)

**यस्याग्निहोत्रमदर्शमपौर्णमास-**
**मनाग्रयणमतिथिविर्ज्जितं च ।**
**अहुतमवैश्वदेवमविधिना हुत-**
**मासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥**

## खण्डार्थः

**श्री.** - तदेवाग्निहोत्रं सेतिकर्तव्यमन्यथानर्थकथनपूर्वकं निरूपयति- **यस्येति** ॥ करणे षष्ठी । येन पुरुषेणाग्निहोत्रं अदर्शपौर्णमासम् अमावास्यापौर्णमास्ययोः पिण्डपितृयज्ञादिविशेषहोमरहितम् । अनाग्रायणं

नूतनधान्यसंस्काराय क्रियमाणाग्रायणेष्टिरहितम् । अतिथिवर्जितं तत्पूजारहितम् । अहुतं कालहोमरहितम् । अवैश्वदेवं वैश्वदेवरहितम् । अविधिना हुतं विधिमतिक्रम्य हुतं सत् तस्य पुंसः सप्तमान् ऊर्ध्वान् सप्तलोकान् पुण्यवशेन प्रसक्तान् आ सम्यक् हिनस्ति विनाशयति । ऊर्ध्वसप्तलोकप्राप्तिस्तस्य न भवतीत्यर्थः । तथा चाग्निहोत्रं कुर्वता दर्शपौर्णमास्यादीनि कार्याणि तेषां तदङ्गत्वादित्युक्तं भवति ॥ ३ ॥

## उपनिषत्

(होमाधिकरणनिरूपणम्)

**काळी कराळी च मनोजवा च**
**सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरुची च देवी**
**लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥**

## खण्डार्थः

**श्री.-** कुत्र होमः कर्तव्य इत्याकाङ्क्षायां यदा लेलायते ह्यर्चिरित्युक्तमधिकरणं विवृण्वन्नाह- **कालीत्यादिना** ॥ 'दिवु क्रीडा' इत्यादिधातोर्देवी द्योतमानेत्यर्थः । इदं कालीत्याद्युक्तसप्तजिह्वानामपि विशेषणम् । अत एवोत्तरत्रैतेषु यश्चरते भ्राजमानेष्वित्युक्तम् । इति एवं नामकाः लेलायमानाः परिवर्तमानाः हव्यवाहस्य सप्तजिह्वा इत्यर्थः ॥ ४ ॥

## उपनिषत्

(सम्यग्यज्ञादिकुर्वतां फलम्)

**एतेषु यश्चरते भ्राजमानेषु**
**यथाकालं चाऽहुतयो ह्याददायन् ।**

तं नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

## खण्डार्थः

श्री.- यो यजमानः भ्राजमानेषु 'भ्राजृ दीप्तौ' लिङ्गव्यत्ययेन दीप्यमानासु एतेषु एतासु सप्तजिह्वासु चरते । चरणमेव विवृणोति । यथाकालं तत्तत्कालानुसारेण आहुतयः आहुतीः देवतोद्देशेन आददायन् आददन् वर्तते । ता एता गृहीताहुतयः सूर्यस्य रश्मयः सूर्यरश्मिषु स्थिता देवाः यत्र लोके देवानां पतिरेकः प्रधानः अधिवासोऽधिकाश्रयो मुख्याश्रय इति यावत् । वर्तते तत्र लोके तं लोकमिति यावत् । नयन्ति ॥ ५ ॥

## उपनिषत्

एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

## भाष्यम्

भगवद्विषयत्वेन कृते 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' । परब्रह्म-लोकः ।

'निष्कामं ज्ञानपूर्वं' च निवृत्तमिह चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥'

इति हि व्यासस्मृतिः ॥

'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयते' ॥

इति च श्रुतिः ॥

**श्री.टी.**- 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' इति यज्ञादिकाम्यकर्मणां ब्रह्मलोकप्राप्तिरुच्यते, तदनुपपन्नम् ॥ 'ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्', 'न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्' इत्यादिवाक्यविरोधादित्यत आह- **भगवद्विषयत्वेनेति** ॥ भगवत्-प्रीत्यर्थत्वेन निवृत्तकर्मणि कृते सतीति शेषः । तथा चैतदभिप्रायेण 'एष व' इत्यादिवाक्यं प्रवृत्तमित्यर्थः । एवं च वो भवतामेष प्रमाणप्रमितः पुण्यः भगवद्विषयकपुण्यकर्मानुष्ठानलभ्यो ब्रह्मलोकः सुसम्यक्कृतः सिद्धोऽस्तीति तद्वाक्यार्थो द्रष्टव्यः । ननु तथापि ब्रह्मलोक इति भगवद्विषयककर्मानुष्ठानवतां च चतुर्मुखलोकप्राप्तिरुच्यमानाऽनुपपन्ना । देवतोद्देशेन कर्मानुष्ठानवतामेव हि देवतालोकप्राप्तिर्न भगवद्विषयककर्मानुष्ठानवताम् । 'देवान् देवयजो यान्ति' इत्यादि-वचनादित्याशङ्कापरिहाराय ब्रह्मलोकशब्दं व्याचष्टे- **परब्रह्मलोक इति** ॥ ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् तल्लोक एव ब्रह्मलोक-शब्देनोच्यत इत्याशयः ।

ननु भगवद्विषयककर्मानुष्ठानवतां भगवल्लोकप्राप्तिर्भवतीत्यत्र किं प्रमाणमित्यत आह- **निष्काममिति** ॥ ज्ञानपूर्वं कृतं कर्मेति शेषः । अत्रैव प्रमाणान्तरमाह - **स य इति** ॥ लोकं सर्वाश्रयम् । उपास्ते जानाति च । अस्य कर्म । ज्ञानादिपूर्वकमनेनानुष्ठितं कर्मेति यावत् । न क्षीयते अपरोक्षज्ञानद्वाराऽक्षयभगवल्लोकफलकं भवतीति श्रुत्यर्थोऽत्र द्रष्टव्यः ।

## भाष्यम्




**'सहयज्ञाः प्रजाः सृष्ट्वा' इत्युक्त्वा–**

'एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥' इति च ॥

'यान्ति मद्याजिनोऽपि माम्' इति ।

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते' ॥ इति च ॥

'यस्त्वात्मरतिः' इत्युक्त्वाऽपि 'कुर्याद् विद्वांस्तथाऽसक्तः' इत्येवोक्तत्वाच्च ।

'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥' इति च ॥

'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ'

इत्युक्तत्वाच्च नात्राऽश्रमान्तरविरोधः । त्रेतायां बहुधा सन्ततानि । कृते त्वेकप्रकारेणैव सन्ततानि ॥

**श्री.टी.**- ननु भगवद्विषयककर्मकरणाद् भगवल्लोकप्राप्तिरूपो मोक्षो भवतीत्युक्तम् । तदयुक्तम् । 'नैष्कर्म्यसिद्धिं परमाम्' इत्यादिना मोक्षस्य नैष्कर्म्यसिद्धित्वं तावदवगम्यते । न विद्यते कर्म करणीयं यस्यासौ निष्कर्मा पुरुषस्तत्सम्बन्धिनी सिद्धिर्हि नैष्कर्म्यसिद्धिरतस्तदन्यथानुपपत्त्या मुमुक्षोः कर्मण एवानपेक्षितत्वादित्यत आह- **'सह यज्ञा' इत्यादिना** ॥ इत्युक्त्वा इत्याद्युक्त्वा । इति च निन्दनादिति शेषः । अयमर्थः । मुमुक्षुणावश्यं कर्म कर्तव्यमेव । तथाहि । वर्णाश्रमविहितकर्मकर्तुः 'अन्नाद् भवन्ति भूतानि' इत्याद्युक्तचक्रप्रवर्तकत्वेन 'मुच्यन्ते सर्वकिल्बिषैः' इति सर्वपाप-हानिरूपमोक्षमुक्त्वा 'एवं प्रवर्तितम्' इत्यादिना वर्णाश्रमविहित-कर्माकर्तुश्चक्रविघातकत्वेनाघायुष्ट्वाद्युक्त्या तन्निन्दनाच्च मुमुक्षोरवश्यं

कर्मापेक्षितमित्यवगम्यत इति । तथाच काम्यकर्मरहितपुरुषसिद्धित्वादेव मोक्षस्य नैष्कर्म्यसिद्धित्वमित्याशयः ।

भगवद्विषयककर्मकर्तुर्भगवल्लोकप्राप्तिरित्यत्र भगवद्वाक्यमेव प्रमाणयति- **यान्तीति** ॥ मद्याजिनः मद्विषयककर्मकर्तारः । किञ्च भगवत एव सर्वयज्ञभोक्तृत्वेन सर्वकर्मणां भगवद्विषयकत्वावगमात् तत्त्वेन तदजानतां लोकाच्च्युतिवचनेन तत्त्वेन तथा ज्ञात्वा तद्विषयककर्मकर्तॄणां च्युतिरहित-लोकप्राप्तिरर्थात् सिद्धा । च्युतिरहितलोकश्च भगवल्लोक एव नान्यः । तथाच सिद्धा भगवद्विषयककर्मकर्तॄणां भगवल्लोकप्राप्तिरित्याशयेनाह- **अहं हीति** ॥ नन्वथापि मुमुक्षोर्ज्ञानिनः कर्मानपेक्षितं तत्रैव गीतायाम्-

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥' (भ.गी. ३.१७)

इति तस्य कर्तव्याभावोक्तेस्तद्विरोधादिति च तत्राह- **यस्त्विति** ॥ यस्त्वात्मरतिरेव स्यादिति मुक्तस्यैव कर्तव्याभाव उच्यते । यथोक्तम् -

'यस्त्वेवात्मरतो मुक्तः क्रिया तस्यैव नास्ति हि ।
अतः कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ॥' इति ॥

एवं मुक्तस्यैव कर्तव्याभावमुक्त्वा-

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥' (भ.गी. ३.२५)

इति ज्ञानिनो सक्त्या कर्मकरणस्यैवोक्तत्वेन न तद्विरोध इत्यर्थः । अप्येवम्पदाभ्यां यस्त्विति वाक्यस्य मुक्तपरत्वाभावे भगवद्युक्त्योर्विरो-धापत्तेः । नहि व्याहतभाषी भगवानिति सूचयति । किञ्चास्त्येव भगवद्विषयककर्मणा भगवत्प्राप्तिरूपो मोक्षः । तथाहि-

'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ।।' (भ.गी. ३.३०)

इति कर्तृत्वाभिमानत्यागपूर्वकं स्वविषयककर्मकरणरूपं स्वमतं भगवानभिधाय,

'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।।' (भ.गी. ३.३१)

इति स्वविषयककर्मानुतिष्ठतां मोक्षमुक्त्वाऽसूयया तदनुष्ठानरहितानां निन्दनाच्च भगवद्विषयककर्मणा भगवल्लोको भवतीति सिद्ध्यतीत्याशयेनाह- **ये त्वेतदिति** ।। ननु मुमुक्षोर्मोक्षार्थं भगवद्विषयककर्मणः कर्तव्यत्वे यत्याश्रमिणां कर्मकरणेऽधिकाराभावेन मोक्षाभावप्रसङ्गात् । तथा च यत्याश्रमस्याकर्तव्यत्वापत्तेः । न चेष्टापत्तिरिति वाच्यम् । तथात्वे 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'

'सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।।'

इत्यादियत्याश्रमकर्तव्यताविधायकवाक्यविरोधापत्तेरित्यत आह- **लोकेऽस्मिन्निति** ।। 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' इत्यर्धोऽपि पठितव्यः ।

द्विविधा हि योगिनः सन्ति । ज्ञानयोगिनः कर्मयोगिनश्चेति । तत्र ज्ञानयोगेन साङ्ख्यानां सनकादीनां मुक्तिः । कर्मयोगिनां जनकप्रियव्रतादीनां ज्ञानिनामपि कर्मप्रधानत्वेन कर्मयोगित्वात् कर्मयोगेन मुक्तिरित्यर्थः । तथा च भगवद्विषयककर्मकरणेन भगवत्प्राप्त्युक्तिर्गृहस्थाश्रमिरूपकर्मयोग्यभिप्रायेणैवेति भावः । यथोक्तम्-

'सन्न्यासे तु तुरीये वै मम प्रीतिर्महीयसी ।
येषामत्राधिकारो न तेषां कर्मेति निश्चयः ॥' इति ॥

नात्राश्रमान्तरविरोध इति । गृहस्थाश्रमभिन्नं यदाश्रमान्तरं यत्याश्रमरूपं तस्य कर्तव्यताप्रतिपादकवचनविरोधोऽत्र नेत्यर्थः ॥ 'तानि त्रेतायां बहुधा सन्ततानि' इत्यत्र त्रेतायामिति विशिष्योक्तेरभिप्रायमाह - **त्रेतायामिति** ॥ भगवदितरदेवताविषयकत्वेन त्रेतायां बहुधा सन्ततानि प्रवृत्तानि कृतयुगे तु एकप्रकारेणैव भगवद्विषयकत्वेनैव सन्ततानीत्यर्थः ।

**भाष्यम्**

**'अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम् ।**
**यजन्ति तांश्च कारित्वाद् वसुस्तस्मात् तथाऽयजत् ॥'**
**'पृथक्पृथक् च त्रेतायां यजन्ते देवतागणान् ।**
**यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः' ॥ इति पाद्मे ।**
**'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।**
**यो देवनां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमि ॥'**
**'एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः ।**
**एवं त्रेतायां केचिदन्ये पृथक् तानिष्ट्वा विष्णावर्पयन्ते न चान्ये ॥'**
**इति च ब्रह्माण्डे ॥**

**श्री.टी.-** अत्रार्थे पञ्चरात्रमृगाद्याश्चेत्यादिप्रमाणमुदाहृतमेव पुनः प्रमाणान्तरं चाह- **अग्निष्टोमादिभिरिति** ॥ यजन्ति कार्तयुगजनाः । तान् सर्वदेवान् । चस्त्वर्थः । कारित्वाद् भगवत्पूजाकारित्वात् ।

अत्रार्थे आचारं प्रमाणयति- **वसुरिति** ॥ कृतयुगस्थितो वसुनामको राजा । तथाग्निष्टोमादिभिः सर्वयज्ञैः सर्वदेवान्तर्गतं हरिं देवांश्च कारित्वेनायजदित्यर्थः । त्रेतायामुत्पन्नजनाः । इन्द्रचन्द्रादिदेवतागणान्

पृथग्देवतात्वेन यजन्ति पश्चात्तद्यजनं विष्णौ समर्पयन्तीति त्रैविद्यतां गता इत्यर्थः । यत एवं ततः कारणात् त्रेतायां बहुधा तानि त्रेतायां बहुधा सन्ततानीति श्रुतावुच्यत इत्यर्थः । प्राज्ञाः अतिशक्ताः केचिज्जनाः त्रेतायामपि यथा कृते युगे तत्कालीना यजन्ते तथा तथैव यजन्त इत्यर्थः। यथोक्तम्-

'मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि ।
त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रवर्तते ॥' इति ॥

ननु 'तानि त्रेतायां बहुधा सन्ततानि' इत्युक्त्या कृतयुगे कर्मणां भगवन्मात्रविषयकत्वेनैकप्रकारेणैव सन्ततत्वमुक्तम् । तदयुक्तम् । यज्ञादिकर्मसु विनियुक्तानामिन्द्रादिनामोपेतमन्त्राणां भगवत्परत्वा-भावात् । रूढियोगाभ्यामिन्द्रादिनामानीन्द्रादिदेवेष्वेव हि प्रसिद्धानीत्या-शङ्कायामाह- **यमिन्द्रमिति** ॥ यं भगवन्तं सत्यं वायुं ऐतरेयभाष्ये विश्वामित्रमिति खण्डे एतच्छ्रुतिगतसत्यशब्दस्य वायुपरतया व्याख्यात-त्वात् । यथोक्तम्- 'सत्य इति वायुः', 'सदिति प्राणः' इति श्रुतेः ।

'सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ॥'

इति शब्दनिर्णय इति । आहुर्विद्वांस इत्यनेनेन्द्रादिनाम्नां भगवति विद्वद्रूढिरुक्ता । महायोगोऽप्यनेनैव लब्धः । 'सा योगादेव लभ्यते' इत्युक्तत्वात् । एवं चेन्द्रादिनाम्नां महायोगविद्वद्रूढिभ्यां भगवत्येव मुख्यत्वेन तन्नामोपेतमन्त्राणामपि मुख्यतो भगवत्परत्वेन कृते युगे कर्मणामेकप्रकारेणैव सन्ततत्वकथनं युक्तमिति भावः । कृतयुगस्थजनप्रवृत्तिं पुनः श्रुत्या दर्शयति- **यो देवानामिति** ॥ देवतमोऽतिशयेन देवः । वायोर्जनित्रं जनकः । एभ्य एभिर्ब्रह्मादिदेवैः सहाहमपि तस्मै देवानां देवतमाय वायुजनकाय विष्णव

एव सोमं जुहोमि न देवेभ्य इत्यर्थः । इदं च कृतयुगस्थभक्तजनवचनम् । तथा च ब्रह्मादिदेववत् कृतयुगस्थजनस्याप्यनन्ययाजित्वमनेनोक्तं भवतीति भावः ।

नन्विन्द्रादिनामभिस्तत्तद्देवतायजनं कर्तव्यम् । नच विष्णोरिन्द्रादिनामवत्त्वमस्ति । मानाभावात् । तत्कथं सर्वेऽपि जनाः सर्वदेवस्थितं हरिं यजन्तीत्युक्तमित्यत आह- **यमिति** ।। यो वायोः जनित्रं जनकः । यश्च देवानामिन्द्रादीनां देवतमः अतिशयेन देवः इन्द्रत्वादिप्रदः । अत एव प्रवृत्तिनिमित्तस्वामित्वादिना 'यमिन्द्रमाहुः' । एवमग्रेऽपि । सत्यमित्यत्र सत्यो वायुरुदाहृतः । 'साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः' इत्यैतरेयभाष्योक्तेः । तस्मै वायवे विष्णवे च । एभ्यः इन्द्रादिभ्यश्च । सोमं सोमादिद्रव्यम् । जुहोमीत्यर्थः । अत्र जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमीत्यनेन मुख्यप्राणान्तर्यामित्वेनेन्द्रादिस्थितहरियजनं कर्तव्यम् । इन्द्रान्तर्यामिमुख्यप्राणान्तर्गतविष्णवे स्वाहेत्यादिरूपेणेति सूचयतीति बोध्यम् । कृतयुगस्थजनप्रवृत्तिपरताया अत्र स्पष्टप्रतिभासादेतच्छ्रुत्यर्थनिश्चायकं कृतत्रेतायुगस्थजनप्रवृत्तिप्रदर्शनपरं ब्रह्माण्डपुराणस्थं वाक्यमुदाहरति- **एवमिति** ।। एवमिति ब्रह्माण्डपुराणे पूर्वोक्तपरामर्शः । कृते युगे ये जनाः केचिच्छक्ताः सन्ति ते एवं कृतयुग इव त्रेतायामपि विष्णुमेव यजन्त इत्यर्थः । अन्ये अशक्ताः राजवत् किञ्चिदुत्तमत्वं विष्णोर्जानन्तो जनाः । त्रेतायामिति वर्तते । तान् देवान् पृथक् देवतात्वेनेष्ट्वा तद्यजनमन्ते विष्णावर्पयन्ते । अन्ये विष्णोरन्यैः साम्यं हीनत्वं वा जानन्तः पृथक् तानिष्ट्वा तेऽपि विष्णौ नार्पयन्त इत्यर्थः ।। ६ ।।

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।**

**प्रियां वाचमभिवदन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥**

## खण्डार्थः

**श्री.**- नयनप्रकारमेव विवृण्वन्नाह- **एह्येहीति** ॥ तं यजमानमाहुतयः स्वीकृताहुतयः भगवद्विषयकपुण्यकर्मानुष्ठातॄणां भवतामेषः प्रमाणप्रमितः पुण्यः भगवद्विषयकपुण्यकर्मानुष्ठानलभ्यो ब्रह्मलोकः परब्रह्मलोकः सु सम्यक् कृतः सिद्धोऽस्ति । अतस्तं प्रति त्वमेह्येहीति प्रियां वाचमभिवदन्त्यः अर्चयन्त्यस्तं पूजयन्त्यः सुवर्चसः सुष्ठु वर्चोविशेषवत्यो देवताः स्वाधिष्ठितैः सूर्यस्य रश्मिभिः तन्मार्गविशेषैरिति यावत् । सूर्यद्वारेणेति वक्ष्यमाणत्वात् । वहन्ति नयन्ति ब्रह्मलोकं प्रापयन्तीत्यर्थः ॥ ६ ॥

## उपनिषत्

(भगवदविषयककर्मणां बन्धकत्वनिरूपणम्)

**प्लवा ह्येते अदृढा यज्ञरूपा**
**अष्टादशोक्तमवरं येषु कर्म्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा**
**जरामृत्युं ते पुनरेवापियन्ति ॥ ७ ॥**

## प्रकाशिका (श्रीवादिराजीया)

तदा साऽपि परविद्येत्यत्र साऽपि कर्मविद्याऽपि परविद्या, परा विद्या ययेति व्युत्पत्त्या परविद्याङ्गत्वात् परविद्येत्युच्यते । अन्यथा सत्याख्यविष्णुविषयतयाऽकरणे एते विष्ण्वनर्पितकर्मविधयः अदृढा वृथा इत्यर्थः । इदं चोत्तरवल्ल्यर्थप्रदर्शनं भाष्यकृता स्वोक्तस्थिरीकरणाय कृतमिति ज्ञेयम् । 'एष वः पन्थाः' इत्यत्र सुकृतः शोभनतया कृतः सुकृतिभिरङ्गीकृतः

पुण्यः निवृत्तरूपपुण्यसाध्यः। अधुना श्रुतिः स्वोक्तभगवत्पूजात्मककर्मणि श्रद्धाजननाय शुष्ककर्ममार्गं निन्दति- **प्लवा इति** ॥ 'निष्कामं ज्ञानपूर्वं तु' इत्यत्र निष्कामम् ऐहिकस्वर्गादिफलकामनारहितं, ज्ञानपूर्वं विष्णुपूजात्मकत्वज्ञानपूर्वं यत्कर्म तन्निवृत्तमित्युच्यते। सहयज्ञाः प्रजाः सृष्ट्वेत्यत्र -

**'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥'**

इत्यारभ्य 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते तेऽपि कर्मभिः' इति मध्ये यज्ञादिकर्मकर्तॄणां कर्मभिः मुच्यन्त इति कर्मक्षयाख्यमोक्षरूपफलमुक्त्वा 'एवं प्रवर्तितं चक्रम्' इत्यकरणे प्रत्यवायकथनाच्च निष्कामकर्मणां भगवत्प्राप्तिरूपमोक्षहेतुत्वं सिद्धमिति भावः। 'यान्ति मद्याजिनोऽपि माम्' इत्यनेन -

**'यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥'**

इति वाक्यं सङ्गृह्णाति। अत्र मद्याजिनो मामुद्दिश्य यज्ञकर्तारो मां यान्तीति साक्षात्परब्रह्मरूपिणा कृष्णेनैव स्वविषयकयज्ञकर्तॄणां स्वप्राप्तिरूपफल-कथनान्निष्कामकर्मणां ब्रह्मप्राप्तिहेतुत्वसिद्धिः। इदं च 'कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवति' इति 'अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्', 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्याद्यन्यत्राऽचार्यैरेवोदाहृतश्रुतीनां च सङ्ग्राहकम्। एवं तर्हि 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यनित्यफल-कथनमनुपपन्नमित्यत उक्तम्- **अहं हि सर्वयज्ञानामिति** ॥ सर्वयज्ञानां भोक्तृत्वेन सर्वयज्ञप्रभुत्वेन च भगवन्तमज्ञात्वा शुष्ककर्मकरणाच्च्यवनमिति

भावः । तर्हि यत्याश्रमिणां कर्माभावात्कथं मोक्ष इत्यत आह- **लोक इति ॥** साङ्ख्यानां, 'ख्या प्रकथने' इति धातोः भगवत्तत्त्वप्रकथनं सङ्ख्या, तत्सम्बन्धिनः साङ्ख्या ज्ञाननिष्ठा इति यावत्, तेषामित्यर्थः । तांश्च कारित्वादित्यत्र तान् देवान् कारित्वादुपकारित्वाद्यजन्त इत्यर्थः । 'तानि च त्रेतायां बहुधा सन्ततानि' इत्युपनिषद्वाक्यस्येयं योजना । त्रेतायां केचित्कुशलाः कृतयुगवदिन्द्रादीन् देवान् विष्णोरधिष्ठानतयैव जानन्त इन्द्रादिनामभिरपि विष्णुमेव यजन्ति । अनेनोत्तमानां स्वरूपमुक्तं भवति । केचित्त्वकुशलाः स्वर्गादिफलकामनयेन्द्रादीनेव यजन्ति, हरिं तु सीमाधीश्वरराजवत् सामान्यत एव जानन्ति । न तु तत्तन्नामभिर्यज्ञे दीयमानाहुतीनां भोक्तृतयाऽपि । अनेन मध्यमजीवस्य स्वभाव उक्तो भवति । केचित्तु ततोऽप्यत्यन्ताकुशलाः विष्णोरितरदेवतासाम्यमितरदेवेभ्यो हीनत्वं वा जानन्त अन्यदेवानेव यजन्ति । अनेनाधमप्रकृतिरुक्ता भवति । एवं कर्माणि बहुधा त्रेतायां सन्ततानि । हे सत्यकामा यूयं तत्र कुशलकृतकर्माण्येवाऽऽचरथ, न तु मध्यमजीववदधमजीववच्च कर्माण्याचरथेति ॥७॥

## खण्डार्थः

**श्री.-** एवं भगवत्प्रीत्यर्थत्वेन तत्पूजात्मकतया कृतस्य यज्ञादिकर्मणो ब्रह्मलोकप्राप्तिसाधनत्वमुक्त्वा तदितरयज्ञादिकर्मस्वरूपं निरूपयति- **प्लवा ह्येत इत्यादिना ॥** येषु यज्ञादिषु अष्टादशोक्तहोत्रादयः प्रधानाश्चत्वारो ऋत्विज एकैकस्यर्त्विजश्च त्रयस्त्रयः शिष्याः, एवं सति षोडशर्त्विजः । एको यजमानः एतन्निरीक्षकः सभ्यश्चापर इत्येवमष्टादशानां पुरुषाणाम् उक्तं विहितम् अपरं देहायासकरत्वेनाप्रधानं कर्म प्रसिद्धं त एते भगवत्पूजात्मकतया तत्प्रीत्यर्थमकृताः यज्ञादिरूपाः प्लवा नावोऽदृढाः पुनरावर्तिशून्यलोकप्राप्तिसाधनभूता न भवन्तीति हि प्रसिद्धमित्यर्थः ।

एतदेव स्पष्टमाह- एतदिति ।। ये मूढाः भगवत्पूजात्मकत्वानुसन्धानरहिता एतद्यज्ञादिकमेव श्रेयःसाधनमिति मत्वा अभिनन्दन्ति सन्तुष्टा भवन्ति ते पुनः पुनर्जरया प्राप्तं मृत्युं मरणमेवापियन्ति प्राप्नुवन्तीत्यर्थः ।। ७ ।।

## उपनिषत्

**अविद्यायामन्तरे वेष्ट्यमानाः**
**स्वयं धीराः पण्डितम्मन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथाऽन्धाः ।। ८ ।।**

## खण्डार्थः

**श्री.**- भगवत्पूजात्मकत्वानुसन्धानं विना यज्ञादिकर्मकारिणः पुनर्निन्दयति- **अविद्यायामित्यादिना** ।। अविद्यायामन्तरे वर्तमानाः परमाच्छादकमायावेष्टिताः धीराः प्रवृत्तकर्मकरण एव धैर्यवन्तः । स्वयमेव पण्डिता इति मन्यमाना जङ्घन्यमानाः भगवन्मार्गे वक्रगतयः पर्यन्ति पुनः पुनः संसारे परिभ्रमन्ति । तर्हि ते ज्ञानिभिः ऋत्विग्भिर्बोध्यन्तामित्यतः सदृष्टान्तमाह - **अन्धेनेति** ।। अन्धेन नीयमाना अन्धा यथा सम्यङ्-मार्गादर्शनात्पर्यन्त्येवं भगवज्ज्ञानादिरहितर्त्विग्भिर्नीयमाना यजमाना अपि पर्यन्तीत्यर्थः ।। ८ ।।

## उपनिषत्

**अविद्यायां बहुधा वर्त्तमाना**
**वयं कृतार्त्था इत्यभिमन्यन्ति बालाः ।**
**यत् कर्मिणो न प्रवेदयन्ति रागात्**
**तेनाऽतुराः क्षीणलोकाश्च्यवन्ते ।। ९ ।।**

## खण्डार्थः

**श्री.** - अविद्यावेष्टितत्वं च सर्वेषां नैकप्रकारमित्याह- **अविद्यायां बहुधेति** ।। बहुधा अनेकप्रकारेण । कृतार्था कृतकृत्या इति अभि सम्यङ्मन्यन्ति मन्यन्ते । अतो बाला मूर्खा इत्यर्थः । न प्रवेदयन्ति । 'स्वार्थे णिच् । परं ब्रह्म तज्ज्ञानसाध्यं मोक्षाख्यं महाफलं च न जानन्ति । तेन कारणेन क्षीणलोकाः 'क्षीणे पुण्ये' इति वचनात् । लोकशब्दस्तत्र भोगापादकपुण्योपलक्षकः । स्वर्गलोकभोगापादकपुण्येन क्षीणाः, अत एवातुराः दुःखिनः सन्तश्च्यवन्ते । स्वर्गस्थानभ्रष्टाः पतन्त्यध इत्यर्थः । तथा चानादिकालीनरागाऽक्षय एवाविद्यावेष्टितत्वे निमित्तमिति भावः । तेषामविद्यावेष्टितत्वे निमित्तमाह- **यत्कर्मिण इति** ।। यद्यस्मात् कारणात् कर्मिणः काम्यकर्मिणः रागादनादिकालतः स्वर्गादौ रागसद्भावात् । यथोक्तम्- 'रागादेश्चापरिक्षयात्' इति ।। ९ ।।

## उपनिषत्

**इष्टापूर्त्तं मन्यमाना वरिष्ठं**
**नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे सुकृतेऽनु भूत्वा**
**इमं लोकं हीनतरं वाऽऽविशन्ति ।। १० ।।**

## भाष्यम्

**विष्णोः सर्वेभ्यः किंचिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति । साम्यं हीनत्वं वा जानन्तो हीनतरं तम एव विशन्ति ।**

**'देवेभ्य उत्तमं विष्णुं राजवद् यस्तु मन्यते ।**
**याजी स मानुषं याति साम्यहीनत्ववित्तमः' इति च ।।**

**'त्रैविद्या माम्–'  इति तु 'येऽप्यन्यदेवता भक्ताः', 'तेऽपि मामेव कौन्तेय', 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः ॥**

## प्रकाशिका (श्रीवादिराजीया)

अधुना श्रुतिरुत्तमाधममध्यमेषु 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' इत्युत्तमानां मोक्षाख्यफलस्य प्रागेवोक्तत्वान्मध्यमाधमयोः फलमाह- **इमं लोकमिति ॥** इमं लोकं वा हीनतरं वा लोकं विशन्तीति योजना । व्यवस्थितश्चायं विकल्पः । मध्यमा इमं लोकमधमास्तु हीनतरमिति । अन्धन्तमस्यपि द्वैविध्यमस्तीति सूचनाय हीनतरमित्युक्तम् । विष्णोः साम्यज्ञानिनां हि हीनतमः प्राप्तिः, विष्णोरधमत्वज्ञानिनां हीनतरतमः प्राप्तिरिति विवेकः । एवं च कर्मकर्तॄणां मोक्षं मध्यमलोकहीनलोकप्राप्तिं वदन्ती श्रुतिः प्रागुक्तबाहुविध्यमुत्तमाधममध्यमजीवानादायैव पर्यवस्यतीति सूचयति । तदिदमाह भाष्यकारः-

**'पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान् ।**
**यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः ॥'** इति ।

'एवं त्रेतायां केचिदन्येऽपृथक् तानिष्ट्वा विष्णावर्पयन्ते न चान्ये' इति च । तत्राऽद्यपद्यस्यायमर्थः - त्रेतायां केचिद्देवतागणान् पृथक् पृथगेव यजन्ते । इन्द्रादिनामभिः स्वर्गादिकामनया तांस्तान्देवानेव यजन्ते । विष्णुं तु राजादिवदीषत्स्वामित्वेनैव जानन्ति, न तु यज्ञभोक्तृतयाऽपि । केचित्तु विष्णुमवजानन्तोऽन्यानेव देवान्यजन्ते । प्राज्ञास्तु त्रेतायामपि कृतयुगवदेव यजन्ति पूजां कुर्वन्ति । तत एव बहुधेत्युक्तं श्रुताविति । द्वितीयश्लोकस्यायमर्थः- त्रेतायामन्ये मध्यमाधमयोरन्ये केचित्प्राज्ञा एवं कृतयुगवद्विष्णुमेव यजन्तः अपृथक् विष्णुना सह अधिष्ठानतया तान्

देवानिष्ट्वा विष्णावर्पयन्ते । अन्ये मध्यमाधमाश्च नार्पयन्त इति । पृथगित्येव पदच्छेदे एवमित्यनेन 'वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः' इति प्रागुक्तपरामर्शानुपपत्तिरिति ज्ञेयम् ।। १० ।।

**।। इति प्रथमे द्वितीयः खण्डः ।।**

**श्री.टी.-** 'इष्टापूर्तं मन्यमाना वरिष्ठम्' इत्यत्र 'इमं लोकं हीनतरं वा विशन्ति' इत्युक्तं लोकद्वयप्राप्तिरूपं फलमेकस्यैवोच्यत इत्यन्यथा-प्रतीतिनिरासाय विवेकेन व्याचष्टे- **विष्णोरिति** ।। सर्वेभ्यो देवेभ्यः । किञ्चिदुत्तमत्वं राजादिवदुत्तमत्वमित्यर्थः ।। **जानन्त इति** ।। ज्ञात्वा तद्यजनमन्ते तस्मिन् समर्पयन्त इत्यर्थः । साम्यमित्यादौ सर्वेभ्य इति वर्तते । जानन्तः साम्यादिकं ज्ञात्वा तद्यजनं तस्मिन्नन्तेऽप्यसमर्पयन्त इत्यर्थः । अत्र प्रमाणं चाह- **देवेभ्य इति** ।। मन्यते मत्वा चान्ते समर्पयतीति ग्राह्यम् । स याजी याजकः । साम्यहीनत्ववित् देवेभ्य इति वर्तते । तथा विदित्वान्तेऽप्यसमर्पयन् ।

ननु-

'देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते ।
याजी स मानुषं लोकं याति.... ।।'

इति देवेभ्यो राजवत्किञ्चिदुत्तमत्वं जानतां मर्त्यलोकप्राप्त्युक्तिरयुक्ता ।

'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकं अश्नन्ति दिव्यान् दिवि देवभोगान् ।।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।।'
(भ.गी. ९.२०)

इति गीतायां सर्वदेवताप्रेरकत्वादिना सम्यगेव विष्णोः सर्वोत्तमत्वं ज्ञात्वा

यजतामपि मर्त्यलोकप्राप्त्युक्तेरित्यत आह- **त्रैविद्या मामिति त्विति ॥** 'त्रैविद्या माम्' इति गीतावाक्योक्तास्तु त्रैविद्या अज्ञानपूर्वयाजिन इत्यन्वयः । विवक्षिता इति शेषः । सर्वदेवताप्रेरकत्वादिना विष्णोर्देवेभ्यः सम्यक् सर्वोत्तमत्वज्ञानपूर्वकयाजिनो न भवन्तीत्यज्ञानपूर्वयाजिनः । राजादिवत् किञ्चिदुत्तमत्वमेव ज्ञात्वा याजिन इति यावत् । तेषां च मर्त्यलोकप्राप्तिर्युक्तैवेत्यर्थः । तथा च प्रमाणगीतावाक्ययोरेकार्थत्वान्न विरोध इति भावः । 'त्रैविद्या माम्' इत्यत्राज्ञानपूर्वयाजिन एव त्रैविद्या विवक्षिता इत्यत्र ज्ञापकमाह- **येऽपीति ॥**

'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥' (भ.गी. ९.२३)

इति वाक्येनान्यदेवतायाजिनामविधिपूर्वकयाजित्वमुक्त्वा कथमविधिपूर्वकत्वं तद्यजनस्येति शङ्कायामविधिपूर्वकत्वे कारणमुक्तम्-

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥' (भ.गी. ९.२४)

इति ॥

तथा च मां न तत्त्वेनाभिजानन्तीत्यन्यदेवतायाजिनां सम्यक्-सर्वोत्तमत्वज्ञानाभाववचनेनाज्ञानपूर्वयाजिन एव त्रैविद्या विवक्षिता इति ज्ञायत इत्यर्थः ॥

॥ इति द्वितीयखण्डभाष्यार्थः ॥

## खण्डार्थः

**श्री.** - यत्कर्मिणो न प्रवेदयन्तीत्युक्तं विवृण्वन् क्षीणलोकाश्च्यवन्त इत्युक्तं च्यवनं विविच्य दर्शयति- **इष्टापूर्तमिति ॥** इष्टं यजनम् । पूर्तम्

अन्नप्रपादानादिकम् । इदमेव वरिष्ठं श्रेष्ठं मन्यमानाः सन्तः अन्यच्छ्रेयो ब्रह्म मोक्षाख्यं च न वेदयन्ते न जानन्ति । अत एव प्रमूढाः । एतेषां प्रमूढत्वं नाम निर्णेतॄणामभावेन केवलं तत्त्वज्ञानशून्यत्वमेव विवक्षितम् । तथा च ये विष्णोः राजादिवत् किञ्चिदुत्तमत्वं जानन्तो निर्णेतॄणामभावेन केवलं ज्ञानशून्यास्ते सुकृते काम्यसुकृतलभ्ये नाकस्य पृष्ठे स्वर्गस्थलविशेषे तत्फलमनुभूत्वा क्वापि छन्दसीति छन्दसि ल्यपः क्त्वादेशविधानादनुभूय तत्पुण्यक्षयानन्तरम् इमं लोकं भूराख्यं विशन्ति । ये चेष्टापूर्तमेव वरिष्ठं मन्यमानाः सन्तः नान्यच्छ्रेयो वेदयन्ते प्रत्युत विष्णोर्देवादिसाम्यहीनत्वविदः । अत एव प्रमूढाः मिथ्याज्ञानिनस्ते यज्ञे दक्षिणातर्पिताचार्याणां तेजसा लब्धे नाकस्य पृष्ठे स्वर्गप्रतिनिधितया निर्मिते साङ्कल्पिकनाम्नि वीरस्वर्ग इति यावत् । काम्यं पुण्यफलमनुभूय तत्क्षयानन्तरं तम एवाविशन्तीत्यर्थः ॥ १० ॥

## उपनिषत्

(विष्णुप्रीतयेऽनुष्ठितानि कर्माणि ज्ञानद्वारा मुक्तिफलकानि)

**तपःश्रद्धे (येऽभ्यु)ये ह्युपवसन्त्यरण्ये**
**शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति**
**यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥**

## खण्डार्थः

**श्री.**- एवं काम्यं कर्म विनिन्द्यातः परं निवृत्तकर्मानुष्ठानजनितापरोक्षज्ञानसाध्यं फलं दर्शयति- **तप इति** ॥ ये अरण्ये भैक्षचर्यां चरन्तो विरक्ता इति यावत् । तपःश्रद्धे तपः श्रद्धापूर्वकं सत्कर्म अति अतिशयेन

उपवसन्ति कुर्वन्तीति यावत्। ते अन्तःकरणशुद्धिद्वारा शान्ता भगवन्निष्ठ-बुद्धिमन्तः सन्तो विद्वांसोऽपरोक्षज्ञानिनो भवन्ति । तेऽर्चिरादिमार्गेण सूर्यं प्राप्य विरजाः प्रारब्धपापशून्याः भवन्ति । अधिकारिविशेषाणां तत्र प्रारब्धकर्मनिर्मोकस्य वैश्वानरम् इन्द्रं ध्रुवं सरस्वतीं ब्रह्माणं च प्राप्य तदनन्तरं यत्रामृतो नित्यमुक्तः अव्ययात्मा नाशशून्यदेहः पुरुषः पूर्णषड्गुणो हरिर्यत्र लोके तिष्ठति तं वैकुण्ठाख्यं लोकं प्रयान्ति। प्रतीकालम्बनाश्चेत् सूर्यद्वारेण सरस्वतीं प्राप्य तदनन्तरं यत्र लोकेऽमृतः अतिरोहितविज्ञानत्वाद् अमृतशब्दवाच्यः। 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः' इति वचनात् तस्यैव च ब्रह्मत्वात्। अमृतो जीवन्मुक्त इति वा। अव्ययात्मा नाशशून्ये भगवत्येव मनोवान् पुरुषो ब्रह्मा यत्र लोके तिष्ठति तं सत्याख्यं लोकं प्रयान्तीत्यर्थः । हिशब्देनैतदुभयं प्रमाणप्रसिद्धमिति दर्शयति ॥ ११ ॥

## उपनिषत्

(विरक्तः गुरुमेव समाश्रयेत्)

**परीक्ष्य लोकान् कर्मचितान्**
**ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्**
**समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥**

## खण्डार्थः

**श्री.**- 'भैक्षचर्यां चरन्तः' इत्यपरोक्षज्ञानसाधनतयोक्तं वैराग्यं नित्यानित्यवस्तुविवेकसाध्यमिति वदन् वैराग्यानन्तरभाविसाधनमाह- **परीक्ष्येत्यादिना** ॥ ब्राह्मणो ब्रह्मप्राप्तियोग्योऽधिकारी लोकान् विष्णुलोकेतरान् कर्मचितान् कर्मापादितान् असारानित्यतया परीक्ष्य निर्वेदं

वैराग्यमायात् प्राप्नुयात् । स च मोक्षादितरत्र निर्विण्णो यस्मादकृतो नित्यपुमर्थो मोक्षः कृतेन कर्मणा न सिद्ध्यति तस्मात्तद्विज्ञानार्थं मोक्ष-साधनीभूतात्मयोग्यभगवत्साक्षात्कारार्थं श्रवणादिकं कर्तुं समित्पाणिः सन् श्रोत्रियं वेदाध्ययनसम्पन्नं ब्रह्मनिष्ठं तत्प्रतिपाद्यपरब्रह्मज्ञाने निष्ठावन्तं गुरुमेवाभिगच्छेत् ॥ १२ ॥

## उपनिषत्

**तस्मै स विद्वानुपसन्नाय सम्यक्**
**प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्वतो ब्रह्मविद्याम् ॥ १३ ॥**

**॥ इति प्रथमे द्वितीयः खण्डः ॥**

## खण्डार्थः

**श्री.**- पश्चाद्गुरुणा किं कार्यमित्यत आह- **तस्मा इति** ॥ विद्वान् 'न कञ्चन वसतौ प्रत्याचक्षीत तद्व्रतम्' इत्युक्तप्रकारेण प्राप्तसच्छिष्यप्रत्याख्याने दोषं विद्वान् स गुरुरुपसन्नायोपसत्तियुक्ताय सम्यक् प्रशान्तचित्ताय प्रकर्षेण विषयोपरतचित्ताय शमान्विताय भगवन्निष्ठबुद्धियुक्ताय तस्मै अधिकारिणे येन यया विद्यया सत्यं साधुगुणयुक्तं पुरुषं पूर्णषड्गुणम् अक्षरं परं ब्रह्म अधिकारी तत्त्वतो वेद तां ब्रह्मविद्यां प्रोवाच व्यत्ययेन प्रब्रूयादित्यर्थः ॥ १३ ॥

॥ इति द्वितीयखण्डमन्त्रार्थः ॥

**॥ इति प्रथममुण्डकं समाप्तम् ॥**

## ॥ अथ द्वितीये प्रथमः खण्डः ॥

### उपनिषत्

(विश्वस्रष्टा विष्णुः)

ॐ ॥ तदेतत् सत्यम् ।

**यथा सुदीप्तात् पावकाद् विष्फुलिङ्गाः**
**सहस्रशः प्रभवन्ते सरूपाः ।**
**तथाऽक्षराद् विविधाः सोम्य भावाः**
**प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥**

### खण्डार्थः

**श्री.-** श्रुतिर्वक्ष्यमाणप्रमेयविश्वासजननायाह- **तदेतदिति** ॥ यद्गुरुणोत्तरत्रोपदिश्यते तत्सत्यं यथार्थम् । न मिथ्येत्यर्थः । गुरूपदेशप्रकारमेवाह- **यथेत्यादिना** ॥ हे सोम्य स दृष्टान्तो यथा सुदीप्तात् पावकादग्नेः सहस्रशः सहस्रसङ्ख्याकाः सरूपाः पावकसमानरूपाः शुक्लभास्वररूपवन्त इति यावत् । विष्फुलिङ्गाः प्रभवन्ते प्रभवन्ति । तत्रैव पुनरपियन्तीति च ग्राह्यम् । तथाऽक्षराद् भगवतः सकाशाद् विविधा अनेकप्रकारा भावाः पदार्था प्रजायन्ते तत्रैवाक्षरप्रलये अपियन्ति प्रविशन्ति चेत्यर्थः ॥ १ ॥

### उपनिषत्

(विष्णुकृतायाः सृष्टेः निरूपणम्)

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।**
**अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः ॥ २ ॥**

वैराग्यमायात् प्राप्नुयात् । स च मोक्षादितरत्र निर्विण्णो यस्मादकृतो नित्यपुमर्थो मोक्षः कृतेन कर्मणा न सिद्ध्यति तस्मात्तद्विज्ञानार्थं मोक्ष-साधनीभूतात्मयोग्यभगवत्साक्षात्कारार्थं श्रवणादिकं कर्तुं समित्पाणिः सन् श्रोत्रियं वेदाध्ययनसम्पन्नं ब्रह्मनिष्ठं तत्प्रतिपाद्यपरब्रह्मज्ञाने निष्ठावन्तं गुरुमेवाभिगच्छेत् ॥ १२ ॥

## उपनिषत्

**तस्मै स विद्वानुपसन्नाय सम्यक्**
**प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्वतो ब्रह्मविद्याम्** ॥ १३ ॥

**॥ इति प्रथमे द्वितीयः खण्डः ॥**

## खण्डार्थः

**श्री.-** पश्चाद्गुरुणा किं कार्यमित्यत आह- **तस्मा इति** ॥ विद्वान् 'न कञ्चन वसतौ प्रत्याचक्षीत तद्व्रतम्' इत्युक्तप्रकारेण प्राप्तसच्छिष्यप्रत्याख्याने दोषं विद्वान् स गुरुरुपसन्नायोपसत्तियुक्ताय सम्यक् प्रशान्तचित्ताय प्रकर्षेण विषयोपरतचित्ताय शमान्विताय भगवन्निष्ठबुद्धियुक्ताय तस्मै अधिकारिणे येन यया विद्यया सत्यं साधुगुणयुक्तं पुरुषं पूर्णषड्गुणम् अक्षरं परं ब्रह्म अधिकारी तत्त्वतो वेद तां ब्रह्मविद्यां प्रोवाच व्यत्ययेन प्रब्रूयादित्यर्थः ॥ १३ ॥

॥ इति द्वितीयखण्डमन्त्रार्थः ॥

**॥ इति प्रथममुण्डकं समाप्तम् ॥**

## ।। अथ द्वितीये प्रथमः खण्डः ।।

### उपनिषत्

(विश्वस्रष्टा विष्णुः)

ॐ ।। तदेतत् सत्यम् ।

यथा सुदीप्तात् पावकाद् विष्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद् विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ।। १ ।।

### खण्डार्थः

**श्री.-** श्रुतिर्वक्ष्यमाणप्रमेयविश्वासजननायाह- **तदेतदिति** ।। यद्गुरुणोत्तरत्रोपदिश्यते तत्सत्यं यथार्थम् । न मिथ्येत्यर्थः । गुरूपदेश-प्रकारमेवाह- **यथेत्यादिना** ।। हे सोम्य स दृष्टान्तो यथा सुदीप्तात् पावकादग्नेः सहस्रशः सहस्रसङ्ख्याकाः सरूपाः पावकसमानरूपाः शुक्लभास्वर-रूपवन्त इति यावत् । विष्फुलिङ्गाः प्रभवन्ते प्रभवन्ति । तत्रैव पुनरपि-यन्तीति च ग्राह्यम् । तथाऽक्षराद् भगवतः सकाशाद् विविधा अनेक-प्रकारा भावाः पदार्था प्रजायन्ते तत्रैवाक्षरप्रलये अपियन्ति प्रविशन्ति चेत्यर्थः ।। १ ।।

### उपनिषत्

(विष्णुकृतायाः सृष्टेः निरूपणम्)

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः ।। २ ।।

## भाष्यम्

**'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
अक्षरं परमं श्रीस्तु परतः परमक्षरम् ।
वासुदेवः परानन्द इति त्रिविधमक्षरम् ॥' इति च ॥**

## प्रकाशिका (श्रीवादिराजतीर्थीया)

'अपरं त्वक्षरं या सा' इति वदता उपनिषदि अपरतोऽक्षराज्जडप्रकृतेः, परतोऽक्षराच्चितः प्रकृतेश्च परः अक्षरः परमात्मेति योजना सूचिता। ननु 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतौ द्युशब्दो नास्ति । अतो 'विष्ण्वङ्गानां हि नामानि द्युम्वादीनि तु सर्वशः' इति वाक्यस्य कथं प्रकृतोपयोग इति चेत्सत्यम् । 'मूर्धा दिवो नाभिरग्निः पृथिव्याः' इति, 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः' इत्यादिश्रुतौ मूर्धा द्यौरिति सामानाधिकरण्यं प्रतीयते नाभिरग्निरितिवत् । दिवः द्युलोकाः सर्वे मूर्धा इति हि प्राचीनश्रुतेरर्थः । द्वितीयश्रुतेरपि सुष्ठु तेजो यस्य सः सुतेजाः द्युलोको मूर्धेत्यर्थः ।

**'अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥'**

(भाग. १०.३८.१४)

इति भागवते स्पष्टं द्यौः कं शिर इति प्रतीयते। अतो बहुधा द्युमूर्धत्वस्यैव श्रुतिस्मृत्यादौ प्रसिद्धत्वाद्बहूनामुपकारो न्याय्य इति भावेन तत्रत्यविरोध-परिहाराय स्मृतयः सर्वत्र द्युम्वादीनीत्याहुः। तेनैव न्यायेनात्रापि समाधानं भविष्यतीतीमां स्मृतिमुद्धरतो भाष्यकारस्य भावः । 'हृदयं विश्वमस्य' इत्यस्य 'स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त । विश्वो हिरण्यगर्भः' इति भाष्योदाहृतश्रुतौ विश्वपदेन वायोः गृहीतत्वात् हृदयं

विश्वमस्येत्यत्रापि वायोर्ग्रहणे वायुः प्राण इत्यनेन पुनरुक्तिप्रसङ्गाद्विश्वमिति काचिद्देवतेत्यर्थः । 'यश्च सूर्यः सोमात् पर्जन्यौषधयः' इत्यत्र चक्षुषी चन्द्रसूर्यावित्युभयोः सहोत्पत्त्युक्तेर्यश्च सूर्यस्तस्मात्सोमः सोमात्पर्जन्यौषधय इति व्याख्या न युक्ता । किन्तु यश्च सूर्यस्तस्मात्सूर्यात् सोमाच्च पर्जन्यौषधयः पृथिव्यां जाता इत्यर्थः । पूर्वं पुरुषनामकभगवदङ्गादेवोत्पत्तिरुक्ता । अधुना पुरुषास्त्रियश्चेति मिथुनादुत्पत्तिमाह- **पुमानिति** ॥ पुमान् पुरुषनामकः परमात्मा योषितायां योषित्पदवाच्यलक्ष्म्यां रेतः सिञ्चतीत्यर्थः । 'टापश्चापि हलन्तानाम्' इति वचनात् दिशि दिशेतिवत् वाचि वाचेतिवच्च योषिति योषितेत्यपि शब्दोऽस्तीति ज्ञेयम् । यज्ञाश्च सर्व इत्यत्र यज्ञपदेन पशुबन्धरहितं पञ्चमहायज्ञादिकं गृह्यते । क्रतुपदेन च पशुबन्धसहिताग्निष्टोमादिकं गृह्यते । कृती प्रयत्न इति धातोः बहुयत्नसाध्ययज्ञस्य क्रतुपदवाच्यत्वाद्युक्तोऽयमर्थः । अतो न पौनरुक्त्यमिति भावः ॥ २ ॥

**श्री.टी.**- ननु यदुक्तमक्षरात् सम्भवतीह विश्वमित्यत्राक्षरं परब्रह्मैवेति । तदयुक्तम् । 'अक्षरात् परतः परः' इति वाक्ये प्रकृताक्षरादपि परतः परस्यान्यस्याभिधानात् । अक्षरस्य परब्रह्मत्वे च तदसम्भवात् । नहि विष्णोरप्यन्यः परोऽस्तीत्याशङ्क्य भवेदेतद्यद्यक्षरात् परतः पर इत्यत्र प्रकृतादृश्यत्वादिगुणकाक्षरमेवाधिकृत्य ततः कस्यचित्परत्वमुच्यते । नैतदस्ति । किन्तु प्रकृताक्षरस्यैवाक्षरात्परतः परत्वविशेषणमुच्यते । नचाक्षरस्याक्षरात् परतः परत्वं विरुद्धमिति वाच्यम् । प्रमाणे त्रिविधाक्षराभिधानादक्षरान्तरादस्याक्षरस्य परत्वोपपत्तेरित्यभिप्रेत्याक्षरत्रैविध्यं प्रमाणेन दर्शयति- **अपरं त्विति** ॥ या जडरूपिका प्रकृतिः सा अपरमक्षरमिति सम्बन्धः । श्रीस्तु परममक्षरमित्यन्वयः ।

परतः परमाक्षराच्छ्रीतत्त्वात्। यथोक्तं सूत्रकृता- 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति। उक्तं च भाष्ये-

'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया॥
तामक्षरं परं प्राहुः परतः परमक्षरम्।
हरिमेवाखिलगुणमक्षरत्रयमीरितम्॥'

इति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव, इति ॥२॥

## खण्डार्थः

**श्री.-** अक्षरनामकस्य भगवतो गुणान् वदन्नेव जगत इव न तस्यापि जन्मादिकं मन्तव्यमित्याह- **दिव्य इत्यादिना**॥ दिव्यः अलौकिकः। अमूर्तोऽपरिच्छिन्नपरिमाणः प्राकृतमूर्तिशून्यो वा। पुरुषः पूर्णषड्गुणः। बाह्याभ्यन्तरः बहिरन्तश्च नियामकतया स्थितः। अजः उत्पत्तिरहितः। 'अप्राणो ह्यमना' इति षोडशकलाराहित्यमुच्यते। शुभ्रः शुद्धः। अक्षराज्जडप्रकृतेः परतः परमाच्छ्रीतत्त्वात् पर उत्तमः। इदं च 'अपरं त्वक्षरं या सा' इत्यादिप्रमाणप्रसिद्धमिति हिशब्दार्थः॥ २॥

## उपनिषत्

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३॥**

## खण्डार्थः

**श्री. -** एतस्मादक्षरनामकाद् भगवतः प्राणादिशब्दैर्देवता जडं चोच्यते। विश्वस्य धारिणी जगद्धारणसमर्था॥ ३॥

## उपनिषत्

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥

## भाष्यम्

'विष्ण्वङ्गानां हि नामानि द्युम्वादीनि तु सर्वशः ।
क्रीडादिशक्तिरूपत्वात् तज्जत्वादन्यवस्तुषु ॥' इति च ॥

**श्री.टी.-** अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्यादौ सामानाधिकरण्यप्रयोगबलादग्न्यादीनां भगवन्मूर्धादिभिरभेदप्रतीतिवारणाय प्रमाणेनैव तदभिप्रायमाह- **विष्ण्वङ्गानां हीति** ॥ मूर्धादीनामित्यर्थः । 'द्यौर्मूर्धा' इति शाखान्तरपाठाभिप्रायेणेदम् । अत्र मूर्धेत्यनुवादेनाग्नित्वादिकं विधेयमिति ज्ञातव्यम् । क्रीडादीति द्युशब्दार्थानुवादः । 'दिवु क्रीडा' इत्यादिधातोरिति ज्ञेयम् । अन्यवस्तुष्विति सम्बन्धः । तज्जत्वाद्विष्ण्वङ्गजन्यत्वादित्युपलक्षणम् । तदाश्रितत्वाच्चेत्यपि द्रष्टव्यम् । यथोक्तं द्वितीयस्कन्धतात्पर्ये-

'प्रतिमापेक्षयाङ्गानि स्वरूपापेक्षया तज्जानि तदाश्रितानि च ।'
(भा.ता. २.१.२६)

'प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपतः ।
तदाश्रितानि तज्जानि बह्वङ्गत्वं बहुत्वतः ॥' (भा.ता. २.१.३१)
इति ॥

अत्र चाग्निरित्यनुवादेन मूर्धत्वादिकं विधेयमित्यवगन्तव्यम् । हिशब्देन-

'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नाम वाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ॥'
इत्यादि प्रमाणप्रसिद्धिं दर्शयति ॥ ४ ॥

## खण्डार्थः

**श्री.-** प्राणादिदेवानामुक्तामेवोत्पत्तिमङ्गविशेषाद्वचनेन विवृण्वन् भगवदङ्गानामग्न्यादिशब्दवाच्यत्वरूपं महिमानं चाह - **अग्निरित्यादिना ॥** भगवन्मूर्धादिरग्न्यादिशब्दवाच्यः । प्रसिद्धाग्न्यादिर्देवसमूहोऽपि मूर्धादिस्तज्जन्यस्तदाश्रितश्चेति योज्यम् । न चात्र 'मुखादिन्द्रश्चाग्निश्च', 'दंष्ट्रार्यमेन्दू', 'चन्द्रमा मनसो जातः' इत्यादिविरोधः । बहुरूपत्वाङ्गीकारात् । यथोक्तम्- 'बह्वङ्गत्वं बहुत्वतः' इति । विवृताः देशतः कालतश्च व्याप्ताः । प्राणो मुख्यप्राणः । वायुः श्वासरूपवायुजन्यः । ननु 'वायुः प्राणः' इति कथम् ? 'आनीदवातम् अतमोऽवायु' इति श्रुतौ सर्वथा श्वासादिरूपवाय्वभावोक्तेः । तमोवाय्वादीनां सर्वात्मना निवृत्तिरिति तत्त्वप्रकाशिकाविरोधश्चेति चेत् । उच्यते । 'अवातं' 'वातप्रेरणाशून्यम्' इति तत्त्वोद्योतटीकायां व्याख्यातत्वेन मुख्यप्राणप्रेरणाशून्यमित्यर्थकत्वेन सच्चिदानन्दात्मकश्वासाङ्गीकाराविरोधित्वात् । भगवतः सर्वात्मना श्वासाभावे 'श्वसितं मातरिश्वनः', 'प्राणाद्वायुरजायत' 'श्वासैजदलकव्रातम्' इत्यादिवाक्यविरोधापत्तेः । विष्णोर्जडवायुः श्वासादिरूपोऽस्तीति केचित् । तन्न । तस्मान्मुख्यप्राणोत्पत्त्ययोगात् । भगवदङ्गादुत्पत्तिकथनस्य प्रकृतत्वेन तदलाभाच्च । श्वासरूपेण मुख्यप्राण एव तद्देहेऽस्तीत्यपि केचित् । तदप्ययुक्तम् । तथात्वे स्वस्मादेव स्वस्योत्पत्तिप्राप्त्याऽग्न्यादीनां मूर्धादिभगवदङ्गेभ्य इव मुख्यप्राणस्यापि भगवदङ्गादुत्पत्तेरलाभापत्तेः । तस्माद् भगवच्छ्वासस्य सच्चिदानन्दात्मक-

त्वेनाप्राकृतत्वमङ्गीकृत्य मूर्धादिवद् भगवदङ्गत्वमेव वाच्यमिति । अत एव वाय्वादिप्राणाशक्यकार्यकर्तृत्वेन भगवच्छ्वासस्य लोकविलक्षणत्वेन पृथग्वर्त्मत्वप्रसिद्धिरुपपद्यते । यथोक्तं छान्दोग्यभाष्ये पञ्चमाध्याये वैश्वानर-विद्यायाम्- 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' इत्यत्र । 'वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरिर्यतः । प्राणस्तेन पृथग्वर्त्मा' इति हरेः प्राण इत्यन्वयः । प्राणः श्वास इति तदर्थः । विश्वमिति काचिद्देवता ।

ननु 'स मुनिर्भूत्वा समचिन्तयत्तत एते प्रजायन्त विश्वो हिरण्य-गर्भोऽग्निः' इत्यत्र विश्वपदस्य 'विश्वो वायुः' इति वायुपरत्वेन तत्त्व-प्रकाशिकायां व्याख्यातत्वादत्रापि स एव विश्वपदवाच्यः किं न स्यादिति चेन्न । 'वायुः प्राणः' इति पृथगुक्तत्वात् । एष अक्षरनामा भगवान् । सर्वभूतान्तरात्मा सर्वभूतान्तर्यामी । अग्निः यश्च सूर्यः सोऽपि तस्मादेव सम्यगिद्धो भवति । ञि इन्धी दीप्तौ । दीप्तो भवतीत्यर्थः । यस्मात् सोमात्पर्जन्यो जातः यस्माच्च पृथिव्यां जाता ओषधय आप्यायिताः भवन्ति स सोमोऽपि तस्मादेवेद्धो भवतीत्यर्थः । यथोक्तम्- 'यदादित्यगतं तेजः' (भ.गी.) इत्यादि ॥ ४ ॥

## उपनिषत्

**तस्मादग्निः समिधो यश्च सूर्यः**
**सोमात् पर्ज्जन्य ओषधयः पृथिव्याम् ।**
**पुमान् रेतः सिञ्चति योषितायां**
**बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥**

## भाष्यम्

'वासुदेवः पुमान्नाम पूर्णत्वात् स स्वयोषिति ।
रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे' इति च ॥

**श्री.टी.**- ननु भगवतोऽक्षरात्सृष्टिः प्रकृता सैव वक्तव्या 'पुमान् रेतः सिञ्चति योषितायाम्' इत्यादिना लौकिकस्त्रीषु पुरुषाभ्यां सृष्टिकथनमसङ्गतमित्यतः प्रमाणेनैव सङ्गततया व्याचष्टे- **वासुदेव इति** ॥ वासुदेवादिचतूरूपी भगवानित्यर्थः । योषितीत्यनेन योषिच्छब्दपर्यायो योषिताशब्द इत्युक्तं भवति । रमायां मायादिनाम्न्यां स्वयोषिति स्वभार्यायामित्यर्थः । 'रेतः सिञ्चति' इत्यस्याभिप्रायो गर्भमदधादिति । प्रजाः पुन्नामकब्रह्मपूर्वाः ॥

## खण्डार्थः

**श्री.**- एवं भगवतः सकाशादङ्गादुत्पत्तिमुक्त्वा मिथुनीभावेनोत्पत्तिमाह- **पुमानिति** ॥ आदिसृष्टौ पूर्णत्वात् पुंनामा वासुदेवादिचतूरूपो भगवान् योषितायां योषिच्छब्दपर्यायो योषिताशब्दः । रमास्वरूपिण्यां मायादिनाम्न्यां स्वभार्यायां रेतः सिञ्चति असिञ्चत् गर्भमदधादित्यर्थः ॥ तस्मात् पुरुषात् बह्वीः बह्व्यः प्रजाः पुन्नामकब्रह्म, सूत्रनामकवायुतद्भार्यादिरूपाः सम्यक् प्रसूताः ॥ ५ ॥

## उपनिषत्

**तस्मादृचः साम यजूंषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**संवत्सरश्च यजमानश्च लोकाः**
**सोमो यत्र पवते यत्र सूर्यः** ॥ ६ ॥

## खण्डार्थः

**श्री.**- ऋगादिशब्दैर्देवता अपि ग्राह्याः । सर्वे यज्ञाः देवर्षिपितृभूत-मनुष्ययज्ञरूपाः पञ्चमहायज्ञाः । क्रतवः पशुबन्धादियुक्ताः । यत्र येषु लोकेषु सोमः पवते सूर्यश्च पवते । धातूनामनेकार्थत्वात् । स्वव्यापारं कुरुत इति यावत् । यद्वा यत्र सोमः सूर्यश्च स्तः पवते, वायुरिति शेषः ॥

## उपनिषत्

तस्माच्च देवा बहुधा सम्प्रसूताः
साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च
श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

## खण्डार्थः

श्री. - तस्माच्च तस्मादेव ब्रह्माण्डाद् बहिरुत्पन्ना ब्रह्माद्या देवाः साध्याश्च तदन्तर्बहुधा अंशेन सम्भूता मनुष्याद्याश्च भूमौ तस्मादेव सम्भूता इत्यर्थः । यद्वा तस्माच्च तत्प्रेरणयैवेन्द्राद्या देवा भूमौ बहुधा अर्जुनादिरूपेण सम्भूता इत्यर्थः । प्राणापानौ तदाद्या पञ्च । प्राणस्योत्पत्तिः 'वायुः प्राणः' इति पूर्वमङ्गादुक्ता । अत्र तु स्त्रियामुच्यत इति भेद इत्यवगन्तव्यम् । अत एव मुख्यप्राणरूपपुत्रोत्पत्तिकामः सन् लक्ष्म्यां रमत इति हेतोः 'अनकाममार' इति विष्णोर्नाम ऐतरेयोपनिषदि प्रसिद्धमित्यवगन्तव्यम् । यद्यपि बह्वीः प्रजा देवा बहुधा सम्प्रसूता इत्युक्ता प्राणस्याप्युत्पत्तिरुक्तैव । तथापि सामान्येनैवोक्ताऽत्र तु विशिष्योच्यते । तच्चाधिकारिवर्गेषूत्तमत्वाभिप्रायेणेति द्रष्टव्यम् । न चैतस्मात् प्राण इति विशिष्योत्पत्तिरप्युक्तैवेति वाच्यम् । तस्य प्रतिज्ञावाक्यत्वेन तद्वाक्यप्रतिज्ञातोत्पत्तेरेवात्राङ्गात् स्त्रियां चोच्यमानत्वेनादोषत्वात् ॥ ७ ॥

## उपनिषत्

सप्त प्राणाः प्रभवन्ति तस्मात्
सप्तार्चिषः समिधः सप्त होमाः ।
इमे लोका येषु चरन्ति प्राणा
गुहाशयां निहिताः सप्तसप्त ॥ ८ ॥

## भाष्यम्

सप्तार्चिषः वृत्तयः । होमाः सम्बन्धाः । लोका गोळकाः । गुहाशयां बुद्धौ । 'लोपः समाने' इति सूत्रादेकयकारलोपः । प्रतिपुरुषं सप्त सप्त ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

'सप्त प्राणाः' इत्यत्र बुद्ध्या सह सप्त ज्ञानेन्द्रियाणि प्राणपदेनोच्यन्ते । एषां सप्त वृत्तयः ज्ञानोदयाय प्रवृत्तयः अर्थप्रकाशकत्वसाम्यादर्चिरूपत्वाच्चार्चिः पदेनोच्यन्ते । लोकपदेन 'लोकस्तु भुवने जने' इत्यनुशासनादिन्द्रियभूमिस्थानीयगोळका उच्यन्त इत्यर्थः । समिधः विषयाः । मित् मितिस्तया सहिताः समिध इति व्युत्पत्त्या तद्योग्यविषयाणां समित्पदवाच्यत्वमिति भावः । लौकिकसमिधामपि एतावत्परिमाणा एतावत्सङ्ख्याका इति मितिसहितत्वादेव समित्पदवाच्यत्वमिति ज्ञेयम् । हु दानादानयोरिति धातोरग्नावाहुतीनां दानरूपसम्बन्धो हि होम इत्युच्यते । अतोऽत्रापीन्द्रियाणां सम्बन्धो होम इति भावः । हृदयगुहायां मनोरूपेण शेत इति व्युत्पत्त्या गुहाशया बुद्धिः । मानसं ज्ञानमित्यर्थः । तस्यां गुहाशयायाम् । तादर्थ्ये चेयं सप्तमी । 'लोपः समाने' इति सूत्रादेकयकारलोप इत्यर्थः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति प्राक् सामान्येनोक्तदशेन्द्रियेषु परमोपकारित्वाज्ज्ञानेन्द्रियाणि पृथक्कृत्य कृतानीन्द्रियाणि तद्वृत्तीः, तत्स्थानानि गोळकानि, तद्विषयांस्तत्सम्बन्धाश्च सप्त सप्तधा विभज्य गुहाशयां निहितेति ज्ञानाख्यं तत्फलं चोक्त्वा सप्त सप्त निहिता इति प्रतिशरीरं निहितत्वोक्त्या च बहुधा प्रमेयविशेषस्य निरूपितत्वात् पुनरुक्तिशङ्कावसरोऽपि न । किन्तु 'सङ्कोचविस्तराभ्यां हि प्रवदन्ति मनीषिणः' इति वचनात् प्रपञ्च्यप्रपञ्चकभावलक्षणसङ्गत्या उत्खाताङ्कुरस्य पुनः प्रतिरोपणवद्बहुफलवत्त्वेनाऽऽवश्यकत्वात्

प्रागुक्तसृष्टेरेव पुनः प्रपञ्चनम् । अतोऽतिचतुरा सेयमुपनिषदं व्याख्यातुर्भाष्यकारस्य व्याख्येति ज्ञेयम् ।। ८ ।।

**श्री.टी.-** अप्रतीत्यन्यथाप्रतीतिपरिहारायार्चिर्होमलोकगुहाशय-शब्दार्थमाह- **सप्तार्चिष इत्यादिना ।।** वृत्तयः सप्तेन्द्रियजन्या वृत्तयो ज्ञानानि । रूपाद्या विषयाः समिध इत्यपि द्रष्टव्यम् । सम्बन्धाः सप्तेन्द्रियाणां सप्तविषयैः सह सन्निकर्षा इत्यर्थः । गोलकाः इन्द्रियाधिष्ठान-भूता इत्यर्थः । बुद्धौ विषयसप्तमीयम् । बुद्धिविषये बुद्ध्युत्पादनार्थमि-त्यर्थः । ननु गुहाशयामिति द्वितीयाश्रवणाद् बुद्धिमिति व्याख्येयम्, बुद्धाविति कथमुक्तम् ? न चेयं सप्तमीति वाच्यम् । तथात्वे गुहाशयायामिति स्यादिति चेत् । सत्यम् । एकयकारलोपाङ्गीकारात् । किमत्र नियामकमिति चेत् । महाव्याकरणसूत्रमेवेत्याह- **लोपः समान इति ।।** समाने वर्णे परतः पूर्वस्य वर्णस्य क्वचिल्लोपो भवति न सर्वत्रेति सूत्रार्थः । अन्यथा 'गुहाशयायैव न देहमानिने' (भाग. ४.३.२२) इत्यादिप्रयोगानुपपत्तिरिति ज्ञात-व्यम् । सप्त सप्तेति द्विर्वचनं चतुर्दशसङ्ख्यालाभायेति प्रतीतिवारणाय वीप्सेति सूचयन् तदभिप्रायं दर्शयति- **प्रतिपुरुषमिति ।।** प्रतिपुरुषदेहम् । तथा च प्रतिपुरुषमनुगतिसूचनार्थं सप्त सप्तेति द्विर्वचनमित्यर्थः ।। ८ ।।

## खण्डार्थः

**श्री.-** मनः सर्वेन्द्रियाणीति सामान्येन सर्वेन्द्रियाणामुत्पत्तिरुक्ता तत्रेतरेन्द्रियापेक्षया ज्ञानेन्द्रियाणां श्रेष्ठत्वाभिप्रायेण विशिष्य तेषामुत्पत्तिमाह- **सप्त प्राणा इत्यादिना ।।** मनोबुद्धिसहायाः घ्राणाद्याः 'सप्त प्राणाः' सप्त ज्ञानेन्द्रियाणि- तस्मात् पुरुषाद् भगवतो भवन्ति । यथोक्तम्- 'सप्तगतेर्विशेषितत्वाच्च' इति । सप्तार्चिषः सप्तेन्द्रियजन्या ज्ञानरूपा वृत्तयः । समिधः रूपाद्याः सप्तहोमाः सप्तेन्द्रियाणां सप्तविषयैः

सह होमाः सम्बन्धाः सन्निकर्षाः गुहाशयां गुहाशयायां बुद्धौ बुद्ध्यर्थं ज्ञानोत्पादनार्थमिति यावत् । ये प्रतिपुरुषशरीरं सप्तसप्तप्राणा भगवता निहिताः स्थापिता भवन्ति । ते प्राणा येषु लोकेषु चरन्ति ते लोका इन्द्रियाधिष्ठानभूता गोलकाश्च भवन्तीत्यर्थः ॥ ८ ॥

## उपनिषत्

**अतः समुद्रा गिरयश्च सर्वे-**
**ऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसाश्च**
**येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥**

## खण्डार्थः

**श्री.-** सर्वे समुद्रा गिरयश्च अतोऽस्मात्पुरुषाद् भवन्तीति सम्बन्धः । सर्वरूपाः प्राच्यादि नानादिगभिमुखगमनस्वभावाः सिन्धवो गङ्गाद्या नद्योऽस्मादेतत्प्रेरणयैव स्यन्दन्ते । 'स्यन्दू प्रस्रवणे' प्रवाहवत्यो भवन्तीत्यर्थः । येनाक्षरेण प्रेरित एषोऽन्तरात्मा जीवो भूतैर्युक्तो भौतिक-शरीरबद्धः सन् तिष्ठते । अतश्चास्मादेवाक्षरात् पुरुषादोषध्यादयो भवन्तीत्यर्थः । यद्वा एष अन्तरात्मा जीवोऽपि येनाक्षरपुरुषेणोत्पद्यत इत्यर्थः । किं घटादिवत् स्वरूपेणैवोत्पद्यते नेत्युक्तम् । **भूतैस्तिष्ठत इति** ॥ भूतकार्यैर्देहादिभिर्युक्ततया तिष्ठत इत्यर्थः । तथा च देहसम्बन्ध एवोत्पत्तिरिति भावः । हीति प्रमाणप्रसिद्धिं दर्शयति ॥ ९ ॥

## उपनिषत्

**पुरुष एवेदं विश्वं कर्म**
**तपो ब्रह्म परामृतम् ।**

एतद् यो वेद निहितं गुहायां
सोऽविद्याग्रन्थिं विकिरति ह सोम्य ॥ १० ॥

॥ इति तृतीयः खण्डः ॥

॥ प्रथमोऽध्यायः समाप्तः ॥

## भाष्यम्

भगवतः कर्म चेष्टा तपो ज्ञानं च परामृतब्रह्माख्यः पुरुषो भगवानेव ।

'यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः ।
तत् सर्वं भगवानेव ये च धर्मा बलादयः ॥' इति च ॥

'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः ॥

श्री.टी.- 'पुरुष एवेदम्' इति वाक्यं परेणेत्थं व्याख्यातम् । पुरुषो जीवः संसारी परामृतं मुक्तजातं कर्म तप आद्युपलक्षितमिदं सर्वं विश्वं ब्रह्मैवेति। तदसत् । 'द्वा सुपर्णा', 'मुक्तानां परमा गतिः', 'अमृतस्यैष सेतुः', 'स इदं सर्वमसृजत', इत्यादिप्रमाणविरोधादित्याशयेनाक्षरनामकस्य भगवतो यज्जगत्सर्जनादिरूपं कर्मोक्तं यच्च 'तपसा चीयते' इत्यादिना ज्ञानमुक्तं तथा सर्वजगत्सृष्ट्युक्त्या बलचिकीर्षाप्रयत्नादयो धर्मा अप्युक्तप्रायाः । तत्र कर्मतपआदिधर्मैर्भगवतो भेदप्रतीतिवारणायेदं वाक्यमित्यभिप्रेत्य सम्यग् व्याचष्टे- **भगवत इत्यादिना** ॥ कर्मेत्यनूद्य चेष्टेति व्याख्यातं जगत्सर्जनादिरूपपरिस्पन्दरूपा च क्रियेत्यर्थः । तप इत्यनूद्य ज्ञानमिति व्याख्यातम् । परामृतं ब्रह्म पुरुष एवेत्यन्वयमभिप्रेत्य विशेषणविशेष्यभावोपपत्त्यर्थं परामृतब्रह्माख्यस्तदुभयशब्दवाच्य इत्युक्तम् । अत्रार्थे प्रमाणमाह- **यैषेति** ॥ सर्वमिति विश्वशब्दार्थः । पुरुष एवेत्यस्यार्थो

भगवानेवेति । ये च धर्मा बलादय इति प्रमाणप्रमितवस्तुवाचीदंशब्द-व्याख्यानमित्यवगन्तव्यम् ।

नन्वनित्यानां क्रियाणां नित्येन भगवता कथमभेदः स्यात् । विरुद्ध-धर्माधिकरणत्वस्य भावभेदाव्यभिचारित्वात् । अन्यथा जगति भेदाभाव-प्रसङ्गादिति चेत् । अत्र ब्रूमः । भगवद्धत्तत्क्रियाणामपि नित्यत्व-मेवाङ्गीकृतमिति विरुद्धधर्माधिकरणत्वस्यासिद्धिः । तथाहि भगवत्सम्बन्धिसर्जनादिक्रियाणामनित्यत्वं किं प्रमाणबलादङ्गीक्रियते, उत नित्यत्वे बाधकसद्भावात् । अथवा तत्साधकप्रमाणाभावात् । नाद्यः। भगवतस्तत्क्रियायाश्चाप्रत्यक्षत्वेन तदनित्यत्वस्य प्रत्यक्षेण प्रत्येतु-मशक्यत्वात् । लिङ्गाभावेनानुमानानुपपत्तेः । क्रियात्वं लिङ्गमिति चेन्न । तत्किं धात्वर्थत्वं परिस्पन्दत्वं वा । नाद्यः । ज्ञानेच्छाप्रयत्नैः सत्तया च व्यभिचारात् । न द्वितीयः । ज्ञानादिसर्वक्रियाणामपरिस्पन्दरूपत्वेन भागासिद्धत्वात् । ईश्वरपरिस्पन्दपक्षीकारे त्वाश्रयासिद्धिस्तार्किकेण तस्यानङ्गीकृतत्वात् । क्रियात्वस्यानित्यत्वेनाविनावृत्तौ बाधकाभावाद-प्रयोजकता च । कार्यत्वेन सोपाधिकत्वं च । तस्यापि साधने बाधः । 'परास्य शक्तिः' इति श्रुत्या क्रियायाः स्वाभाविकत्वोक्त्याऽकार्य-त्वावगमात् । असत्यावरणे प्रागूर्ध्वं चानुपलम्भो लिङ्गमिति चेत् । अनुपलम्भः किं प्रत्यक्षेणोत प्रमाणमात्रेण । नाद्यः । योग्यतयाऽनुप-लम्भविशेषणेऽसिद्धिः । भगवत्क्रियाया अयोग्यत्वात् । अन्यथा गगनादौ व्यभिचारात् । द्वितीये त्वसिद्धिः । आगमादिनोपलब्धेः । असत्यावरणे कदाचिदेवोपलम्भो लिङ्गमिति चेन्न । वर्णनित्यत्ववादेऽनैकान्त्यात् । नित्यापि भगवत्क्रिया कदाचिदभिव्यक्तेः कदाचिदेवोपलभ्यत इत्यङ्गीकारे बाधकाभावेनाप्रयोजकत्वाच्च । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वं लिङ्गमिति चेन्न । वर्णनित्यत्ववादे वर्णेषु व्यभिचारात् । विशेष्यासिद्धेश्च

बाह्येन्द्रियग्राह्यसजातीयत्वस्य विवक्षितत्वान्न विशेष्यासिद्धिरिति चेन्न। परमाण्वादौ व्यभिचारात्।

नाप्यागमाद् भगवत्क्रियाऽनित्यतावगतिः। स हि भगवत्क्रियाऽनित्येत्येवमात्मको वा स्यात् 'स इमांल्लोकानसृजत' इत्येवमात्मको वा। आद्यस्तु नोपलभ्यते। द्वितीयस्तु 'स ऐक्षत', 'सोऽकामयत' इत्यादिना तुल्यः। तथा चासृजतेति कादाचित्कतावगत्या क्रियाया अनित्यत्वे ज्ञानेच्छयोरपि तत्कुतो न भवेदिति। अस्तु तर्हि नित्यत्वे बाधकसद्भावादिति द्वितीयः पक्षः। तथाहि- यदि सृष्टिसमयेऽपि संहारक्रिया विद्येत तदा तथैव श्रुत्यादावुपलभ्येत जननविनाशौ च घटस्य युगपत्प्रसज्येयाताम्।

किञ्च यदीश्वरक्रिया नित्या स्यात्तर्हि क्रियायाः संयोगविभागौ प्रत्यनपेक्षकारणत्वात्तदुत्पत्तिसातत्यप्रसङ्गः। अपि चेश्वरक्रिया संयोगविभागौ करोति न वा। नेति पक्षे क्रियात्वं व्याहन्येत। संयोगविभागौ प्रत्यनपेक्षकारणत्वस्यैव कर्मत्वात्। आद्ये किं स्वसत्तोत्तरक्षणे करोति उत विरम्य। नाद्यः। स्वसत्ताया इदंप्रथमताभावेन संयोगादिविशेषस्य विवक्षितक्षणादपि पूर्वमुत्पत्तिप्रसङ्गात्। न द्वितीयः। पूर्वोत्तरावस्थयोरविशिष्टायाः क्रियाया विरम्यव्यापारायोगात्। उत्तरसंयोगस्य कर्मविनाशकत्वेन कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तेश्चेति चेत्। उच्यते। तत्तत्कार्यजननात्तिरेव क्रियेत्युच्यते नान्या। तथा च शक्तिरूपेणानित्या सा सर्जनादिक्रिया यदा व्यज्यते तदा व्यवहारालम्बनं तत्तत्कार्यजननी च भवतीत्यङ्गीकारात्। तत्र यत्तावदुक्तं यदि सृष्टिसमयेऽपि संहारक्रिया स्यात्तदा तथा व्यवह्रियेतेति। तदसत्। व्यक्तिरूपेणैव व्यवहारालम्बनत्वात्। यदपि जननविनाशौ युगपत्स्यातामिति। तदपि व्यक्त्यवस्थाया एव शक्तेर्जनकत्वादनुपपन्नम्।

यच्च क्रियाया नित्यत्वसंयोगविभागोत्पत्तिसातत्यप्रसञ्जनं तदप्येवमेव परिहृतम् । व्यक्त्यवस्थोपेताया एव क्रियायाः संयोगादिजनकत्वाङ्गीकारात्तस्याश्च सर्वदाऽभावात् । किञ्चैवं घटसामग्र्याः पटोत्पत्तावनपेक्षत्वात् पटोत्पत्तिसातत्यं स्यात् । ननु सामग्री तमेव पटं जनयेदुत पटान्तरम् । नाद्यः । प्रागभावस्यापि सामग्रीनिविष्टत्वात् । तस्य च पटोत्पत्त्या विनष्टत्वेन सामग्र्या विकलत्वात् । न द्वितीयः । पूर्वपटेन प्रतिबद्धत्वात् । तत्कथं पटोत्पत्तिसातत्यापादनमिति चेत् । सत्यम् । सममेत्प्रकृतेऽपि क्रियायामपीति । यदपीश्वरक्रियासंयोगविभागौ करोति न वेति पृष्टम् । तत्र करोतीति ब्रूमः । कुर्वन्ती च विरम्यैव । न च तदनुपपत्तिः । व्यक्त्यविशिष्टत्वात् । न च कृतसंयोगस्य कर्मणो व्यवस्थानानुपपत्तिः । अनित्यक्रियासु तद्व्यवस्थोपपत्तेः ।

ननु केयं शक्तेर्व्यक्तिर्नाम । न तावत्प्रतीतिः । तस्या ईश्वरापेक्षया नित्यसिद्धत्वेनोक्तदोषानुवृत्तेः । परापेक्षाया कदाप्यभावात् । भावेऽपि कार्योत्पादस्य तदनपेक्षत्वादिति चेत् । मैवम् । व्यक्तिशब्देन शक्तेरेव सृष्ट्यादिकालविशेषसम्बन्धरूपावस्थाविशेषस्य विवक्षितत्वात् । ननु क्रियायाः शक्तिव्यक्तिरूपे परस्परं भिन्ने उताभिन्ने । आद्ये शक्तिरेव नित्या व्यक्तिस्त्वनित्येत्यापन्नम् । शक्तेः सार्वकालिकत्वाद् व्यक्तेश्च कादाचित्कत्वात् । तच्चानिष्टं भवताम् । द्वितीये त्वनिवृत्तः सदा व्यवहारप्रसङ्ग इति चेन्न । अभिन्ने एव शक्तिव्यक्ती । न चोक्तदोषः । अभेदे भेदकार्यनिर्वाहस्य विशेषस्याङ्गीकारेण तद्बलात्सदा व्यवहारप्रसङ्गाभावोपपत्तेः । ननु यदि शक्तिव्यक्तिधर्मभूतः सविशेषविशेषिभ्यां शक्तिव्यक्तिभ्यां भिन्नस्तदा शक्तिव्यक्त्योरपि भेदः स्याद् धर्मत्वाविशेषात् । यदि चाभिन्नस्तदा पुनर्व्यवहारादिसाङ्कर्यमिति चेन्न । अभिन्न एवायं विशेषः शक्ति-

व्यक्तिभ्याम् । न चोक्तदोषः । अभिन्नोऽपि पुनर्विशेषवानङ्गीक्रियते । न चानवस्था । स्वनिर्वाहकत्वाङ्गीकारात् । एवं शक्तिव्यक्तिरूपतामङ्गीकृत्य समाधानं परेणाप्यवश्यं वाच्यम् । अन्यथा परमेश्वरस्य ज्ञानेच्छाप्रयत्न-लक्षणसंहारव्यापारस्य नित्यत्वात् सदा संहारक्रिया स्यादित्यति-प्रसङ्गस्तन्मतेऽपि समानः । ननु नित्यमपि परमेश्वरेच्छादिकं सहकारिसद्भाव एव कार्यकारीति चेन्न । असहकारिणामपि नित्यत्वात् परमेश्वरेच्छायत्त-त्वाच्च ।

ननु नेच्छामात्रं संहारादिकारणं किन्तु सञ्जिहीर्षादिकमेवेति चेत् । तत्किं नित्येच्छादितो व्यतिरिक्तमेव सञ्जिहीर्षादिकमुत संहारादि-विशेषणविशिष्टं तदेव । नाद्यः । अनभ्युपगमात् । अभ्युपगमेऽपि वा तत एव संहारादिसिद्धाविच्छादिकल्पनावैयर्थ्याच्च । न द्वितीयः । सति संहारादौ सञ्जिहीर्षादिकं ततः संहारादिरिति परस्पराश्रयप्रसङ्गात् । तस्माच्छक्ति-व्यक्तिरूपता सर्वथानुसरणीया । सा च समा क्रियायामपीति । नन्वस्त्वेवं सर्जनादिरूपायाः क्रियायाः नित्यत्वेन भगवदात्मकत्वं परिस्पन्दरूपायास्तु क्रियायाः कथं भगवदात्मकत्वमुक्तं युज्यते । परिस्पन्दरूपक्रियाया एवेश्वरेऽभावादिति चेन्न । परिस्पन्दाभावे प्रमाणाभावात् । परममहत्परि-माणमस्तीति चेत् । अणुमध्यमपरिमाणाभ्यां सत्प्रतिपक्षत्वात् । न च ते न स्त इति स्वरूपासिद्धिरिति वाच्यम् । परममहत्त्वेऽपि तथा वक्तुं शक्यत्वेन तथाप्यसिद्धेः । न च 'महतो महीयान्' इति श्रुत्या मम तत्सिद्धिरिति वाच्यम् । 'अणोरणीयान्' इति श्रुत्या ममापि तत्सिद्धेः । अणोरणीयस्त्व-मप्रत्यक्षत्वोपलक्षणम् । नाणुपरिमाणसाधकमिति चेत् तर्हि महतो महत्त्वमपि परमपूज्यत्वमेवेति न महत्परिमाणसाधकमिति वक्तुं शक्य-त्वात् ।

ननु विरोधेन परिमाणद्वयाङ्गीकारायोगान्महत्परिमाणमेवाङ्गीकृत्याणोरणीयस्त्वमप्रत्यक्षत्वोपलक्षकत्वमित्येव वाच्यमिति चेत्तर्हि प्रथमप्राप्तत्वादणुत्वमेव ग्राह्यम् । तथा च महतो महत्त्वं परमपूज्यत्वमित्येवाङ्गीक्रियताम् । अङ्गीकृत्य चेदमुदितम्। वस्तुगत्या लोकदृष्ट्या विरुद्धानामपि धर्माणां भगवति समावेशस्य 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति' इत्यादिप्रमाणप्रमितत्वेन भगवति युगपदणुत्वमहत्त्वयोरविरुद्धत्वात् । यथोक्तमनुव्याख्याने-

'अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥
ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि ॥' (ब्र.सू.अनु. १.३.१)

अविरोधेन गोविन्दे सन्तीति । तस्माद्भगवति परिस्पन्दरूपक्रियाया अपि सत्त्वेन तस्याश्च नित्यत्वाच्छक्तिव्यक्त्यङ्गीकारेणातिप्रसङ्गपरिहारसम्भवाद् युक्तं तस्या भगवदभेदकथनमित्यास्तां विस्तरः । उक्तं चैतत्सर्वमनुव्याख्याने लिङ्गपादे-

'अनित्यत्वात् क्रियाणां तु कथमेव स्वरूपता ।
इति चेत्, स विशेषोऽपि क्रियाशक्त्यात्मना स्थिरः ॥
शक्तिता व्यक्तिता चेति विशेषोऽपि विशेषवान् ।
अभिन्नोऽपि.......................... ॥'

(ब्र.सू.अनु. १.२.९) इति ॥

नन्वेवं भगवतोऽन्यत्र घटादावपि क्रियायाः नित्यत्वमङ्गीक्रियताम् । शक्तिव्यक्तिस्वीकारेण सकलदोषपरिहारादिति चेत् । सत्यमङ्गीकुर्मो यदि तन्नित्यतायां प्रमाणं स्यात् । सति निर्बाधप्रमाणे तद्विपरीतेषु च व्यवहारेषु सत्सु तदन्यथानुपपत्त्या कल्पनैषा प्रभवति । न च घटादिक्रियाया नित्यत्वे

निर्बाधं प्रमाणमस्ति । अस्ति च भगवत्क्रियाया नित्यत्वे तदित्याह- **स्वाभाविकीति** ॥ ज्ञानबलाभ्यां सहिता क्रिया । स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः । तथा च नित्यत्वसिद्धिरिति भावः । एतेन नित्यत्वसाधकप्रमाणाभावात् क्रियाया अनित्यत्वमिति तृतीयः पक्षोऽप्यपास्तो वेदितव्यः । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेरेव साधिकायाः सत्त्वात् । यथोक्तमनुव्याख्याने- 'क्रियादिश्च स्वभाव इति हि श्रुतिः' इति ॥ १० ॥

**॥ इति तृतीयखण्डभाष्यार्थः ॥**

**पुरुष एवेदं विश्वं कर्म**
**तपो ब्रह्म परामृतम् ।**
**एतद् यो वेद निहितं गुहायां**
**सोऽविद्याग्रन्थिं विकिरति ह सोम्य** ॥ १० ॥

## खण्डार्थः

**श्री.-** अक्षरनामकस्य पुरुषस्य यज्जगत्सर्जनादिरूपं कर्मोक्तं यच्च 'तपसा चीयते' इत्यादिना ज्ञानमुक्तं तथा सर्वजगत्सृष्ट्युक्त्या बलचिकीर्षाप्रयत्नादयो धर्मा अप्युक्तप्रायाः । तत्र कर्मज्ञानादिधर्मैर्भगवतो भेदशङ्कां वारयंस्तेषां तदैक्यमाह- **पुरुष एवेदमिति** ॥ भगवतो यत्कर्म जगत्सर्जनादिरूपा परिस्पन्दरूपा वा । चेष्टा यच्च तपः ज्ञानं यच्चेदं प्रमाणप्रमितं बलचिकीर्षाप्रयत्नादिधर्मजातं तद्विश्वं सर्वमपि परामृतं ब्रह्म मुक्तनियामकत्वेन स्वातन्त्र्येण निमित्तेन देहहान्यादिरहितत्वेन च परामृतत्वादिशब्दवाच्यः पूर्णगुणत्वाद् ब्रह्मशब्दवाच्यः पुरुषो भगवानेवेत्यर्थः । तथा च कर्मादिधर्मात्यन्ताभिन्न एव भगवान् विशेषबलेनैव तद्वानित्युच्यत इति भावः । एवंवेत्तुः फलमाह- **एतदिति** ॥ हे सोम्य !

योऽधिकारी एतदुक्तप्रकारेण समस्तधर्मात्यन्ताभिन्नं 'यथा सुदीप्तात्' इत्यादिनोक्तमहिमोपेतं वाक्षरनामकं परं ब्रह्म गुहायां हृदयगुहायां दहराकाशे स्थितं वेद अपरोक्षतो जानाति सोऽविद्याग्रन्थिं लिङ्गशरीरं विकिरति= परित्यजति मुक्तो भवतीत्यर्थः । हेत्यनेन 'भिद्यते हृदयग्रन्थिः' (भाग. १.२.२२) इत्यादिप्रमाणप्रसिद्धिं दर्शयति ॥ १० ॥

**॥ इति तृतीयखण्डमन्त्रार्थः ॥**

## ॥ अथ चतुर्थः खण्डः ॥

### उपनिषत्

(विष्णुरेव विजिज्ञास्यः)

**आविः सन्निहितं गुहाचरं नाम महत् पदम् ।**
**अत्रैतत् सर्वमर्पितमेजत् प्राणन्निमिषच्च यत् ॥ १ ॥**

### खण्डार्थः

**श्री.** - पुनरपि शिष्यान् प्रति गुरूपदेशप्रकार एवोच्यते- **आवि-रित्यादिना** ॥ आविः प्रकटं यथा भवति तथा वैकुण्ठादिस्थानत्रये सम्यङ्निहितं जीवगुहायां चरतीति गुहाचरं महत् बहिरपि व्याप्तम् । पद्यत इति पदं प्राप्यम् । यद्वा महत्पदं महाप्राप्यं प्रधानप्राप्यम् । अर्चिरादि-साधारण्यप्रतीतिवारणायेदं विशेषणम् । उक्तस्य सर्वस्य प्रसिद्धिद्योतकं नामेत्यव्ययम् । 'यदेजत्' चेष्टमानं 'प्राणत्' जीवनकृत् 'निमिषत्' अक्षि-पक्ष्मचलनवत् इत्येतत्सर्वमत्र हरौ समर्पितं तदाधारतया तिष्ठतीत्यर्थः ॥१॥

### उपनिषत्

**एतज्ज्ञानथ सदसद्वरेण्यं**
**परं विज्ञानाद् यद्वरिष्ठं प्रजानाम् ।**

यदर्चिमद् यदणुभ्योऽणु च
यस्मिन् लोका निहिता लोकिनश्च ॥ २ ॥

## भाष्यम्

**विज्ञानाद्ब्रह्मणः परम् । 'नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो 'विज्ञानशक्तिरहमासमनन्तशक्तेः' इति हि भागवते ॥**

**श्री.टी.**- तत्र 'परं विज्ञानात्' इत्यवबोधात्परत्वमुच्यमानमसङ्गतमित्यतो विज्ञानशब्दार्थमाह- **विज्ञानादिति** ॥ ब्रह्मणश्चतुर्मुखादित्यर्थः । यद्यपि 'विज्ञानतत्त्वं गुणसन्निरोधम्' इत्यादिवचनाद्विज्ञानशब्दवाच्यं महत्तत्त्वं प्रसिद्धं तथापि तदभिमानित्वादभिमान्यधिकरणन्यायेन विज्ञानशब्द-वाच्यत्वं मुख्यतश्चतुर्मुखस्यैवेति भावः । वरिष्ठमित्यनेनान्वयप्रतीतिवारणाय परमित्यनुवादेनान्वयो दर्शितः । ब्रह्मणो विज्ञानशब्दवाच्यत्वे हरेस्तत्परत्वे च प्रमाणमाह- **नाभिह्रदादिति** ॥ भागवते भगवन्तं प्रति चतुर्मुखवचनमिति शेषः । तेनाहमित्युपपन्नम् । यच्छब्दस्य 'रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः' (भाग. ३.१०.२४) इत्युत्तरार्धेनान्वयो द्रष्टव्यः । तथा चायं श्लोकार्थः । इहाम्भसि लयकालीने उदके सतो विद्यमानस्य अनन्तशक्तेर्यस्य पुंसो नाभिह्रदाद्विज्ञान-शक्तिर्विज्ञानशब्दवाच्यमहत्तत्त्वप्रेरणे शक्तिर्यस्यासौ विज्ञानशक्तिरहमासम् अस्य परमपुरुषस्य रूपं प्रतिमास्थानीयमिदं विश्वं विवृण्वतो विस्तरेण कुर्वतो मे निगमस्य वेदस्यावयवभूतानां गिरां वाक्यानां पदानां च विसर्गो विशिष्टमुच्चारणं व्याख्यानं वा मा रीरिषीष्ट मा लुप्यतामिति । तथा चात्र महत्तत्त्वस्य विज्ञानशब्दवाच्यत्वोक्त्याऽभिमान्यधिकरणन्यायेन मुख्यतो ब्रह्मण एव तच्छब्दवाच्यत्वम् । तस्य च परमपुरुषनाभिह्रदजातत्वोक्त्या हरेस्तत्परत्वं च सिद्धमित्यवगन्त्यम् ॥

## खण्डार्थः

**श्री.**- एतत्सदसद्वरेण्यं कार्यकारणाभ्यां श्रेष्ठं मूर्तामूर्तप्रपञ्चाभिमानिदेवैर्वरणीयमिति वा जानथ । यद्विज्ञानाद्विज्ञानशब्दवाच्य-महत्तत्वाभिमानितया मुख्यविज्ञानशब्दवाच्याद् ब्रह्मणश्चतुर्मुखात् परम् उत्तमं प्रजानां वरिष्ठम् अतिशयेनोत्तमम् । यदर्चिमत् अर्चिष्मत् कान्तिमत् यदणुभ्योऽणु परमसूक्ष्मम् । लोका भूरादयः । लोकिनस्तत्रत्या जनाश्च । यस्मिन्निहितास्तदेतदक्षरनामकं ब्रह्मैव ॥ २ ॥

## उपनिषत्

**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ् मनः ।**
**तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि ॥ ३ ॥**

## भाष्यम्

**'प्राणः प्रणयनाद् विष्णुर्वक्तृत्वाद् वागुदीरितः ।**
**मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः ॥'**

इति शब्दनिर्णये ॥

**श्री.टी.**- 'स प्राणस्तदु वाङ्मनः' इत्यत्र विष्णोः प्राणाद्यभेदेन तच्छब्द-वाच्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्राणादिशब्दान् विष्णौ प्रमाणेनैव निर्वक्ति- **प्राण इति** ॥ प्रणयनात् प्रकर्षेण प्रेरणात् । प्रकर्षेण ऊर्ध्वमिति यावत् । भक्तानां नयनादिति वा । मन्तृत्वतो ज्ञातृत्वतः सर्वजीव-नियामकतया तदन्तर्गतो हरिः प्रणयनादिनिमित्तैः प्राणादिशब्दैरुच्यत इत्यर्थः ॥

## खण्डार्थः

**श्री.**- सः अक्षरशब्दवाच्यो विष्णुः प्रणयनात् प्राणः । 'तदु' तदेव ।

वक्तृत्वाद्वाक् मन्तृत्वान्मनः । तदेतत्सत्यं सद्भिः प्राप्यं तदेवामृतं मृतिरहितं तदेव वेद्धव्यं लक्ष्यं विद्धि । तत्कर्मकं वेधं कुर्वित्यर्थः ।। ३ ।।

## उपनिषत्

**धनुर्गृहीत्वौपनिषदं महास्त्रं**
**शरं ह्युपासानिशितं सन्दधीत ।**
**आयम्य तद्भावगतेन चेतसा**
**लक्षं तदेवाक्षरं सोम्य विद्धि ।। ४ ।।**

## खण्डार्थः

**श्री.-** वेधोपयुक्तं धनुश्शरादिकं दर्शयति- **धनुरिति** ।। औपनिषदम् उपनिषत्प्रसिद्धम् । धनुर्गृहीत्वा तस्मिन् धनुषीति शेषः । महास्त्रम् अस्त्र-श्रेष्ठम् । उपासया निशितं तीक्ष्णीकृतं शरं सन्दधीत सम्यक् स्थापयेत् । अनन्तरं तद्धनुरायम्य विस्तार्य शरयुक्तां ज्यां कर्णान्तमानीयेति यावत् । तद्भावगतेन चेतसा स चासौ भावश्चेति तद्भावः । तस्मिन् लक्ष्यभूतपदार्थे एव स्थितेनान्तःकरणेन तदक्षरं पूर्वोक्तविशेषणविशिष्टमक्षरनामकब्रह्मैव लक्ष्यं तत् विद्धि तद्विषयकं वेधं कुर्वित्यर्थः ।। ४ ।।

## उपनिषत्

(प्रणवेन ब्रह्म विद्धि)

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ।। ५ ।।**

## खण्डार्थः

**श्री.-**उपनिषत्सिद्धं धनुः किं शरश्च क इत्यपेक्षायामाह-**प्रणव इति** ।।

आत्मा जीवः आत्मनो ब्रह्मणि वेधो नाम कीदृश इत्यपेक्षायामाह- **शरवदिति** ॥ यथा शरो लक्ष्ये सल्लग्नो भवत्येवं जीवोऽपि तन्मयः प्रणवप्रतिपाद्ये ब्रह्मण्येव सल्लग्नचित्तो भवेदित्यर्थः ॥ ५ ॥

## उपनिषत्

(विष्णुरेव मुक्तिप्रदः)

**यस्मिन् द्यौः पृथिवी चान्तरिक्ष-**
**मोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मानमन्या**
**वाचो विमुञ्चथामृतस्यैष सेतुः** ॥ ६ ॥

## भाष्यम्

**अमृतस्य मुक्तस्य सेतुः । 'ॐ मुक्तोपसृप्यव्यपदेशात् ॐ', 'मुक्तानां परमा गतिः' इत्यादेः ॥**

**श्री.टी.**- अमृतस्यैष सेतुरित्यत्रामृतशब्दः क्षीरार्णवसञ्जातप्रसिद्धामृतपर इत्यन्यथाप्रतीतिनिरासायार्थमाह- **अमृतस्येति** ॥ अत्रैकवचनं समुदायापेक्षम् । सेतुरिव सेतुराश्रयः प्राप्य इति यावत् । अत्रामृतशब्दोक्ता मुक्ता एवेत्यत्र ज्ञापकमाह- **मुक्तोपसृप्येति** ॥ भावप्रधानो निर्देशः । 'यस्मिन् द्यौः' इत्यादिवाक्ये द्युभ्वाद्यायतनत्वेनोक्तः परमात्मा तदन्य एवेति संशयेऽन्ये एवेति प्राप्ते द्युभ्वाद्यायतनं परमात्मैव नान्ये जीवादयः । कुतः अमृतस्येति वाक्ये मुक्तप्राप्यत्ववचनादिति सूत्रकृतैवोक्तत्वादित्यर्थः । स्यादिदं यदि मुक्तप्राप्यत्वस्य भगवल्लिङ्गत्वं स्यात्तदेव कुत इत्यतोऽत्र महाभारतसम्मतिमाह- **मुक्तानामिति** ॥ गम्यत इति गतिः गम्यत्वस्यार्चिरादिसाधारण्यात्परमेत्युक्तम् । तथा च मुक्तानामिति कर्तरि षष्ठी । मुक्तैर्मुख्यप्राप्य इत्यर्थः ।

## खण्डार्थः

**श्री.**- अक्षरवत् प्राधान्येन ज्ञेयत्वमन्यस्य कस्यापि नास्तीत्याशयेन तन्महिमानमाह- **यस्मिन् द्यौरित्यादिना** ॥ अन्या वाचोऽन्यदेवताविषयवाचो विमुञ्चथ । अन्यदेवताध्यानं मा कुरुतेत्यर्थः । प्राधान्याभिप्रायेणायं निषेधः । 'परिवारतया ग्राह्या अपि हेयाः प्रधानतः' इत्युक्तत्वात् । अमृतस्येत्येकवचनं समुदायापेक्षया मुक्तवर्गस्य सेतुरिव सेतुराश्रयः मुक्तैः प्राप्य इति यावत् ॥ ६ ॥

## उपनिषत्

**अरा इव रथनाभौ संहता यत्र नाड्यः ।**
**स एषोऽन्तश्चरते बहुधा जायमानः ॥ ७ ॥**

## भाष्यम्

**'हृदयस्थः सदा विष्णुर्बहुधा चैकधाऽभवत् ।**
**चरति स्वेच्छयैवान्तः सर्वजीवान् नियामयन् ॥' इति प्रवृत्ते ॥**

**श्री.टी.**- 'स एषोऽन्तश्चरते बहुधा जायमानः' इति वाक्यं, 'स एष परमात्मा बहुधा जाग्रदाद्यवस्थासु बहुप्रकारेण जायमानो यो जीवस्तदात्मा सन् शरीरान्तश्चरते' इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे- **हृदयस्थ इति** ॥ सर्वजीवान्नियामयन् सन् अन्तर्यामिरूपेणेति यावत् । एकधा एकप्रकारेण सदा हृदयस्थो जीवहृदयस्थो विष्णुः स्वेच्छयैव बहुधा विश्वादिरूपेण भवन् अन्तः शरीरान्तः चक्षुरादिस्थानेषु स्वेच्छयैव चरतीति योजना ॥

## खण्डार्थः

**श्री.**- रथनाभौ अरा इव यत्र नाड्यः संहताः सम्बद्धाः स एष सर्व-

जीवनियामकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छयैव बहुधा जायमानो विश्वादिरूपेण बहुधा भवन् शरीरान्तश्चक्षुरादिस्थानेषु चरते चरतीत्यर्थः । 'यः सर्वज्ञः सर्ववित्' इत्युक्तार्थम् । यस्यैष महिमा भुवि भूरादिलोके प्रकटितः यस्तमसः परस्माद् अज्ञानातीतः दुर्गोत्तमो वा । तमात्मानं पराय उत्तमपुरुषार्थाय मोक्षार्थमिति यावत् ॥ ७ ॥

## उपनिषत्

(विष्णुर्गुणपूर्ण इति ध्यायते)

**ओमित्येव ध्यायत आत्मानं**
**स्वस्ति वः पराय तमसः परस्तात्** ॥ ८ ॥

## खण्डार्थः

**श्री.-** ओमित्येव ध्यायत गुणपूर्णत्वेन ध्यानं कुरुत । तथा सति वो भवतां स्वस्ति मोक्षादिरूपं मङ्गलं भविष्यतीत्यर्थः ॥ ८ ॥

## उपनिषत्

(हृदयाकाशे विष्णुर्विराजते)

**यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा [1]प्रतिष्ठितः** ॥ ९ ॥

## खण्डार्थः

**श्री.-** तद्ध्यानस्थानमाह- **दिव्य इति** ॥ दिव्ये द्योतमाने ब्रह्मणः पुरे देहे तत्र हि व्योम्नि आकाशे एष आत्मा सम्प्रतिष्ठितः ॥ ९ ॥

---

१. 'सम्प्रतिष्ठितः' इत्यपि पाठान्तरम् ।

## उपनिषत्

मनोमयः प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।
तद् विज्ञानेन परि पश्यन्ति धीरा
आनन्दरूपममृतं यद् विभाति ॥ १० ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

'धनुर्गृहीत्वौपनिषदं महास्त्रम्' इत्यत्र औपनिषदमुपनिषदि विद्यमानं महास्त्रं महापातकनिरसनहेतुत्वान्महास्त्रपदवाच्यं प्रणवाख्यं धनुर्गृहीत्वेत्यर्थः। 'ब्रह्मपुरे ह्येषः' इत्यत्र ब्रह्मपुरे परब्रह्मणः स्वस्य पुरस्थानीये जीवदेहे । स्वपरिवारैः सह यत्र स्थित्वा राजा राज्यं पालयति तद्धि पुरमिति भावः। देहस्थितजीववद्भगवतोऽज्ञानादिदोषलेपो नास्तीति भावेनोक्तम्- **मनोमय इति** ॥ सम्पूर्णज्ञान इत्यर्थः । किं प्रयोजनमित्यत उक्तम्- **प्राणशरीरनेतेति** ॥ प्राणैरिन्द्रियैः करणैः सह जीवशरीरं श्रवणदर्शनस्पर्शनाघ्राणनास्वादनाभिलापग्रहणगमनरमणोत्सर्गाख्यव्यापारेषु नियन्तेत्यर्थः । अन्नेऽन्नमये देहे हृदयं मनस्सन्निधायाधिष्ठाय मनो यत्र तिष्ठति तत्र तिष्ठतीत्यर्थः। अन्नपदेन जीवैः भुक्तान्नपानादीनां च भगवानेव वैश्वानररूपेण पाचकः, तद्रसेन शरीरपोषकश्चेति सूचितम् । विज्ञानेन 'विः पक्षिपरमात्मनोः' इति वचनाद्विष्णुविषयकश्रवणमननध्यानाख्यज्ञानेनेत्यर्थः । धीराः यमनियमप्राणायामादिना पापपुरुषनिर्दहने समर्थाः । परिपश्यन्ति ब्रह्माद्याः परितः सर्वत्र पश्यन्ति, अन्ये परितोऽग्नौ, हृदि, प्रतिमायां वा पश्यन्ति । कथं पश्यन्तीत्यत उक्तम्- **आनन्दरूपमिति** ॥ ज्ञानमयत्वस्य प्रागुक्तत्वाज्ज्ञानानन्दपदोपलक्षितस्वयोग्यगुणपूर्णतया अनाद्यनन्तकालेष्वपि देहवियोगाख्यमरणरहिततया च पश्यन्ति । तत्र विलक्षणदेवत्वाख्योपपत्ति-

सूचनायानन्दरूपमित्युक्तम् । विभाति विशेषेण भातीत्युक्त्यानन्त-सूर्यसमदीप्तिमत्त्वं सूचितम् ॥ ४-९ ॥

## खण्डार्थः

**श्री.**- देहाकाशेऽपि स्थानविशेषमाह- **मनोमय इति** ॥ ज्ञानमयः प्राणशरीरनेता इन्द्रियशरीरयोर्नियामकोऽयमात्मा भगवान् अन्ने अन्न-विकारे शरीरे हृदयं देहाकाशं सम्यक् निधाय अधिष्ठाय प्रतिष्ठितः प्रकर्षेण स्थितः । तस्य दर्शनायोग्यत्वात् तद्ध्यानं व्यर्थमिति नाशङ्कनीयमित्याह- **तदिति** ॥ यदानन्दरूपमानन्दात्मकशरीरं यदमृतं यच्च सदा विभाति । स्वप्रकाशं सद्वर्तते । तद् ब्रह्म धीराः ध्यानपरिपाकवन्तः विज्ञानेन विज्ञानमात्मयोग्यं स्यादिति वचनादात्मयोग्यज्ञानेन परिपश्यन्ति विषयीकुर्वन्तीत्यर्थः । यद्वा विज्ञानशब्दवाच्यचतुर्मुखेन तदनुग्रहेणेति यावत् । परिपश्यन्ति अपरोक्षीकुर्वन्तीत्यर्थः ॥ १० ॥

## उपनिषत्

(अपरोक्षज्ञानमहिमा)

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ११ ॥**

## भाष्यम्

**'परा अप्यवरा यस्मात् स हि विष्णुः परावरः ।**

**श्री.टी.**- 'भिद्यते' इति मन्त्रे 'तस्मिन् दृष्टे परावरे' इत्येतद्ब्रह्मादि-देवात्मकत्वेन परेऽस्मदाद्यात्मकतयाऽवरे तस्मिन् हरौ दृष्टे सति अस्य कर्माणि क्षीयन्ते इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे- **परा अपीति** ॥ सर्वजीवोत्तमा ब्रह्माद्या देवा अपीत्यर्थः ॥

### खण्डार्थः

**श्री.**- तदपरोक्षज्ञानजन्यं फलमाह- **भिद्यत इत्यादिना ॥** परा उत्तमा ब्रह्माद्या अवरा यस्मादसौ परावरस्तस्मिन् भगवति दृष्टे सति। अस्यापरोक्षज्ञानिनः कर्माणि अप्रारब्धानि क्षीयन्ते भस्मीभवन्ति । पश्चाद्धृदयग्रन्थिरविद्या लिङ्गशरीरमिति यावत् । भिद्यते विदीर्णं भवति नयतीति यावत् । तत्प्रयुक्ताः सर्वे संशयाश्छिद्यन्त इत्यर्थः ॥ ११ ॥

### उपनिषत्

(सूर्यमण्डले विष्णुरुपास्यः)

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्येतिस्तद्यदात्मविदो विदुः ॥ १२ ॥**

### भाष्यम्

**'ब्रह्माण्डमध्यगो नित्यं तपत्येष रवौ स्थितः ॥' इति च ॥**

**श्री.टी.**- 'हिरण्मये परे कोशे' इत्यनेन ब्रह्मोपास्तौ किमधिष्ठानमुक्तं स्यादित्यतस्तद्दर्शयति- **ब्रह्माण्डेति ॥** ब्रह्माण्डमध्यगे सूर्यमण्डले स्थिते रवौ स्थितः सन्नित्यं तपतीत्यन्वयः । एतादृशं ब्रह्म विदुरिति श्रुत्यर्थो द्रष्टव्यः । न तत्र सूर्यो भातीत्यादिकं सूर्यादयो ब्रह्माद्याधारत्वेन पृथक् न भान्ति ।

### खण्डार्थः

**श्री.**- एवं शरीरे उपासनास्थानमुक्त्वा ब्रह्माण्डमध्यस्थसूर्यमण्डलान्तर्गते सूर्याख्यस्थाने चोपास्तिप्रकारमाह- **हिरण्मय इति ॥** हिरण्मये कोशे ब्रह्माण्डे तन्मध्यस्थिते हिरण्मये तद्वत्पीतरूपोपेते सूर्यमण्डले स्थिते परे वरुणाद्युत्तमे सूर्ये स्थित्वा तपनक्रियां कुर्वाणमिति शेषः । यत्तद्ब्रह्म

विरजं रजआदिगुणशून्यं वर्णव्यत्यासेन विजरं जराशून्यमिति वा। निष्कलं षोडशकलात्मकदेहरहितं अत एव शुभ्रं शुद्धं ज्योतिषां सूर्यादिज्योतिषां ज्योतिष्ट्वप्रदं पूर्वे आत्मविदः सूर्यान्तर्गतभगवदुपास्तिप्रकारविदो ज्ञानिनो विदुर्यस्मात्तस्माद्भवद्भिरपि तत्र तथोपास्तिः कर्तव्येति भावः ॥ १२ ॥

## उपनिषत्

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनु भाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ॥ १३ ॥**

## भाष्यम्

सूर्यादयस्तं न भासयन्ति ॥

**श्री.टी.**- तदात्मकत्वादित्यन्यथाप्रतीतिनिरासाय स्वयं व्याचष्टे- **सूर्यादय इति** ॥ तथा च तत्र विषये ब्रह्मविषये सूर्यादयो न भान्ति। सूर्यादयस्तं न भासयन्तीति यावदिति, सूर्याद्यप्रकाश्यप्रकाशवत्त्वरूपं स्वप्रकाशत्वमेवानेनोच्यत इति भावः ॥

## खण्डार्थः

**श्री.**- 'ज्योतिषां ज्योतिः' इत्युक्तं सूर्यादिभासकत्वं विशदयन् सर्वं सूर्यादिप्रकाशप्रकाश्यं दृष्टं भगवत्स्वरूपं तु कथमित्याशङ्कां सूर्याद्यप्रकाश्यप्रकाशवत्त्वरूपस्वप्रकाशत्वाख्यमहिमोक्त्या परिहरति- **न तत्रेति** ॥ चन्द्रतारकमिति द्वन्द्वैकवद्भावः। सूर्यादयस्तत्र तद्विषये न भान्ति भगवन्तं न भासयन्तीति यावत्। 'न तद्भासयते सूर्यः' इत्यादिवचनात्। भान्तं प्रकाशमानं तं भगवन्तं तमन्वेव सर्वं सूर्यचन्द्रादि भाति प्रकाशयते सर्वमिदं

जगत्। तस्य भगवतो भासा तदीयया सूर्यादिभासा च विभाति प्रकाश्यत इत्यर्थः ॥ १३ ॥

## उपनिषत्

**ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १४ ॥**

## भाष्यम्

इदं ब्रह्मैव विश्वं पूर्णम् । इदमेव च वरिष्ठं सर्वोत्तमम् । इदंशब्दानां बहुत्वाद् ब्रह्मविषय एवेदंशब्दः ॥

**॥ इति चतुर्थः खण्डः ॥**

## प्रकाशिका (श्रीवादिराजतीर्थीया)

तद्दर्शनफलमाह- **भिद्यत इति** ॥ हृदयग्रन्थिपदेन 'ग्रन्थि बन्धने' इति धातोः चक्षुःप्रवृत्तिप्रतिबन्धकपटलवदनादिकालमारभ्य परमात्मदर्शने जीवस्य स्वरूपदर्शने च प्रतिबन्धकीभूतदर्शनकरणजीवमनोमालिन्यकर्त्री माया गृह्यते । भेदनं च परमात्मदर्शनप्रतिबन्धकमायाया अपसरणम्, जीवस्वरूपप्रतिबन्धिकायाश्च नाशः । कर्माण्यप्रारब्धानि । अत एवात्र सर्वपदाप्रयोगः । परा ब्रह्माद्या अवरा यस्मात्सः परावरः । न तु परावरस्वरूप इति परकीयोऽर्थः । नीचोच्चभावस्यैकस्मिन्नसम्भवेन विरोधात् । सर्वोत्तमतया भगवद्दर्शनं च मोक्षहेतुः, न त्वैक्यज्ञानमिति भावः । कोशे ब्रह्माण्डे तदन्तरित्यर्थः । परे हिरण्मये स्वणर्मये सूर्यमण्डले विरजः रजःपदोपलक्षित-गुणत्रयविधुरं निष्कलं प्राकृतमन आदिषोडशकलाविधुरम् । तद्दर्शनं च घटादिवत्सौराद्यालोकसाचिव्यसापेक्षं नेत्याह- **न तत्रेति** ॥ तत्र तद्विषये

प्रकाशकतया सूर्यो न भाति। एवमन्यत्रापि। हृदिस्थभगवद्दर्शने बाह्य-सौरालोकादेरनुपकारित्वदिति भावः। तर्हि सूर्यादिप्रकाशोऽपि भगवतः प्रकाशानपेक्षं किम्? नेत्याह- **तमेवेति**॥ सर्वं तेजोरूपं सूर्यचन्द्र-ताराविद्युदादिमण्डलं, न तत्र सूर्य इति पूर्वार्धे सूर्यादीनामेव प्रस्तुतत्वतात्, भान्तं तं परमात्मानमनुभाति, अनुसृत्य भाति। अधुना सूर्यादीनां यद्घटादिप्रकाशकत्वं तदपि भगवत्प्रकाशाधीनमित्याह- **तस्येति**॥ विभाति द्रष्टृणां चक्षुषि भाति दृश्यत इत्यर्थः। ब्रह्मैवेदममृतमित्यत्र ब्रह्मशब्द-बाहुल्यादिदममृतं ब्रह्म पुरस्तात्पूर्वस्यां दिशि, इदममृतं ब्रह्म पश्चात्प्रतीच्यां दिशि, इदममृतं ब्रह्म दक्षिणतः, इदममृतं ब्रह्मोत्तरतः, इदममृतं ब्रह्माधस्तादूर्ध्वं च प्रसृतम्। अन्यथाऽमृतं ब्रह्म पुरस्तात्पश्चाद्दक्षि-णतश्चेत्यादिना योजनिकायामेकेनैव ब्रह्मशब्देनैव पूर्तेः ब्रह्मशब्दबाहुल्यं व्यर्थं स्यात्। इत्थं विभज्य वदन्त्युपनिषत् दीपालोकादिकं स्वसमीपे पुस्तकस्थवर्णरेखादीनामपि प्रकाशकम्, न तथा दूरे। एवं ब्रह्म न, किन्तु सर्वत्रैकप्रकारतयैव प्रकाशकमिति ब्रह्मणि महिमातिशयमभिप्रैति। इदं ब्रह्मैव विश्वं, 'विश प्रवेशने' इति धातोः अणुरेणुतृणकाष्ठादिषु सर्वत्र प्रविष्टं व्याप्तमित्यर्थः। न तु विश्वात्मकम्। वरिष्ठपदविरोधात्॥ ११-१४॥

**श्री.टी.**- 'ब्रह्मैवेदममृतम्' इति वाक्ये ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्येतत् इदं वरिष्ठं विश्वं जगद्ब्रह्मैवेति परव्याख्याननिरासाय व्याचष्टे- **इदं ब्रह्मैवेति**॥ 'विश्वं समस्तं पूर्णं च' इत्यभिधानादिति भावः। वरिष्ठं अति-शयेनोत्तमम्। तस्यैव विवरणम्- **सर्वोत्तममिति**॥ परोक्त एवार्थः किं न स्यादित्यतस्तत्र बाधकमाह- **इदं शब्दानामिति**॥ बहुत्वात् त्रयाणां सत्वादित्यर्थः। जगत्परत्वे एकेनैवेदंशब्देन पूर्णत्वादितरयोर्वैय्यर्थ्यं स्यादिति

भावः । तथा चेदममृतं ब्रह्मैव पुरस्तादित्यादि । इदं ब्रह्मैव विश्वमिदं ब्रह्मैव वरिष्ठमिति वाक्यभेदेन योजना कार्येत्युक्तं भवति ॥

॥ इति चतुर्थखण्डभाष्यार्थः ॥

## खण्डार्थः

**श्री.** - हृदयाकाशसूर्यरूपाधिष्ठानगतत्वोक्त्या परिच्छिन्नत्वं भगवतः प्रतीयते । तन्निवारयति- **ब्रह्मैवेदमिति** ॥ इदं ब्रह्मातिसामीप्यादिति वचनादिदं हृदयाकाशादिस्थिततया सर्वसमीपस्थममृतं ब्रह्मैव पुरस्तात् प्राच्यां पश्चात् पश्चिमस्यां दक्षिणतो दक्षिणस्याम् उत्तरेणोत्तरस्याम् अधोऽधरायाम् ऊर्ध्वमूर्ध्वायां च दिशि प्रसृतम् । 'सृॣ गतौ' प्रकर्षेण गतं व्याप्तमित्यर्थः । इदं ब्रह्मैव विश्वं पूर्णमिदं ब्रह्मैव वरिष्ठमतिशयेन वरं सर्वोत्तममित्यर्थः । इति जानथेति शेषः ॥ १४ ॥

॥ इति चतुर्थखण्डमन्त्रार्थः ॥

**॥ इति चतुर्थः खण्डः ॥**

## ॥ अथ पञ्चमः खण्डः ॥

## उपनिषत्

(जीवेशाभेदप्रतिषेधः)

**द्वा सुपर्ण्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥**

## भाष्यम्

स्वादुवत् सर्वदाऽत्ति । न स्वाद्वेव ।'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोऽन्नशद्यः पितरं न वेद' इत्यज्ञानां स्वादुनिषेधात् । जीवाद्यमेव

नाश्नाति भगवान् । न तु नाश्नात्येव । 'तस्येदाहुः पिप्पलं स्वादु' इत्युक्तत्वात् ।

'स्वातन्त्र्येणैव भोक्तृत्वाद्दुःखाभोगाच्च सर्वदा ।
अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः' ॥
इति तत्वसारे ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

एवं श्रुतिः सर्वस्रष्टृत्वेन सर्वनियामकत्वेन ज्ञानानन्दरूपत्वेनाऽनाद्यनन्तकालेष्वपि मरणरहितत्वेन सर्वव्याप्तत्वादिना स्पष्टं 'परावरम्' 'वरिष्ठम्' इत्यादिशब्दैश्च विष्णोः सर्वोत्तमत्वमनीदृशसकलजीवजडात्मकात् प्रपञ्चादत्यन्तभेदं चाऽभिधायाऽधुना परपक्षप्रतिक्षेपस्याऽऽवश्यकत्वात् कुसमयप्राप्तं जीवेश्वरैक्यं सयुक्तिकं दूषयितुमाह- **द्वा सुपर्णेति** ।। द्वा द्वौ सुपर्णा सुपर्णौ पक्षिणौ सयुजावेकस्मिन् देहे सह उपजीव्योपजीवकतया संयुक्तौ, सखायौ ब्रह्माद्युत्तमजीवापेक्षया परस्परमनोनुकूलौ, समानं वृक्षमाधारत्वेनोभयोः समानं देहाख्याश्वत्थवृक्षं परिषस्वजाते परित आलिङ्ग्य तिष्ठतः । तयोः पक्षिणोर्मध्येऽन्यः परमात्मनोऽत्यन्तभिन्नः । सोऽयं न अयं स नेत्याकारेणान्योन्याभावाख्यभेदो ह्यन्यशब्दार्थः । तथा च कथं नात्यन्तभेदासिद्धिः । पिप्पलं देहाख्याश्वत्थवृक्षफलस्थानीयं प्रचुरदुःखमिश्रमीषत्सुखाख्यफलम्, अत एवास्वाद्वपि स्वादु विषसम्पृक्तान्नमिव रागोद्रेकात् स्वाद्वित्यभिमन्यमानः अत्ति । तथा हि- अन्नरसाऽस्वादनात् यदीषत्सुखं तत् काष्ठाऽनयनतण्डुलयाचनतण्डुलावहननकूपस्थजलोद्धरण भाण्डयाचन पाचनादिनाऽऽदौ बहुदुःखभरितं, मध्ये च धर्मजिह्वादनौदनचर्वणादिना, अन्ते आलस्य, अजीर्ति पाददाहमरणादिना दुःखभरिततया सर्वेषामप्यनु-

भवसिद्धम् । किं बहुना अतिबलवतां देवानामपि सुधारसास्वादनाय मन्दरगिरेरुद्धरणानयनाधःपातन बाहूदरमुखनासिकाच्छेदादिनाऽऽदौ, मध्ये फणोत्पन्नेन विषवायुना कालकूटोष्मणा बहुभारभरितगिर्यावर्तनेन, अन्तेऽसुरै सह युद्धादिना बहुक्लेशभरितमिति भागवतादिपुराणेष्वेव प्रपञ्चितम् । किं चेयं श्रुतिः स्वयमेव 'अनीशया शोचति मुह्यमानः' इति वक्ष्यति । तस्मान्न्यायकोविदैरेवमेव श्रुतेरर्थो वक्तव्यः । भगवांस्तु तत्रापि लीलया वामेन करेण गिरिमुद्दधार । रुग्णान् देवान् स्वदृष्ट्या जीवयामास । मग्नं च पर्वतं लीलयैवोन्निन्ये । असुरांश्च लीलयैव जिगाय । सुरानेव सुधारसमपाययत् । स्वयं तु न पपौ । अतो जीव एवास्वादु च स्वादुत्वेनात्ति । अन्यो जीवादन्यो भगवांस्तु ईदृशं सुखमनश्नन्नभितश्चाकशीति अतिशयेन प्रकाशते । दुःखासम्भिन्नं स्वादुसुखमुक्तविधयाऽसम्भवात् नाश्नति (जीवः)। 'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' इति औत्तरश्रुतिवाक्ये स्वादु केवलसुखमिदमित्थमग्रे तस्य परमात्मन एवाऽऽहुः । तत्सुखं यः पितरं परमात्मानं न वेद जीवः स नोऽनशत् नाशदिति स्पष्टं प्रतीयमानार्थपर्यालोचनायां च अस्वाद्वेव स्वादुत्वेनाऽत्तीति सिद्धम् । भगवांस्तु जीववद्दुःखोदर्कसुखानशनवानेवानश्नन्नित्युच्यते । उत्तरवाक्यार्थपर्यालोचनया च केवलं स्वादु सुखं स्वतन्त्रत्वाल्लीलया प्रथममश्नातीति सिद्धम् । एवं चान्यपदद्वयेन भेदस्यैव भासादत्तृत्वानत्तृत्वद्वित्वसंयोगसङ्ख्याख्योपपत्तेश्च जीवेश्वरयोरत्यन्तभेदे श्रुतेर्महातात्पर्यं चावगम्यते । न ह्येकस्य द्वित्वं, नाप्येकस्य संयोगो, न वाऽप्येकस्यैव सङ्ख्या क्वापि दृष्टेति भावः । अतो बलवतीयं श्रौतयुक्तिः स्वर्णमणीनां मालेति ज्ञेयम् ।। १ ।।

**श्री.टी.**- 'तयोरन्यः' इति वाक्यं परेणेत्थं व्याख्यातम् । तथाहि । तयोर्जीवेशयोर्मध्येऽन्यो जीवः संसारे स्वाद्वेव पिप्पलं यत् देहाख्याश्वत्थ-

वृक्षफलरूपं देहजनितं पुण्यकर्मफलं तदेवात्ति न त्वस्वादुफलं दुःखम् । अन्य ईशोऽनश्नन् स्वाद्वस्वादु किमपि फलम् अभुञ्जन्नेवाभिचाकशीति प्रकाशत इति । तदेतदपव्याख्यानमिति भावेन स्वयं व्याचष्टे- **स्वादुवदिति** ॥ अस्वाद्वेवेति शेषः । स्वादोरदनवत्। तथा चास्वाद्वेव स्वादुत्वेनात्तीत्यर्थः । यथोक्तं भागवततात्पर्ये-

'स्वादोरदनवद्ध्यत्ति जीवोऽस्वाद्वपि यत्सदा ।
अनारतं पारवश्यात् स्वाद्वत्तीति ततः श्रुतिः ॥' इति ॥
'अस्वादु स्वादुवद्ध्यत्ति जीवो नैवं जनार्दनः ॥' (भा.ता. ११.११.७) इति च ॥

ननु जीवः स्वाद्वेवात्तीति कुतो न व्याख्येयं बाधकाभावादिति चेन्न । वाक्यशेषविरोधादित्याह- **तस्येदाहुरिति** ॥ 'यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधिविश्वे' इति पूर्वार्धः । तथा चायं श्रुत्यर्थः- यस्मिन् देहाख्ये वृक्षे स्थित्वा मध्वदः अमध्वेव मधुत्वेनात्तारो विश्वे सुपर्णा जीवाः यस्मिन्नश्नन्ति सुपर्णे मुक्तौ निविशन्ते अधिसुवते च यमुद्दियैव सोमखण्डनादिकं कुर्वन्ति यश्चाग्रे सर्वतः श्रेष्ठस्तस्य इत् तस्यैव स्वादु पिप्पलं कर्मफलं भोग्यमाहुः । यः पितरं जगत्स्रष्टारं परमात्मानं न वेद अत एव नशत् नरकाद्यनर्थरूपं नाशं प्राप्नुवानो जीवस्तस्य तत् स्वादु पिप्पलं न उत नैवेत्यर्थः । अत्र कर्मफलभोगो नाम कर्मानुसारेण प्राप्तविषयभोग एव विवक्षितः । 'श्रोत्रं चक्षुः स्पर्शनं चेत्याद्युक्त्वान्ते विषयानुपसेवते' इत्युक्तत्वात् । उक्तं च गीताभाष्ये- 'सुखरूपस्य भोक्तृत्वात्' इति । व्याख्यातं च टीकाकारैः- 'सुखकारणस्येत्यर्थः' इति । अज्ञानां जीवानां स्वादुनिषेधात् । स्वाद्वदननिषेधादित्यर्थः ।

अनश्नन्नित्यादिकं सर्वथा भोक्तृत्वपरिमितिप्रतीतिनिरासाय व्याचष्टे-

**जीवाद्यमिति** ॥ जीवेन अद्यम् अदनीयं दुःखं तदेव नाश्नाति भगवानित्यर्थः। जीवाद्यमिति पाठेऽपि यत् अघं पापं तज्जन्यं दुःखमिति यावत् । तदेव नाश्नातीति व्याख्येयमित्यनशनश्रुतेरिति शेषः। इदमुपलक्षणम् । पारतन्त्र्येणाभोक्तृत्वमप्यनश्नन्श्रुत्यर्थ इति द्रष्टव्यम् । दुःखं तदेव नाश्नाति भगवानित्यर्थः । ननु नाश्नत्येव भगवानित्यर्थः किन्न स्यादित्यत आह- **तस्येदिति** ॥ तथा च वाक्यशेषे भगवतः स्वाद्वनशनोक्त्याऽनश्नन्नित्यस्य सर्वथा नाश्नातीति व्याख्याने तद्विरोधः स्यादित्यर्थः । इतोऽप्यनश्नन्निति वाक्यमुक्तप्रकारद्वयेन व्याख्येयं नतु सर्वथाऽनशनपरत्वेनेति भावेन तत्र प्रमाणं पठति- **स्वातन्त्र्येणैवेति** ॥ पारतन्त्र्येण भोक्तृत्वाभावादित्यर्थः । अभोक्ता चेत्यत्रत्यश्चशब्दो भोक्तृत्वादित्यनेन सम्बद्ध्यते । उभावपि निमित्तयोः परस्परसमुच्चयार्थौ । तृतीयोऽप्यर्थे । नात्तीत्यत्रापि संश्रुत इत्येकादशतात्पर्यसमाख्यानात् । तथा च भोक्तापि भगवान् स्वातन्त्र्येणैव भोक्तृत्वात् पारतन्त्र्येण भोक्तृत्वाभावादिति यावत् । सर्वदा दुःखाभोगाच्चाभोक्तेत्युच्यत इति योजना । एवशब्देन सर्वथाऽनशनस्य निरासः । अत्र यथायोगं सम्बन्धमङ्गीकृत्य स्वातन्त्र्येण भोक्तृत्वं भोक्तृत्वे निमित्तकथनपरं दुःखाभोक्तृत्वं चाभोक्तृत्व इति व्याख्याने तु स्ववशेनादनस्यानत्तृत्वे निमित्ततयोक्तत्वात् । तत्रापि स्ववशेनादनादित्यस्य पारतन्त्र्येणादनाभावादित्येवार्थो वक्तव्यः ।

## खण्डार्थः

**श्री.**- 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्युक्तं विष्णोर्बहुधा जननं किं जीवात्मकत्वेनेति शङ्कां निराकर्तुं विरुद्धधर्मकथनपूर्वकं तयोर्भेदमाह- **द्वा सुपर्णेत्यादिना** ॥ सुष्ठु परमानन्दरूपत्वात् सुपर्णा सुपर्णौ संयुक्तौ अत एव सखाया सखायौ 'द्वा' द्वौ जीवेशौ समानमेकं वृक्षं देहाख्यं

परिषस्वजाते आलिलिङ्गतुः । तयोः सुपर्णयोर्मध्येऽन्यो जीवः पिप्पलं देहाख्याश्वत्थफलरूपं देहजनितकर्मफलं स्वाद्वत्ति । अस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरस्तदनश्नन्नेवाभिचाकशीति अभितः प्रकाशते न तु स्वस्थित्यै तदपेक्षत इत्यर्थः ॥ १ ॥

## उपनिषत्

(अश्नन्नपि जीवः दुःखी ईशस्त्वनश्नन् नित्यसुखी)

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥२॥**

## भाष्यम्

**'नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्मतिः ।**
**तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते ।**
**जीवादन्यः स्वतन्त्रोऽयं यतोऽतः पुरुषोत्तमः ॥'**

**इति ब्रह्मसारे ॥**

## प्रकाशिका (श्रीवादिराजतीर्थीया)

अनीशया न विद्यतेऽन्य ईशा यस्याः साऽनीशा स्वतन्त्रभगवदिच्छा । तया मुह्यमानः शोचति । पराधीनजडाविद्याकामकर्मादिभ्योऽपि स्वतन्त्रभगवदिच्छैव मोहेऽसाधारणहेतुरिति सूचनाय श्रुतिरनीशयेत्येवाऽऽह ॥

अत एव ह्येष जीवशोकोत्तारोपायोऽपि सकलजीवभिन्नतया महामहिमतया भगवत्सेवासहित तदपरोक्षज्ञानमेवेत्याह- **जुष्टं यदेति** ॥ जुष्टं, 'जुषीप्रीतिसेवनयोः' इति धातोर्ब्रह्मादिदेवैरपि सेवितमनन्तस्वस्वरूपसुखेनैव प्रीतम् । अत एव सकलजीवेभ्योऽन्यमीशं सर्वोत्तममिति पूर्वोक्तप्रकारेण

यदा जीवः पश्यति तदा तदनुग्रहाद्वीतशोको भवति । एवं च फलकथनाच्च प्राक् स्वोक्तजीवेश्वरभेदे स्वस्य महातात्पर्यमस्तीति सूचयति ॥ २ ॥

**श्री.टी.**- 'अनीशया शोचति मुह्यमानः' इत्येतद्वाक्यं परेणेत्थं व्याख्यातम् । 'अनीशया अहमीशो न भवामीत्येवं स्वस्येशाद्भेदभावनया शोचति यतो मुह्यमानभेदस्य मिथ्यात्वेन तज्ज्ञानस्य मिथ्याज्ञानत्वात्' इति । तदिदमसत् । 'सत्यं भिदा', 'पञ्चभेदांश्च विज्ञाय भवेन्मुक्तिर्न चान्यथा' इत्यादिप्रमाणैर्भेदस्य सत्यतायास्तज्ज्ञानस्य मोक्षसाधनतायाश्चावगमेन तद्भावनायाः शोकहेतुत्वायोगादित्याशयेनानीशाशब्दार्थं प्रमाणेनैवाह- **नास्तीशोऽस्या इति** ॥ अस्याः भगवन्मतेरन्य ईशः प्रेरको यतो नास्ति स्वतन्त्रेति यावत् । ततो हरेर्मतिरनीशेत्युच्यत इत्यर्थः । हीत्यनेन 'न तस्येशे कश्चन तस्य नाम महद्यशः' इत्यादिश्रुत्या हरेः स्वातन्त्र्यावगमात् तदभिन्ना तन्मतिरपि स्वतन्त्रेति सूचयति । उक्तं च स्पष्टमन्यत्र-

'ज्ञानानन्दादयो भावा हरेर्नैव विभेदिनः ।
भेदेन व्यवहार्याः स्युर्विशेषादेव केवलम् ॥
परस्परमभिन्नाश्च न परप्रेरिताः क्वचित् ।
जगज्जन्मादिकर्तारस्ततो लोकविलक्षणाः ॥' इति ॥

मुह्यति अहं कर्तेत्यादिरूपेण स्वस्मिन् स्वातन्त्र्येण कर्तृत्वाभिमानवान् भवतीत्यर्थः । तया मुह्यतीत्यनेनानीशया मुह्यमानः सन् शोचतीत्यन्वय उक्तो भवति । जुष्टं यदा पश्यतीत्यादेस्तात्पर्यं तं हरिं जीवादन्यं ज्ञात्वा विमुच्यत इति । स्यादिदं यदि हरेर्जीवान्यत्वमेव स्यात् । तदेव नास्ति प्रमाणाभावादतस्तज्ज्ञानं मिथ्याज्ञानमेवेत्यत आह-**जीवादन्य इति** ॥ अयं हरिर्जीवादन्यः प्रतिपत्तव्यः । तत्र हेतुर्यतः स्वतन्त्र इति । अतः स्वतन्त्रत्वात् पुरुषोत्तम इत्यर्थः । तथा च विरुद्धधर्माधिकरणत्वेन जीवेश-

योर्भेदः प्रमित इति न तज्ज्ञानं मिथ्याज्ञानमिति भावः । 'तदा विद्वान् पुण्यपापे विधूय' इति प्रारब्धपुण्यस्येष्टकाम्यपुण्यस्य च ज्ञानेन विधूननं प्रतीयते तदयुक्तम् । प्रारब्धस्यापि ज्ञानेन नाशाङ्गीकारे साक्षात्कृतब्रह्मणां सद्यः शरीरपातेनावस्थानाभावापत्त्या ब्रह्मोपदेशानां वातपुत्रीयत्व-प्रसङ्गात् । अतो भोगैकनाश्यत्वमेवाङ्गीकार्यम् । यथोक्तम्- 'भोगेन त्वितरे क्षपयित्वा' (ब्र.सू. ४.१.१९) इति ॥

## खण्डार्थः

**श्री.-** जीवस्य देहाख्यवृक्षसम्बन्धरूपे संसारेऽविद्याकामकर्मादिकं कारणमुक्तमेव प्रधानं कारणान्तरं चाह- **समान इति** ॥ पुरुषो जीवः समाने वृक्षे शतवर्षादिमर्यादोपेते देहाख्ये वृक्षे निमग्नो दृढं ममताभिमानवान् अनीशया न विद्यतेऽन्य ईशोऽस्या इत्यनीशा स्वतन्त्रा हरेर्मतिस्तया मुह्यमानोऽहं कर्ता भोक्तेत्यादिरूपेण स्वातन्त्र्येण स्वस्मिन् कर्तृत्वाभि-मानवान् सन् शोचति शोकमनुभवति संसारी भवतीत्यर्थः । किं तस्य शोकनिवर्तकमित्यतो भगवन्महिमाज्ञानमेवेत्याह- **जुष्टमिति** ॥ यदा जुष्टं सर्वसेव्यं ईशम् अन्यं जीवाद्भिन्नं पश्यति तथा अस्य ईशस्य इति तदेतत्सत्यमित्यादिना प्रागुक्तप्रकारेण महिमानं च पश्यति तदा वीतशोको मुक्तो भवतीत्यर्थः ॥ २ ॥

## उपनिषत्

(निर्दुःखत्वपूर्णानन्दत्वादिना साम्यम्)

**यदा पश्यः पश्यते रुग्मवर्ण्णं**
**कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय**
**निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥**

## भाष्यम्

पुण्यं चानिष्टं विधूय ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

अधुना इतिपदपरामृष्टं महिमानमेव प्रपञ्चयति, तार्किकमोक्षवद्दुःख-निवृत्तिमात्रं न फलम्, किन्तु स्वयोग्यनित्यानन्दज्ञानादिना च किञ्चित् किञ्चिद् भगवत्साम्यमस्तीत्याह- **यदेति** ॥ रुग्मोपलक्षितसकलशोभन-गुणवत्तया, तत्सम्भावकसमस्तजगत्कर्तृतया, पुरुषपदसूचितसहस्र-शीर्षाद्याकारवत्तया, अत एव सकलजगदीशतया, तदुपपादकसकल-जीवोत्तमब्रह्मस्रष्टृतया, अत एव चेतनाऽचेतनात्मकसर्वजगद्भिन्नतया च यदा भगवन्तं पश्यति, ईदृशमेवापरोक्षज्ञानं मोक्षहेतुः न तु कुसमयिभिः स्वकपोलकल्पितनिर्गुणत्वनिराकारत्वजीवात्मत्वादिनेति श्रुतेर्हृदयम्, तदा विद्वानीशज्ञानी अनिष्टं काम्यफलदायकं पुण्यं पापश्चेत्युभयं विधूय, अप्रारब्धं ज्ञानप्लवेनैव विधूय, प्रारब्धं भोगेन क्षपयित्वा, तदपि ज्ञानबलेनैव किञ्चित्किञ्चिदुपमर्द्य, निरञ्जनः अञ्जनवत् नयनावरकप्रतिबन्धकप्रकृति-बन्धरहितः परमं साम्यं जननमरणादिदुःखरहिततया भगवता साम्य-मुपैति । चेतनत्वादिनेषत्साम्यस्य संसारेऽपि सत्त्वात्परममित्युक्तम् । प्रकृतिबन्धपापनिमित्तकसकलदुःखानामाऽत्यन्तिकनिवृत्त्यैव भगवता साम्यं ममाभिमतम्, न तु सर्वात्मनेति स्वाभिसन्धिं स्फोरयितुं श्रुतिः 'निरञ्जनः' इति 'पुण्यपापे विधूय' इति च दुःखहेतुभूतप्रकृतिबन्धनिवृत्तिं तन्निमित्तकपापानां च निवृत्तिं विषसम्पृक्तान्नवत् दुःखमिश्रस्वर्गादिसुख-दायककाम्यपुण्यनिवृत्तिं च हेतुगर्भविशेषणद्वयेन च स्पष्टीचकार । साम्यकथनावसरे 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिश्रुत्यन्तरोक्त-कामान्नीत्यादिमुक्तविशेषणानामत्रापि सङ्ग्रहे सुखादिसाम्यशङ्का मन्दमतीनां

स्यादिति भातमपेक्षितमपि विशेषणमुपैक्षत । तार्किकमोक्षव्यावृत्तये नित्यानन्दादीनामपि साम्यं स्वस्योपपन्नमेवाऽऽयाति, न तु सर्वात्मनेति वस्तुस्थितिमुपेत्युपसर्गेणासूचयच्च । मुक्तावपि साम्यमेव निरूपयन्ती श्रुतिरैक्यप्राप्तिरेव मोक्ष इति दुर्मतं दूरीचकार । साम्यस्य द्विनिष्ठतायाः सर्वजनसम्प्रतिपन्नत्वात् । 'अमृतत्वस्येशानः', 'अमृतस्यैष सेतुः', 'सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्', 'मुक्तानां परमा गतिः', 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादिश्रुतिस्मृतिभ्यो मुक्तावपि भगवतः सकलमुक्तेश्वरत्वसर्वमुक्ताधारत्वसमस्तमुक्तपूज्यत्वादेश्च श्रवणात्कथं सर्वात्मना साम्यं स्यात् । अत एव -

**'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ '**

(भ.गी. १.२)

इति गीतावाक्ये भगवान् स्वयमेव प्रागुक्तस्वसाधर्म्यं जननमरणादिदुःखाभावेनैवेत्युत्तरार्धे स्पष्टीचकार । आनन्दादिना साम्यं त्वल्पमेवेति न तत्र स्पष्टमाचष्टे । तार्किकमोक्षवत्सर्वथाऽऽनन्दराहित्यं नेति भावेन तेषामपि स्वयोग्यं किञ्चिदानन्दं चशब्देनैव समुच्चिनोति च । कथमन्यथा तैत्तिरीयोपनिषत् मानुषादिचतुर्मुखपर्यन्तमुक्तानामानन्दस्य परिच्छिन्नत्वमुक्त्वा 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्' इत्यन्ते परमपुरुषानन्दं मनोवाचामगोचरमाह । न चात्रापि ब्रह्म चतुर्मुख इति शङ्कनीयम् । 'ते ये शतं प्रजापतेरानन्दः । स एको ब्रह्मण आनन्दः' इति च रुद्राच्छतगुणिताऽऽनन्दवत्त्वेन प्राचीनश्रुत्युक्तशतानन्दपदवाच्यस्य चतुर्मुखस्य मनोवाचामगोचरानन्तानन्दप्रतिपादकोत्तरवाक्ये च सङ्ग्रहस्य प्रेक्षावता शङ्कितुमशक्यत्वात् । न हि

परिच्छिन्नानन्दत्वमपरिच्छिन्नानन्दत्वं चैकस्यैव भवति, विरोधादिति युक्तमुत्पश्यामः ।

**श्री.टी.**- इष्टकाम्यपुण्यनाशाङ्गीकारे च ज्ञानस्येष्टविघातित्वेनापुरुषार्थत्वप्रसङ्गात् । अतो व्याचष्टे- **पुण्यं चेति** ।। अप्रारब्धं चेत्यपि द्रष्टव्यम् । यथोक्तम्- 'अतोऽन्यदपीत्येकेषामुभयोः' (ब्र.सू. ४.१.१९) इति ।।

## खण्डार्थः

**श्री.**- उक्तं जीवाद्भेदमेव भेदकधर्मोक्त्योपपादयन् वीतशोक इत्युक्तमेव विशदयति- **यदेति** ।। पश्यतीति पश्यो जीवो रुग्मवर्णं सुवर्णवर्णं सर्वजगत्कर्तारं पूर्णषड्गुणं चतुर्मुखकारणमीशं यदा पश्यते तदा स विद्वानपरोक्षज्ञानी ज्ञानमहिम्ना पुण्यमनिष्टमप्रारब्धं तथा पापं चाप्रारब्धं विधूय भस्मीकृत्य निरञ्जनः निर्दुष्टः भोगेन क्षीणप्रारब्धकर्मेति यावत् । लिङ्गभङ्गानन्तरं परमं साम्यं दुःखाभावपरानन्दादिना भगवत्साम्यमुपैतीत्यर्थः ।। ३ ।।

## उपनिषत्

(जीवन्मुक्तस्थितिः)

**प्राणो ह्येष सर्वभूतैर्विभाति**
**विजानन् विद्वान् भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावा-**
**नेष ब्रह्मविदां वरिष्ठः** ।। ४ ।।

## खण्डार्थः

**श्री.**- जीवन्मुक्तापरपर्यायस्यापरोक्षज्ञानिनः स्थितिमाह- **प्राणो हीत्यादिना** ।। विद्वानपरोक्षज्ञानी अतिवादी अहमेव ज्ञास्येऽहमेव करोमीत्येवं

स्वात्मानमतिशयितत्वेन वदन्न भवते न भवति । कुतः यतोऽस्य ज्ञानिनः सर्वभूतैः सर्वभूतोपचितैस्तैजसाहङ्कारकार्यैः सर्वेन्द्रियैस्तज्जन्यज्ञानादि-कारणतयेति यावत् । प्राण एव प्रकृष्टचेष्टको भगवानेव विभाति । यतश्चायं विजानन्नहमस्वतन्त्र इति ज्ञानवान् तस्मादित्यर्थः । सर्वेन्द्रियजन्यज्ञान-कर्मादौ भगवत एव स्वातन्त्र्येण कारणत्वमात्मनश्चास्वातन्त्र्यं च जानन् कथमतिवादी भवेदिति भावः । एष विद्वान् अपरोक्षज्ञानी आत्मक्रीडः भगवद्विषयकक्रीडावान् । आत्मरतिर्भगवद्दर्शनजनितसन्तोषवान् । क्रिया-वानात्मविषयकसमस्तक्रियावान् यतोऽतो ब्रह्मविदां ब्रह्मापरोक्षेण जानतां सकाशादयं वरिष्ठ इत्यर्थः ॥ ४ ॥

## उपनिषत्

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तः शरीरे ज्योतिर्म्मयो हि शुभ्रो**
**यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

## खण्डार्थः

**श्री.**- प्रकृतेश्वरापरोक्षज्ञानस्य ध्यानं साधनतयोक्तमिदानीं तत्सह-कारीण्याह- **सत्येनेति** ॥ सत्येन सत्यवचनेन । तपसा सन्तापात्मक-कृच्छ्रादिरूपेण । मननरूपालोचनात्मकेन वा । सम्यज्ज्ञानेन श्रवणजनि-तेन । ब्रह्मचर्येण सर्वेन्द्रियाणां ब्रह्मणि चरणेन गुह्येन्द्रियनियमनेन वा । एतैः साधनैः एष आत्मा परमात्मा नित्यं नियमेन लभ्यो ध्यानप्राप्यः । ध्यानविषयो भवतीति यावत् । क्षीणदोषत्वमप्येकं ध्याने साधनमिति सूचयन् प्रकृतध्यानफलमपरोक्षज्ञानं तदधिकरणं च वदंस्तद्विषयस्य भगवतः स्वरूपं चाह- **अन्तःशरीर इति** ॥ क्षीणदोषाः जितकामाद्यरिषड्वर्गाः

यतयः श्रवणमननध्यानरूपप्रयत्नवन्तोऽधिकारिणो भगवन्तं पश्यन्ति । यं पश्यन्ति तमन्तःशरीरे स्वरूपशरीरान्तर्बाह्यशरीरान्तश्च । उपलक्षणमेतत् । सर्वत्र पश्यन्ति स च ज्योतिर्मयो ज्ञानरूपः स्वप्रकाश इति यावत् । शुभ्रः शुद्धः । जीववन्न शरीरस्थितिप्रयुक्तदुःखादिभागित्यर्थः ॥ ५ ॥

## उपनिषत्

(हरिभक्तस्यैव तत्प्राप्तिः)

**सत्यमेव जयति नानृतं**
**सत्येन पन्था विततो देवयानः ।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत् सत्यस्य परमं निधानम् ॥ ६ ॥**

## भाष्यम्

'सत्यो हि भगवान् विष्णुः सद्गुणत्वात् प्रकीर्तितः ।
असुरास्तद्विरुद्धत्वादनृताः परिकीर्त्तिताः ।
तस्य विष्णोर्निधानं तु वैकुण्ठो लोक उत्तमः ॥' इति च ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

विद्वान् साम्यमुपैतीत्युक्ते स्वशक्त्या ज्ञानशक्त्या वा उपैतीति भ्रमो जायते । तत्परिहारायाऽऽह- **सत्यमिति** ॥ सत्यं सद्गुणविशिष्टत्वात् सत्यपदवाच्यं नारायणाख्यं परं ब्रह्मैव जयति संसारं जयति । सत्यपदापरपर्यायऋतपदवाच्यहरिविरोधिभूतं कल्यादिराक्षसकुलं संसारं न जयतीति श्रुतेरभिमतोऽर्थः । उपलक्षणया सत्यवचनं संसारं जयति । अनृतपदोपलक्षितानृतवचनं च मुक्तिविरोधीत्यपि ग्राह्यम् ॥ ६ ॥

**श्री.टी.**- 'सत्यमेव जयति नानृतम्' इत्यत्र सत्यानृतशब्दौ प्रसिद्ध-सत्यानृतवचनपराविति प्रतीतिनिरासाय तदर्थं प्रमाणेन दर्शयति- **सत्यो हीति** ।। **तद्विरुद्धत्वादिति** ।। सत्यनामकभगवद्विरुद्धत्वादित्यर्थः । ऋतसत्यशब्दयोरेकार्थत्वान्नञश्च विरुद्धार्थत्वादिति भावः । यत्र तत्सत्यस्य परमं निधानमित्यस्यार्थं प्रमाणशेषेण दर्शयति- **तस्येति** ।। सत्यस्येत्य-स्यार्थस्तस्य विष्णोरिति । निधीयतेऽत्रेति निधानं स्थानमित्यर्थः ।।

## खण्डार्थः

**श्री.**- अवश्यमधिकारिणा भगवन्निष्ठेन भाव्यम् । नान्यथेत्याशयेन भगवन्निष्ठं स्तुवन् तदनिष्ठं निन्दयति- **सत्यमेवेति** ।। सत्यं सत्यः सद्गुणत्वात् सत्यो भगवान् विष्णुः । अर्शं आद्यजन्तत्वेन तद्वान् सत्यः । तन्निष्ठ एवेति यावत् । पुमान् जयति । तत्प्रसादेन वैकुण्ठादिदिव्यलोकान् प्राप्नोति । अनृतम् अनृतः । ऋतसत्यशब्दयोरेकार्थत्वात् सत्यनामक-भगवद्विरुद्धः पूर्वावगतवत् सदा स्थितेर्वा ऋतं विष्णुस्तद्विरुद्धोऽनृतः । असुर इति यावत् । न लोकं जयति । ननु कथमस्य सत्यनिष्ठस्य वैकुण्ठादि-लोकप्राप्तिस्तत्प्राप्तिसाधनीभूतमार्गाज्ञानादित्यत आह - **सत्येनेत्या-दिना** ।। यत्र लोके वैकुण्ठादौ सत्यस्य सद्गुणस्य विष्णोस्तत्प्रसिद्धं परमं निधानं सन्निधानमस्ति यत्र स्थिता ऋषयो ज्ञानिन आप्तकामा भवन्ति तं लोकम् ऋषयो येन पथा आक्रमन्ति गच्छन्ति अयं देवयानस्तत्सञ्ज्ञकः पन्थाः सत्येन विष्णुनैव विततः प्रकाशितः । भगवानेव स्वाधिष्ठित-लोकप्राप्तिसाधनभूतं मार्गं प्रकाशयतीति भावः ।। ६ ।।

## उपनिषत्

**बृहच्च तद् दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।**

**दूरात् सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव निहितं गुहायाम्** ॥ ७ ॥

## भाष्यम्

सर्वगत्वात् तद्दूरेऽन्तिके च ॥

**श्री.टी.-** 'दूरात्स दूरे तदिहान्तिके च' इति विरुद्धं प्रतीयतेऽतस्तमुपपादकोक्त्या परिहरति- **सर्वगत्वादिति** ॥ अन्तिके च तिष्ठतीति शेषः । 'न चक्षुषा गृह्यते नापि वाचा' इत्यत्र चक्षुर्वाक्शब्दयोः प्रसिद्धचक्षुरादिपरत्वप्रतीतिं निराकरोति- **नान्यैर्देवैरिति** ॥

## खण्डार्थः

**श्री.-** सत्यशब्दोक्तविष्णुस्वरूपमेव पुनर्निरूपयति- **बृहदित्यादिना** ॥ तत् सत्यशब्दोक्तभगवत्स्वरूपं बृहत् देशतः कालतो गुणतश्च पूर्णम् । दिव्यमलौकिकम् । ततत्वाद्व्याप्तत्वात् तदिति वा । साकल्येनाचिन्त्यस्वरूपम् । सूक्ष्माज्जीवस्वरूपादेरतिशयेन सूक्ष्मम् । सूर्यादौ स्थित्वा विशेषेण भाति प्रकाशते । 'यदादित्यगतं तेजः' इत्यादेः । स सत्यशब्दोक्तो विष्णुर्दूराद्दूरे तिष्ठति । यद्दूराद्दूरे तदेव ह तस्यैव विवरणम् अन्तिके चास्ति सर्वगतत्वादिति भावः । अन्तिके चेत्युक्तमेव विशदयति-**पश्यत्स्विति** ॥ पश्यत्सु ज्ञानवत्सु इह जीवेषु गुहायां हृदयगुहायामेव दहराकाशे निहितं सन्निहितमित्यर्थः ॥ ७ ॥

## उपनिषत्

(प्राणप्रसादान्मुक्तिः)

**न चक्षुषा गृह्यते नापि वाचा**
**नान्यैर्देवैस्तपसा कर्म्मणा वा ।**

ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

## भाष्यम्

'नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना ।
ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ।
प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः' ॥ इति च ॥

**षोडशकलाशरीरो न भवतीति निष्कलः ।'यदा पश्यः पश्यते रुग्मवर्णम्', 'आनन्दरूपममृतं यद् विभाति' इत्युक्तत्वात् ॥**

**श्री.टी.**- 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः' इत्यस्य सर्वस्यापीदं तात्पर्यकथनम् । हरिचतुर्मुखवायुव्यतिरिक्तचक्षुरादिदेवानुग्रहमात्रेण हरिं न पश्येदित्यर्थः । ज्ञानप्रसादेनेत्यत्र प्रसिद्धज्ञानानुग्रहेणैव पश्येदित्यन्यथा-प्रतीतिनिरासाय ज्ञानशब्दार्थमाह- **ज्ञानरूपेणेति** ॥ ब्रह्मणा चतुर्मुखेन ब्रह्मवाय्वोर्हरेश्च ज्ञानरूपत्वं नैकप्रकारमित्याशयेन परमज्ञानरूपेणेत्यु-क्तम् । ज्ञानस्य परमत्वं च स्वपरगताशेषविशेषविषयकत्वरूपं द्रष्टव्यम् । नन्वेवमन्यदेवतानुग्रहस्य व्यर्थत्वे 'देवांश्च तारतम्येन ज्ञात्वा मुक्तिर्न चान्यथा' इति प्रमाणविरोध इत्यत आह- **अन्य इति** ॥ तरतमभावज्ञानेन प्रसन्नाः सन्तो देवाः भगवदाराधनविषये सद्बुद्धिप्रदानद्वाराऽनुज्ञाप्रदायिन इत्यर्थः । यथोक्तम्-

'न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥' इति ॥

अनेन विशुद्धसत्त्व इत्यस्य तात्पर्यमुक्तं वेदितव्यम् । निष्कलमित्ये-तत्परेण व्याख्यातं करचरणाद्यात्मकशरीरमत्र कलोच्यते तद्रहितम् अशरीरत्वश्रुतेरिति । तदेतदपव्याख्यानमिति भावेन स्वयं व्याचष्टे- **षोड-**

**शेति** ॥ एकादशेन्द्रियपञ्चमहाभूतरूपषोडशकलात्मकशरीरो न भवतीत्यर्थः । परोक्त एवार्थः किं न स्यादित्यतस्तत्र बाधकमाह- **यदेति** ॥ शरीराभावे रुग्मवर्णत्वस्यायोगात् । रुग्मवर्णोक्त्या शरीरसिद्धिः । आनन्दरूपम् । रूपशब्दः शरीरपरः । आनन्दात्मकशरीरमित्यर्थः । तथा च श्रुतिभिरानन्दात्मकविग्रहस्योक्तत्वात् परव्याख्याने तद्विरोधः स्यादिति भावः । श्रुतिस्तु प्राकृतशरीराभावविषयेति द्रष्टव्यम् । अर्थान्तरप्रतीतिनिरासाय निष्कलशब्दं व्याचष्टे- **षोडशेति** ॥ सजीवस्य शरीरस्य भागाः कलाः । ताश्च षोडश । मुख्यप्राणाभिमन्यमानो जीवः । आस्तिक्यनिष्ठारूपा श्रद्धा । 'खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नं वीर्यं तपो मन्त्रा ऋगादिवेदरूपाः । पुण्यपापरूपं कर्म । गोलकाः देवदत्तादिरूपं नाम' इति । तत्र जीवस्य सजीवशरीरभागत्वं प्रसिद्धमेव । श्रद्धायाः शरीरभागत्वं शरीरान्तर्गतवृत्तिरूपत्वात् । आकाशादिपञ्चभूतानां शरीरोपादानत्वात् तद्भागत्वम् । चक्षुरादीन्द्रियस्य शरीरप्रवृत्त्युपकरणत्वात्तद्भागत्वम् । मनसः प्रधानोपकरणत्वात् तत्त्वम् । अन्नस्य शरीरस्थितिकारणत्वात् तत्त्वम् । वीर्यस्य शरीरहेतुत्वात् तत्त्वम् । तपसो जीवं प्रति ज्ञानादिहेतुतया मुख्यकारणत्वात् तत्त्वम् । मन्त्राणां सम्यग्ज्ञानादिहेतुतया तत्त्वम् । कर्मणः सुखादिनिमित्तत्वात् तत्त्वम् । गोलकानामिन्द्रियाश्रयत्वात् तत्त्वम् । नाम्नस्तु शरीरे सङ्केतितत्वात् तत्त्वम् । तदेवं याः षोडशकलाः तद्युक्तशरीरो न भवतीति भगवान्निष्कल इत्युच्यत इत्यर्थः ।

ननु सौन्दर्याद्यभाव एव निष्कलशब्दार्थोऽस्तु । यद्वा 'करचरणात्मकं शरीरं कलोच्यते । तद्रहितं निष्कलम्' इति परेण व्याख्यातत्वाच्छरीरमात्राभाव एव तदर्थोऽस्तु । किं षोडशकलाशरीरराहित्यार्थकत्वाङ्गीकारेणेत्यत आह- **यदेति** ॥ रुग्मवर्णमिति सौन्दर्यस्योक्तत्वात् तदभावो

न निष्कलशब्दार्थः । नापि शरीरमात्राभावस्तदर्थः । आनन्दरूपमिति आनन्दात्मककरचरणादिमत्त्वस्योक्तत्वादित्यर्थः । न चानन्दरूपपदेन कथमानन्दात्मककरचरणादिमत्त्वं लभ्यत इति वाच्यम् । 'रूपं स्वभावे सौन्दर्ये आकारे श्लोकशब्दयोः' इति नानार्थकोशानुसारेण रूपशब्दस्याकारवाचकत्वेन तदुपपत्तेः । अत एव स्वगुणात्मकं रूपमित्यस्य शिरःपाणिपादात्मकमिष्यत इत्यनुव्याख्याने आनन्दाद्यात्मकशिरःपाण्यादिलक्षणं रूपं भगवतोऽभिहितमिति ॥

**॥ इति पञ्चमखण्डभाष्यार्थः ॥**

## खण्डार्थः

**श्री.** - एतादृशस्य हरेरपरोक्षज्ञानं न तपआदिसाधनसामर्थ्येन भवति नापि चतुर्मुखवाय्वन्यदेवताप्रसादेन किन्तु विष्णुचतुर्मुखवायुप्रसादादेवेत्याह- **न चक्षुषेत्यादिना ॥** भगवान् चक्षुषा तदभिमानिना सूर्येण । वाचा तदभिमानिनाग्निनान्यैस्तदरिक्तैर्देवैस्तत्प्रसादेनेति यावत् । तपसा कर्मणा वा तत्साध्यसामर्थ्येनेति यावत् । न गृह्यते नापरोक्षीक्रियते । तथा चक्षुरादीन्द्रियेण च न गृह्यत इत्यप्यर्थो द्रष्टव्यः । तर्हि देवतानुग्रहस्य सर्वथा वैय्यर्थ्यमिति न मन्तव्यम् । ततः परस्परं तारतम्यज्ञानेन प्रसन्नतत्त्वाभिमानिदेवतानुग्रहाद् विशुद्धसत्त्वो विशुद्धान्तःकरणोऽधिकारी निष्कलं षोडाकलात्मकशरीररहितं विष्णुं ध्यायमानो भवति । तदनन्तरं ध्यानेन तं पश्येत् पश्यति । पश्यतीति यत् तत् ज्ञानप्रसादेन परमज्ञानरूपस्य विष्णोस्तथा ज्ञानरूपस्य चतुर्मुखस्य वायोश्च प्रसादेनैव नान्यथेत्यर्थः । ब्रह्मवाय्वोर्ज्ञानरूपत्वं तदभिमानित्वादिति द्रष्टव्यम् । षोडाकलाशरीरो न भवतीति निष्कलः । 'यदा पश्यः पश्यते रुग्मवर्णम्' 'आनन्दरूपममृतं यद्विभाति' इत्युक्तत्वात् ॥ ८ ॥

## उपनिषत्

**एषोऽणुरात्मा चेतसा वेदितव्यो**
**यस्मिन् प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां**
**यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

## खण्डार्थः

**श्री.-** भगवदपरोक्षज्ञानं चक्षुरादिना करणेन न भवतीत्युक्तं तर्हि केन करणेन भवतीत्याशङ्कायामाह- **एष इति** ॥ प्रजानां सर्वं सप्रभेदं चित्तमन्तः-करणं प्राणैस्तदितरेन्द्रियैः सह यस्मिन् विशुद्धप्राणे ओतम् इन्द्रियदेवताजातं यस्मिन्नाश्रितमिति यावत् । स एष आत्मा सर्वदेवतास्वामी प्राणः । पञ्चधा प्राणापानादिपञ्चरूपेण यस्मिन् संविवेश आश्रितस्तिष्ठति यस्मादेव विभवति उत्पद्यते च एषोऽणुरात्मा मुख्यप्राणस्यापि स्वामी भगवान् चेतसा ध्यानादिसंस्कृतेन मनसा करणेनैव वेदितव्यः साक्षात्कर्तव्य इत्यर्थः ॥ ९ ॥

## उपनिषत्

(आत्मवेदिनः महिमा)

**यं यं लोकं मनसा संविभाति**
**विशुद्धसत्त्वः कामयते यांश्च कामान् ।**
**तं तं लोकं जयते तांश्च कामां-**
**स्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥ १० ॥**

**॥ इति पञ्चमः खण्डः ॥**

## खण्डार्थः

**श्री.**- 'प्राणो ह्येषः' इति प्रकृतस्यापरोक्षज्ञानिनो जीवन्मुक्त्यवस्थस्य महिमानमाह- **यं यमिति ॥** विशुद्धसत्त्वो विशुद्धे भगवति सत्त्वमन्तःकरणं यस्यासौ विशुद्धसत्त्वोऽपरोक्षज्ञानी यं यं लोकं मनसा संविभाति भावयति इच्छति यांश्च कामान् काम्यान् कामयते तं तं लोकं तांश्च कामाञ्जयते प्राप्नोति । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः' इत्यादिप्रमाणप्रसिद्धमत्र हिशब्देन दर्शयति । तस्मादपरोक्षज्ञानिनः सत्यकामत्वादिप्रभाववत्त्वादन्योऽपि भूतिकामः पुमानात्मज्ञं भगवदपरोक्षज्ञानिनमर्चयेदित्यर्थः । इदमपि प्रकरणप्रसिद्धमिति हिशब्दः ॥ १० ॥

**॥ इति पञ्चमखण्डमन्त्रार्थः ॥**

## ॥ अथ षष्ठः खण्डः ॥

## उपनिषत्

(ब्रह्मज्ञाः मुक्ताः भवन्ति)

**ॐ ॥ स वेदैतत् परमं ब्रह्मधाम**
**यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरुषं ये ह्यकामा-**
**स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥**

## भाष्यम्

**स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् ।**

**'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः ।**
**उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम् ।**

तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम् ॥
नित्यं प्राणे स्थितस्यैव विष्णोरावेश एव हि ।
प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा ॥
सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि ।
तत्र स्थित्वाऽपि भुञ्जन्त आविशेयुः पुनश्च ते ॥
मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।
ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेत्र तु' इति च ।

एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते–

'सर्वं तीर्त्वा हरिं शुक्रं प्रति वृत्तिर्भवेत् पुनः ।
ज्ञानिनः सा हि मुक्तिः स्यात् तन्नैवात्येति कश्चन ॥' इति ॥

**श्री.टी.**- अत्र स इति तच्छब्देनात्मज्ञपदोक्तापरोक्षज्ञान्येव परामृश्यते । तथा च स आत्मज्ञपदोक्तापरोक्षज्ञानी यत्र विश्वं जगत् निहितमत एव धाम विश्वाश्रयं ब्रह्म वेदेति व्याख्यानमसदिति भावेन स्वयं व्याचष्टे- **स इति** ॥ तथा चार्चयेदित्युक्तात्मज्ञार्चकपरामर्शक एवायं तच्छब्द इत्यर्थः। ब्रह्मधामेत्येकं पदमित्यभिप्रेत्य तस्यार्थमाह- **ब्रह्मण इति** ॥ धाम गृहम् । ब्रह्मधामत्वस्यैव विवरणं यत्र विश्वमित्यादिकमित्यभिप्रेत्य व्याचष्टे- **यत्रेति** ॥ यत्र प्राणे । विश्वं समस्तं पूर्णं चेत्यभिधानाद् विश्वं पूर्णमित्युक्तम् । ननु ब्रह्मधामशब्देन प्राण एवोच्यत इति कुतः? परब्रह्मसन्निधानस्य सर्वत्र विद्यमानत्वेन सर्वेषामपि ब्रह्मधामत्वादित्यतः प्राणस्यैव ब्रह्मधामशब्दवाच्यत्वे निमित्तं वदन्नेतैरुपायैरिति वाक्यमपि व्याचष्टे- **प्रधानमिति** ॥ मुख्यसन्निधानपात्रमिति यावत् । उपायैः प्रवचनाद्युपायैः । यतत इत्यस्यार्थः- **विजानीयादिति** ॥ सदा ज्ञानिन इति वक्ष्यमाणत्वादत्रापि नित्यं विजानीयादित्यन्वयः । सर्वदा ज्ञानाय यत्नं कुर्यात् । एष आत्मेत्यस्यार्थः- **हरिरिति** ॥ तस्य ब्रह्मधाम विशत इत्यस्यार्थस्तस्य

## खण्डार्थः

**श्री.-** 'प्राणो ह्येषः' इति प्रकृतस्यापरोक्षज्ञानिनो जीवन्मुक्त्यवस्थस्य महिमानमाह- **यं यमिति ॥** विशुद्धसत्त्वो विशुद्धे भगवति सत्त्वमन्तःकरणं यस्यासौ विशुद्धसत्त्वोऽपरोक्षज्ञानी यं यं लोकं मनसा संविभाति भावयति इच्छति यांश्च कामान् काम्यान् कामयते तं तं लोकं तांश्च कामाञ्जयते प्राप्नोति । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः' इत्यादिप्रमाणप्रसिद्धमत्र हिशब्देन दर्शयति । तस्मादपरोक्षज्ञानिनः सत्यकामत्वादिप्रभाववत्त्वादन्योऽपि भूतिकामः पुमानात्मज्ञं भगवदपरोक्षज्ञानिनमर्चयेदित्यर्थः । इदमपि प्रकरणप्रसिद्धमिति हिशब्दः ॥ १० ॥

**॥ इति पञ्चमखण्डमन्त्रार्थः ॥**

**॥ अथ षष्ठः खण्डः ॥**

## उपनिषत्

(ब्रह्मज्ञाः मुक्ताः भवन्ति)

**ॐ ॥ स वेदैतत् परमं ब्रह्मधाम**
**यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरुषं ये ह्यकामा-**
**स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥**

## भाष्यम्

स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् ।

'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः ।
उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम् ।

तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम् ॥
नित्यं प्राणे स्थितस्यैव विष्णोरावेश एव हि ।
प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा ॥
सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि ।
तत्र स्थित्वाऽपि भुञ्जन्त आविशेयुः पुनश्च ते ॥
मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।
ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु' इति च ।

एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते–

'सर्वं तीर्त्वा हरिं शुक्रं प्रति वृत्तिर्भवेत् पुनः ।
ज्ञानिनः सा हि मुक्तिः स्यात् तन्नैवात्येति कश्चन ॥' इति ॥

**श्री.टी.**- अत्र स इति तच्छब्देनात्मज्ञपदोक्तापरोक्षज्ञान्येव परामृश्यते । तथा च स आत्मज्ञपदोक्तापरोक्षज्ञानी यत्र विश्वं जगत् निहितमत एव धाम विश्वाश्रयं ब्रह्म वेदेति व्याख्यानमसदिति भावेन स्वयं व्याचष्टे- **स इति** ॥ तथा चार्चयेदित्युक्तात्मज्ञार्चकपरामर्शक एवायं तच्छब्द इत्यर्थः। ब्रह्मधामेत्येकं पदमित्यभिप्रेत्य तस्यार्थमाह- **ब्रह्मण इति** ॥ धाम गृहम् । ब्रह्मधामत्वस्यैव विवरणं यत्र विश्वमित्यादिकमित्यभिप्रेत्य व्याचष्टे- **यत्रेति** ॥ यत्र प्राणे । विश्वं समस्तं पूर्णं चेत्यभिधानाद् विश्वं पूर्णमित्युक्तम् । ननु ब्रह्मधामशब्देन प्राण एवोच्यत इति कुतः? परब्रह्मसन्निधानस्य सर्वत्र विद्यमानत्वेन सर्वेषामपि ब्रह्मधामत्वादित्यतः प्राणस्यैव ब्रह्मधामशब्दवाच्यत्वे निमित्तं वदन्नेतैरुपायैरिति वाक्यमपि व्याचष्टे- **प्रधानमिति** ॥ मुख्यसन्निधानपात्रमिति यावत् । उपायैः प्रवचनाद्युपायैः । यतत इत्यस्यार्थः- **विजानीयादिति** ॥ सदा ज्ञानिन इति वक्ष्यमाणत्वादत्रापि नित्यं विजानीयादित्यन्वयः । सर्वदा ज्ञानाय यत्नं कुर्यात् । एष आत्मेत्यस्यार्थः- **हरिरिति** ॥ तस्य ब्रह्मधाम विशत इत्यस्यार्थस्तस्य

तदर्थे प्राणे आविष्टो भवतीति । नित्यं हरेः प्राणे सन्निहितत्वादधिकारि-निमित्तं हरेः प्राणे आवेशो नाम क इत्यत उक्तं विवृणोति-**नित्यमिति** ॥ सदा ज्ञानिनः प्रवचनाद्युपायैर्ज्ञानार्थं यततोऽधिकारिणो यत्प्राणद्वारा ज्ञानदीपनं ज्ञानोद्दीपनकरणं तत्राविर्भाव इति यावत् । तदेव नित्यं प्राणस्थितस्यैव विष्णोः प्राण आवेश उच्यत इति प्रसिद्धमित्यर्थः । तथा च तस्यैष आत्मेत्यादेः प्राणे स्थित्वा तद्द्वाराधिकारिणो ज्ञानोद्दीपनं करोति । अधिकारिणां तत्राविर्भवतीति तात्पर्यार्थः ।

ननु पूर्वं विद्यमानस्यैव किञ्चिदतिशयकरणेनाविष्टव्यवहारगोचरत्वं कुत्र दृष्टमित्यत आह- **सन्निधानमिति** ॥ यथा पुरुषदेहेषु सन्निधानं प्राप्ता अपि ते पिशाचास्तत्र स्थित्वा विषयान् भुञ्जन्तोऽपि मन्त्रौषधादिभिर्पुन-राविशेयुर्वाग्व्यवहारविशेषकरणेन पुनः सन्निधानं प्राप्ता भवन्ति तदभि-प्रायेणाविशेयुरित्युच्यन्ते, इदानीमाविष्टा जाता इत्युच्यन्ते, तथा विष्णुः सदा प्राणस्थितोऽपि सज्ज्ञानिनः पुनरेव प्राणद्वारा ज्ञानदीप्त्यादिकं ज्ञानोद्दीपनादिरूपातिशयविशेषं कुर्यात् करोति प्राणरूपेऽधिष्ठाने आविर्भवतीति यावत् । तदभिप्रायेण ब्रह्मधाम प्रविष्ट इच्युच्यत इति शेषः । 'ते शुक्रमेतदतिवर्तन्ति धीराः' इत्यत्र शोकरहितत्वाच्छुक्रं ब्रह्म अतिक्रम्य वर्तन्ते इत्यन्यथाप्रीतितिनिरासाय व्याचष्टे- **एतदिति** ॥ ब्रह्मधामाब्दोक्तमुख्यप्राणावस्थितमित्यर्थः । शुक्रं शोकरहितम्। 'शुक्रं तच्छोकराहित्यात्' (ई.भा.मं.८) इति वचनात् । प्रतिगन्तुमिति शेषः । अन्यदिति श्रुतौ शेषोक्तिः । अन्यत् संसारजातम् । वृतु धातोर्नित्या-त्मनेपदित्वादाह- **अतिवर्तन्त इति** ॥ परित्यजन्तीति यावत् । ब्रह्मातिक्रम्य गच्छन्तीत्येवार्थः किन्न स्यादित्यतस्तत्र बाधकमाह- **सर्वमिति** ॥ शुक्रमित्यनूद्य हरिमिति व्याख्यातम् । शुक्रं प्रतिगन्तुं सर्वं संसारजातं तीर्त्वा स्थितस्य ज्ञानिनो या वृत्तिर्भवेद् भगवत्समीप एव या स्थितिर्भवति

सैव मुक्तिरिति प्रसिद्धमित्यर्थः । प्रतीतार्थे बाधकमाह- **तं नैवेति॥** तमतिक्रम्य कोऽपि न गच्छतीत्यर्थः ॥ १ ॥

## खण्डार्थः

**श्री.** - आत्मज्ञार्चको भूतिमान्भवतीत्युक्तं तां भूतिमेवाह- **स वेदैतदित्यादिना ॥** स आत्मज्ञार्चकस्तदर्चनप्रभावाद् ब्रह्मधाम ब्रह्मणो धामभूतं प्राणं वेद । मुख्यप्राणज्ञानावाप्तिरेव तस्य भूतिरिति भावः । प्राणस्य ब्रह्मधामत्वं कुत इत्यत उक्तम्- **यत्रेति ॥** यत्र प्राणे शुभ्रं शुद्धं विश्वं पूर्णं ब्रह्म निहितं सन्निहितं सद्भाति अतस्तस्य ब्रह्मधामत्वमित्यर्थः। ये अकामाः सन्तः पुरुषमात्मज्ञमुपासते सेवन्ते ते एतन्मुख्यप्राणस्थितं शुक्रं शोकरहितं परं ब्रह्म प्रतिगन्तुम् अन्यदिति शेषः । संसारजातमतिवर्तन्ति अतिवर्तन्ते परित्यजन्ति तदुपदेशेनेत्यर्थः ॥ १ ॥

## उपनिषत्

**कामान् यः कामयते मन्यमानः**
**स कामभिर्जायते तत्रतत्र ।**
**पर्याप्तकामस्य कृतात्मनश्च**
**इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

## खण्डार्थः

**श्री.**- अकामा इत्यस्य व्यावर्त्यमाह- **कामानिति ॥** यः पुमान् कामान् काम्यन्त इति व्युत्पत्त्या काम्यान् भद्रतया मन्यमानः सन् कामयते स कामभिः कामैर्बद्धः सन् तत्र तत्र जायते । कृतात्मनः शुद्धबुद्धेः । अत एव पर्याप्तकामस्य सम्पूर्णकामस्य इहैव लोके शरीरे वा सर्वे कामाः प्रविलीयन्तीत्यर्थः ॥ २ ॥

## उपनिषत्

(यं भक्तत्वेन भगवान् वृणुते तस्यैव स लभ्यः)

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम्** ॥ ३ ॥

## खण्डार्थः

**श्री.**- पूर्वं ज्ञानप्रसादेनैव तं पश्यतीत्युक्तम् । तदयुक्तम् । प्रवचनादिनैव ज्ञानोत्पत्त्युपपत्तेरित्यत आह- **नायमात्मेति** ॥ अयमात्मा भगवान् प्रवचनेन सावधारणमेतत् । व्याख्यानेन शास्त्राभ्यासरूपोपासनयेति यावत् । मेधया प्रज्ञया तत्पूर्वकं विचारेण मननेनेति यावत् । बहुना श्रुतेन श्रवणेन । एतत्साधनसामर्थ्येनैव लभ्यो ज्ञेयो न भवति किन्तु एष आत्मा प्रसन्नः सन् मदीयोऽयमिति यं भक्तं वृणुते तेनैव लभ्यः । तदेव विवृणोति- एष आत्मा तस्याधिकारिणः स्वां तनुं विवृणुते स्वस्वरूपं प्रकाशयति अपरोक्षो भवतीत्यर्थः ॥ ३ ॥

## उपनिषत्

(श्रवणाद्युपाया अनुष्ठेयाः)

**नायमात्मा बलहीनेन लभ्यो**
**न च प्रमादात् तपसो वाऽप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वां-**
**स्तस्यैष आत्मा विशते ब्रह्मधाम** ॥ ४ ॥

## खण्डार्थः

**श्री.**- ननु तर्हि श्रवणादीनां वैयर्थ्यं स्यादित्यत आह- **नायमिति** ॥ अयमात्मा बलहीनेन श्रवणमननबलहीनेन लभ्यो ज्ञेयो न भवति। वाशब्द उपमायाम्। यथा प्रमादान्मिथ्याज्ञानात् अलिङ्गात् 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च' इति वचनाज्ज्ञापकशून्यात् प्रमाणादुक्तादिति यावत्। तपसश्च लभ्यो न तथेत्यर्थः। तस्माच्छ्रवणादिकमप्यावश्यकमिति भावः। यमेवैष इत्युक्तं विशदयति- **एतैरिति** ॥ यो विद्वानधिकारी एतैः प्रवचनाद्युपायैर्यतते ज्ञानाय यत्नं करोति तस्याधिकारिणो ज्ञानदानार्थम् एष आत्मा प्रसन्नः सन् ब्रह्मधाम मुख्यप्राणं विशते मुख्यप्राणद्वारा ज्ञानदीपनं करोति। अधिकारिणां तत्राविर्भवतीत्यर्थः ॥ ४ ॥

## उपनिषत्

**सम्प्राप्यैनमृषयो ज्ञानतृप्ताः**
**कृतात्मानो वीतरागाः प्रशान्ताः।**
**ते सर्वगं सर्वतः प्राप्य धीरा**
**मुक्तात्मानः सर्वमेवापियन्ति ॥ ५ ॥**

## भाष्यम्

**सर्वतो देहादेर्मुक्ताः सन्तः सर्वगं भगवन्तं प्राप्य तमेवापियन्ति।**

**'देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम्।**
**'प्राप्य तस्मिन् प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा' इति च ॥**

**श्री.टी.**- ते सर्वगमिति वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे- **सर्वत इति** ॥ मुक्ता इति शेषोक्तिः। सर्वं पूर्णम्। 'विश्वं समस्तं पूर्णं च सर्वमित्यभिधीयते' इति वचनात्। तत्समीपं प्राप्याऽनन्तरमपियन्ति प्रविशन्ति।

प्रविश्य मोदन्त इति शेषः । अत्र प्रमाणमाह- **देहादेरिति** ॥ सर्वत इत्यनूद्य देहादेरिति व्याख्यानम् । प्रविश्याथेत्यादिश्रुतौ शेषोक्तिः ॥

### खण्डार्थः

**श्री.**- भगवज्ज्ञानमहिमानमाह - **सम्प्राप्येति** ॥ आदौ निवृत्तकर्मणा कृतात्मानः शुद्धान्तःकरणाः पश्चाद्वीतरागाः वैराग्यवन्तो भवन्ति । 'कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति वचनात् । ज्ञानतृप्ताः श्रवणादिद्वारा जातेनापरोक्षज्ञानेन तृप्ताः सन्तो ऋषय एनं हरिं सम्प्राप्य स्थिताः प्रान्ताः प्रकृष्टसुखवन्तो भवन्तीति शेषः । तस्यैव विवरणम्- तत्र भगवत्येव युक्तात्मानो धीराः सर्वतो देहादेर्मुक्ताः सन्त इति शेषः । सर्वगं सर्वत्र स्थितम् । सर्वं पूर्णं भगवन्तं तत्समीपं प्राप्यानन्तरं तमेवापियन्ति प्रविशन्ति । प्रविश्य चान्तर्बहिर्वा मोदन्त इत्यर्थः ॥ ५ ॥

### उपनिषत्

(अपरोक्षानन्तरमेव न मुक्तिः)

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**सन्न्यासयोगाद् यतयः शुद्धसत्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले**
**परामृतात् परिमुच्यन्ति सर्वे ॥ ६ ॥**

### भाष्यम्

**ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति ॥**

### प्रकाशिका (श्रीवादिराजतीर्थीया)

'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यत्र वेदान्तविज्ञानेन वेदान्तश्रवण-

जनितज्ञानेन सुनिश्चितार्थाः सम्यक् निश्चिततत्त्वार्थाः यतयः, 'यती प्रयत्ने' इति धातोस्तदनन्तरं मनने ध्याने च कृतप्रयत्नाः, तेन चापरोक्षज्ञाने सति शुद्धसत्त्वाः शुद्धान्तःकरणा एते ब्रह्मलोकेषु प्रतीकालम्बनाश्चेच्चतुर्मुखलोके, अप्रतीकालम्बनाश्चेत् परब्रह्मलोकेषु स्वयोग्यतानुसारेण स्थित्वा परान्तकाले परामृतान्नित्यमुक्तान्नारायणात् सर्वे परिमुच्यन्ति । ल्यब्लोपनिमित्तेयं पञ्चमी । परमपुरुषं प्राप्य सर्वे परिमुच्यन्ति । परितः परमाच्छादिकमायायाः, स्वाच्छादिकमायायाः स्वस्वरूपावरकलिङ्गदेहाच्च मुक्ता भवन्ति । न तु यतीनामेव मोक्ष इति नियमः । प्रियव्रत-ध्रुव-जनकादिराजर्षीणां वनस्थानामपि मोक्षश्रवणात् । अस्य वाक्यस्योक्तविधया सावकाशत्वाच्च ।। ६ ।।

**श्री.टी.**- ते ब्रह्मलोके त्वित्यत्र परब्रह्मलोके परामृताल्लिङ्गशरीरान्मुच्यन्त इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **ब्रह्मलोक इति** ।। चतुर्मुखलोके सत्याख्ये परब्रह्मलोके वैकुण्ठे च स्थिता भवन्तीति शेषः । परं ब्रह्मायुः । परिमुच्यन्ति। परामृतशब्दवाच्यलिङ्गशरीरादित्यर्थः ।। ६ ।।

## खण्डार्थः

**श्री.**- ननु मोक्षः किमपरोक्षज्ञानानन्तरमेव भवति नेत्याह- **वेदान्तेति** ।। वेदान्ता उपनिषदस्तच्छ्रवणजनितं यद्विज्ञानं तेन सुनिश्चितार्थाः सम्यग्विषयीकृतभगवद्रूपार्थाः । सन्न्यासयोगात् काम्यकर्मपरित्याग-रूपादुपायाच्छुद्धसत्त्वाः शुद्धान्तःकरणा यतय एवं श्रवणादि-प्रयत्नवन्तोऽधिकारिणोऽपरोक्षज्ञानानन्तरं भोगेन क्षीणप्रारब्धकर्माणः प्रतीकालम्बनाश्चेद् ब्रह्मलोके चतुर्मुखलोके सत्याख्ये स्थिता भवन्ति । अप्रतीकालम्बनाश्चेत् परब्रह्मलोके स्थिता भवन्ति । पश्चात्ते सर्वे परान्तकाले परं ब्रह्मायुस्तस्यां तत्काले महाप्रलये ब्रह्मणा सह विरजास्नानेन

परामृताल्लिङ्गदेहरूपात् प्रकृतेः परिमुच्यन्ति मुच्यन्ते मुक्ता भवन्तीत्यर्थः ॥ ६ ॥

## उपनिषत्

(एकीभावो न स्वरूपैक्यम्)

**गताः कलाः पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

## भाष्यम्

'अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः ।
कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि ॥
अतो नदीनां जीवानां विरुद्धानां नृणामपि ।
अब्धिना हरिणा चैव तथैव च नरान्तरैः ॥
एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम् ।
स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् ॥
हरेरपि स्वरूपाणामेकीभावो यदोच्यते ।
संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः' इति च ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

गताः मुक्ताः पञ्चदश कलाः प्राणश्रद्धारुद्रेन्द्रसोमवरुणाग्निविनायक-कोणवायुपावकाख्याग्निकुमारपर्जन्य-स्वाहाबुधोषाशन्याख्याः कलाः कलाभिमानिनो ब्रह्मादिदेवाः प्रतिदेवतासु देवताः प्रति विद्यमानाः तासु

प्रजासु प्रतिष्ठिताः बिम्बरूपेण प्रति प्रति स्थिताः । सर्वे देवाः पञ्चदश-कलाव्यतिरिक्ता देवाः शतगणस्थदेवाः पुष्करव्यतिरिक्ततदितरदेवाश्च कर्माणि कर्माभिमानिपुष्कराख्यदेवः, बहुवचनमभिमन्यमानकर्मबाहुल्यविवक्षया, विज्ञानमयः अपरोक्षाज्ञानी आत्मा उक्तदेवताजीवव्यतिरिक्तो जीवः, जातावेकवचनं, ऋष्यादिमनुष्योत्तमपर्यन्तापरोक्षज्ञानिजीवा इत्यर्थः । एकीभवन्ति अविरोधाख्यैकीभावं प्राप्नुवन्ति । प्रागपि विद्यमानत्वेन पराभिमतैक्यस्य 'अभूततद्भावे कृभ्वस्तियोगे च्विः' इति सूत्रोक्ताभूत-तद्भावार्थकच्विप्रत्ययार्थत्वायोगात् । प्रागविद्यमानस्यैवैक्यस्य प्राप्तिस्तु भिन्नयोर्घटपटयोः कदाऽप्यैक्यादर्शनेनासम्भावित एव । मत्स्यादि भगवदवताराणां मूलरूपेण क्वचिदेकीभावकथनेऽपि मूलरूपाख्यविशेषेण संश्लेष एवैकीभावः, न त्वैक्यम् । तस्य प्रागपि विद्यमानत्वेन च्वि-प्रत्ययार्थत्वायोगात् । गता नष्टा भविष्यन्तीति परकीयार्थे भविष्यन्तीति पदाभावो दोषः । यथास्थितपदप्रयोग एवार्थसम्भवे अध्याहारोऽपि दोष एव । किञ्च च देवाश्च सर्वे प्रतिदेवतासु गता इत्युक्तदेवतानामपि नाशप्रसङ्गात् कर्माणीत्युक्तकर्मणामनष्टानामेवैकीभावकथनविरोधाच्च ॥ ७ ॥

**श्री.टी.-** 'परेऽव्यये सर्व एकीभवन्ति' इति वाक्यम् अन्यथाप्रतीति-निरासाय व्याचष्टे- **अविरोध इति** ॥ मत्यैक्यमित्यर्थः । एकविषयमति-मत्वमिति यावत् । प्राग् विरुद्धमतयो ब्राह्मणाः राजकुल एकीभवन्ति इतिवत् प्राग्भवद्विरुद्धमतयोऽधुना तेनैक्यमत्यं प्राप्नुवन्तीत्यर्थः । अत्र विषयैक्यान्मैत्यैक्यम् । मत्यैक्यान्मतिमतामैक्यं व्यपदिश्यत इति द्रष्ट-व्यम् । अत्र सर्वपदस्य लक्षणेति ज्ञातव्यम् । सादृश्यं संश्लेषः । यथा उदक उदकान्तरस्य संश्लेषाभिप्राणैकीभावव्यवहार एवं परमात्मनि 'सर्व एकीभवन्ति' इति तत्संश्लिष्टा भवन्ति तं प्रविशन्तीति यावदित्यर्थः ।

एकदेशस्थितिः स्थानैक्यम् । अन्हीतस्ततःस्थिता गावः सायं गोष्ठे एकीभवन्तीतिवत् प्राग् ईश्वरव्यक्तिस्थानापेक्षयाऽन्यत्रेतस्ततःस्थिता तत्र मिलिता भवन्तीत्यर्थः । अतीतार्थे बाधकमाह- **नैकीभाव इति** ॥ ननु स्वरूपयोरैकीभाव एवार्थः कुतो न स्यादित्यतोऽभूततद्भावार्थस्य च्विप्रत्ययस्यानुपपत्तिरित्यभिप्रेत्य तल्लब्धां युक्तिं दर्शयति- **कुत इति** ॥ अभूतस्य प्राग् एकत्वेन अविद्यमानस्य भवनम् एकत्वेन भवनं कुतः ? न कुतोऽपीत्यर्थः । अनेन, 'जीवः परमात्मना मुक्तावैक्यं न प्राप्स्यते प्राक्ततोऽत्यन्तभिन्नत्वात् । यद् यतः प्रागत्यन्तभिन्नं तत्तेनैक्यं न प्राप्स्यते, यथा घटः पटेन' इत्यनुमानमुक्तं भवतीति ज्ञातव्यम् । यथोक्तमनुव्याख्याने- 'कथञ्च यः पूर्वमसौ न पश्चात् भवेत्स एवेत्यपि युक्तिमेति । यतो न दृष्टं यदभून्न पूर्वं पश्चात्तदासेति कुतश्च किञ्चित्' इति । ननु प्राङ्मूलरूपिणो भगवतोऽत्यन्तभिन्नेन दृष्टानां रामकृष्णादिरूपाणां पश्चात्तेनैक्यदर्शनात् व्यभिचार इत्याह- **स्वरूपस्येति** ॥ रामकृष्णादिरूपस्य मूलरूपिणा भगवदैक्यमेव सर्वदा सर्वप्रमाणैः प्रसिद्धं न भेद इत्यर्थः । तथा च तत्र हेतोरभावात् न व्यभिचार इति भावः । ननु तर्ह्येकीभाववाक्यानां कोऽर्थ इत्यतोऽविरोधश्चेत्यादिनोक्तमेवार्थं दृष्टान्तकथनपूर्वकं विवृणोति- **अत इति** ॥ प्राग्भिन्नस्य पश्चादैक्यायोगादित्यर्थः । 'विरोधस्य च वर्जनम्' इत्यत्रत्येन चशब्देन स्थानैक्यसङ्ग्रहः । एवशब्दस्य संश्लेषो विरोधस्य च वर्जनमित्येताभ्यां सम्बन्धः । यथेत्यध्याहार्यम् । तथा चैवं योजना- यथा नदीनामब्धिना समुद्रेणैकीभावो नाम स्थानैक्यं संश्लेष एव यथा वा परस्परविरुद्धानां नृणामपि नरान्तरैश्चैकीभावो नाम विरोधस्य च वर्जनमेव न स्वरूपैक्यमिति । तथा च च्विप्रत्ययो मुख्यार्थ एवेति भावः । ननु सर्वत्रापि स्वरूपैक्यमेवार्थः किं न स्यादित्याशङ्क्य 'कुतोऽभूतस्य भवनम्'

इत्युक्तं विवृणोति- **स्वरूपस्यैक्यमिति** ।। तेषां नद्यादीनां भिन्नस्वरूपिणाम् इति कर्मधारयादिनिः । यदुक्तं 'स्वरूपस्यैक्यमेव हि' इति भगवद्रूपाणामपि प्राक् स्वरूपैक्यमेवास्तीति तदयुक्तम् । तथात्वे भगवद्रूपाणामन्ते भगवतैकीभावप्रतिपादकानाम् 'एतन्नानावताराणां निधानं बीजमव्यम्' (भा. १) इत्याद्युक्तीनां वैयर्थ्यप्रसङ्गात् । निधानमत्रैकीभवन्तीति तात्पर्ये व्याख्यातत्वादत्राप्येकीभावो नाम संश्लेष एव न स्वरूपैक्यमित्याह- **हरेरपीति** ।। स्वरूपाणां रामकृष्णाद्यवताराणामेकीभावो यदा यत्रोच्यते तत्रेति शेषः । **संश्लेष एवेति** ।। अत्र संश्लेषो नाम न स्वरूपाणामैक्यम् । कुतो न स्वरूपैक्यं तत्रैकीभावशब्दार्थ इत्याह- **सिद्धत्वादिति** ।। स्वरूपैक्यस्येत्येतत् तत्पूर्वोत्तराभ्यां सम्बद्ध्यते । स्वरूपैक्यस्य विश्लेष-दशायामपि सिद्धत्वेन च्विप्रत्ययानुपपत्त्या स्वरूपैक्यस्यात्यन्ताभेदस्य भावो भवनमेकीभावशब्दार्थो नैव भवतीत्यर्थः ।

## भाष्यम्

**गताः मुक्ताः । प्राणादिपञ्चदशकलारूपा देवताः, अन्ये देवाः सर्वे प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः देवाः सर्वे, कर्माणि च, विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति ।।**

**'प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् ।**
**कलानां देवता अन्या देवतानां नरा अपि ।।**

**तस्मात् सर्वेऽपि मुक्तेषु नरेषु च नियामकाः ।**
**तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः' ।।**

**इति मुक्तिविवेके ।।**

**श्री.टी.**- अत्र केचित् कुसूले धान्यानामिव मूलरूपभगवच्छरीरतद्रूपाणां समुदितानामेवावस्थानं संश्लेष इत्याहुस्तदसाम्प्रदायिकमिति मन्तव्यम् ।

'गताः कलाः' इति वाक्यं परेणेत्थं व्याख्यातम् । तथाहि । मुक्तिकाले विदुषो देहांशभूताः प्राणाद्याः पञ्चदशकलाः जडभूताः प्रतिष्ठाः स्वकारणानि प्रतिगता भविष्यन्ति । देवाश्च सर्वे प्रतिदेवतासु स्वमूलरूपेषु गता भविष्यन्ति । कर्माणि विदुषा कृतानि निवृत्तकर्माणि विज्ञानमयश्चायमात्मा विद्वान् जीवः परेऽव्यये परमात्मनि सर्व एकीभवन्तीति चिन्तनीयमिति । तामिमामपव्याख्यां प्रत्याख्यातुम् आदौ तावत् स्वयं व्याचष्टे - **गता इति** ॥ गता मुक्ता इति वक्ष्यमाणानां पञ्चदशकलादेवतानां तदन्यकर्मविज्ञानमयात्मनां सर्वेषां विशेषणम् । कला एव रूपं प्रतिमा यासां तास्तदभिमानिन्य इत्यर्थः । कलाश्च 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम च' इति षट्प्रश्नोपनिषदुक्ताः कर्मव्यतिरिक्ता ज्ञातव्याः ।

तद्देवताश्च-

'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ॥
ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ॥
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ॥
उदकात्मको बुधस्तस्या उषा नामात्मिका ततः ।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ॥'

इति तद्भाष्योक्ताः ज्ञातव्याः । अन्ये पञ्चदशकलाव्यतिरिक्ताः । प्रतिष्ठा इत्यस्यार्थः प्रति प्रति स्थिता इति । प्रत्येकं प्रत्येकं स्थिता देहधारणादिना स्थितिहेतव इत्यर्थः ॥ एकीभवन्तीत्येतत्प्रविशन्तीति व्याख्यातम् ।

तदयुक्तम् । मुक्तावेते कलादेवताद्याः परमात्मनि तिष्ठन्तीत्यत्र प्रमाणाभावादित्यत आह- **प्रतिबिम्ब इति** ॥ तदधीनस्तत्सदृशेत्यर्थः । 'अन्याः' श्रद्धाद्याः । 'कलाः' कलादेवताः । प्रतिबिम्बा इति वचनं व्यत्ययेनानुवर्तते । अन्या देवताः कलानां कर्मातिरिक्तदेवानां प्रतिबिम्बाः । 'देवतानां' कलाप्रतिबिम्बभूतानामन्यासां देवतानाम् । तस्मात् संसारे बिम्बप्रतिबिम्बभावेन नियम्यनियामकभावस्य सद्भवात् । स्वयं मुक्ताः सन्त इति शेषः । मुक्तेषु नरेष्वपि नियामका इति । इदं च नियामकत्वं बहिरेव न स्वरूपदेहान्तरिति द्रष्टव्यम् । मुक्तौ कलारूपतत्त्वानां प्रेर्यभूतानामेव भावेन तदभिमानिनामप्यभावात् । यथोक्तं छान्दोग्यभाष्ये पञ्चमाध्याये-

'तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ॥' इति ॥

व्याख्यातं चैतत्पदार्थकौमुद्यां वेदेशतीर्थश्रीमच्चरणैः । स्थलान्तरे प्राणस्येतरनिरपेक्षकर्तृत्वं समर्थयते- **तुरीयायामिति** ॥ मोक्षावस्थायामिन्द्रियाणामेवाभावेन तदाऽन्यव्यापाराभावादिति भावः । ननु मोक्षावस्थायां प्राणादेव स्वरूपेन्द्रियनियामकाद् बोधश्चेत्तर्हि संसारेऽनुभूतस्य तदानीं स्मृतिर्न स्यात् । पूर्वं मनआदिप्रवर्तकानां तदास्माभिर्मन्यमानाभावेनाप्रवर्तकत्वात् । न च तदानीं संसारस्मृतिरेव नास्तीति वाच्यम् । 'आजन्ममरणं स्मृत्वा मुक्ता हर्षमेव प्राप्नुयुः' इति षष्ठाध्यायोदाहृतप्रमाणविरोधापत्तेरित्यत आह- **तथापीति** ॥ तत्र तुरीयायामवस्थायामितरदेवताव्यापाराभावेऽपि प्राणस्य भक्त्या स्ववश्यतया तत्प्रसादात् संसारस्मृतिर्घटत इत्यर्थ इति ।

'मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरःसराणाम्' (ब्र.सू.अनु.

४.४.१७) इत्यनुव्याख्यानस्यापि ब्रह्मणोऽन्तःप्रेरकत्वमन्येषां तु बहिरेवेत्यभिप्रायो द्रष्टव्यः । एते चाखिलाः परमात्मनि तिष्ठन्तीत्यर्थः ॥

## भाष्यम्

**'कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।**
**कलाभ्यः पृथगुक्तं तत् पुष्करः कर्म्म चोच्यते ॥' इति च ॥**

**अन्यथा गता भविष्यन्तीत्यध्याहारो दोषः । न च मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम् । प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र', 'इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति, 'यथा सोम्येमाः समुद्रायणाः' इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता एवोच्यन्ते । 'स प्राणमसृजत' इत्यादेश्च पुरुषो भगवान् ॥**

**श्री.टी.-** ननु कर्मणोऽपि कलात्वाद्गताः कला षोडशेत्यनुक्त्वा पञ्च-दशेत्यभिधाय कर्माणीति कर्मरूपकलायाः पार्थक्योक्तौ किं निमित्तमित्या-शङ्क्य प्रमाणेनैव तद्दर्शयति- **कलाभ्यश्चेति** ॥ कलादेवताभ्यः । 'अन्य-देवेभ्यः' कलादेवताभिन्नदेवेभ्यः । प्रत्यवरमतिनीचम् । तत्तस्मात् । किं तत्कर्मेत्यत आह- **पुष्कर इति** ॥ अभिमन्यमानशब्दस्याभिमानिन्येव मुख्यत्वस्याभिमान्यधिकरणन्यायसिद्धत्वादिति भावः ॥ परव्याख्याने बाधकमाह- **अन्यथेति** ॥

प्रतिदेवतासु स्वमूलरूपेष्विति व्याख्यातं तद्दूषयति- **न चेति** ॥ देवानां मूलरूपाणीति सम्बन्धः । ननु भवद्भिरपि प्रतिदेवतासु प्रतिविम्बभूतास्विति कथं व्याख्यातम् । प्रतिदेवताशब्दस्य प्रतिबिम्बवाचित्वाभावादित्य-तस्तदुपपादयति- **प्रतिरूपशब्दवदिति** ॥ यथा 'रूपं रूपं प्रतिरूपो बभूव' इत्यादौ प्रतिरूपशब्दः प्रतिबिम्बवाची, तथा प्रतिदेवताशब्दोऽपि

प्रतिबिम्बवाचीत्यर्थः । नन्वेताः प्राणाद्याः कला जडा एवात्रोच्यन्त इति किन्न स्यात् । देवतात्वज्ञापकाभावान्मुक्तत्वज्ञापकाभावाच्चेत्यतः षट्प्रश्न-समाख्यामाह- **विज्ञानात्मेत्यादिना** ।। यत्रेत्यस्य तदेतदक्षरं वेदयते यस्तु सोम्येत्युत्तरेणान्वयः । 'यथा सोम्य' इति दृष्टान्तवाक्यम् 'इमा' इति दार्ष्टान्तिकवाक्यात् पूर्वं द्रष्टव्यम् । 'यथा सोम्येमा' इति वाक्यैकदेशानु-वादः । 'यथेमाः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति' इत्याद्युक्त्वा 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः' इति हि वाक्यम् । तत्र सोम्येत्यस्यानुवृत्तिमभिप्रेत्य सोम्येति भाष्ये पठितम् । शाखान्तरपाठो वा । तथा चायमर्थः- 'विज्ञानात्मा' विज्ञानस्वरूपो जीवः 'प्राणाः' प्राणाद्याः कलाश्चक्षुरादयस्तद्विषयाश्च रूपादयो 'भूतानि' पृथिव्यादीनि तन्मात्राश्च सर्वैः देवैः प्राणादिकलाद्यभिमानिभिः सह 'यत्र' यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति तदेतदक्षरं वेद ते यस्तु सोम्येत्येवं स 'प्राणमसृजत' इत्यादिना भगवत उत्पन्नत्वेन कथितासु कलासु 'विज्ञानात्मा सह देवैश्च सर्वैः' इति देवताशब्दप्रयोगात् तथा यथा सोम्येमाः समुद्रायणाः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति एवमेवास्य परिद्रष्टुर्जीवस्य मोक्षकाले इमाः मुक्ताः षोडशकलाः पुरुषाश्रयाः पुरुषं प्राप्यास्तमदर्शनं गच्छन्तीति नदी-दृष्टान्तपूर्वकं पुरुषप्राप्तिलक्षणमुक्तिकथनाज्जडविवक्षायामस्यानुपपत्तेः 'गताः कलाः' इति वाक्ये कलाशब्देन मुक्ता देवा एवोच्यन्ते न जडा इति ।

नन्वत्र 'पुरुषं प्राप्यास्तं गच्छन्ति' इति वाक्ये पुरुषं जीवं प्राप्येति जीवप्राप्त्युक्तेर्जीवं प्राप्तानां प्राणादिकलादेवानां कथं मुक्तत्वं युक्तम् । नहि जीवप्राप्तिर्मुक्तिरित्यत आह- **स प्राणमिति** ।। भरद्वाजपुत्रेण सुकेशनामकेन 'तं त्वा पृच्छामि क्वासौ पुरुषः' इति पिप्पलादं प्रति पृष्टस्तस्मै 'स होवाच इहैवान्तःशरीरे सोम्य पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इत्युक्त्वा 'स पुरुष ईक्षाञ्चक्रे स प्राणमसृजत' इत्येवं प्राणादिस्रष्टृतयोक्त

एव पुरुषः 'पुरुषं प्राप्य' इति वाक्ये पुरुषशब्देनोच्यतेऽतः पुरुषशब्दवाच्यो भगवानेवेति तं प्राप्तानां प्राणादिकलादेवतानां मुक्तत्वं युक्तमित्यर्थः ॥७॥

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥७॥**

## खण्डार्थः

**श्री.-** मुक्तिप्रकारमेव दर्शयति- **गता इति** ॥ 'गताः' मुक्ता इति वक्ष्यमाणानां सर्वेषां विशेषणम् । प्राणादिपञ्चदशकलाभिमानिदेवताः गताः मुक्ताः सत्यः तथा मुक्ताः कलाभिमानिदेवताव्यतिरिक्ताः प्रतिदेवतासु स्वप्रतिबिम्बभूतासु प्रजासु प्रतिष्ठाः प्रति प्रति प्रत्येकं प्रत्येकं स्थिता देहधारणादिना स्थितिहेतवः सर्वे देवाः । तथा मुक्तानि कर्माणि तदभिमानिपुष्करो विज्ञानमय आत्मा मुक्तो जीवश्चेत्येते सर्वे परेऽव्यये परमात्मनि एकीभवन्ति तेन संश्लिष्टा भवन्ति तं प्रविशन्तीति यावत् । यथोदके उदकान्तरस्य संश्लेषाभिप्रायेणैवैकीभावव्यवहारस्तथेत्यर्थः । यद्वा प्राग्भगवद्विरुद्धमतयोऽधुना तेनैकमत्यं प्राप्नुवन्ति । प्राग्विरुद्धमतयो ब्राह्मणा राजकुले एकीभवन्तीति यथेत्यर्थः । अथवा प्रागीश्वरव्यक्तिस्थानापेक्षयाऽन्यत्रेतस्ततः स्थितास्तत्र मिलिता भवन्ति । अह्नीतस्ततः स्थिता गावः सायं गोष्ठे एकीभवन्तीति यथेत्यर्थः । कर्मणां कलात्वेऽपि ताभ्यः पृथगुक्तिरत्यन्तनीचताज्ञापनार्थेति ज्ञातव्यम् ॥ ७ ॥

## उपनिषत्

(मुक्तौ नामरूपादिनाऽविमुक्त एव ब्रह्मणा सह तिष्ठति)

**यथा नद्यः स्यन्दमानाः समुद्रायणाः**
**समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय ।**

तथा विद्वान् नामरूपाद् विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

## भाष्यम्

'अगम्यनामरूपत्वादमुक्तैर्मुक्तिगा नराः ।
विहीननामरूपास्तु न तु तद्रहितत्वतः ॥
अशरीरो यथा वायुः सामान्यागम्यदेहतः ।
एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः ॥' इति च ॥
'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति' ॥ इति च ॥

विमुक्त इत्यमुक्त इत्यर्थः । विप्रिय इतिवत् । अविहायेति च । 'अनन्तं वै नाम' इति च श्रुतिः ॥ ८ ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

अस्तमदर्शनम् । समुद्रजलान्तःप्रविष्टनदीजलानां परस्परमेलनेन क्षीरमिलितनीरवददर्शनमात्रसम्भवेऽपि सर्वथा नाशस्यायोगात् । 'नामरूपे अविहाय' इति पदच्छेदः । अन्यथा समुद्रपत्नीभूतगङ्गादि-देवीनामप्यभावप्रसङ्गात् । एवं 'नामरूपाद्विमुक्तः' इत्यत्रापि 'विर्निषेधे पृथग्भावे' इति वचनाच्चामुक्त इत्येवार्थः । अन्यथा 'यत्र ब्रह्मा पवमानः' (ऋ. ९.११३.६) इति, 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्यादि-श्रुतिविरोधः स्यात् ॥ ८ ॥

**श्री.टी.**- 'यथा नद्यः' इति वाक्ये समुद्रं प्राप्तानां नदीनां यथा नामरूप-विहीनत्वमेवं भगवन्तं प्राप्तानामपि मुक्तानां नामरूपविहीनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय दृष्टान्तदार्ष्टान्तिकयोर्नामरूपविहीनत्वोक्ते-

रभिप्रायं सदृष्टान्तं प्रमाणेन दर्शयति- **अगम्येति** ॥ अज्ञेयेत्यर्थः । तुशब्दोऽवधारणे । इत्युच्यन्त इति शेषः । मुक्तिगाः नराः अमुक्तैरगम्य-नामरूपत्वादेव विहीननामरूपा इत्युच्यन्त इत्यर्थः । अवधारण-व्यावर्त्यमाह- **नहीति** ॥ 'अनन्तं वै नाम' इति वक्ष्यमाणश्रुतिप्रसिद्धिं हिशब्देन दर्शयति । अत्र दृष्टान्तः- **अशरीर इति** ॥ 'अशरीरो वायुरभ्रम्' इति श्रुतौ यथा वायुरशरीर उच्यत इति शेषः । **सामान्येति** ॥ अत्र रूपपदं नाम्नोऽप्युपलक्षकम् । भावप्रधानो निर्देशः । साधारणपुरुषाज्ञेयनाम-रूपवत्त्वाद् विहीननामरूपा इत्युच्यन्त इति सम्बन्धः । ननु समुद्रं प्राप्तानां नदीनां सर्वथा नामरूपाभाव एव किन्न स्यादित्यत आह- **स्वकीय-मिति** ॥ स्वाभिमन्यमानमित्यर्थः । समुद्रे प्रविष्टाः नद्यः वायुर्मुख्यप्राणः । तत् उदकम् । मुख्यप्राणो मेघे स्थित्वा समुद्रप्रविष्टं कृष्णवेण्यादिनद्युदकमेव विविच्य गृहीत्वा मेघे कृत्वा स्थापयित्वा कृष्णवेण्यादिसमीपस्थेषु देशेषु वर्षतीत्यर्थः । तथा च वाय्वादिभिर्महात्मभिर्नदीनां नामरूपयोर्ज्ञाय-मानत्वान्न सर्वथा नामशून्यत्वं नदीनामिति भावः ।

'तथा विद्वान्नामरूपाद् विमुक्तः' इति दार्ष्टान्तिकवाक्यस्थं विमुक्त-पदमनूद्य प्रकारान्तरेण व्याचष्टे- **विमुक्त इतीति** ॥ 'विर्निषेधे पृथग्भावे' इति वचनाद् वीत्युपसर्गो निषेधार्थः । वीत्युपसर्गस्य निषेधार्थत्वे 'कृष्णस्य विप्रियो राजा धार्तराष्ट्रः सहानुजः' इति भारतोक्तमुदाहरणमाह- **विप्रिय इति** ॥ अप्रिय इत्यर्थः । ननु तर्हि दृष्टान्तवाक्यासङ्गतिस्तत्र नामरूपे विहायेति नदीनां नामरूपविहीनत्वोक्तेरित्यतस्तत्राप्यविहायेत्यकारप्रश्लेषेण पदविभागकरणान्नासङ्गतिरित्यशयेनाह- **अविहायेति चेति** ॥ व्याख्यानान्तरसमुच्चायकश्चशब्दः । नन्वविहायेति पदविभागकरणमनुपपन्नं तथात्वे नामरूपे अविहायेति सन्ध्यभावे एव स्यान्नतु नामरूपे विहायेति सन्धिः 'ईदूदेद्द्विवचनं प्रगृह्यम्' (पा.सू. १.१.११) इति एदन्तत्वात्

प्रगृह्यसञ्ज्ञायाम् 'प्लुतप्रगृह्या अचि' (पा.सू. ६.१.१२५) इति प्रकृतिभावविधानादिति चेन्न। मणीवादेर्नेति मणीवादिगणोपरि प्रकृतिभावनिषेधवदस्यापि तद्गणस्थत्वादिति ज्ञातव्यम्। मुक्तानां नामरूपयोर्नाशभावस्य श्रुतिसिद्धत्वाच्च नामरूपाद्विमुक्त इत्येतदविमुक्त इत्येव व्याख्येयमिति भावेनाह- **अनन्तं वै नामेति** ॥ नाम अनन्तम्। नाशशून्यमिति वै प्रसिद्धमित्यर्थः। 'अनन्ता विश्वेदेवाः' इति रूपानन्त्येऽपि श्रुतिर्द्रष्टव्या ॥ ८ ॥

## खण्डार्थः

**श्री.**- एकीभावप्रकारमेव सदृष्टान्तमाह- **यथेति** ॥ स दृष्टान्तो यथा स्यन्दमानाः प्रस्रवमाणा नद्यः नामरूपेऽविहायापरित्यज्य समुद्रे समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति साधारणपुरुषैर्न ज्ञायन्ते तथा विद्वान्नामसहिताद् रूपाद्विमुक्तः। विप्रिय इतिवत्। 'वि'शब्दो निषेधवाची। 'विर्निषेधपृथग्भावे' इति वचनात्। अमुक्तः अपरित्यजन् सन् परात्परं दिव्यं पुरुषमुपैति तं प्राप्य चामुक्तैर्न ज्ञायत इत्यर्थः। यद्वा नामरूपे विहायेत्येव पदच्छेदः। तथा च समुद्रस्थितानां नदीनां नामरूपयोर्वार्य्वादिभिर्महद्भिर्ज्ञायमानत्वेन सामान्यपुरुषाज्ञेयनामरूपवत्त्वान्नामरूपविहीनत्वोक्तिरेवमेव मुक्तानां नामरूपयोरमुक्तैरज्ञायमानत्वान्नामरूपाद्विमुक्त इति तदुभयपरित्यागोक्तिरित्यर्थः ॥ ८ ॥

## उपनिषत्

(ब्रह्मविदः फलम्)

**स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति। नास्याब्रह्मवित् कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥**

## भाष्यम्

'परं ब्रह्म विदित्वा तु बृंहितः स्यात् स्वयोग्यतः ।
नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान् ।।' इति च ।।
'ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता ।
अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता ।।'
इति स्कान्दे ।।

**श्री.टी.**- 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति वाक्यं परब्रह्मवेत्तुर्मुक्तौ ब्रह्मत्वमेव भवतीत्यन्यथाप्रतीतिनिरासाय प्रमाणेन व्याचष्टे - **परं ब्रह्मेति** ।। अवधारणार्थस्य तुशब्दस्य स्वयोग्यत एवेति सम्बन्धः । 'योग्यतः' योग्यतानुसारेण। 'बृंहितः' पूर्णः। घटशरावोदञ्चनादिषु जल-पूर्णतायां तारतम्यं दृष्टमेवेति भावः । ननु स्वयोग्यत इति किमर्थमुच्यते निरवधिकपूर्णत्वमेव किन्न स्यादित्यत आह- **नेति** ।। निरवधिकपूर्णत्वस्य भगवत्येव योग्यत्वादिति भावः। अत्रैव प्रमाणान्तरमाह-**ब्रह्मत्वमिति** ।। जीवानां ब्रह्मत्वं नाम बृंहितत्वं पूर्णत्वमेव स्यान्न परमात्मतेत्यर्थः । ननु कुत एवं व्याख्यायते जीवस्य परमात्मतैवार्थः किन्न स्यादित्यतो विरुद्ध-धर्माधिकरणत्वादित्याह- **अस्वतन्त्रस्येति** ।। कुतो नित्यस्वतन्त्रतेति । परब्रह्माभेदे नित्यस्वतन्त्रत्वस्यैव प्राप्तेरित्यर्थः । तथा सति हिताकरण-महितकरणं च न स्यादिति भावः ।

## भाष्यम्

'यत्रामृतः स पुरुषो ह्यव्ययात्मा' 'यत्र तत् सत्यस्य परमं निधानम्', 'अमृतस्यैष सेतुः', 'शरवत्तन्मयो भवेत्' (आथ. २.१.५), 'ब्रह्म तल्लक्ष्यमुच्यते' (आथ. २.१.५), 'निरञ्जनः परमं साम्यमुपैति' (आथ. ३.३.)इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशाद् भेदस्यैवोक्तत्वाच्च ।

'मुक्तोपसृप्यव्यपदेशात्' (ब्र.सू. १.३.२), 'जगद्व्यापारवर्जम्', (ब्र.सू. ४.४.१८) 'प्रकरणादसन्निहितत्वाच्च' (ब्र.सू. १.३.६) इत्यादिना भगवताऽपि सर्वत्र भेदस्यैव सूचितत्वात् । 'न ते महित्वमन्वश्नुवन्ति', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।'

'ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते ।
तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥'

इत्यादेश्च ॥

**श्री.टी.-** पूर्ववाक्यपर्यालोचनया जीवब्रह्मणोर्भेदस्यैव स्पष्टमवगमान्नात्र मुक्तजीवस्य परब्रह्माभेदोऽर्थ इत्याशयवानाह- **यत्रामृत इत्यादिना** ॥ यत्र लोके अमृतः पुरुषो भगवानस्ति तं लोकं विरजा विद्वांसः सूर्यद्वारेण प्रयान्तीति वैकुण्ठादिलोके जीवब्रह्मणोरवस्थानोक्त्या भेदसिद्धिः । यत्र सत्यस्येत्यत्रापि यत्र लोके सत्यस्य विष्णोः सन्निधानमस्ति तं लोकं ऋषयो येन पथा आक्रमन्ति गच्छन्ति स देवयानसंज्ञकः पन्था ज्ञानिनः प्रति भगवता विततः प्रकाशितो भवतीति भेद एवोक्तः । अमृतस्येति वाक्ये मुक्ताश्रयत्वोक्त्या भेदः स्पष्टः । शरवदित्यादिवाक्ये जीवस्य शरवत्तत्र सल्लग्नचित्तत्वोक्त्या ब्रह्मणश्च लक्ष्यत्वेन ध्येयत्वरूपवेद्यत्वोक्त्या च स्पष्ट एव भेदः । 'निरञ्जन' इत्यत्रापि साम्योक्त्या भेद एवोक्तः । तस्य भेदव्याप्तत्वात् ।

इतोऽपि नात्र मुक्तजीवस्य ब्रह्मभवनमर्थः सूत्रविरोधादित्याह- **मुक्तोपसृप्येति** ॥ अत्र मुक्तप्राप्यत्वोक्त्या जगद्व्यापारवर्जमित्यधिकरणे ऐश्वर्यमर्यादोक्त्या च भगवता बादरायणेन भेद एव सूचितः । विरुद्धधर्माधिकरणत्वस्य भेदव्याप्तत्वादित्यर्थः । श्रुतिस्मृतिविरोधाच्च न जीवस्य ब्रह्मभावोऽर्थ इत्याह- **न ते महित्वमिति** ॥ ते महित्वं केऽपि न प्राप्नुवन्तीति

स्पष्टो भेदः । सोऽश्नुत इत्यत्रापि ब्रह्मणा सहेति भेदोक्तिः । हे हरे ब्रह्मेशानादिभिर्दैवैर्यत्कैवल्यं सर्वोत्तमत्वं प्राप्तुं नैव शक्यते तत्कैवल्यं यत्स्वभावो यस्य नैसर्गिकं रूपं स भवान् केवलो जडामिश्र इति स्मृतौ च स्पष्ट एव भेदः ।

## भाष्यम्

'मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः ।
तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा ॥
ये त्वेतदन्यथा विद्युस्ते हि यान्त्यधरं तमः ।
ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम् ॥' इति च ॥

'देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते ।
बलवद्धेतुतश्चात्र यस्माद् ब्रह्मविदः सुराः ॥
न सन्ततौ ब्रह्मविदो नराणां ज्ञानिनामपि ।
प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे ॥'

**श्री.टी.**- मुक्तानां परस्परतारतम्यकथनपूर्वकं विष्णोस्तदुत्तमत्वस्य ज्ञानिनां भगवत्प्राप्तिरूपमोक्षस्य चोक्तेरेतद्विपरीतज्ञानिनामन्धन्तमःप्राप्त्युक्तेश्च न जीवब्रह्माभेदोऽस्य वाक्यस्यार्थ इत्याशयेनाह - **मुक्तेभ्योऽपीति** ॥ वायुर्ब्रह्मा ।

'नास्याब्रह्मवित्कुले भवति' इति वाक्ये ब्रह्मविदो मनुष्यस्यापि कुले ब्रह्मविदेव पुत्रो भवतीति प्रतीतिनिरासाय प्रमाणेनैव विशेषमाह- **देवानामिति** ॥ कृते युगे देवानां सन्ततौ जाता इति सम्बन्धः । 'प्रायशः' इत्यस्य व्यावर्त्यमाह- **बलवदिति** ॥ कृते युगे देवानां सन्ततौ जाता अपि बलवत्कारणवाद् अन्ये अज्ञानिनो भवन्तीत्यर्थः । देवानां ज्ञानिसन्ततिकत्वे हेतुमाह- **यस्मादिति** ॥ तस्मादिदं फलं तेषां युक्तमिति

भावः । ननु कुत इदं वाक्यं कृतयुगोत्पन्नदेवताविषयं व्याख्यायते ज्ञानिमात्रविषयं किन्न स्यादित्यत आह- **नेति** ॥ ज्ञानिनामपि नराणां सन्ततौ ब्रह्मविदः पुत्रा न स्युरित्यर्थः । क्वचिदज्ञानिनां नराणामपि पुण्यवशेन ज्ञानिपुत्रकत्वदर्शनात् प्रायश इत्युक्तम् । ननु ज्ञानिनां देवानां नराणां च ज्ञानिसन्ततिकत्वे समाने किं विशिष्य देवतासन्ततिपरत्वेनेदं वाक्यं व्याख्यायत इति मन्दाशङ्कानिरासार्थमाह- **सुराणां चेति** ॥ कृते युगे ज्ञानिसन्ततिकत्वरूपोऽयं नियमः सुराणामेवेत्यर्थः । तथा च सुराणां ज्ञानिसन्ततिकत्वं नियतमज्ञानिसन्ततिकत्वं तु प्रायिकम् । नराणां त्वज्ञानिसन्ततिकत्वमेव नियतं ज्ञानिसन्ततिकत्वं तु प्रायिकमिति विशेषसद्भावाद्देवतासन्ततिपरमेवेदं वाक्यमिति भावः ॥

## खण्डार्थः

**श्री.-** एतदुपनिषदर्थवेत्तुः फलमाह- **स य इति** ॥ स प्रसिद्धो योऽधिकारी एतदुपनिषत्प्रतिपाद्यं परमं ब्रह्म वेद चेत्तर्हि स्वयमपि ब्रह्मैव भवति स्वयोग्यतानुसारेण पूर्णो भवतीत्यर्थः । ह वा इति निपातद्वयं प्रमाण-प्रसिद्धिद्योतकम् । अस्य ज्ञानिनः कुलेऽब्रह्मवित्पुत्रो न भवति । ज्ञानिपुत्रको भवतीत्यर्थः । इदं च कार्तयुगदेवतासन्ततिपरं ज्ञातव्यम् । ब्रह्मैव भवतीत्युक्ते पूर्णत्वे निमित्तमाह- **तरति शोकं तरति पाप्मानमिति** ॥ गुहाग्रन्थिभ्योऽ-ज्ञानसंशयादिभ्यः ॥ ९ ॥

## उपनिषत्

(उपनिषदध्ययने अधिकारिणः के ?)

**तदेष श्लोकः–**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षीन् श्रद्धयन्तः ।**

तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद् यैस्तु चीर्णम् ॥१०॥

## खण्डार्थः

**श्री.** - अस्यामुपनिषदि केऽधिकारिण इत्यतस्तां श्लोकेनाह- **तदेष इति** ॥ तत्तत्रैतदुपनिषदधिकारिनिरूपणविषये एष वक्ष्यमाणः श्लोको भवतीति शेषः । तमेव श्लोकं पठति- **क्रियावन्त इति** ॥ ये क्रियावन्तो विहितकर्मानुष्ठानवन्तः श्रोत्रियाः वेदाध्ययनसम्पन्नाः ब्रह्मनिष्ठाः परब्रह्मणि मनसः स्थितियुक्ताः स्वयं जुह्वतो होमादिकं कुर्वत एकर्षीन् स्वतन्त्रत्वादेको भगवान् । 'ऋष ज्ञाने' इति धातोस्तद्विषयकज्ञानवन्तो ये तान् श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तस्तेषामेवैतां ब्रह्मविद्यां वदेत पुनः केषामित्यत उक्तम्- **शिरोव्रतमिति** ॥ विधिवद्विध्युक्तप्रकारेण शिरोव्रतं चौलोपनयनरूपकर्म यैश्चीर्णमाचरितं तेषामेवेत्यर्थः । अत्र शिरोव्रतमित्युपलक्षणत्वेनोक्तम् । स्वस्वशाखोक्तं व्रतं यैस्तु चीर्णमित्येव द्रष्टव्यम् । स्ववेदव्रतयुक्तस्येति पूर्वमुक्तत्वात् ॥ १० ॥

## उपनिषत्

**तदेतत् सत्यमृषिरङ्गिराः प्रोवाच नैतदचीर्णव्रतोऽधीते ।**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥**

**॥ इति मुण्डकोपनिषत् (आथर्वणोपनिषत्) ॥**

## भाष्यम्

'तस्मात् स भगवान् विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः ।
सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः' इति च ॥

## प्रकाशिका (श्रीवादिराजतीर्थीया)

यः ब्रह्म वेद स ब्रह्म स्वयोग्यतानुसारेण ज्ञानानन्दादिना बृंहित एव भवति, न तु साक्षात् परं ब्रह्मैव भवतीत्येवकारार्थः । कर्तृकर्मणोरेकतामनङ्गीकुर्वता परेणापि वेदनकर्तुर्जीवस्य विषयतया वेदनकर्मणो ब्रह्मणश्चैक्यकथनायोगादस्मदुक्तविधयैवार्थो वक्तव्यः । किञ्च समाख्यारूपेण वक्ष्यमाणश्लोके ब्रह्मप्राप्तिरूपैक्यस्याश्रवणाज्ज्ञानिनामेव श्रवणाच्चोक्तरीत्या ज्ञानिविषयतयैव योजना कार्या । अन्यथा समाख्याया विषमाख्यात्वप्रसङ्गात् । अपि च 'ब्रह्मविदाप्नोति परम्' इति समाख्याश्रुतिबलात्, भू प्राप्ताविति धातोश्च यो ब्रह्म वेद स ब्रह्मैव भवति प्राप्नोतीति योग्यार्थलाभे किमर्थमियमदृष्टार्थकल्पना । न हि लोके यो हि यद्वेद स तदेव भवतीति क्वापि दृष्टम् । भ्रमरं ध्यायन् कीटोऽपि तदनुयायी भ्रमरान्तरमेव भवति । न तु तदेव भवति । अदृष्टमपीदं श्रुतिबलात् कल्प्यत इति चेन्न । श्रुतेरपि प्रबलप्रत्यक्षप्रमितार्थविरुद्धप्रमेयकल्पनायां शक्त्यभावात् । न ह्यन्धो मणिं पश्यति । नापि माणवकोऽग्निर्भवति । न वा यूप अदित्यो भवति । अतो यत्किञ्चिदेतत् ॥ ९-११ ॥ ॥

**॥ इत्याथर्वणोपनिषद्भाष्यटीका**
**वादिराजीया समाप्ता ॥**

**श्री.टी.-** उपसंहरति- **तस्मादिति ॥** भगवज्ज्ञानस्य ज्ञानिसन्ततिकत्वापादकत्वस्वाभाव्यादिति भावः । यः सर्वोत्तमोत्तमः सर्वलोकातीततया सर्वोत्तमा मुक्तास्तेभ्य उत्तमः यश्च सर्वगुणैः पूर्णोऽनन्तो देशतः कालतश्च यश्च क्षराक्षरपुरुषाभ्यामुत्तमः स भगवान् विष्णुः सदोक्तविशेषणविशिष्टतया सर्वैर्ज्ञेय इत्यर्थः ॥

## भाष्यम्

(भाष्येऽन्तिममङ्गलाचरणम्)

**'प्रीयतां भगवान् मह्यं प्रेष्ठप्रेष्ठतमः सदा ।**
**मम नित्यं नमाम्येनं परमोदारसद्गुणम् ॥'**

**॥ इत्याथर्वणोपनिषद्भाष्यं सम्पूर्णम् ॥**

**श्री.टी.**- एवं समापितभाष्यो भगवानाचार्य एतदुपनिषदुक्तगुणविशिष्ट-भगवन्नमनमन्तेऽपि कुर्वन् तत्प्रीतिमेवाशास्ते- **प्रीयतामिति** ॥ यो मम प्रेष्ठादतिशयेन प्रीत्यास्पदादपि सदा प्रेष्ठतमोऽत्यतिशयेन प्रीत्यास्पदस्तमेनं परमोदारसद्गुणं भगवन्तं नित्यं सर्वदा नमामि । नित्यमित्यनेन न मम भगवद्वन्दनं प्रत्त्ययगमनादिप्रयोजनोद्देशेन किन्तु स्वभावत एवेत्याचष्टे । स च भगवान् मह्यमनेन ग्रन्थकरणेन प्रीयतामित्यर्थः । 'तस्यैष आत्मा विशते ब्रह्मधाम' इति वायोर्भगवत्प्रियत्वोक्त्या वाय्ववतारभूतं स्वं प्रत्यपि प्रेष्ठतमत्वमुक्तमेव । 'तदेतत्सत्यम् । यत्र तत्सत्यस्य परमं निधानम्' इत्यत्र सत्यशब्देन परमोदारसद्गुणत्वं चोक्तमित्यशेषमतिमङ्गलम् ॥

योऽध्यात्मदेवान् सम्प्रेर्य कारयामास सत्कृतिम् ।
तया प्रीतोऽभीष्टदोऽस्तु भगवान् बादरायणः ॥
श्रीमदानन्दतीर्थार्यान् जयार्यादींश्च सन्मुनीन् ।
नमामि परया भक्त्या स्मृत्या सर्वेष्टदानहम् ॥
यादवार्यान् गुरून्नौमि वेदेशमुनिसेवकान् ।
श्रीमध्वशास्त्रव्याख्योत्थविनिर्मलमतीनहम् ॥
आथर्वणोपनिषदो भाष्यस्य विवृतिस्त्वियम् ।
श्रीनिवासेन रचिता भूयाद् व्याख्योपकारिणी ॥

## खण्डार्थः

**श्री.** - वेदपुरुषः शिरोव्रतमित्याद्युक्तं प्रमेयं ऋषिणाप्युक्तमित्याह- **तदेतदिति** ।। तत् तदङ्गिरा ऋषिः पुरा पूर्वं तद् एतामुपनिषदम् अचीर्णव्रतः अचीर्णशिरोव्रतः स्वस्वशाखोक्तव्रतानुष्ठानशून्यो नाधीतेऽध्ययनं न करोति न कुर्यादिति यावदिति शौनकायोवाच यतोऽत एतत्प्रमेयं सत्यं यथार्थं प्रतिपत्तव्यमित्यर्थः । वेदपुरुष उपनिषदं ऋषिप्रणामेन समापयति- **नमः परमऋषिभ्य इति** ।। अङ्गिरस्प्रभृतिभ्य इत्यर्थः । उपनिषदर्थस्य सर्वस्याप्यवधारणायान्ते द्विरुक्तिः । यथोक्तं भगवत्पादैः-

'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्जेत पूर्वोक्तस्यावधारणे ।।' इति ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन रचिता आथर्वणोपनिषद्भाष्यविवृतिः पदार्थदीपिकानाम्नी समाप्ता ।।**

## श्रीराघवेन्द्रतीर्थविरचित आथर्वणोपनिषत्खण्डार्थः

**अनन्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय [1]भक्ताभीष्टप्रदायिने ॥**

अधिकारिणामखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तये ब्रह्मविद्यां वक्तुकामो 'यो ह वा अविदितार्षे' इत्यादिश्रुतेः ऋषिदेवताच्छन्दोज्ञानस्याऽऽवश्यकत्वाद् 'यया तदक्षरमधिगम्यते' इत्याद्युक्त्या देवताज्ञानस्याऽक्षरपरिगणनया त्रिष्टुबादिच्छन्दोज्ञानस्य च सुकरत्वादृषिपरम्परामेवाऽऽह- **ब्रह्मेत्यादिना ।**

**ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।**
**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

ब्रह्मा चतुर्मुखः, देवानां शेषवीन्द्रादीनां, प्रथमः देवेभ्यः[2] प्राथमिकस्सन् विष्णोस्सकाशात् सम्बभूव जज्ञे । तस्य महिमानमाह- **विश्वस्येति ॥** गोप्ता रक्षकः । कर्तृत्वाद्युक्तिस्तस्याऽऽप्तत्वद्योतनार्था[3] एतदुक्तिप्राप्तस्वातन्त्र्यभ्रमनिरासाय विष्णुतस्सम्भवोक्तिर्भाष्ये[4] । स ब्रह्मा सर्वविद्याप्रतिष्ठां (सर्वाविद्याः)प्रतितिष्ठन्ति यस्यां तां, यज्ज्ञाने सर्वविद्या विदितफला भवन्ति तादृशीं ब्रह्मविद्यां, वेत्ति अनयेति विद्यां ब्रह्मप्रमितिजनकशब्दराशिं ज्येष्ठपुत्राय वैवस्वतमन्वन्तरे प्रथमतो जातायाथर्वाय अथर्वनामकाय, अकारान्तत्वं छान्दसं, प्राह ॥ १ ॥

**अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।**
**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥**

---

१. सर्वा. क.   २. देवेषु इति क. पाठः ।   ३. आप्तत्वबोधनाय ।
४. क कोशे भाष्ये इति नास्ति ।

प्रवदेत प्रावददित्यर्थः । व्यत्ययेन लङर्थे लिङ् । भासनोपसम्भाषे-त्यादिनाऽऽत्मनेपदम् । स्पष्टमवददित्यर्थः । तां ब्रह्मविद्याम् अथर्वा अङ्गिरे अङ्गिरनामकाय मुनये पुरा पूर्वम् उवाच[१] । स अङ्गिरनामको भारद्वाजाय भरद्वाजपुत्राय नाम्ना सत्यवहाय प्राह[२] । तां ब्रह्मविद्यामित्यनुषङ्गः[३] । ([४]भारद्वाजः अङ्गिरसे अङ्गिरोनामकाय तां ब्रह्मविद्यां प्राहेत्यनुषङ्गः ।) ब्रह्मविद्यां विशिनष्टि- **परावरामिति** ॥ परा च साऽवरा च परावरा, तां परावराम् । एकैव विद्या विवक्षाभेदेन परा अवरा च भवति । सा च ऋगादिरूपेत्यग्रे व्यक्ता ॥ २ ॥

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

शौनकः शुनकपुत्रः महाशालः, प्रत्यब्दं [५]यज्ञंकृत्वात्महाशाल इत्युक्तः, 'प्रत्यब्दं यज्ञकृत् सम्यक् महाशालः प्रकीर्तितः' इति छान्दोग्यभाष्योक्तेः, विधिवद् विध्युक्तप्रकारेणोपसन्नः उपसत्तिं प्राप्तः अङ्गिरसं पप्रच्छ । हे भगवो भगवन्, पूज्यपादेति यावत्, मतुवसो रुस्सम्बुद्धौ छन्दसीति रुः, सर्वमिदं कर्मदेवतादिकं, [६]मया ज्ञातं वर्तते । तज्ज्ञानं कस्मिन् ज्ञाते सफलं भवति ? यज्ज्ञानार्थं सत् मोक्षाख्यफलवद्भवति तन्मे ब्रूहीति पप्रच्छेति योज्यम् । ह वा इति निपातः प्रसिद्ध्यर्थकः ॥ ३ ॥

कर्मदेवतादिज्ञानं तदनुष्ठानादिना ब्रह्मज्ञानार्थं सन्मोक्षाख्यफल-वद्भवतीति 'तदेतत्सत्यं मन्त्रेषु' इत्यादिना विवक्षुरुपोद्घातपूर्वं ब्रह्मस्वरूपं

---

१. क.कोशे 'उवाच' इति नास्ति । २. क.कोशे 'प्राह' इति नास्ति ।
३. ब्रह्मविद्यां इत्यनन्तरं अवदत इत्यधिकम् ।
४. कुण्डलान्तर्गतं वाक्यं क कोशे नास्ति ।
५. यज्ञकृत् मु.पा. ६. यद्ज्ञातं वर्तते

तावद्ददामीति भावेनोत्तरमुक्तवानित्याह वेदपुरुषः- तस्मै शौनकाय सोऽङ्गिरा उवाचेति ॥

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये ।**
**इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥**

हेति हर्षे । उपोद्घातमाह- 'द्वे विद्ये' इति । पूर्वत्रेवात्रापि विद्याशब्दः करणसाधनः । विद्या वित्तिजनकं शास्त्रं द्वे द्विविधमित्यर्थः । उपाधिद्वैविध्याभिप्रायेण द्विवचनोक्तिः । इति ब्रह्मविदो वदन्ति स्म । हेति प्रसिद्धमित्यर्थः । तथा च सूत्रम्- 'अन्यार्थं तु जैमिनिः पश्नव्याख्यानाभ्याम्' (ब्र.सू.१-४-१९) इति । कथमित्यत आह - **परा चैवापरा चेति ॥** परममुख्यार्थबोधकत्वोपाधिना परैव सती विद्या अपरा अमुख्यार्थबोधकत्वोपाधिनाऽपरा चेत्युच्यते । न वस्तुतो व्यक्तिभेदोऽस्तीत्येवकारप्रयोगः ॥ ४ ॥

अपरविद्यैवोपाधिभेदेन परविद्येति भावेन प्रस्तावपूर्वमपरविद्यामाह- **तत्रापरेति ॥**

**तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा । यया तदक्षरमधिगम्यते ॥५॥**

उपाधिभेदेन भिन्नतया निर्दिष्टयोर्मध्य इत्यर्थः । वर्णानां स्थानप्रयत्नादिनिरूपकं शास्त्रं शिक्षा । प्रसिद्धप्रयोगबोधिनो बौधायनापस्तम्बाश्वलायनादिग्रन्थाः कल्पाः ।

**'सिद्धरूपप्रयोगो यैः कर्मणामनुगम्यते ।**
**ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ॥'**

इति तन्त्रवार्तिकोक्तेः । शब्दानुशासनपरं व्याकरणम् । शब्दनिर्वचनपरं

निरुक्तम्। गायत्र्युष्णिगादिच्छन्दसां लक्षणनिरूपकं छन्दः। कालनिर्णयपरं शास्त्रं ज्योतिषम् । एतदेव ऋगादिशास्त्रमक्षराधिगतिहेतुत्वोपाधिना परविद्येति भावेनाऽऽह- **अथ परेति** । अवसरप्राप्ता परविद्या निरूप्यत इत्यर्थः । यदद्रेश्यत्वादिगुणकं तदक्षरं यया विद्यया वित्तिजनकऋगादिशास्त्रेणाधिगम्यते साऽक्षरज्ञप्तिहेतुत्वोपाधिना परविद्येत्युच्यत इत्यर्थः । तदुक्तं 'ऋगाद्या अपरा विद्याः' इत्यादि । यथैकमेव कर्म सकामत्वनिष्कामत्वोपाधिभ्यां प्रवृत्तं निवृत्तमिति चोच्यते तथेति भावः ॥ ५ ॥

कीदृशं तदक्षरमित्यतस्तन्महिमानमाह- **यत्तदिति** ॥

**यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः**
**॥ ६ ॥**

यदक्षरमद्रेश्यं दृष्ट्युपलक्षितबाह्येन्द्रियाविषयः, अग्राह्यं मनसोऽप्यविषयः। साकल्येनेति वा, अयोग्यैरिति वा योज्यम् । यद्वा, दृश्यादन्यददृश्यम्। ग्राह्यादन्यदग्राह्यमित्यर्थः । न विद्यते गोत्रं वर्णो वा यस्य तदगोत्रम् अवर्णम्। अचक्षुःश्रोत्रमित्यादेः प्राकृतचक्षुरादिहीनमित्यर्थः । नित्यं देहतोऽपि नाशरहितम्। विभुं समर्थम्। सर्वगतं सर्वव्यापि। सर्वगतत्वे प्रतिहतिः स्यादित्यत आह- सुसूक्ष्मम् । अत्यन्ताप्रतिघम् । 'सूक्ष्मं तु तदर्हत्वात्' (ब्र.सू.१-४-२) इत्युक्तेः । तत् त्वया पृष्टमक्षरमिति पूर्वश्रुततत्पदस्यान्वयः। अद्रेश्यमित्युक्तिर्न सर्वथेति भावेनाक्षरस्य गुणान्तरमाह - **तदव्ययमित्यादिना** ॥ यदक्षरं भूतानां प्राणिनां योनिं कारणम् धीरा ज्ञानिनः परिपश्यन्ति अव्ययं शश्वदेकप्रकारभूतं, तत् प्रागुक्तमक्षरमित्यर्थः। तथा च सूत्रम्- 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र.सू.१-२-२१) इति ॥ ६ ॥

यद्भूतयोनिमित्युक्तभूतकारणत्वं संहर्तृत्वस्योपलक्षणमित्युपेत्य तदुभयप्रकारं दृष्टान्तपूर्वकं व्यनक्ति- **यथेति** ॥

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ॥७॥**

ऊर्णनाभिर्जन्तुविशेषस्स्वोपभुक्तवस्तूनि तन्त्वात्मना स्वोदरे परिणतानि सृजते बहिर्निष्कासयति । गृह्णते गृह्णाति च । तन्त्वाद्याकारतया बहिर्निष्कासितं पुनरन्तस्स्वोदरे गृह्णाति । तथा विश्वं लये निगीर्णं सत् अक्षराद्बहिर्देशे सम्भवतीत्यर्थः । न तु विश्वात्मना परिणममानत्वं, न वा तदात्मना विवर्तत्वं भूतयोनित्वमित्यर्थः । एतच्चोपलक्षणम् । ऊर्णनाभिना तन्तुराशिरिव संह्रियते चेत्यपि ध्येयम् । ननु नानाविधसृष्टौ वैषम्यादिदोषः किं नेत्यत उक्तम्- **यथा पृथिव्यामिति** ॥ यथा पृथिवी शाल्यादि नानाबीजान्यपेक्ष्य नानाविधङ्कुरान् जनयति, तथा जीवानां नानाविधकर्माण्यनुसृत्य नानाविधजीवान् सृजतीत्यर्थः । तथा च सूत्रम्- 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति' (ब्र.सू.२-१-३५) इति । ननु अक्षरस्य विश्वसृष्ट्यादिना फलसत्त्वेऽपूर्णताप्राप्तिः । तदसत्वे प्रेक्षावतस्तत्र प्रवृत्त्ययोग इत्यत उक्तम्- **यथा सत इति** ॥ यथा सतश्चेतनाधिष्ठितात् पुरुषाद्देहात् केशलोमान्यनायासेन भवन्ति तथाऽक्षरादनायासेन विश्वं सम्भवतीत्यर्थः । अत्यायाससाध्ये हि फलापेक्षा । अनायाससाध्येऽङ्गुलिचालनादौ लोके प्रेक्षावतामपि न फलापेक्षाऽस्तीति भावः । शिरोरुहाः केशाः देहजानि लोमानीति विवेकः ॥ ७ ॥

यथा पृथिव्यामिति दृष्टान्तोक्त्या प्राप्तपरिणामशङ्कां निरस्यन्नक्षराद्विश्वसम्भवक्रमं व्यनक्ति- **तपसेति** ॥

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।**
**अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥ ८॥**

अक्षराख्यं ब्रह्म तपसा ज्ञानेन चीयते सम्बध्यते। ब्रह्म विश्वं सृजानीति व्यचारयदिति यावत्। ज्ञानरूपविचारवतो न परिणामितेति भावः। ततो विचारानन्तरमिति, विचारितवतो ब्रह्मण इति वा। अत्रान्नादिपदैः जडं तदभिमानिदेवता च ग्राह्या। लोका जायन्त इत्यनुषङ्गः। तदनन्तरं कर्म च जायत इति शेषः। जातेषु कर्मसु निमित्तभूतेषु अमृतं स्वर्गादिफलं जायत इत्यनुषङ्गः॥ ८॥

'तपसा चीयते' इत्युक्त्या प्राग् ज्ञानं विनेति प्राप्तशङ्कां निरस्यंस्तपः-स्वरूपोक्तिपूर्वं प्रथमतस्सृष्टं चाऽऽह- **यस्सर्वज्ञ** इत्यादिना॥

**यस्सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।**
**तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते॥ ९॥ १॥**

॥ **इति प्रथमः खण्डः** ॥

सर्वं जानातीति सर्वज्ञः। सर्वं वेत्तीति सर्ववित्। ज्ञानवेदनयोः सामान्यविशेषत्वेनापौनरुक्त्यम्। सर्वं विन्दत लभत इति वा सर्ववित्। 'विद्लृ लाभ' इति धातोः क्विप्। सर्वं लभत आप्तकाम इत्यर्थः। हेतुगर्भमिदं द्वयम्। सर्वज्ञत्वादाप्तकामत्वाद् यस्य तपो ज्ञानमयं ज्ञानात्मकं नाऽऽलोचनात्मकं, नापि सन्तापात्मकमिति। अज्ञो ह्यालोचयति। अनाप्तकामस्तु [१]तपति। नित्यसिद्धसर्वविषयकमपि ज्ञानं सिसृक्षारूप-विशेषात्मना कालविशेषे व्यज्यत इति, 'तपसा चीयत' इति, 'सोऽकामयत' इति, 'तदैक्षत' इति, 'स ईक्षाञ्चक्रे' 'तपस्तप्त्वा' इत्यादि-रूपेण श्रुतिषूच्यत इति भावः। तस्मात्सर्वज्ञाद् ब्रह्मणः नामरूप-

१. तप्यति मु.पा.

शब्दितशब्दप्रपञ्चार्थप्रपञ्चाभिमानितयाऽभेदोपचारेण नामरूपमन्न-मित्युक्तम्, एतत् ब्रह्म चतुर्मुखाख्यं जायत इत्यर्थः ॥ ९ ॥

॥ इति प्रथमः खण्डः ॥

कर्मदेवतादिज्ञानं यज्ज्ञानार्थं सदनल्पस्थिरफलवद्भवति तन्मे ब्रूहीति पृष्टवन्तं शौनकं प्रति अङ्गिरा ब्रह्मज्ञानार्थं सत्तादृशफलवद्भवतीति भावेन ब्रह्मस्वरूपं लेशेन निरूप्य इदानीं यज्ज्ञानार्थं सदित्युक्तं तज्ज्ञानार्थत्व-प्रकारमाह- **तदेतत्सत्यमित्यादिना ॥**

**तदेतत् सत्यम् ।**
**मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि ।**
**तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥१॥**

तदेतत्परविद्याविषयतयाऽदृश्यत्वादिगुणकतयोक्तमक्षरं सत्यमपराधीन-स्वरूपं सर्वसत्यताप्रदं चेत्यर्थः । कवयो ज्ञानिनो मन्त्रेषु यानि कर्माणि समाधौ मनसा अपश्यन् तानि त्रेतायां त्रेतायुगे बहुधा सन्ततानि, कृतयुग इव विष्ण्वेकविषयकाणि नाऽऽसन् । किन्तु 'त्रेतादौ तदशक्त्या हि धर्मोऽन्यस्सम्प्रवर्तते' इति, 'पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान्' इति च स्मृत्या कृतयुग इव विष्ण्वेकनिष्ठतां विना नानाप्रकारेण तत्तद्देव-तोद्देशेन कृत्वाऽन्ते विष्णावपर्यन्तीति बहधा प्रवर्तितान्यासन्नित्यर्थः । सत्यकामास्सत्याख्यभगवज्ज्ञानकामास्सन्तो यूयं तानि कर्माणि नियतं यथा भवति तथाऽचरथानुतिष्ठत । तथाहि- कर्मदेवतादिज्ञानम् 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः' (ब्र.सू.१-४-२२) इत्यादि-सूत्रोक्तदिशा तदनुष्ठानेनान्तःकरणशुद्धिद्वारा ब्रह्मज्ञानहेतुश्रवणाद्यङ्गं सद् ब्रह्मज्ञानं जनयित्वाऽनन्तफलवद्भवति । अपरममुख्यवृत्त्या कर्मदेवतादि-स्वरूपप्रतिपादकमपि ऋगादिकं परममुख्यवृत्त्याऽक्षरबोधकत्वे परविद्यैव

भवतीति भावेनाऽऽह- **एष व इति ॥** एषः भगवज्ज्ञानोद्देश्यकः कर्माचारो, वो युष्माकं, सुकृतस्य लोके लोकस्य पन्थाः मार्ग इत्यर्थः । आचरथेति बहुवचनोक्त्या प्रष्टा शौनक उपलक्षणमिति सूचितम् ॥ १ ॥

कर्माचारप्रकारमाह- **यदेत्यादीना ॥**

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।**
**तदाऽज्यभागावन्तरेणाऽहुतीः प्रतिपादयेत् ॥ २ ॥**

लेलायते परिवर्तते । अर्चिर्ज्वाला । समिद्धे, इन्धी दीप्तौ, सम्यक् दीप्यमान इत्यर्थः । आज्यभागावन्तरेण आज्यभागयोर्मध्ये आहुतीः प्रधानहोमान् प्रतिपादयेत् कुर्यात् । तदा एष कर्माचारस्सुकृतस्य पन्था इति योजना । आज्यभागाख्यहोमौ पार्श्वयोः कृत्वा मध्ये होमाः कार्या इत्यर्थः ॥ २ ॥

अग्नौ क्रियमाणकर्मण इतिकर्तव्यतां विपक्षेऽनर्थकथनेनाऽऽह-**यस्येति ॥**

**यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमतिथिवर्जितं च ।**
**अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥३॥**

यस्य पुरुषस्याग्निहोत्रं दर्शपौर्णमासाग्रयणाख्येष्टित्रयानुष्ठानरहितमहुतं काले हुतं न भवति, अवैश्वदेवं वैश्वदेवकर्मरहितम् अविधिना हुतं च तस्य तत्कर्म आसप्तमान् भूलोकमारभ्य सप्तमभूतसत्यलोकपर्यन्तान् लोकान्, भुवर्लोकमारभ्य सप्तमभूतवैकुण्ठलोकपर्यन्तान् लोकान् इति वा, हिनस्ति, हिसि हिंसायां, नाशयति, ऊर्ध्वलोकास्तस्य न भवन्तीत्यर्थः। अतो दर्शपौर्णमासादिकमाहिताग्निना काले काले कार्यमिति भावः ॥३॥

कुत्र होतव्यमित्यपेक्षायां यदा लेलायत इत्युक्तमधिकारिणं विवृणोति- **कालीति ॥**

**काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।**
**स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः।**
**एतेषु यश्चरते भ्राज़मानेषु यथाकालं चाहुतयो ह्याददायन्॥ ४॥**

विश्वरुची च देवीत्येका, भ्राजमानेषु दीप्यमानासु एतेषु एतासु जिह्वासु व्यत्ययात्, यथाकालमाहुतयः आहुतीः हूयमानहवींषि आददायन् आददानो यश्चरते कर्म कुरुते, यद्वा चरत इत्यस्य विवरणम्- यथाकालं कालमनतिक्रम्य आहुतयः आहुतीः आददायन् आददानः कुर्वन्निति यावत्॥ ४॥

यथाकालं सत्यज्ञानकामनयोक्तस्थानेषु होतुः फलमाह- **तमिति**॥

**तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः।**
**एह्येति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवन्दन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः॥५॥**

एता एते प्रसिद्धाः सूर्यस्य रश्मयः रश्मिषु स्थिता देवाः, देवानां पतिरेको मुख्यः अधिवासोऽधिवसन्त्यत्रेत्यधिवासो मुख्याश्रयो यत्र तिष्ठति तत्र तं नयन्तीति। नयनप्रकारमेवाऽऽह- **एह्येहीति**॥ आहुतयः आहूयमानाः, स्वीकृतहविर्भागा इति यावत्, सुवर्चसः शोभनवर्चस्काः देवाः स्वाधिष्ठानभूतैस्सूर्यस्य रश्मिभिर्यजमानं वहन्ति। कथम्? एह्येति वः पुण्यः पुण्यसाध्यः, तस्य विवरणम्- सुकृतः ब्रह्मलोकः परब्रह्मलोक इति प्रियां वाचमभिवदन्त्योऽभिवदन्तः अर्चयन्त्यः पूजयन्त वहन्तीति॥ ५॥

सत्यविषयत्वेन कृतकर्मणामक्षयफलमुक्त्वा तदविषयत्वेन कृत-कर्मणामनिष्टफलमाह- **प्लवा इति**॥

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥ ६ ॥**

एते भगवदविषयत्वेनानुष्ठिताः यज्ञरूपा यज्ञस्य रूपमिव रूपं येषां ते, विध्युक्तयज्ञवदवभासमाना इति यावत्, अदृढा प्लवाः, लुप्तोपमानं, यथाऽदृढप्लवेन महानद्यादिकं तरन्नापदमाप्नोति तथैवंविधयज्ञैरापदमेवाऽऽप्नोति न श्रेय इति । तदेवाऽऽह- **अष्टादशेति** ॥ येषु यज्ञेषु अष्टादशानां पुरुषाणामुक्तमष्टादशोक्तं, भगवदविषयत्वहेतुनाऽवरमपकृष्टम् एतत्कर्म श्रेयः श्रेयस्साधनं मत्वा ये मूढा अभिनन्दन्ति मोदन्ते ते जरामृत्युं, द्वन्द्वैकवद्भावः, पुनरेवापियन्ति प्राप्नुवन्ति । पूर्वं जरामृत्युमतामपि पुनः पुनः तत्प्राप्तिरेव भवति, न कदाऽपि तन्निवृत्तिरिति भावः । अष्टादशपुरुषास्तु षोडशर्त्विजः यजमान एकस्तन्निरीक्षकस्सभ्य एक इति ध्येयम् ॥ ६ ॥

तेषां भगवदविषयत्वेनानुष्ठाने किं बीजमित्यत आह- **अविद्यायामिति ॥**

**अविद्यायामन्तरे वेष्ट्यमानाः स्वयं धीराः पण्डितं मन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥७॥**

अन्तरे मध्ये वेष्ट्यमानाः परितो बद्ध्यमानाः, अत्यन्तमविद्यातिरोहिततत्वज्ञाना इत्यर्थः । स्वयं धीराः स्वात्मोत्प्रेक्षितप्रज्ञावन्तः । अपण्डितास्सन्तोऽपि पण्डितमात्मानं मन्यमानाः । जङ्घन्यमानाः, हन हिंसागत्योः, वक्रगतयः । अन्धेन नीयमाना अन्धा यथा भिन्नमार्गा एवमित्यर्थः ॥ ७ ॥

अविद्यावेष्टनं च नैकप्रकारमित्याह- **अविद्यायामिति ॥**

**अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।**
**यत् कर्मिणो न प्रवेदयन्ति रागात् तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ।।८।।**

बालाः प्रज्ञाहीनाः । कुतस्तेषामविद्यावेष्टनेन भगवत्प्रज्ञाहीनतेत्यत आह- **यत् कर्मिण** इति । यद्यस्मात्स्वर्गादिक्षयिष्णुफले रागान्निमित्तात् कर्मिणः कर्मानुष्ठातारः तेन कारणेन न प्रवेदयन्ति सम्यङ् न जानन्ति भगवन्तम् । स्वार्थे णिच् । सर्वेभ्यो राजादिवत्किञ्चिदुत्तमत्वेन वा, सर्वसमत्वेन, हीनत्वेन वा जानन्तीति प्रशब्दार्थः । तेन हेतुनाऽऽतुराः व्यग्रचित्तास्सन्तः क्षीणलोका भवन्तः च्यवन्ते लोकच्युता भवन्तीति ।।८।।

एतदेव फलमुक्तानुवादपूर्वं व्यनक्ति- **इष्टापूर्तमिति ।।**

**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति ।। ९ ।।**

इष्टं च पूर्तं इष्टापूर्तं, 'द्वन्द्वैकवद्भावः, अन्येभ्योऽपि दृश्यते' इति दीर्घः । इष्टं यजनं पूर्तमन्नदानादि । वरिष्ठं परमश्रेयस्साधनं मन्यमानाः अन्यद्भगवल्लक्षणं श्रेयः प्रशस्तं वस्तु न वेदयन्ते न सम्यग्जानन्तीत्यर्थः । ते भगवतः किञ्चिदुत्तमत्वज्ञानपूर्वकं कर्मानुष्ठातारः सुकृते सुकृतसाध्ये नाकस्य स्वर्गस्य पृष्ठे विस्तीर्णस्थलविशेषेऽनुभूत्वा कामाननुभूय इमं लोकं भूलोकं, मानुषभावमिति यावत्, विशन्ति प्राप्नुवन्ति । ते हरेः समत्व-हीनत्वज्ञानपूर्वकं कर्मकृतस्तु हीनतरं लोकम् अन्धन्तमो विशन्ति । वाशब्दो व्यवस्थितविकल्पार्थः । तदुक्तम्-

'देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते[1] ।
याजी स मानुषं याति साम्यहीनत्ववित्तमः ।।' इति ।

१. पश्यति - क.ख.

तथा चोक्तं गीतातात्पर्ये (२-४३)-

'ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।
जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ।
निर्णेतृणामभावेन केवलं ज्ञानवर्जिताः ।
ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ॥' इति ॥

तथा-

'ये तु भागवताचार्यैस्सम्यग्यज्ञादि कुर्वते ।
बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।
दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ।
यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ॥' इति ॥ ९ ॥

एवं सत्यज्ञानकामनया कर्माण्याचरथेत्युक्तौ कुत्र कथमित्याशङ्कायां यदेत्यादि मन्त्रपञ्चकेन कर्मानुष्ठानस्थलमितिकर्तव्यतां फलं चोक्त्वा, प्लवा इत्यादिना मन्त्रचतुष्टयेनोक्तवैपरीत्येन कर्मानुष्ठानेऽनर्थं चोक्त्वाऽधुना 'तान्याचरथ नियतं सत्यकामाः' इत्यत्र कर्मदेवताज्ञानं तदनुष्ठानेनान्तः-करणशुद्धिद्वारा ज्ञानहेतुश्रवणाद्यङ्गं सद्ब्रह्मज्ञानमुत्पाद्य परमपुमर्थाय भवतीति यदुक्तं तत्र सर्वथाऽवधानेन भाव्यमिति भावेन कर्माचारा-देरुक्तरीत्या ब्रह्मज्ञानार्थत्वं फलोक्त्योपसंहरति- **तपःश्रद्धे इति ॥**

**तपःश्रद्धे येऽभ्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥१०॥**

ये भगवज्ज्ञानकामाः अरण्ये पुण्यदेशे स्थित्वा तपः कृच्छ्रचान्द्रा-यणादिरूपं, श्रवणमननालोचनरूपं वा, श्रद्धाऽऽस्तिक्यादिबुद्धिपूर्वकं यागादिकम् अभ्युपवसन्ति, आचरन्ति इति शेषः, ते शान्ता भगवन्निष्ठा-वन्तः ते तप आदिना पूर्वोक्तप्रणाड्या विद्वांसः भगवज्ज्ञानिनो भूत्वा

यावत्प्रारब्धं देहरक्षणार्थं भैक्षचर्यां भैक्षं कर्म चरन्तः कुर्वन्तः सूर्यद्वारेण सूर्यमण्डलं प्राप्य तद् द्वारेण विरजाः विगतप्रारब्धकर्माणः 'तेजसि सूर्ये सम्पन्नः पाप्मना विनिर्मुक्तः' इति श्रुत्यन्तरोक्तेः, 'आदेहं कर्म चाऽचरेत्' इति स्मृतेश्च, प्रयान्ति प्रकर्षेण यान्ति। कुत्रेत्यत आह-**यत्रामृत इति**॥ अमृतः देहतोऽप्यविनाशी पुरुषः पूर्णषड्गुणः स प्रसिद्धोऽव्ययात्मा शश्वदेकप्रकारः स्वामी यत्र वर्तते तत्र प्रयान्तीत्यर्थः॥ १०॥

एवं कर्मादिज्ञानं 'उत्क्रमिष्यत एवंभावादित्यौडुलोमिः' (ब्र.सू.१-४-२२) इति सूत्रोक्तदिशा प्रागुक्तप्रणाड्या ब्रह्मज्ञानार्थं सत् परमपुमर्थ-हेतुः। कर्मादिबोधकऋगादिविद्या च अपरविद्या भवतीत्युक्तम्। इदानीं तु 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' (ब्र.सू.१-४-२१) इति सूत्रोक्तदिशा काम्यकर्मतत्फलादौ वैराग्यजननद्वारा ब्रह्मज्ञानसम्पादनेच्छाजननेन ब्रह्मज्ञानार्थं भवत् परमपुरुषार्थहेतुर्भवतीति तद्बोधकऋगादिविद्याऽ-प्यल्पास्थिरफलादिबोधनेन [1]तत्राधिकारिणो वैराग्यजननद्वारा नित्यानल्प-फलकब्रह्मज्ञान कामोत्पादनेन ब्रह्मज्ञानोपयोगिनीति परविद्या च भवतीति भावेनाऽऽह- **परीक्ष्येति**॥

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥११॥**

लोकान् विष्णुलोकेतरान् कर्मचितान् काम्यकर्मापादितान् परीक्ष्या-सारानित्यतया विचार्य ब्राह्मणो ब्रह्माणनरूपब्रह्मज्ञानयोग्यः निर्वेदं काम्यकर्मणि तत्फले च वैराग्यमायात् प्राप्नुयात्। यत् यस्मात् अकृतो मोक्षः कृतेन कर्मणा नास्ति तत्तस्मात्स च मोक्षादितरत्र निर्विण्णो विज्ञानार्थं मोक्षफलकब्रह्मज्ञानार्थं गुरुमेवाभिगच्छेत्। गुरुमुपगन्तारं च

१. तत्राधिकारिणो इत्यारभ्य कामोत्पादनेनेत्यन्तो भागः मुद्रिते क्वचिन्न पठ्यते।

विशिनष्टि- **समित्पाणिरिति** ॥ श्रोत्रियं च्छन्दोऽध्येतारं ब्रह्मनिष्ठं भगवद्भक्तं गुरुमित्यन्वयः ॥ ११ ॥

गुरूपसत्तिं कुर्यादित्युक्त्वाऽङ्गिराः किमकरोदित्यतः शौनकाय तत्त्वमुपदिदेशेत्याह वेदपुरुषः- **तस्मा इत्यादिना** ॥

**तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्य प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १२ ॥**

**॥ इति द्वितीयः खण्डः ॥**

उपसन्नायोपसत्तिं प्राप्ताय सम्यक् प्रशान्तचित्ताय विषयेष्वलम्बुद्धिमते, विरक्तायेति यावत्, शमान्विताय भगवन्निष्ठायुक्ताय तस्मै शौनकाय स विद्वानङ्गिराः येन यया विद्यया, व्यत्ययात्, येन ऋगादिशास्त्रेणेति वा, सत्यमनन्याधीनस्वरूपं पुरुषमक्षरं वेद जानाति तामृगादिशास्त्ररूपां ब्रह्मविद्यां तत्त्वतो याथातथ्येन प्रोवाचेति । कर्मदेवतादिबोधकतया शौनकेनावगतामृगादिविद्यां परममुख्यवृत्तिमहातात्पर्याभ्यां ब्रह्मज्ञप्तिहेतुत्वेन परविद्या यथा भवति तथा व्याचख्याविति भावः । अत एव तत्त्वत इत्युक्तिः ॥ १२ ॥

**॥ इति द्वितीयः खण्डः ॥**

ऋगादिशास्त्रस्य परविद्यात्वापादको मुख्योऽर्थः कः? यदर्थतया ऋगादिशास्त्रं ब्रह्मविद्यात्वेन प्रोवाचेत्यत ऋगादिशास्त्रमुख्यार्थो विश्वस्रष्टृत्वादिगुणविशिष्टो हरिरिति भावेनाऽऽह- **तदेतदिति** ॥

**तदेतत् सत्यम् ।**
**यथा सुदीप्तात् पावकाद् विष्फुलिङ्गा सहस्रशः प्रभवन्ते सरूपाः ।**
**तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥**

वक्ष्यमाणं प्रमेयं सत्यं न मिथ्येत्यर्थः । विष्फुलिङ्गाः अग्निकणाः प्रभवन्ते प्रभवन्ति । सरूपाः प्रकाशेन सदृशाः विविधाः देवदानवमानवादिभेदेन नानाविधाः भावाः पदार्थाः । सोम्य सोमपानार्हेति शौनकस्य सम्बोधनम् । तत्रैव चाक्षरे अपियन्ति प्रलये तदुदरे लीयन्ते । 'अक्षरात् सम्भवतीह विश्वम्' इति प्रागुक्तस्य प्रपञ्चनादपौनरुक्त्यम् ॥ १ ॥

अक्षरस्य सृष्ट्युपयुक्तगुणान् वदन् जगत इव न तस्य जन्मादीत्याह - **दिव्य इति ॥**

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥ २ ॥**

दिव्योऽत्यद्भुतः । अमूर्तो नियतपरिच्छिन्नपरिमाणरहितः । किन्तु बाह्योऽभ्यन्तरश्च । 'अप्राणो ह्यमना' इति षोडशकलाराहित्यमुच्यते । शुभ्रः शुद्धः । अक्षराज्जडप्रकृतेः, परतः श्रीतत्त्वात् पर उत्तमः ॥ २ ॥

**एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥**

एतस्मात् पराक्षरात् प्राणो मुख्यवायुः । विश्वस्य धारिणी पृथिवीत्यन्वयः । अत्र जडतदभिमानिनामुभयेषां ग्रहणम् ॥ ३ ॥

'एतस्माज्जायते प्राणः' इत्यादिना सामान्यत उक्तम् । तत्किम् ? कस्मादङ्गाज्जातमित्यत आह- **अग्निर्मूर्धेति ॥**

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।**
**वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

अस्य प्रकृताक्षरस्य भगवतो मूर्धा अग्निः, अत्तृत्वनिमित्तेनाग्निनामाऽ-

ग्निजनकश्च । अग्र्याख्यमूर्धजत्वादग्नेरग्निनाम । कार्यकारणयोः 'गोभिः, श्रीणीत मत्सरम्' इत्यादाविवाभेदोपचारेणायं निर्देशः । एवमुत्तरत्रापि । चक्षुषी चन्द्रसूर्यौ । आह्लादकत्वादिहेतुना चन्द्रसूर्यनामके चन्द्रसूर्यजनके च । श्रोत्रे दिशः । दिशन्त्यभीष्टमिति दिङ्नामके, दिशां जनके च । वाक् भगवतो वाक् विवृतवेदनामिका विवृतशब्दितविस्तीर्णवेदजनिका, विवृता अभिव्यक्ता वा । भगवतः प्राणो वायुः वायुनामा वायुजनकः । विश्वमिति काचिद्देवता । हृदयं विश्वनामकं विश्वजनकं च । पद्भ्यां पृथिवीत्यन्ते श्रवणात्पूर्वत्रापि जन्यजनकभावेन अग्निर्मूर्धेत्यादिनिर्देश इति ज्ञायते । हि शब्दः 'पद्भ्यां भूमिः' इत्यादिश्रुत्यन्तरप्रसिद्धिद्योतकः । न केवलं सृष्टिसंहारकर्ता नियमनकर्ता चेत्याह- **एष सर्वभूतान्तरात्मा** । अन्तः स्थित्वा आदानादिकर्तृत्वादन्तरात्मा ॥ ४ ॥

एवमङ्गेभ्य उत्पत्तिमुक्त्वा स्त्रियामुत्पत्तिमाह- **पुमानित्यादिना** ॥

**तस्मादग्निः समिधो यश्च सूर्यः सोमात् पर्जन्यौषधयः पृथिव्याम् ।**
**पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥५॥**

तस्मादग्निस्समिधश्च पृथिव्यां जायन्त इति शेषः । यश्च सूर्यः तस्मात्सूर्यात्सोमाच्च पर्जन्यः वृष्टिः, पर्जन्यात् पृथिव्यामोषधयश्च जायन्त इत्यर्थः । पूर्णत्वेन हेतुना पुमान्नामा वासुदेवो योषितायां योषिति, हलन्ताद्वेति टाप्, रमायां रेतः सिञ्चति । प्रलये स्वोदरे निवेशितं जगद्रेतो-वद्रमायां निदधातीत्यर्थः । ततो बह्वीः बह्व्यः ; प्रजा पुरुषात् पूर्ण-गुणाद्वासुदेवात् सम्प्रसूताः ॥ ५ ॥

**तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥**

न केवलं प्रजाः, अन्यदपीत्याह- **तस्मादिति** ॥ पुरुषादित्यर्थः । ऋच इत्यादौ सम्प्रसूतपदानुषङ्गो यथायोगं ध्येयः । तत्र प्रसवोऽभिव्यक्तिः। यज्ञा अग्निहोत्रादयः । सर्वे क्रतवः सोमयागाः पशुसम्बद्धाः । अत्र ऋगादि-शब्दैस्तदभिमानिनश्च ग्राह्याः । यजमानः यज्ञक्रतूनामनुष्ठाता सम्प्रसूत इत्यर्थः । लोका इत्युक्तं, ते के लोका इत्यत आह- [१]सोमश्चन्द्रो यत्र पवते चरति, सूर्यो यत्र पवते ते लोका इत्यर्थः ॥ ६ ॥

**तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि ।**
**प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

तस्मात्पुरुषात् योषिद्द्वारा देवा बहुधा सम्प्रसूताः । तथा साध्या-दयोऽपि सम्प्रसूताः । वयांसि पक्षिणः । तपश्च कृच्छ्रचान्द्रायणादि । श्रद्धा आस्तिक्यबुद्धिः । सत्यं यथार्थवचनम् । सम्प्रसूतपदस्य यथायोगमनुषङ्गस्सर्वत्र ज्ञेयः ॥ ७ ॥

**सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः ।**
**इमे लोका येषु चरन्ति प्राणा गुहाशयां निहिताः सप्त सप्त ॥ ८ ॥**

सप्त प्राणाः घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोबुद्धिरूपाणि सप्तेन्द्रियाणि प्रभवन्ति तस्मात् पुरुषाद् योषिद्वारेति भावः । तेन 'एतस्माज्जायते प्राणो मनः' इत्यादिना पूर्वत्रेन्द्रियाणां सृष्ट्युक्तावपीह योषिद्वारकसृष्ट्युक्तेर्न पुनरुक्तिरिति ज्ञेयम् । सप्तार्चिषस्सप्तेन्द्रियवृत्तयः । समिधः गन्धादिविषयाः। होमा इन्द्रियाणां विषयैः सम्बन्धास्सप्तेत्यर्थः । इमे लोकाः सप्त, ते के लोका इत्यत आह- येषु स्थित्वा प्राणास्सप्त चरन्ति, विषयैस्सह सम्बद्धा भवन्तीत्यर्थः । इन्द्रियगोलका इति यावत् । किमर्थं सृष्टाः प्राणा इत्यत

१. सोम इति ख. नास्ति ।

आह - गुहाशयां गुहाशयायाम्, गुहा हृदयमाशयः स्थानं यस्यास्तस्यां बुद्धौ, निमित्तसप्तमी । प्राणिनां ज्ञानोत्पत्त्यर्थं प्रतिशरीरं सप्त सप्त प्राणा निहिताः सन्तो येषु चरन्ति ते लोका इत्यन्वयः । तथा च सूत्रम्- 'सप्तगतेर्विशेषितत्वाच्च' (ब्र.सू.२-४-६) इति ॥ ८ ॥

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥९॥**

**॥ इति तृतीयः खण्डः ॥**

अतोऽस्मात्पुरुषात् प्रभवन्तीत्यनुषङ्गः । सर्वरूपाः सर्वदिङ्मुखाः । सिन्धवो नद्यः, अस्मात्पुरुषात्स्यन्दन्ते प्रवहन्ति, रसाश्च, प्रभवन्तीति योज्यम् । येन पुरुषेण योषिद्द्वारा सृष्टैर्भूतैस्सहान्तरात्मा अन्तर्यामिरूपी तिष्ठते तिष्ठति स पुमानेतत्सर्वं ससर्जेत्यर्थः ॥ ९ ॥

**॥ इति तृतीयः खण्डः ॥**

तपसा ज्ञानेन चीयते सम्बद्ध्यत इत्यत्र ब्रह्मणो ज्ञानस्य च भेदः प्रतीयते । 'अक्षरात्सम्भवतीह विश्वम्' इत्यनेनोक्तसृष्टिक्रियया तदाक्षिप्तबलादिना च लोक इव भेदः प्रतीयते । तां भेदप्रतीतिं निवारयन् भगवदभेदं ज्ञानादेराह - **पुरुष एवेत्यादिना ॥**

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।**
**एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरति ह सोम्य ॥ १ ॥**

कर्म सृष्टिक्रिया । तपो ज्ञानम् । उपलक्षणमेतत् द्युतिबलादेर्धर्मजातस्य । तथा च कर्मतपःप्रभृतीदं विश्वं सर्वं धर्मजातं परामृतं परामृताख्यो ब्रह्मशब्दितः पुरुष एव भगवानेव, न तु धर्मधर्मिणोर्भेदो भगवति मन्तव्य इति । तदाह सूत्रम्- 'प्रतिषेधाच्च' (ब्र.सू.३-२-३१) इति । 'एक-

मेवाद्वितीयम्' (छां. ६.२.१), 'नेह नानाऽस्ति किञ्चन' (कठ. ४.११) इति भेदस्य निषेधादित्यर्थः। एतज्ज्ञानिनः फलमाह-**एतद् यो वेदेति ॥** एतत् स्रष्टृत्वादिगुणैस्सविशेषाभिन्नतया विशिष्टं, सर्वप्राणिहृदयगुहायां निहितं, ब्रह्म योऽधिकारी वेद सोऽविद्याग्रन्थिं प्रकृतिबन्धं विकिरति, कॄ विक्षेपे, विक्षिपति निरस्यति, मुक्तो भवतीत्यर्थः। सोम्य सोमपानार्हेति शौनकसम्बोधनम्। हेति हर्षे ॥ १ ॥

पुनर्भगवतो महिमान्तरमुपदिष्टवानङ्गिराः शौनकं प्रतीत्याह वेदपुरुषः-**आविरित्यादिना ॥**

**आविः सन्निहितं गुहाचरं नाम महत् पदम्।**
**अत्रैतत् सर्वमर्पितमेजत् प्राणन्निमिषच्च यत्।**
**एतज्जानथ सदसद्वरेण्यं परं विज्ञानाद् यद्वरिष्ठं प्रजानाम्।**
**यदर्चिमद् यदणुभ्योऽणु च यस्मिंल्लोका निहिता लोकिनश्च।**
**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः।**
**तदेतत् सत्यं तदमृतं तद् वेद्धव्यं सोम्य विद्धि ॥ २ ॥**

आविर्नित्याभिव्यक्तस्वरूपम्। व्याप्तत्वात् सर्वसन्निहितम्। गुहाचरं हृदयगुहायां चरतीति गुहाचरम्। पद्यते प्राप्यत इति पदम्। महदुत्तमं प्राप्यं नाम प्रसिद्धम्, उक्तगुणवत्त्वे प्रसिद्धमित्यर्थः। अत्र आविरादिगुणयुक्ते भगवति एतत्सर्वम् अर्पितमाश्रितम्। तत्सर्वं किमित्यत आह- **एज-दिति ॥** एजृ कम्पने, सामान्यचेष्टोपेतम्, प्राणविशेषचेष्टायुक्तम्, निमिषत् चक्षुषी निमील्य स्थितम्, जाग्रत्स्वप्नसुषुप्त्याद्यवस्थोपेतं यदेतज्जगज्जानथ जानासि तत्तत्सर्वमत्रार्पितमित्यर्थः। पुनः किं रूपं ब्रह्मेत्यत आह-**सदसदिति ॥** तदक्षरं सदसद्भ्यां मूर्तामूर्ताभ्यां, कार्यकारणाभ्यां वा वरेण्यं श्रेष्ठं, वृञ एण्यप्रत्ययः। विज्ञानाच्चतुर्मुखात् परमुत्तमम्, 'विज्ञान-

शक्तिरहमासमनन्तशक्तेः' इत्यादेः । प्रजानां वरिष्ठं श्रेष्ठम् । यदर्चिमदर्चिष्मत्, यच्चाणुभ्योऽणु च, यस्मिन् लोका लोकिनो लोकस्था जना लोकाभिमानिनो वा निहिताः तदेतदुक्तगुणविशिष्टमक्षरं ब्रह्मेत्यर्थः । महिमान्तरमाह- **स प्राण इति** ॥ प्राण इति विधेयापेक्षया स इति पुल्लिङ्गनिर्देशः । प्रकर्षेण अनितिचेष्टते, जगत्प्रेरयतीति प्राणः । तदक्षरं वक्ति समस्तवेदानित्येव वाक्, न तु प्रसिद्धवागाद्यभेदादित्येवकारार्थ उशब्दः। तदक्षरं मनुते सर्वमिति मनः । तदेतदक्षरं सत्यं अपराधीनस्वरूपम् । 'षद्लृ विशरणे' इति धातोः सतः शरीरतो विशरणशीलान् जीवान् यमयति नियमयतीति वा सत्यं तदमृतं देहतोऽपि नाशरहितम्, हे सोम्य ॥ २ ॥

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत ।**
**आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥**

औपनिषदम् उपनिषत्सम्बन्धि प्रणवाख्यं धनुर्गृहीत्वा वेद्धव्यं वेधनीयं तद्ब्रह्म विद्धि जानीहि । यथा वेध्यं लक्ष्यं वस्तु धानुष्का धनुर्गृहीत्वा शरेण विध्यन्ति तथा त्वमपि उपनिषदर्थभूतप्रणवार्थपर्यालोचनया मनसा ब्रह्म सावधानं जानीहीत्यर्थः । वेद्धव्यं विद्धीत्युक्तमेव व्यनक्ति- **महास्त्रमित्यादिना** ॥ उपासानिशितं उपासया तीक्ष्णीकृतं शरं शरवत्स्थितं मनः त्वं सन्दधीत सन्धत्स्व व्यत्ययात् । संयोजयेति यावत् । सन्धानमेव व्यक्तमाह- **आयम्येति** ॥ तच्चेतः समस्तवस्तुभ्यो नियम्य, निवर्त्येति यावत्, तद्भावगतेन तदेकसम्बद्धेन चेतसा लक्ष्यं लक्ष्यभूतं तदेवाक्षरं हे सोम्य विद्धीत्यर्थः ॥ ३ ॥

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥ ४ ॥**

किं धनुरादीत्यतो विविच्य दर्शयति । प्रणवो धनुः । आत्मा चेतः शरः । तदक्षराख्यं, ब्रह्मेत्यर्थः, वेद्धव्यं बोद्धव्यमित्यर्थः । **शरवदिति** ॥ शरो यथा वेद्धव्यमनुप्रविशति तथा ज्ञान्यपि तन्मयः तत्प्रविष्टो [1]भवेदित्यर्थः ॥ ४ ॥

यथाऽक्षरं प्राधान्येन ज्ञेयं तथाऽन्यदप्यस्ति किं तादृशमित्यतः तन्महिमोक्तिपूर्वकं नेत्याह- **यस्मिन्द्यौरित्यादिना** ॥

**यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुः ॥५॥**

यस्मिन् द्यौरोता पृथिवी चोता अन्तरिक्षं चोतं सर्वैः प्राणैश्चक्षुरादीन्द्रियैः सह मनश्च यस्मिन्नोतं, वेञ् तन्तु सन्ताने, पटे तन्तव इव संश्लिष्टतया यमाश्रित्य वर्तते द्यौरादिकं तं सर्वाधारमेवैकं आत्मानं जानथ जानीत, व्यत्ययात् । शौनकोपलक्षितान् प्रत्युच्यत इति बहुवचनम् । जानथ अत्मानमिति पृथङ्निर्देशस्सर्ववैलक्षण्यज्ञापनार्थः । तदाह सूत्रे - 'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र.सू.१-३-१) इति । एतेनाऽऽधेयज्ञानं विना तदाधारत्वेन ज्ञानायोगात् 'अवस्थितेरिति काशकृत्स्नः' (ब्र.सू.१-४-२३) इति सूत्रोक्तदिशाऽऽधेयकर्मदेवतादिजगज्ज्ञानं सर्वाधारत्वप्रकारकब्रह्मज्ञानोपयोगि सत् परविद्या भवतीति सूचितं भवति । अत एव प्राक्कर्मदेवतादिजगदुक्तिः अत्रैतत्सर्वमर्पितमिति चोक्तम् । अन्याः अन्यविषयाः वाचः विमुञ्चथ परित्यजत, प्राधान्येनेति भावः । तदाह सूत्रे 'हेयत्वावचनाच्च' (ब्र.सू.१-१-८) इति । कुतस्तस्यैव ज्ञानमापाद्यमित्यत आह- **अमृतस्यैष सेतुरिति** ॥ एष आत्माऽमृतस्य मुक्तवर्गस्य सेतुराश्रयः ॥ ५ ॥

---

१. भवतीत्यर्थः- क.

**अरा इव रथनाभौ संहता यत्र नाड्यः ।**
**स एषोऽन्तश्चरते बहुधा जायमानः ॥ ६ ॥**

यत्र देहस्थे हरौ रथनाभौ रथचक्रे अरा इव नाड्यः संहताः सम्बद्धाः स एष आत्मा बहुधा विश्वादिरूपेण जायमानः प्रादुर्भवन् अन्तः शरीरान्तश्चरते सञ्चरति ॥ ६ ॥

जानथेत्युक्त[१]ज्ञानोपायमाह- **ओमित्येवेति ॥**

**ओमित्येव ध्यायत आत्मानं स्वस्ति वः पराय तमसः परस्तात् ॥७॥**

आत्मानम् ओम् अशेषगुणपूर्णं, मुख्यवृत्त्या ऋगादिशास्त्रवेद्यमित्येव ध्यायत । किमर्थम् ? तमसः परस्तात् पराय, ज्ञानोपलक्षणं, जडप्रकृति-परश्रीतत्वात्परभूतपरमात्मज्ञानाय । एवं ध्याने सति तज्ज्ञानं भवति । तेन च परात् परज्ञानेन वो युष्माकं स्वस्ति मङ्गलं भवतीत्यर्थः ॥ ७ ॥

आत्मानं विशिनष्टि- **यस्सर्वज्ञः सर्वविदिति ॥**

**यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥ ८ ॥**

एष सार्वज्ञ्यादिरूपो यस्य महिमा भुवि भूम्यादौ प्रकटितः तमात्मान-मित्यर्थः । कुत्रत्य आत्मा ध्येय इत्यत आह- **दिव्य इति ॥** ब्रह्मपुरे देहे दिवि भवे दिव्ये, व्योम्नो द्युसम्बन्धित्वाद्दिव्य इत्युक्तिः, व्योम्नि देहस्थाकाशे एष आत्मा प्रतिष्ठितः ॥ ८ ॥

**मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।**
**तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति ॥९॥**

---

१. ज्ञानफलमाह- क. ख.

शरीराकाशेऽपि हृदयरूपस्थलविशेषमाह- **मनोमय इति ॥** ज्ञानप्रचुरः पूर्णज्ञान इत्यर्थः । प्राणशरीरनेता प्राणानां पञ्चवायूनां सर्वेन्द्रियाणां च शरीरस्य च नेता प्रेरकः । एतेन देहे तस्य स्थितौ कृत्यं दर्शितम् । प्राणादिनेतृत्वं चाज्ञस्य न युक्तमित्यतो मनोमय इत्युक्तिः । अन्ने अन्नविकारे देहे, कार्यकारणयोरभेदोपचारात्, हृदयं सन्निधाय अधिष्ठाय प्रतिष्ठितः स्थितः । तस्य दर्शनायोग्यत्वे ध्यानं व्यर्थमित्यत आह- **तद्विज्ञानेनेति ॥** यदानन्दरूपममृतं विभाति । 'अतोऽनन्तेन तथा हि लिङ्गं' (ब्र.सू.३-२-२७) इति सूत्रोक्तदिशाऽव्यक्तैकस्वभावमप्यचिन्त्याद्भुतशक्त्या विशेषेण भाति आविर्भवति । तद्रूपं धीराः पटुतरश्रवणमनननिदिध्यासनवासनावासितान्तःकरणजन्येन विज्ञानेन परिपश्यन्ति विषयीकुर्वन्तीत्यर्थः । तथा च सूत्रम्- 'प्रकाशश्च कर्मण्यभ्यासात्' (ब्र.सू.३-२-२६) इति ॥ ९ ॥

तद्दृष्टेः फलमाह- **भिद्यत इति ॥**

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १० ॥**

परा अपि ब्रह्मादयोऽवरा यस्मात्स परावरः तस्मिन् परावरे सर्वोत्तमे तस्मिन्नानन्दरूपे हरौ दृष्टे सति हृदयग्रन्थिः[१] अविद्यातन्मूलरागद्वेषदुःखादिरूपो बन्धो भिद्यते अपयाति । अज्ञानमूलाः सन्देहविपर्ययाश्च अपगच्छन्ति । अस्याऽपरोक्षज्ञानिनः कर्माणि सञ्चितागामीन्यप्रारब्धानि कर्माणि क्षीयन्ते । सञ्चितानां क्षयो नाशः । आगामिनामश्लेषः । तथा च सूत्रम्- 'तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू.४-१-१३) इति ॥ १० ॥

---

१. हृस्थस्य मिथ्याज्ञानस्य ग्रन्थिः आश्रयः इति ख. कोशे ।

एवं देहे भगवदुपासनास्थलमुक्त्वा ब्रह्मण्डमध्यस्थसूर्यरूपं चोपास्तिस्थलमाह- **हिरण्मय इति ॥**

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ११ ॥**

हिरण्मये सुवर्णात्मके परे उत्तमे कोशे ब्रह्माण्डे विरजं विरजस्कं रजोगुणोपलक्षितसत्त्वादिगुणहीनं निष्कलं षोडशकलारहितं अत एव शुभ्रं शुद्धं ज्योतिषां तेजोरूपाणां ज्योतिः प्रकाशकत्वप्रदम्, सर्वज्योतिरपेक्षयाऽतिशयितमहाप्रकाशरूपमिति वाऽर्थः । पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलमित्यादिवत्, अदित्यस्थं ब्रह्म आत्मविदो विदुः जानन्ति । अतस्तत्राऽऽत्मानं ध्यायीतेति भावः ॥ ११ ॥

कथं सर्वज्योतिरपेक्षयाऽतिशयितमहाप्रकाशरूपत्वं हरेरित्यत आह- **न तत्रेति ॥**

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १२ ॥**

तत्र ज्योतिषां ज्योतिरूपे हरौ । विषयसप्तमी । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । तत्र भगवद्विषये सूर्यचन्द्रादिकं न भाति । तदपेक्षयाऽल्पप्रकाशरूपत्वात् [1]सूर्यादिः [2]महाप्रकाशं भगवन्तं दीपः सौरालोकमिव न भासयन्ति सूर्यादयस्तमिति भावः । तथा च गीता 'न तद्भासयते सूर्यः' (गी.१५-६) इत्यादि । न केवलं सूर्यादिस्तदप्रकाशकत्वम् । किन्तु यत्प्रकाशमानत्वं स्वस्यास्ति तदपि ज्योतिरूपभगवदधीनमित्याह- **तमेवेति ॥** भान्तं प्रकाशमानं तं भगवन्तम् अनु अनुसृत्य, अनुर्लक्षणे, सर्वं

१. सूर्यादीनां ख. २. प्राकाशः ख.

तदधीनं तत्पूर्वमन्त्रे प्रकृतं सूर्यचन्द्रादि भाति प्रकाशते। विश्वप्रकाशकत्वमपि सूर्यादेः तत्तेजोऽधिष्ठानत्वेनैवेत्याह- **तस्येति ॥** तस्य भासा भगवद्भासा सर्वं जगद्भाति प्रकाशते। सूर्यादिप्रकाशद्वारेति भावः। तथा च गीता -

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति ॥
(भ.गी. १५.१२)

मामकं मदधीनं मदीयञ्चेत्यर्थः ॥ १२ ॥

हृदयं सन्निधाय प्रतिष्ठित इति, हृदये, ज्योतिषां ज्योतिरिति सूर्ये च ध्यानार्थं स्थित्युक्त्या प्राप्तपरिच्छिन्नत्वशङ्कां निराह- **ब्रह्मैवेदमिति ॥**

**ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १३ ॥**

**॥ इति चतुर्थः खण्डः ॥**

इदममृतं ब्रह्मैव। पुरस्तात् पुरोदेशे प्रसृतं व्याप्तम्। ब्रह्म पश्चात् पश्चिमदेशे ब्रह्म। दक्षिणतश्चोत्तरेण दक्षिणदेशे उत्तरदेशे च प्रसृतमधश्चोर्ध्वं चाधो देशोत्तरदेशयोः प्रसृतमिदं ब्रह्मैव। विश्वं पूर्णम् इदं ब्रह्मैव। वरिष्ठं सर्वोत्तमम्। एवं सवदेशेषु व्याप्तस्यापि हरेः हृदयाद्यल्पदेशेष्ववस्थानं 'निचाय्यत्वादेवं व्योमवच्च' (ब्र.सू.१-२-७) इति सूत्रोक्तदिशा युक्तमिति ध्येयम् ॥ १३ ॥

**॥ इति चतुर्थः खण्डः ॥**

'स एषोऽन्तश्चरते बहुधा जायमानः' इत्युक्तं हरेर्बहुधा जायमानत्वं जीवाभेदेनेति भ्रमनिरासाय तयोर्भेदमाह- **द्वा सुपर्णेति ॥**

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥**

सयुजौ संयुक्तौ, सदा वियोगरहितौ, उपकार्योपकर्तृभावेन सखायौ द्वौ सुपर्णरूपौ जीवेशौ समानं वृक्षं देहाख्यमेकमश्वत्थवृक्षं परिषस्वजाते आलिलिङ्गतुः । तयोस्सुपर्णयोर्मध्येऽन्यो जीवः पिप्पलमश्वत्थफलरूपं देहजनितं कर्मफलमस्वाद्वेव स्वादुवदत्ति । अन्य ईश्वरोऽनश्नन् जीवाद्यं कर्मफलमनश्नन्नभिचाकशीति, काशृ दीप्तौ, यङ्लुगन्तं, प्रकाशते । स्वस्थित्यै न तदपेक्षत इति भावः । तदुक्तमेकादशस्कन्धे । (भा. ११-११-६) 'एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्' इति ॥ १ ॥

अस्य बन्धमोक्षहेतू क्रमेणाऽऽह समान इति, जुष्टमिति च ।

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥**

समाने एकस्मिन् देहाख्ये पिप्पलवृक्षे निमग्नो निरूढो ममताद्यभिमानवान् पुरुषो जीवोऽनीशया न विद्यतेऽन्य ईशो यस्याः साऽनीशा स्वतन्त्रा भगवन्मतिः । तया मुह्यमानः शोचति, भगवन्तमज्ञात्वा सांसारिक-क्लेशमनुभवति । जुष्टं, जुषी प्रीतिसेवनयोः, सर्वसेव्यमीशं विष्णुं जीवादन्यम् इति, 'तदेतत्सत्यं' इत्यादिनोक्तप्रकारेणाऽखिलकर्माराध्यत्व-जगत्स्रष्टृत्वादिरूपमस्येशस्य महिमानं च यदा पश्यति पुरुषो जीवः तदा वीतशोकोऽपगतक्लेशः मुक्तो भवतीत्यर्थः ॥ २ ॥

प्रतिबन्धककर्मणो भावात् कथं तत्सृष्ट्या मुक्तिः जीवस्य ईश्वरस्य दृष्टिर्वा कथमित्यतः पूर्वमन्त्रार्थमेव विशदमाह- **यदा पश्य इति ॥**

**यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥**

पश्यतीति पश्यो द्रष्टा जीवो, यदा रुग्मवर्णं हेमवर्णविग्रहं 'रूपोपन्यासाच्च' (ब्र.सू.१-२-२३) इति सूत्रात्, ब्रह्मयोनिं हिरण्यगर्भस्य कारणं, जगत्कर्तारं पश्यते पश्यति तदाऽसौ विद्वान् ज्ञानी अनिष्टं पुण्यं पापं च विहाय 'तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू.४-१-१३) इति सूत्रोक्तेः । निरञ्जनः निर्लेपः 'अञ्जनाख्याविद्याहीनः' इति सुधोक्तेः, परमं साम्यं निर्दुःखपूर्णानन्दत्वादिब्रह्मसाम्यमाप्नोतीत्यर्थः। 'पुंस्त्वादिवत्त्वस्य' (ब्र.सू.२-३-३०) इति सूत्रोक्तदिशा प्रागपि साम्यसत्त्वेऽप्यप्राप्तभोगप्राप्त्यभिप्रायेण परममित्युक्तिः । अभिव्यक्त्यपेक्षया वा ॥ ३ ॥

विद्वानिति प्रकृतजीवन्मुक्तस्य स्थितिप्रकारमाह- **प्राणो ह्येष इति** ॥

**प्राणो ह्येष सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥**

विद्वानतिवादी न भवते न भवति । कुतः ? सर्वभूतैः सर्वेन्द्रियादिभिरेष प्राण एव प्रकृष्टचेष्टको हरिरेव विभाति स्वतन्त्रो वर्तते, अहं त्वस्वतन्त्र इति विजानन् हि यतो वर्तते अत इति योजना । अतिवादी न चेत् कथं तर्ह्यास्त इत्यत आह- **आत्मक्रीड इति** ॥ आत्मना भगवता क्रीडत इत्यात्मक्रीडः । आत्मदर्शनजं सुखं प्राप्त इत्यात्मरतिः । भगवदाराधनैकक्रियावान् । ब्रह्मविदामेष वरिष्ठः श्रेष्ठः ॥ ४ ॥

भगवदपरोक्षज्ञानाय ध्यानरूपं साधनमुक्तं ध्यायत आत्मानमित्यत्र । तत्सहकारीण्याह- **सत्येनेति** ॥

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तःशरीरे ज्येतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

सत्येन यथार्थवचनेन, तपसा वर्णाश्रमोचितधर्मानुष्ठानपूर्वं नित्यं भगवदनुचिन्तनेन, सम्यग्ज्ञानेन गुरूपदेशजन्यतत्त्वविषयकसम्यग्ज्ञानेन, नित्यं सर्वेन्द्रियनियमनरूपब्रह्मचर्येणान्तःशरीरे शरीरान्तः ज्योतिर्मयः प्रचुरप्रकाशः, शुभ्रः शुद्धः जडाऽमिश्रः एष आत्मा लभ्योऽपरोक्ष-विषयोऽपरोक्षद्वारा प्राप्य इति वाऽर्थः । क्षीणदोषा यतयः प्रयत्नशीलाः यं पश्यन्ति एष आत्मेत्यन्वयः ॥ ५ ॥

हरिभक्तस्यैव भगवत्प्राप्तिर्नतद्विमुखस्येत्याह- **सत्यमेवेति** ॥

**सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम् ॥६॥**

सद्गुणत्वहेतुना सत्यमिति हरिरुच्यते। तन्निष्ठभक्त्यतिशयेन तस्मिन्नेव मग्नत्वहेतुना सत्यभक्तोऽपि सत्यपदेनात्र गृह्यते। तथा च सत्यं सत्याख्य-भगवन्निष्ठायुक्तम् अधिकारिजीवजातमेव जयति प्राप्नोति, आत्मानमिति विपरिणामेनान्वयः। नानृतं ऋताख्यहरिविरुद्धत्वहेतुना अनृतपदाभिधेय-मसुरजातं न जयत्यात्मानमित्यर्थः । कुत एवं सत्यनिष्ठ एव तमाप्नोति, नान्य इत्यतस्तत्प्राप्तिमार्गस्य तदधीनत्वादित्याह- **सत्येनेति** ॥ योजना तु- यत्र लोके सत्यस्य सद्गुणस्य हरेः परमं सन्निधानं प्रत्यक्षतया सन्निधानं तं वैकुण्ठलोकं येन पथा मार्गेण आप्तकामा ऋषयो ज्ञानिनः आक्रमन्ति गच्छन्ति अयं देवयानाख्यः पन्थाः सत्येन हरिणा विततो विस्तृतस्तदधीन इति यावत् ॥ ६ ॥

सत्यस्य महिमानमाह- **बृहच्च तदित्यादिना** ॥

**बृहच्च तद् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।**
**दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ।। ७ ।।**

तत्सत्याख्यं वस्तु देशकालगुणैः बृहत् बृंहितम् । विशेषणसमुच्चये च-शब्दः । दिव्यमद्भुतमत एव अचिन्त्यरूपम् । सूक्ष्मात् प्रकृत्यादेः तत्सत्यं सूक्ष्मतरं चात्यन्तमप्रतिघम्, अणोरणुतरं चेति वाऽर्थः । विभाति विशेषेण प्रकाशमानमास्ते । भा दीप्ताविति धातोः । तत्सत्याख्यं ब्रह्म दूरात् सुदूरे इहान्तिके च । सर्वगत्वादिति भावः । पश्यत्सु पश्यतां ज्ञानिनाम् इहैव शरीरे हृदयगुहायां निहितं संस्थितम् ।। ७ ।।

एवंविधस्य भगवतो ज्ञानं चक्षुरादिदेवतोपासनाबलात् भवति किमित्यतो नेत्याह- **न चक्षुषेति ।।**

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।। ८ ।।**

चक्षुराधिष्ठातृदेवताप्रसादेन न गृह्यते । गुहाशयां निहितं वस्त्वित्यनुषङ्गः । वाचा वाग्देवताप्रसादेनेत्यर्थः । अन्यैरिन्द्रियान्तरदेवैः, तपासऽनशनादिव्रतेन, कर्मणा वर्णाश्रमोचितधर्मेण वा न गृह्यते । केन तर्हीत्यत आह- **ज्ञानेति ।।** ज्ञानरूपस्य वायोश्चतुर्मुखस्य वा प्रसादेन, 'विज्ञानशक्तिरहमासमनन्तशक्तेः' इत्युक्तेः । 'सत्यं ज्ञानमनन्तम्' इत्यादेः ज्ञानस्वरूपस्य हरेः प्रसादेनेति वार्थः । 'अतोऽनन्तेन तथा हि लिङ्गं' (ब्र.सू. ३-२-२७) इति सूत्रात् । वाय्वादिस्त्वनुज्ञाप्रद इति ध्येयम् । विशुद्धसत्त्वः रजस्तमोभ्याममिश्रितोद्रिक्तसत्त्वगुणो भवति । ततस्तु विशुद्धसत्त्वत्वादेव निष्कलं षोडशकलात्मकदेहहीनं ध्यायमानो निरन्तरचिन्तां कुर्वन् भगवन्तं पश्यते पश्यति ।। ८ ।।

केनेन्द्रियेणेत्यत आह- **एषोऽणुरिति ॥**

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

एषोऽणुरूपेण सर्वप्राणिषु स्थित आत्मा चेतसा वेदितव्यो ज्ञातव्यः । एष इत्युक्तः क इत्यत आह- **यस्मिन्निति ॥** प्रजानां सर्वं चित्तं प्राणैरिन्द्रियैस्सह यस्मिन् प्राणे मुख्यवायावोतमाश्रितं स प्राणो यस्मिन् विशुद्धे निष्कले हरौ पञ्चधा प्राणापानादिपञ्चरूपात्मना विवेश आश्रितस्तिष्ठति, विभवति च विभवयुक्तश्च भवति एष अत्मेति योजना ॥ ९ ॥

आत्मवेदिनो महिमानमाह- **यं यमिति ॥**

**यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।**
**तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥१०॥**

**॥ इति पञ्चमखण्डः ॥**

विशुद्धसत्त्व आत्मवेदी यं यं लोकं मनसा संविभाति भावयति, गच्छतीति यावत्, यांश्च कामान् काम्यमानान् विषयान् कामयते इच्छति तं तं लोकं तांश्च कामान् जयते प्राप्नोति । तस्मादात्मज्ञानिनो महत्त्वाद् भूतिकामो भाग्यकामः आत्मज्ञं भगवज्ज्ञानिनम् अर्चयेत् पूजयेत् । अर्च पूजायाम् । हिशब्दः तदर्चनेन भूतिमान् भवतीति निश्चयार्थः ॥ १० ॥

**॥ इति पञ्चमखण्डः ॥**

आत्मज्ञार्चकस्य भूतिः कीदृशीत्यतो वायुज्ञानद्वारा परमपुमर्थहेतु-ब्रह्मज्ञानाप्तिरूपेत्याह- **स वेदैतदिति ॥**

**स वेदैतत् परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥**

योजना तु, यत्र यस्मिन् मुख्यवायौ विश्वं पूर्णं शुभ्रं शुद्धं ब्रह्म निहितं स्थितं सत् भाति, वाय्वाविष्टजीवस्य वायुद्वारा ज्ञानदीपनं करोति एतत् परमं मुख्यं ब्रह्मधाम परब्रह्माधिष्ठानगृहं मुख्यवायुं स आत्मज्ञार्चकः वेद जानातीति । यस्त्वात्मज्ञमर्चयति स मुख्यवायुज्ञो भवति । तज्ज्ञाने च सति तत्रस्थो हरिस्तद्द्वारा तस्याऽऽत्मज्ञार्चकस्य विशेषतो भगवज्ज्ञानवृद्धिं करोतीति भावः । कथमेतज्ज्ञानस्य भूतित्वम् ? सुखप्राप्तिदुःखनिरासयोरन्यतरत्वाभावादित्यतो ब्रह्मप्राप्तिहेतुत्वादित्याह- **उपासत इति** ॥ येऽकामाः कामादिदोषहीनाः पुरुषं पूर्णषड्गुणं ब्रह्मोपासते, श्रवणमननध्यानैर्जानन्ति ते शुक्रं शोकरहितमेतद्ब्रह्म, गन्तुमिति शेषः । अतिवर्तन्ति संसारक्लेशमतिक्रम्य वर्तन्ते, मुक्ता भवन्तीत्यर्थः । हिशब्दः प्रसिद्धिद्योतकः ॥ १ ॥

अकामा इति किमर्थमित्यतस्सकामतयोपासने क्षयिष्णुलोकप्राप्तिरेव न नित्यलोकावाप्तिरित्याह- **कामानिति** ॥

**कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

यः कामान् विषयान् भद्रान् मन्यमानः कामयते इच्छति, विषयकामनया भगवन्तमुपास्त इति यावत् । स पुमान् कामभिः विषयैस्सह तत्र तत्र लोके भाग्यपुरुषसन्ततौ वा जायते । अकामता तर्हि कथं भवतीत्यत आह- **पर्याप्तेति** ॥ यथेष्टं विषयान् भुक्तवतोऽत एव कृतात्मनस्तृप्तमनस्कस्येहैव जन्मनि सर्वे कामाः कामनाः नानावस्तुविषयिण्य इच्छाः प्रविलीयन्ति निवृत्ता भवन्तीति ॥ २ ॥

'न चक्षुषा गृह्यते' इत्यत्र देवतान्तरशक्त्या हरिं न पश्यन्ति, किन्तु ज्ञानप्रसादादित्युक्तं, तद्विशदयति- **नायमिति ।**

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।। ३ ।।**

मेधा प्रज्ञाविशेषः । अयमात्मा भक्तिहीनप्रवचनादिना न लभ्यः न साक्षात्कर्तुं शक्यः, अपि तु यं भक्तमेष आत्मा वृणुते स्वीकरोति, यस्मै प्रसीदतीति यावत्, तेनैव प्रसादविषयेणैव लभ्यः । तद्व्यनक्ति - तस्य स्वप्रसादविषयस्यैष प्रसन्नः आत्मा स्वां तनूं विवृणुते प्रकाशयतीति । तस्यैवापरोक्षविषयो भवतीत्यर्थः ।। ३ ।।

तर्हि प्रवचनादेर्वैयर्थ्यमित्यत आह- **नायमिति ।।**

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाऽप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ।। ४ ।।**

बलहीनेन श्रवणमननभक्त्यादिबलहीनेन । प्रमादाद्भगवद्विस्मरणादि-रूपात् । दृष्टान्तार्थमेतदुक्तिः । अलिङ्गात् लिङ्गोपलक्षितप्रमाणानुक्तात् तपसोऽपीत्यर्थः । तर्हि केन लभ्य इत्यत आह - **एतैरिति ।** भक्त्याद्युपेत-श्रवणादिरूपैरुपायैः विद्वान् ज्ञानी यस्तु यतते साक्षात्काराय[1] तस्यैष आत्मा ब्रह्मधाम प्रागुक्तदिशा मुख्यवायुं विशते प्रविशति । यस्त्वेतैरुपायैः विद्वान् भूत्वा पुनर्ब्रह्मज्ञानाय यत्नवानास्ते तस्मिन् पुरुषे स्थितमुख्यवायौ विद्यमान एव भगवान् वायुद्वारा तस्य ज्ञानदीपनं करोतीति ज्ञान-दीपनस्याऽगन्तुकत्वेन हेतुना तदपेक्षया तस्य ब्रह्मधाम वायुं विशत इत्यु-च्यते । यथा पिशाचाविष्टपुरुषे तस्मिन् सदा स्थितोऽपि मन्त्रादिभिराविष्टः पिशाच इति व्यवहारस्तथेति भावः ।। ४ ।।

---

१. तद्दृष्ट्ये क.

आत्मज्ञानमहिमानमाह- **सम्प्राप्यैनमिति ॥**

**सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।**
**ते सर्वगं सवर्तः प्राप्य धीरा मुक्तात्मानः सर्वमेवापियन्ति ॥ ५ ॥**

ज्ञानतृप्ता ज्ञानेन तृप्ताः ऋषयः एनं भगवन्तं सम्प्रप्य कृतात्मानः कृतकृत्या, वीतरागाः प्रशान्ताः विषयोपरता भवन्ति । न केवलमेतावदेव, किन्तु ते धीरास्सर्वतो देहादिबन्धान्मुक्तात्मानस्सन्तस्सर्वगं भगवन्तं प्राप्य सर्वमेव गुणपूर्णं भगवन्तमेवापियन्ति इतरैरज्ञेयतया प्रविशन्ति । प्रविश्य चेच्छयाऽन्तर्बहिस्सञ्चरन्तो भोगान् भुञ्जाना आसत इत्यर्थः ॥ ५ ॥

ज्ञानानन्तरमेव मुक्ता भवन्ति किमित्यतो नेत्याह- **वेदान्तेति ।**

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ ६ ॥**

वेदानामन्तो निर्णयो यस्मात्तस्मान्मीमांसाशास्त्राज्जनितेन विज्ञानेन सुनिश्चितार्था सम्यङ्निर्णीतार्था भगवति सर्वकर्मणां समर्पणाख्यसंन्यास-रूपयोगादुपायाच्छुद्धसत्त्वाः, यतयः प्रयत्नशीलाः ये ते सर्वे ब्रह्मलोकेषु सत्यलोकेषु, स्थित्वेति शेषः । स्थानबाहुल्याद्बहुवचनं, परान्तकाले, परेति ब्रह्मणः शतायुषो नाम, तस्यान्तकाले परामृतात् प्रकृतिबन्धात् परिमुच्यन्ति परिमुच्यन्ते मुक्ता भवन्तीति । तदुक्तं सूत्रे- 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र.सू.४-३-५) इति । एतच्च प्रतीकेषु ब्रह्मध्यातृपरम् । अप्रतीकालम्बना ये व्याप्तदर्शिनस्ते तु वैकुण्ठादिलोकेऽमुक्तस्थाने स्थितं भगवन्तमेव प्राप्य तत्र स्थित्वा, परान्तकालसमये पुनः सत्यलोकं प्राप्य तेन सह मुच्यन्ते । तदाह सूत्रे- 'परं जैमिनिर्मुख्यत्वात्' (ब्र.सू.४-३-१२) इति ॥ ६ ॥

मुक्तिप्रकारमाह- **गता इति ॥**

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

प्रतिष्ठाः संसारिणां प्रतिष्ठा नियामकाः कलाः कलाभिमानिनः पञ्चदशदेवाः गता मुक्ताः । यस्य जीवस्य संसारे नियामकतया स्थितास्ताः कलादेवतास्तज्जीवमुक्त्यवसरे मुक्ताः सत्यो मुक्तस्यापि तस्य नियामिका इति तात्पर्यार्थः । पञ्चदशकलास्तु, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' (षट्प्रश्न. ६.६) इति षट्प्रश्नोक्तदिशा ध्येयाः । तदभिमानिदेवताश्च 'कर्मेति पुष्करः प्रोक्तः' (ष.भा. ६.६) इत्यादि-षट्प्रश्नभाष्योक्तदिशा प्राणवाणीविनायकप्राणसुतमरुत्पावकबुधशनीन्द्र-रुद्रचन्द्रवरुणवह्निस्वाहापर्जन्योषाः क्रमाज्ज्ञेयाः । उक्तं हि- 'यत्र मूर्तिधराः कलाः' इत्येकादशस्कन्धतात्पर्ये सप्तदशाध्याये 'कलाः प्राणाद्याः, स प्राणमसृजत प्राणाच्छ्रद्धां' इत्यादि । यद्यपि कर्माभिमानिना पुष्करेण सह षोडशकलाः, तथाऽपि तस्य कर्माणीति पृथगुक्तेः पञ्चदशत्वम् । पृथगुक्ति-कृत्यं भाष्ये व्यक्तम् । सर्वे देवाश्च कलादेवेभ्योऽन्ये सर्वे देवाश्च प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु स्थितास्तिष्ठन्ति । कर्माणि कर्माभिमानी पुष्करः, विज्ञानमयो विज्ञानरूप आत्मा जीवश्च अव्यये नाशरहिते परे परमात्मनि, सर्वे षोडशकलादेवताः जीवाश्चेत्येते सर्वे मुक्ताः सन्त एकीभवन्ति परमात्मानं प्रविश्य तेन सह एकस्थानस्थिता भवन्तीति वा, तद्बुद्धिविषयीकृतार्थविषयकबुद्धिमन्तो न तु तद्विरुद्धार्थविषयकमति-युक्ता इति वाऽर्थः ॥ ७ ॥

एकीभावप्रकारमेव दृष्टान्तेनाऽह- **यथा नद्य इति ॥**

**यथा नद्यः स्यन्दमानाः समुद्रायणाः**
**समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय।**
**तथा विद्वान्नामरूपाद् विमुक्तः**
**परात् परं पुरुषमुपैति दिव्यम्॥ ८॥**

स्यन्दमानाः प्रस्रवमाणाः, समुद्र अयनं यासां ताः समुद्रायणाः नद्यः समुद्रं प्राप्य नामरूपे स्वकीयं गङ्गागोदावर्यादि नाम गङ्गादिरूपं चाविहाय अत्यक्त्वा, [१]मणीवेत्यादाविवाप्रगृह्यत्वम्, यद्वा, साधारणचेतनैरज्ञेयनामरूपत्वान्नामरूपे विहायेति वा, अस्तमदर्शनं गच्छन्ति यथा तथा विद्वान् ब्रह्मज्ञानी नामरूपाद्विमुक्तोऽमुक्तः नामरूपयुक्त एव, विप्रियमित्यत्रेव विशब्दोऽत्र निषेधार्थः। यद्वा, संसारिभिरज्ञेयनामरूपत्वाद्विमुक्तो विमुक्त इव स्थितः परात्परं सर्वोत्तमं दिव्यमद्भुतं पुरुषं भगवन्तमुपैति प्राप्नोति ॥८॥

एतदुपनिषदर्थज्ञानिनः फलमाह- स य इति॥

**स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति।**
**नास्याब्रह्मवित् कुले भवति॥ ९॥**

योऽधिकारी एतत् परमं ब्रह्म वेद स ब्रह्मैव ज्ञानानन्दादिस्वोचितगुणैर्बृंहित एव भवति, न परब्रह्मतामाप्नोति। अस्य कुले वंशेऽब्रह्मवित् ब्रह्मानभिज्ञो न भवति॥ ९॥

**तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो**
**विमुक्तोऽमृतो भवति॥ १०॥**

---

१. मणीवादेर्नेत्यप्रगृह्यत्वम् क.

तरति शोकं तरति पाप्मानम् । गुहाग्रन्थिभ्यः हृदयस्थाविद्याकामकर्मादिबन्धाद्विमुक्तोऽमृतो भवति ॥ १० ॥

अस्या उपनिषदः कोऽधिकारीत्यतस्तं श्लोकोदाहरणेनाऽह- **तदेष श्लोक इति** ॥

**तदेष श्लोकः** ।

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षीञ्छ्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद् यैस्तु चीर्णम् ॥ ११ ॥**

तत्रैतद्विद्याधिकारविषये वक्ष्यमाणश्लोको भवतीत्यर्थः । श्रोत्रियाः छन्दोऽध्येतारः । ब्रह्मनिष्ठाः ब्रह्मणि भक्तिमन्तः । स्वयं जुह्वतः अग्निहोत्रादिकमनुतिष्ठन्तः । एकऋषीन् प्रधानऋषीन् श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तः । यैस्तु शिरोव्रतं विधिवच्चीर्णं, शिरोव्रतं नाम व्रतविशेषः, तेषामेवैतां ब्रह्मविद्यां ब्रह्मज्ञप्तिहेतुभूतामुपनिषदं वदेत आविष्कारेण वदेत स्पष्टम् उपदिशेदित्यर्थः । भाषनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद इति भासनार्थे आत्मनेपदम् ॥ ११ ॥

स्वोक्तं प्रमेयमृषिणाप्युक्तमित्याह- **तदेतदिति** ॥

**तदेतत् सत्यमृषिरङ्गिराः पुरोवाच । नैतदचीर्णव्रतोऽधीते ॥**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ १२ ॥**

**॥ इति श्रीमदाथर्वणोपनिषत् समाप्ता ॥ १२ ॥**

अङ्गिरा ऋषिः एतन्मयोपदिष्टं प्रमेयमचीर्णव्रतः पुमान् नाधीते नावधारयेत् इति पुरोवाच । तदेतदृषिणोक्तं सत्यं यथार्थमित्यर्थः । वेदपुरुषः

उपनिषदं प्रागुक्तानेकऋषिप्रणामेन समापयति- **नम इति** ।। आदराद् द्विरुक्तिः ।। १२ ।।

**समस्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ।।**
**आथर्वणोपनिषदो भाष्याद्युक्तार्थसङ्ग्रहः ।**
**राघवेन्द्रेण यतिना कृतो माधवतुष्टये ।।**

**।। इति श्रीराघवेन्द्रतीर्थपूज्यपादविरचितः**
**आथर्वणोपनिषत्खण्डार्थः सम्पूर्णः ।।**

# माण्डूकोपनिषद्भाष्यम्

हरिः ओम्

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

## उपनिषत्

(प्रणवप्रतिपाद्यं ब्रह्म)

ओ३म् ।। ओमित्येतदक्षरम् । इदं सर्वम् । तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।। १ ।।

## भाष्यम्

ॐ।। पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्द्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ।।

मण्डूकरूपिणा वरुणेन चतूरूपो नारायणः स्तूयते ।

'ध्यायन्नारायणं देवं प्रणवेन समाहितः ।
मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम्' इति पाद्मे ।।

'ओमित्युक्तं तु यद् ब्रह्म तदक्षरमुदाहृतम् ।
ओतमत्र जगद् यस्मादों तस्माद् भगवान् हरिः ।।

'तदिदं गुणपूर्त्यैव सर्वमित्येव शब्दितम् ।
भाविभूतभवत्कालेष्वेकरूपतया हरिः ।
सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्त्तिता ।।'

इति बृहत्संहितायाम् ।।

'ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः ।
सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित् ।।'

इति नैर्गुण्ये ।।

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम्। त्रिकालातीतत्वं च तस्यैव । प्रकृतेरपि त्रिकालातीतत्वं विद्यत इति अन्यदिति विशेषणम् ॥

## उपनिषत्

सर्वं ह्येतद् ब्रह्म। अयमात्मा ब्रह्म ॥ २ ॥

## भाष्यम्

'परमं यो महद् ब्रह्म', 'तदेव ब्रह्म परमं कवीनाम्', 'पूर्णमदः पूर्णमिदम्' इत्यादिषु प्रसिद्धं च ब्रह्मणः परिपूर्णत्वमित्याह– **'सर्वं ह्येतद् ब्रह्म'** इति ।

श्रीब्रह्मरुद्रादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते, जीवानामस्वातन्त्र्यदर्शनात्, सोऽपि स एवेति दर्शयति– **'अयमात्मा ब्रह्म'** इति ।

'पूर्णस्तु हरिरेवैको नान्यत् पूर्ण्णं कदाचन ।
विना च प्रकृतिं नान्यत् कालातीतं परात्मनः ॥

कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः ।
अभिमानात्तु जीवानां न कालातीतता भवेत् ॥

मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः ।
पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः ॥

'सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
'आदानादनकर्त्तृत्वादात्मा तेषामगोचरः ।
'इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम् ॥'

इति हरिवंशेषु ॥

## श्रीव्यासतीर्थविरचिता टीका

अनादिबन्धविध्वंसं लब्ध्वा यज्ज्ञानतः पुमान् ।
मोदते निजरूपेण तं वन्दे विष्णुमादरात् ॥ १ ॥
नेत्राग्रादिस्थितोऽवस्था जाग्रदाद्याः प्रवर्तयन् ।
विश्वादिरूपी भगवान्यस्तं वन्दे श्रियः पतिम् ॥ २ ॥

**भाष्यार्थः-**

इहामुत्रफलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तीष्टावाप्तिसाधनभगवत्प्रतिपादिकां माण्डूकोपनिषदं यथावद् व्याचिख्यासुः भगवान् आनन्दतीर्थमुनिः समीहितसमाप्त्यादिसाधनतयाऽवसितं मङ्गलाचरणमादौ कार्यमिति सूचयन् तदुक्तगुणवन्तमुपश्लोकयन् प्रणमति- **पूर्णेति** ॥ 'आनन्दमय' इति पूर्णानन्दत्वमुक्तम् । 'एष सर्वज्ञः' इति ज्ञानस्वरूपत्वमुक्तम् । 'एष योनिः सर्वस्य' इति उक्तसर्वसृष्ट्युपयुक्तत्वेन पूर्णशक्तित्वं च सिद्धम् । 'त्रिकालातीतम्' इति नित्यत्वम् । 'प्रणवोऽव्ययम्' इत्यव्ययत्वम् । 'स्थूलभुक् प्रतिविविक्तभुगानन्दभुक्' इति सर्वभोक्तृत्वम् । 'तुरीयं पदमश्नुते' इति पदत्वम् ।

'यो ह वा अविदितार्षच्छन्दोदेवता' इत्यादिना ऋष्यादीनज्ञात्वा विद्याभ्यासिनः अनर्थोक्तेः कियतो वाक्यत्वेन च्छन्दोऽभावात् शिष्टस्यानुष्टुप्त्वावगमसम्भवात् ऋषिदेवते आह- **मण्डूकेति** ॥ जाग्रदाद्यवस्थाभेदलक्षणो विश्वादिरूपो जीवोऽत्रोच्यत इत्येतन्निरासाय 'चतूरूपो नारायणः' इति । नन्वस्या मण्डूको नामकश्चिदृषिरिति प्रतीयते । तत्कथं वरुण ऋषिरित्यत उक्तम्- **मण्डूकरूपिणेति** ॥ अस्या मण्डूकरूपी वरुणऋषिर्हरिर्देवतेत्येतत्कुत इत्यत आह- **ध्यायन्निति** ॥ प्रणवेन प्रणवाद्ययोपनिषदा । विषयविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तये

सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम्। त्रिकालातीतत्वं च तस्यैव । प्रकृतेरपि त्रिकालातीतत्वं विद्यत इति अन्यदिति विशेषणम् ॥

## उपनिषत्

सर्वं ह्येतद् ब्रह्म। अयमात्मा ब्रह्म ॥ २ ॥

## भाष्यम्

'परमं यो महद् ब्रह्म','तदेव ब्रह्म परमं कवीनाम्', 'पूर्णमदः पूर्णमिदम्' इत्यादिषु प्रसिद्धं च ब्रह्मणः परिपूर्णत्वमित्याह– **'सर्वं ह्येतद् ब्रह्म'** इति ।

श्रीब्रह्मरुद्रादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते, जीवानामस्वातन्त्र्यदर्शनात्, सोऽपि स एवेति दर्शयति– **'अयमात्मा ब्रह्म'** इति ।

'पूर्णस्तु हरिरेवैको नान्यत् पूर्ण्णं कदाचन ।
विना च प्रकृतिं नान्यत् कालातीतं परात्मनः ॥

कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः ।
अभिमानात्तु जीवानां न कालातीतता भवेत् ॥

मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः ।
पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः ॥

'सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
'आदानादनकर्त्तृत्वादात्मा तेषामगोचरः ।
'इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम् ॥'

इति हरिवंशेषु ॥

## श्रीव्यासतीर्थविरचिता टीका

**अनादिबन्धविध्वंसं लब्ध्वा यज्ज्ञानतः पुमान्।**
**मोदते निजरूपेण तं वन्दे विष्णुमादरात्॥ १॥**
**नेत्राग्रादिस्थितोऽवस्था जाग्रदाद्याः प्रवर्तयन्।**
**विश्वादिरूपी भगवान्यस्तं वन्दे श्रियः पतिम्॥ २॥**

**भाष्यार्थः-**

इहामुत्रफलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तीष्टावाप्तिसाधनभगवत्प्रतिपादिकां माण्डूकोपनिषदं यथावद् व्याचिख्यासुः भगवान् आनन्दतीर्थमुनिः समीहितसमाप्त्यादिसाधनतयाऽवसितं मङ्गलाचरणमादौ कार्यमिति सूचयन् तदुक्तगुणवन्तमुपश्लोकयन् प्रणमति- **पूर्णेति**॥ 'आनन्दमय' इति पूर्णानन्दत्वमुक्तम्। 'एष सर्वज्ञः' इति ज्ञानस्वरूपत्वमुक्तम्। 'एष योनिः सर्वस्य' इति उक्तसर्वसृष्ट्युपयुक्तत्वेन पूर्णशक्तित्वं च सिद्धम्। 'त्रिकालातीतम्' इति नित्यत्वम्। 'प्रणवोऽव्ययम्' इत्यव्ययत्वम्। 'स्थूलभुक् प्रतिविविक्तभुगानन्दभुक्' इति सर्वभोक्तृत्वम्। 'तुरीयं पदमश्नुते' इति पदत्वम्।

'यो ह वा अविदितार्षेच्छन्दोदेवता' इत्यादिना ऋष्यादीनज्ञात्वा विद्याभ्यासिनः अनर्थोक्तेः कियतो वाक्यत्वेन च्छन्दोऽभावात् शिष्टस्यानुष्टुप्त्वावगमसम्भवात् ऋषिदेवते आह- **मण्डूकेति**॥ जाग्रदाद्यवस्थाभेदलक्षणो विश्वादिरूपो जीवोऽत्रोच्यत इत्येतन्निरासाय 'चतूरूपो नारायणः' इति। नन्वस्या मण्डूको नामकश्चिदृषिरिति प्रतीयते। तत्कथं वरुण ऋषिरित्यत उक्तम्- **मण्डूकरूपिणेति**॥ अस्या मण्डूकरूपी वरुणऋषिर्हरिर्देवतेत्येतत्कुत इत्यत आह- **ध्यायन्निति**॥ प्रणवेन प्रणवाद्ययोपनिषदा। विषयविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तये

परमानन्दाऽवाप्तये च समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपास्तिमाह- **ओमित्यादिकया समग्रोपनिषदा ॥** ओमिति यत्प्रणवप्रतिपाद्यं एतदक्षरं इदं सर्वं पूर्णं प्रणवस्याभिधेयमुक्तं प्रवृत्तिनिमित्तं किमिति जिज्ञासायां त्रिकालातीतत्वमित्याह- **तस्येत्यादिना ॥** उपव्याख्यानं उपपन्नं व्याख्यानम् । अक्षरं भूतं भवद्भविष्यच्चेति योजना ।

इदं सर्वमित्युक्तं पूर्णत्वमक्षरादन्यस्य नेत्याह- **सर्वमोङ्कार एवेति ॥** ओङ्कार एव सर्वमिति योजना । भूतं भवद्भविष्यच्चेत्युक्तं प्रवृत्तिनिमित्तं त्रिकालातीतत्वं चाक्षरादन्यस्य नेत्याह- **यच्चेत्यादिना ॥**

ओमित्येतदक्षरं प्रणवाख्यमिदं सर्वं जगदित्यन्यथा प्रतीतिं निवारयन् व्याकरोति- **ओमिति ॥** तस्योपव्याख्यानमिति प्रस्ताव्य भूतं भवद्भविष्यदित्युक्तं त्रिकालातीतत्वमुपलक्षणत्वेन प्रणवो बह्वर्थ इति भावेन भाष्यकारः स्वयमर्थान्तरमाह- **ओतमिति ॥** प्रतीतार्थो न चेत्तर्हि 'इदं सर्वम्' इत्ययुक्तमित्यतस्तद्व्याचष्टे- **तदिदमिति ॥** भूतं भवद्भविष्यदिति वाक्यं ब्रह्मणो नित्यत्वमात्रप्रतिपादकत्वप्रतीतिं निवारयन् व्याचष्टे- **भावीति ॥** भाविभूतभवत्कालेष्वित्यस्य प्रतिपदम्- **सर्वदेति ॥** तथा च सर्वदैवैकरूपतया नित्य इत्यादि योजना ।

इदं सर्वमित्यनेनैकार्थत्वप्रतीतिं निवारयन् सर्वमोङ्कार एवेत्येतत्प्रमाणमुदाहृत्य स्ववचनेन व्याचष्टे- **ओमिति ॥** यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एवेत्येतद्भूतं भवद्भविष्यदित्यनेनैवं सर्वदैकप्रकारसत्वस्योक्तत्वात् व्यर्थमिति प्रतीतिं निवारयन् व्याचष्टे- **त्रिकालेति ॥** यच्च त्रिकालातीतमित्यनुक्त्वा अन्यदिति विशेषणं कस्य व्युदासायेत्यत आह- **प्रकृतेरिति ॥** प्रकृतेश्चेतनप्रकृतेः ॥ १ ॥

भाष्यार्थः -

'सर्वं ह्येतद् ब्रह्म' इति वाक्यम् 'इदं सर्वम्' इत्यनेनैकार्थत्वप्रतीतिं निवारन् हिशब्दसूचितप्रमाणान् उदाहृत्य तात्पर्यकथनपूर्वमवतारयति- **परममिति** ॥ 'अयमात्मा ब्रह्म' इति वाक्यं जीवस्य ब्रह्मात्मकतापरत्व-प्रतीतिं निवारयंस्तन्निवर्त्यामाशङ्कां च प्रदर्शयन् व्याकुर्वन्नेवावतारयति- **श्रीब्रह्मेति** ॥ आदानादिकर्तेत्यात्मशब्दार्थमाह । प्रतीयतेऽनुमानेन । जीवानामादानादिकर्तृत्वेन प्रेरकः कुतोऽनुमेय इत्यत उक्तं **जीवाना-मस्वातन्त्र्यदर्शनादिति** । इष्टानिष्टकार्येष्विति शेषः । हरिरेव पूर्णः त्रिकालातीतश्च । स एव रमाद्यन्तर्गतःसन् प्रेरकश्चेत्येतत्प्रमाणेन दृढयति- **पूर्ण इति** ॥ 'सर्वं ओंकार एव' इत्यत्र पूर्णःयच्चान्यत् त्रिकालातीतमित्यत्र विना च प्रकृतिं नान्यत्कालातीतमिति योज्यम् ।

ननु कथं प्रकृतिं विना परमात्मनोऽन्यन्नकालातीतमिति कालादेः कालातीतत्वादित्यत आह- **कालश्चेति** ॥ प्रकृत्यात्मानश्चेतनप्रकृत्यभि-मानवन्तः जडप्रकृतयश्च । अयःशलाकावद्दीर्घस्यैकस्यैव कालस्याभावा-न्निमेषादेश्च 'सर्वे निमेषाः जज्ञिरे' इत्यादिश्रुतेः उत्पत्तिभावात् सर्वस्यापि जडत्वेन विक्रियासम्भवेन न कालातीतत्वमिति भावः । जीवचेतनानां कालातीतत्वमस्ति नन्वित्यत आह- **अभिमानादिति** ॥ शरीराद्यभिमान-कृतविक्रियासद्भावान्न जीवानां कालातीतता भवेदित्यर्थः । ननु मुक्तानां अस्ति कालातीतता तेषां शरीराद्यभावेन तदभिमानकृतविक्रियाऽभावा-दित्यत आह- **मुक्तानामपीति** ॥ सर्वं ह्येतद् ब्रह्म' इत्युक्तं सदा पूर्णत्वं च सर्ववेदतो विष्णोरेव प्रसिद्धमिति योजना । सोऽयम्= आत्मेत्युक्तः परमात्मा, रमाब्रह्मरुद्रानन्तादिगः सदा । तेषां आदानादिकर्तृत्वादात्मा, अस्माकमगोचरः, सोऽयं विष्णुरिति च स्वोक्तदार्ढ्यायाभ्यासः ॥ २ ॥

**खण्डार्थः -**

ब्रह्मणः पूर्णत्वं कुत इत्यतस्तत्र प्रमाणं सूचयन्नाह- **सर्वं ह्येतदिति** ॥ एतदक्षराख्यं ब्रह्म सर्वं पूर्णं हीति योजना ॥ १ ॥

ननु कथं ब्रह्माख्यो विष्णुरेव पूर्णस्त्रिकालातीत इति च । ब्रह्मादीनां नियामकस्यापि कस्यचित्पूर्णत्वत्रिकालातीतत्वयोः स्वीकर्तव्यत्वादित्यतः सोऽपि विष्णुरेवेत्याह- **अयमात्मा ब्रह्मेति** ॥ २ ॥

## अथ श्रीमद्वादिराजयतिविरचिता
## माण्डूकोपनिषद्भाष्यटिप्पणी
## प्रकाशिका

**ताराभिधेयस्ताराभहारालङ्कारभासुरः ।**
**सारात् सारो हयशिरास्तारयेद् दुस्तरादरात् ॥**
**कुर्वे सर्वेशमानम्य सर्वाभिमदभेदिनीम् ।**
**माण्डूकोपनिषद्भाष्यटीकां शोकापहारिणीम् ॥**

'एतदक्षरम्' इत्यत्र न क्षरतीत्यक्षरमिति व्युत्पत्त्याऽक्षरं नाशरहितमित्यर्थः । इदं च 'अक्षरं ब्रह्म परमं कूटस्थमचलं ध्रुवम्' इत्यादौ केवलमक्षरशब्देनापि ब्रह्म कीर्त्यते । तद्वर्णात्मकत्वात् नाक्षरपदवाच्यं, किन्तु 'ओमित्येतद् ब्रह्म' इत्युक्ते यथा ओङ्कारवाच्यत्वेन ओमिति शब्द्यते तथोक्तव्युत्पत्त्या अक्षरपदवाच्यत्वेनैवेति प्रदर्शनाय ओङ्कारेण सह सङ्ग्रहः । अत एव 'भूतं भवद् भविष्यद्' इति वक्ष्यमाणनित्यत्वस्य न गतार्थता ।

इदं सर्वमिति श्रुतिवाक्यस्यायमर्थः- इदमेतदुपनिषत्प्रतिपाद्यं सर्वं सर्वगुणपूर्णत्वात् सर्वशब्दवाच्यं ब्रह्मेत्यर्थः । ओमिति पदवाच्यं यद्वस्तु, अक्षरपदवाच्यं यद्वस्तु एतदिदं एतदुपनिषदा प्रतिपाद्यं सर्वं सर्वपदोक्तं ब्रह्म, न तु जीवादिरिति

योजना। सृ गताविति धातोः सर्वे गुणाः सरन्ति गच्छन्ति सर्वदा तिष्ठन्त्यत्रेति सर्वपदं सर्वगुणपूर्णत्ववाचकमिति। लोकेऽपि हि सर्वे पदार्था अर्थतया यत्पदे तिष्ठन्तीत्येतदेव खलु सर्वपदप्रवृत्तिनिमित्तम्। इयांस्तु विशेषः। लोके सर्वपदप्रयोक्तुः सारासारजडाजडपदार्थानां विवक्षितत्वात्त एव योग्यतया सम्बध्यन्ते। ब्रह्मण्युपनिषदा प्रयुज्यमानसर्वशब्दस्य ब्रह्मनिष्ठा अपरिमितकल्याणगुणा एव योग्यतया सम्बध्यन्त इति। तस्मान्नापूर्वमिदं प्रमेयम्। 'अव प्रवेशने' इति धातोः सर्वे शोभना गुणाः यस्मिन् ब्रह्मणि ओताः प्रविष्टाः सर्वदा ब्रह्मण्येव तिष्ठन्ति, न ततोऽन्यत्र गच्छन्तीत्यर्थः, इति स विष्णुरोमित्युच्यते। अन्यथा ओङ्कारसर्वशब्दयोरैकार्थ्यं न स्यात्। यथाश्रुतार्थस्तु ओमित्येतदक्षरस्य सकलजगदात्मकत्वं सर्वजनानुभवविरुद्धत्वान्नाङ्गीकर्तुमुचितम्। जीवस्य ओङ्कारशब्दाभिधेयत्वाङ्गीकारेऽप्युक्तदोषानिस्ताराद्व्यर्थः परस्याऽऽयासः। एकैकजीवस्यापि सकलजडाजडप्रपञ्चात्मकत्वस्य स्वमतेऽप्यभावादनुपपन्न एवेति ज्ञेयम्।

'यच्चान्यत् त्रिकालातीतम्' इति वक्ष्यमाणत्वात् 'भूतं भवद्भविष्यत्' इति कालत्रयसम्बन्धित्वोक्त्याऽपि अतीतघटादिपदार्थवत् त्रिका-वर्तिनस्तत्कालमात्रवर्तित्वाभावेन पूर्वकालातीतत्वम्। वर्तमानघटादिवत् त्रिकालवर्तिनो वर्तमानकालमात्रसम्बन्धित्वाभावेन वर्तमानकालातीतत्वम्। एवं भाविघटादिवत् त्रिकालवर्तिनः पदार्थस्य भाविकालमात्रवर्तित्वस्याप्यभावेन त्रिकालातीतत्वम्। एवं प्राङ्नष्टघटवन्नाशवदपि न, नङ्क्ष्यमाणवर्तमानघटवन्नाशवदपि न, भाविघटवत् प्रागभाववदपि नेति प्रागभावप्रध्वंसविधुरतया वर्तमानत्वाख्यं परमनित्यत्वमेव सिद्धम्। इदं च कालत्रयेऽप्योतत्वादोङ्कारपदेनाप्युच्यत इति तस्योपव्याख्यानमित्युक्तम्। इदं च नापूर्वम्। यथा पणत्रयवानेकैकपणवतः त्रीनपि पुरुषानत्येति तद्वदिति भावः। तर्हि कालत्रयसम्बन्धीत्येव कुतो नोच्यत इति चेन्न। मिलितत्वात् त्रयाणां घटादीनां

प्रागुक्तरीत्या कालत्रयसम्बन्धित्ववद्ब्रह्मणोऽपि रूपबाहुल्येन न कालत्रयसम्बन्धित्वमिति सूचनार्थम्। 'यत् त्रिकालातीतं तत्सर्वमोङ्कार एव' इत्युक्ते प्रकृतेरप्योङ्कारात्मकत्वं स्यादतोऽन्यदित्युक्तम्। ननु प्रकृतेरन्यच्च कालाकाशादि त्रिकालातीतमस्ति । तस्योप्योङ्कारशब्दवाच्यत्वं स्यादित्यत उक्तं भाष्ये-**कालश्चैव दिश इत्यादि ॥** जडं वस्तु प्रकृतिर्वा प्राकृतं वा नान्यत्। अतो कालादिकमपि महदादिवद्विकाराभावे प्राकृतत्वायोगात् प्रकृत्यात्मकमेव । विशिष्य व्यवहारस्तु पृथिव्यात्मकसप्तद्वीपपर्वतादीनामिव किञ्चिद्विशेषमाश्रित्यैवेति ज्ञेयम्। तर्हि प्रकृतेरपि कालातीतत्वादोङ्कारपदवाच्यत्वं स्यादिति न शङ्कनीयम्। प्रकृतेस्त्रिकालातीतत्वं भगवतः कालातीतत्वाद्विलक्षणमेव । चित्प्रकृत्यादीनां पराधीनविशेषावाप्तिरूपविकारसद्भावात् केनापि प्रकारेण विकाररहिततया त्रिकालातीतत्वस्य भगवत्येव सम्भवात्। ओमिति पदं च मुख्ये सत्यमुख्याऽयोगात् सर्वपदोक्तगुणपूर्त्यसम्भवाच्च नान्यस्य वाचकम्। सर्वथाऽनित्यमहीमहीधरादिवत् प्रकृतिर्नानित्या, किन्त्वेकेन रूपेण तस्याः नित्यत्वमस्तीति सूचनाय जडप्रकृतेः प्रागविवेचितकालातीतत्वमात्राङ्गीकार इति ज्ञेयम्। तदुक्तम्- 'पुराणाद्याः कालः प्रकृतिरेव च। नित्यानित्यं त्रिधा प्रोक्तम्' (तत्त्व.) इति।

ननु रमायां ब्रह्मादिजीवेषु च आदानादनादावस्वातन्त्र्यदर्शनेन कश्चिन्नियामको वाच्यः । कथमन्यथा भुञ्जानः स्वजिह्वामेव खादेत्, स्वाऽनपेक्षितदुःखं च कथमुपादद्यात् । स च नियामकः अनाद्यनन्तकालीनजीवनियामकत्वात् स्वतन्त्रत्वाच्च भगवानिव मुख्यः कालातीत इति चेत्, सत्यम्।

**'यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।**
**तैस्तैरतुल्यातिशयैस्तिर्यग्योनिष्वसङ्गतैः ।'**

इति, 'तत् सृष्ट्वा तदेवानु प्राविशत्' इति स्मृतिश्रुतिबलेन सोऽपि भगवानेवेत्याह- **अयमात्मा ब्रह्मेति** ॥

आदानादनकर्तृत्वादित्यत्र जीवानां यदादानं यच्चादनं तत्राऽनपेक्षितदुःखादेरादाने अनपेक्षितविषादेरदने च स्वातन्त्र्यदर्शनादित्यर्थः ॥ १.२ ॥

## श्रीश्रीनिवासतीर्थविरचिता पदार्थदीपिका

**चक्षुरादिस्थितो यो हि जाग्रदादिप्रवर्तकः ।**
**विश्वादिरूपी तं व्यासं वन्देऽहं मध्ववल्लभम् ॥ १ ॥**
**श्रीमदानन्दतीर्थाञ्जयार्यादींश्च सन्मुनीन् ।**
**नमामि परया भक्त्या स्मृत्या सर्वेष्टदायकान् ॥ २ ॥**
**येन वेदान्तभाष्याणि विवृतानि महात्मना ।**
**तं वन्दे व्यासतीर्थाख्यं जयराजनिषेवकम् ॥ ३ ॥**
**प्रणम्य यादवाचार्यगुरूणां पादपङ्कजे ।**
**माण्डूकोपनिषद्भाष्यविवृतिः क्रियते मया ॥ ४ ॥**

इहामुत्रफलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः आत्यन्तिकाऽनिष्टनिवृत्तीष्टप्राप्त्यर्थं तत्साधनभगवत्सेवारूपप्रतिपादनाय प्रवृत्तापीयं माण्डूकोपनिषदन्यैरन्यथा व्याख्यातत्वेन तज्ज्ञापनासमर्थेति मन्यमानो भगवानाचार्यस्तां यथावद् व्याचिख्यासुरभीष्टसमाप्त्याद्युपायतया शिष्टाचारपरम्पराऽवगतमेतदुपनिषत्प्रतिपाद्यगुणवद्भगवत्स्तुतिनतिरूपं मङ्गलं गुणप्रधानभावेन शिष्यशिक्षार्थमादावुपनिबध्नाति- **पूर्णेति** ॥ अहं विष्णुं विश्वादिरूपिणं नित्यं सदा वन्द इति क्रियाकारकसम्बन्धः । 'नित्यं वन्दे' इत्यनेन न मम नारायणवन्दनं प्रत्यूहविराहादिप्रयोजनोद्देशेन किन्तु स्वभावत एवेति सूचयति । पूर्वटीकाकारास्तु नित्यत्वस्य भगवद्विशेषणत्व-

मङ्गीकृत्य अव्ययपदेन पुनरुक्तिपरिहाराय नित्यमनादिमव्ययं नाशरहित-मिति वा नित्यं स्वरूपतः अव्ययं देहहान्यादिरहितमिति वाऽर्थः । अतः न– पुनरुक्तिरिति व्याचक्षते ।

ननु 'आदेहश्चेदसर्वज्ञः शिलाकाष्टादिवत्सदा । देही चेदन्तवानेव 'यज्ञदत्तनिदर्शनात्' इति शङ्कायां द्वितीयं पक्षमङ्गीकृत्य तत्रोक्तदोष-परिहारायोक्तम्- **पूर्णानन्दज्ञानशक्तिस्वरूपमव्ययमिति** ।। पूर्णानन्द-ज्ञानशक्तय एव स्वं स्वकीयं रूपं देहो यस्यासौ तथोक्तः । अत एव अव्ययं नाशशून्यम् । कर्मापादितजडदेहस्यैव तदापादकत्वात् । विष्णुदेहस्य चातथात्वादिति भावः । अत्रानन्दस्य पूर्णत्वं नाम दुःखासम्भिन्नत्वं अपरिच्छिन्नत्वं च । ज्ञानस्य पूर्णत्वं स्वपरगताशेषविशेषविषयकत्वम् । शक्तेः पूर्णत्वमप्रतिबद्धत्वमिति द्रष्टव्यम् । वक्ष्यते च आनन्दमय इति पूर्णानन्दत्वम् । एष सर्वज्ञ इति पूर्णज्ञानत्वम् । एष योनिः सर्वस्येति सर्वस्रष्टृत्वोक्त्याऽर्थात्पूर्णशक्तित्वम् । प्रभुरव्यय इति प्रणवोऽव्यय इत्यव्ययत्वं चेति द्रष्टव्यम् ।। **चतुर्धेति** ।। विश्वादिरूपेण चतुर्धा नेत्रादिस्थानेषु स्थित्वा स्थूलादिसर्वविषयभोक्तारमित्यर्थः । वक्ष्यते चैतत्स्थूलभुक्प्रविविक्तभुगानन्दभुगिति ।

ननु तुरीयस्य भोगानुक्तेः 'चतुर्धा सर्वभोक्तारम्' इति कथमुक्तमिति चेन्न । आनन्दभुगित्यस्य तुरीयेऽपि ग्राह्यत्वादित्याशयात् । नन्वेवम्भूतस्य विष्णोर्वन्दनेन किं फलमित्याशङ्कायां तत्प्राप्तिरेवेत्याशयेनोक्तम्- **पद-मिति** ।। पद्यत इति पदं प्राप्यमित्यर्थः । अर्चिरादेर्मार्गस्य कार्यब्रह्मणश्च ज्ञानिप्राप्यत्वात् कथं विष्णोरेव पदत्वमित्यत उक्तम्- **परमिति** ।। एतदपि 'तुरीयं पदमश्नुते इत्यनेनोक्तं । अनेन विश्वादिरूपी विष्णुर्विषयः । तत्प्राप्तिः प्रयोजनम् । योग्यस्तदिच्छुरेवाधिकारी । यथायोग्यं सम्बन्ध इति

सूचितम् । तेन निर्विषयत्वादिप्रयुक्तानारम्भणीयत्वशङ्का निरस्तेति ज्ञातव्यम् ।

ननु 'यो ह वा अविदितार्षेच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवामीयते पापीयान् भवति' इति श्रुतौ ऋष्याद्यज्ञात्वा विद्याभ्यासिनोऽनर्थोक्तेस्तत्परिज्ञानमावश्यकम् । तत्र कियतो भागस्य छन्दोबद्धत्वं नास्त्येव । तदुपनिबद्धत्वेऽपि अक्षरपरिगणनयाऽनुष्टुप्त्वावगमसम्भवाद् ब्राह्मणपदोपलक्षितार्थज्ञानस्य व्याख्यानादेव सिद्धेः 'ऋषिदेवते आह भगवान् भाष्यकारः- **मण्डूकरूपिणा वरुणेनेत्यादिना** ॥ नन्वस्या उपनिषदो वरुणऋषिरित्ययुक्तम् । माण्डूकोपनिषदिति प्रसिद्धिपर्यालोचनयैव मण्डूकनामा कश्चिदृषिरिति प्रतीतेरित्यत उक्तम्- **मण्डूकरूपिणेति** ॥ अत्र जाग्रदाद्यवस्थाभेदभिन्नो विश्वादिरूपो जीव एवोच्यत इत्यपव्याख्याननिरासाय नारायण इत्युक्तम् ।

नन्वत्र विश्वादीनां चतुर्णां प्रतिपाद्यत्वाद्भगवतश्चैकमेवाद्वितीयमित्येकत्वोक्तेः कथमेतदित्यत उक्तम्-**चतूरूप इति** ॥ इममर्थं प्रमाणसम्वादेन दृढयति- **ध्यायन्निति** ॥ प्रणवेन प्रणवोपक्रमया 'ओमित्येतदक्षरम्' इत्यादिकया समग्रोपनिषदा तुष्टावेत्यन्वयः । चतूरूपमितिशेषः । ओमित्येतदक्षरमिदं सर्वम्' इति वाक्यं ओमित्येतदक्षरं ओमित्ययं वर्ण इति । यथाश्रुतप्रतीतेरोङ्कारस्य सर्वात्मकत्वाभावेनानुपपन्नतया ओमित्येतदक्षरप्रतिपाद्यं ब्रह्मैवेदं सर्वं जगदिति परेण व्याख्यातम् । तदसत् । 'विभूतिं प्रसवन्त्वन्य' इति ब्रह्मणः सर्वात्मकत्वस्य पूर्वपक्षत्वेनोक्तत्वात् प्रमाणविरोधाच्चेति भावेन वाक्यभेदमङ्गीकृत्य 'ओमित्येतदक्षरम्' इति वाक्यं तावद् व्याचष्टे- **ओमित्युक्तमित्यादिना** ॥ प्रणवस्याक्षरनामकं ब्रह्मैवाभिधेयं इत्युक्त्वा तस्य तत्र प्रवृत्तौ निमित्तं कथ्यते । तस्योपव्याख्यानं भूतं

भवद्भविष्यदितीति । तदुपलक्षणपरमिति सूचनाय स्वयमर्थान्तरमाह- **ओतमत्रेति** ॥ प्रविष्टमित्यर्थः । 'अव रक्षणगतिकान्तिप्रवेश' इत्यादिधातोः प्रवेशार्थस्यावतेः कर्मणि मनिन्प्रत्यये प्रत्ययस्य टेर्लोपे ज्वरत्वरेत्यादिनोपधाकारस्य वकारस्य चोठि सवर्णदीर्घे च सति 'ऊम्' इति जाते सार्वधातुकार्धधातुकयोरिति गुणे च सति 'ओम् इति भवति । अवतिर्नामायं धातुर्गतिकर्मानुप्रवेशनकर्मा चेत्यन्यत्राप्येवमेव निरुक्तत्वाच्च । तथा च प्रविष्टत्वमोङ्कारार्थः । तच्च केनेति कर्त्रपेक्षायां जगतो योग्यतया सम्बन्धः । तथाच जगता प्रविष्टत्वादोमित्युच्यते । ओतमत्र जगदित्यादि तु फलितार्थकथनमिति ज्ञातव्यम् ।

ननु वाक्यभेदाङ्गीकारो व्यर्थः । इदं सर्वमित्यनेनेदमक्षरं सर्वमिति सर्वात्मकत्वस्यैव प्रतीतेरित्यतस्तद्व्याचष्टे- **तदिदमिति** ॥ तदिदमोङ्कारप्रतिपाद्यमक्षरनामकमेव ब्रह्म गुणपूर्त्यैव सर्वमिति शब्दितमिति न सर्वाभेदेनेति योजना । तस्योपव्याख्यानं भूतंभवद्भविष्यदितीति वाक्येन जीवादिसाधारणं स्वरूपनित्यत्वमोङ्कारप्रवृत्तिनिमित्तमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **भावीति** ॥ बहुकालीनत्वादिना नित्यत्वस्यौपचारिकत्वनिरासाय सर्वदेत्युक्तमित्याहुः । वस्तुतस्तु भाविभूतभवत्कालेष्वित्यनुवादेन सर्वदेति व्याख्यानम् । तथा च सर्वदैकरूपतया नित्य इत्यर्थः ।

ननु भूतंभवद्भविष्यदिति श्रुतौ कालत्रयसम्बन्ध एव हरेः प्रतीयते । न तु कालत्रयकृतविकारशून्यत्वाऽपरपर्यायं सर्वदैकप्रकारत्वमिति चेत्सत्यम् । यच्चान्यत् त्रिकालातीतमित्यनुवादान्यथानुपपत्त्या कालत्रयकृतविकारशून्यत्वस्यात्र विवक्षणीयत्वादिति । तस्योपव्याख्यानमित्यस्यार्थ इत्येषा व्याख्येति । विशेषणाख्या व्याख्या । प्रवृत्तिनिमित्तमिति यावत् ।

नन्वोङ्कारप्रतिपाद्यस्याक्षरस्येदं सर्वमिति पूर्णत्वस्योक्तत्वात् सर्वमोङ्कार एवेति व्यर्थमित्यतः प्रमाणोदाहरणेन व्याचष्टे- **ओमित्याक्रियत इति** ॥ ननु कथमनेनास्य वाक्यस्य सार्थक्यमित्यत: 'तन्नान्यस्य हरेः क्वचित्' इति प्रमाणशेषोक्तमेवाभिप्रायं विशदयति- **सर्वमिति** ॥ पूर्वं 'इदं सर्वम्' इति निरवधारणमुक्तत्वेन भगवदन्यस्यापि पूर्णत्वं स्यादित्याशङ्कापरिहारायान्यस्य पूर्णत्वनिवारणं कर्तुं 'सर्वमोङ्कार एव' इत्युक्तम्, अतो न वैयर्थ्यमिति भावः । एतेन 'सर्वमोङ्कार एव' इति ओङ्कारस्य सर्वजगदात्मकत्वस्योक्तत्वात्पूर्ववाक्यार्थोऽपि तथैव नेय इति परास्तम् ।

ननु भूतंभवद्भविष्यदित्यनेन कालत्रयकृतविकारशून्यत्वाऽपरपर्यायस्य त्रिकालातीतत्वस्योक्तत्वाद्यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एवेति व्यर्थमित्यत आह- **त्रिकालातीतत्वं चेति** ॥ कालत्रयकृतविकारशून्यत्वमित्यर्थः । तथा च भूतं भवद्भविष्यदिति निरवधारणमुक्तत्वेनान्यस्यापि कालातीतत्वं स्यादिति शङ्कापरिहाराय त्रिकालातीतं तदप्योङ्कार एवेत्युक्तम्, अतो न वैयर्थ्यमिति भावः । नन्वत्रान्यदिति विशेषणं किमर्थं इत्यत आह- **प्रकृतेरिति** ॥ चेतनप्रकृतेरित्यर्थः । अयमाशयः । भगवत्योंशब्दस्य प्रवृत्तौ न त्रिकालातीतत्वं निमित्तम् । तस्य चेतनप्रकृतिसाधारणत्वेन भगवद्धर्मत्वाऽयोगात् । अतोऽन्यदित्युक्तम् । तथा च चेतनप्रकृत्यन्यत्वे सति त्रिकालातीतत्वं पर्यवस्यति । इदं च भगवदसाधारणमेव, अतिव्याप्त्यभावादिति ॥ १ ॥

नन्विदं सर्वमित्युक्तत्वात् 'सर्वंह्येतद् ब्रह्म' इति पुनरुक्तमित्याशङ्कापरिहाराय हिशब्दसूचितप्रमाणोदाहरणपूर्वकमवतारयति ॥ **परममित्यादिना** ॥ वृद्ध्यर्थकबृहधातुनिष्पन्नस्य ब्रह्मशब्दस्य पूर्णत्वार्थकत्वादिति ध्येयम् । तथा चैतद्ब्रह्मोङ्कारप्रतिपाद्यमक्षराख्यं परं ब्रह्म सर्वं पूर्णमित्येतत्

हि 'पूर्णमद' इत्यादिश्रुतिप्रसिद्धमिति योजनोक्ता भवतीति द्रष्टव्यम् । 'अयमात्मा ब्रह्म' इति वाक्यं जीवस्य ब्रह्मात्मकत्वप्रतिपादनपरमिति प्रतीतिनिरासाय व्याकुर्वन्नेवावतारयति- **श्रीब्रह्मादीत्यादिना** ।। आदानादिकर्तेत्यात्मशब्दार्थकथनम् । आदिपदेनादानकर्तृत्वग्रहणं प्रतीयते । अनुमानेन तत्र दृष्टान्तमाह- **जीवानामिति** ।। अस्मदादीनामित्यर्थः । हिताकरणाहितकरणाभ्यां जीवानामस्वातन्त्र्यदर्शनादिति भावः । तथा च 'श्रीब्रह्माद्याः स्वादानादिकर्तृसापेक्षाः अस्वतन्त्रत्वादस्मदादिवत्' इत्यनुमानेन श्रीब्रह्माद्यादानादनकर्तुः कस्यचित्सिद्धत्वात्तस्यापि पूर्णत्वत्रिकालातीतत्वयोः सम्भवेनातिव्याप्तिप्रसङ्गादोङ्कार एवेत्यवधारणमयुक्तमित्याशङ्कापरिहाराय, यः श्रीब्रह्माद्यादानादिकर्ताऽनुमानेन सिद्धः सोऽप्योङ्कारवाच्याक्षरनामको भगवानेव । नान्यः । अतः पूर्णत्वादि तस्यैव नान्यस्येति दर्शयति 'अयमात्मा ब्रह्म' इति वाक्येनेत्यर्थः ।

सर्वमोङ्कार एवेत्यादिवाक्यचतुष्टयं सर्वमोङ्कार एवेत्यन्यस्येत्यादिना स्ववाक्येन व्याख्याय प्रमाणेनापि व्याख्याति- **पूर्णस्त्वित्यादिना** ।। प्रकृतिं विना परमात्मानोऽन्यत् त्रिकालातीतं नेत्युक्त्याऽन्यदिति विशेषणं प्रकृतिव्यावृत्त्यर्थमित्युक्तं समर्थितं भवति । ननु तथापि प्रकृत्यन्यत्वे सति कालत्रयकृतविकार-शून्यत्वाऽपरपर्यायकालत्रयातीतत्वं न ब्रह्मण एव सम्भवति । काले दिक्षु वेदेषु चातिव्याप्तेरित्यत आह- **कालश्चैवेति** ।। प्रकृत्यात्मान एवेति सम्बन्धः । अत्र कालशब्देन तत्प्रवाह उच्यते । तस्यैव कालत्रयेप्येकप्रकारकत्वात् । प्रवाहिणां निमेषादीनां च 'सर्वे निमेषा जज्ञिरे' इति कालकृतविकारश्रवणात् । यथोक्तम् 'कालप्रवाह एवैको नित्यो न तु विशेषवान्' इति । अव्याकृताकाशभागाः दिश उच्यन्ते । वेदा इति पञ्चाशद्वर्णा गृह्यन्ते । क्रमविशेषविशिष्टवर्णानां वेदशब्दवाच्यानां जन्यत्वेन

विकारित्वादिति द्रष्टव्यं । प्रकृत्यात्मानः चेतनप्रकृत्यभिमन्यमानाः । तथा च प्रकृत्यन्यत्वविशेषणेनैव तदन्यत्वमप्युक्तप्रायमेवेत्याशयः ।

जीवस्वरूपेऽप्यतिव्याप्तिमाशङ्क्य परिहरति- **अभिमानादिति** ॥ देहाभिमानकृतोच्चनीचत्वादिविकारसद्भावादिति भावः । मुक्तेष्वतिव्याप्तिमाशङ्क्य परिहरति- **मुक्तानामिति** ॥ पूर्वत्र सम्सारावस्थायाम् । तथाच पूर्वकालकृतविकारसद्भावेन कालत्रयकृतविकारशून्यत्वं नास्तीति नातिव्याप्तिरिति भावः । सर्वं ह्येतद्ब्रह्मेत्येतद् व्याचष्टे- **पूर्णत्वं चेति** ॥ प्रसिद्धमिति हि शब्दार्थः । 'अयमात्मा ब्रह्म' इत्येतद्व्याकरोति- **सोऽयमिति** ॥ अनुपलब्धिबाधपरिहारायागोचर इत्युक्तं । गवां ज्ञानानां चरो विषयो न भवतीत्यगोचर इत्यर्थः । तथा च योग्यानुपलब्धिर्नास्तीति भावः । सोयमस्माकमगोचरो विष्णुः रमादिगः सन् तेषां रमादीनामादानात् तथाऽदनकर्तृत्वात् आत्मेत्युच्यत इति योजना । श्रुतिं सर्वमोङ्कार एवेत्यादिरूपाम् । अस्य वाक्यस्य खिलाखिलपारिजातभेदभिन्नहरिवंशत्रयगतत्वसूचनाय हरिवंशेष्विति बहुवचनं द्रष्टव्यम् ।

## उपनिषत्

(अकारप्रतिपाद्यः जाग्रदवस्थाप्रेरकः विश्वः)

**सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ॥ ३ ॥**

## भाष्यम्

**'चतुर्द्धाऽवस्थितो देहे परमात्मा सनातनः ।**
**वैश्वानरो जागरितस्थानगो गजवक्त्रकः ॥**
**निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः ।**

अष्टादश मुखान्यस्य पुमाकाराणि सर्वशः ॥
मद्ध्यमं तु गजाकारं चतुर्बाहुः परः पुमान् ।
पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः ॥
स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते नचाशुभान् ।
विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः ।
तत्सम्बन्धी नरोऽनाशाद् वैश्वानर उदाहृतः ॥
विनायकस्तु विश्वस्य ध्यानादैद्गजवक्त्रताम् ।
तथैव तैजसद्ध्यानात् त्रिद्ध्यानादिन्द्र इन्द्रताम् ॥'
'चतुर्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्दनात् ।
एवम्भूतगुणो विष्णुश्चतुरात्मा परात् परः ॥'

इति महायोगे ॥

## उपनिषत्

(वासनामयवस्तुस्रष्टा उकारप्रतिपाद्यः तैजसः)

**स्वप्नस्थानोऽनतःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥**

## भाष्यम्

'जाग्रद्दर्शनसंस्काररूपत्वात् स्वप्नगं तु यत् ।
'प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यते ॥'

इति वाराहे ॥

## श्रीव्यासतीर्थविरचिता टीका

खण्डार्थः-

एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमुक्त्वा प्रणवांशैरकारोकारमकार-

नादैः प्रतिपाद्यविश्वादीना-मुपास्तिमकारउकारोमकार इत्यत्र वक्तुं प्रस्तावयति- **सोयमात्मा चतुष्पादिति** ॥

के ते चत्वारः पादाः कानि च तेषां स्थानानि कश्च व्यापारः किं विधं च रूपं किञ्च भोग्यमित्यतो विश्वादीनां त्रयाणां पृष्टं सर्वमाह- **जागरित-स्थान इत्यादिना** ॥ ३ ॥

**भाष्यार्थः -**

सोऽयमात्मा जीवश्चतुष्पात् कथमित्याकाङ्क्षायां जागरितस्थान इत्याद्युच्यत इत्यन्यथाप्रतीतिं निवारयन् सोऽयमात्मा चतुष्पादित्यादि यथावद् व्याचष्टे- **चतुर्धेत्यादिना** ॥ बहिर्बाह्यं प्रज्ञापयतीति बहिःप्रज्ञ इत्यस्यार्थः- 'निर्माता बाह्यसंवित्तेः' इति । गजवक्त्रक इत्युक्तम् । तत्र विशेषमाह- **अष्टादशेति** ॥ सप्ताङ्गत्वं निर्देशेनाह पादाविति । शुभानशुभांश्च स्थूलान् भुङ्क्ते इति स्थूलभुगिति अन्यथाप्रतीतिं निवारयंस्तावद् व्याचष्टे- **स्थूलानिति** ॥ अग्निर्वैश्वानरो वह्निरित्यग्नि-पर्यायत्वप्रतीतिं निवारयन्स्तत्पदं निर्वक्ति- **विश्वमिति** ॥ विश्यते प्रविश्यते गम्यत इति यावत् । यतोऽतः सर्वगम्यत्वहेतुतः सर्वैर्ज्ञायमान-त्वात् स्थूलं विश्वं समुदिष्टं तत्सम्बन्धात् वैश्व इति शेषः । स एव न रीयते न क्षीयते यतोऽसावनाशान्नर इति वैश्वानर इत्यर्थः । विनायकेत्यादिना तु मूलाभिप्रेतं चतुर्णां माहात्म्यमुच्यते ।

प्रविविक्तभुक्त्वमन्तःप्रज्ञत्वं च किमित्यतः तदुभयं दर्शयति-**जाग्र-दिति** ॥ यत्स्वप्नगन्तु वस्तु तदान्तरं बाह्यार्थाद्विविक्तश्च तद्भुङ्क्ते भोज-यति जानाति ज्ञायपति चेति प्रविविक्तभुगन्तःप्रज्ञश्चेत्यर्थः ॥ ३-४ ॥

## प्रकाशिका

'निर्माता बाह्यसंवित्तेः' इति वदता बहिःप्रज्ञशब्दस्य बहिः प्रकर्षेण ज्ञापयतीति णिजन्तव्युत्पत्तिर्दर्शिता । यथाश्रुतार्थकल्पने 'एष सर्वज्ञः' इति वक्ष्यमाणश्रुतिविरोधः। अत एव जीव एव विश्व इति मतं निरस्तम् । ओङ्कारप्रतिपाद्यवस्तुकथनावसरे ओङ्कारजपृजीवकथनस्यानवसरदुःस्थत्वात् । 'स्थूलान् भोगानिन्द्रियैः सः' इत्यत्र स्थूलान् भोगान् स्वप्ने दृश्यमानवासनामयस्रक्चन्दनवनितादिसूक्ष्मविषयभोगेभ्यः स्थूलान् स्रक्चन्दनवस्त्रवनितादिविषयभोगान् । बहुकालस्थायित्वादिना भोगानामपि स्थौल्यमिति भावः । तत्र तन्नामैव प्रमाणमिति सूचयन् वैश्वानरशब्दं निर्वक्ति- **विश्वमिति** ॥ 'श्वि गतिवृद्ध्योः' इति धातोः विशेषेण श्वः गतिरिव गतिर्यस्य तद्विश्वमित्यर्थः । स्वाप्नपदार्था एकैकद्रष्ट्रैव दृश्यन्ते । जाग्रत्पदार्थजालं तु सर्वैरपि दृश्यत इति भावः । तत्प्रदर्शकत्वेन तत्सम्बन्धित्वात् भगवान् वैश्वः । न रीयत इति नरः । वैश्वश्चासौ नरश्चेति समासः। दीर्घस्तु मित्रावरुणावितिवज्ज्ञेयः । जाग्रत्प्रवर्तकत्वेन जीवदेहगतस्य परमात्मनो नाशशङ्कावारणाय नरपदमित्यनुसन्धेयम् । इण् गताविति धातोः लङि ऐदिति रूपं भवति । 'अत ऐद्गजवक्त्रताम्' इत्युक्तम् । तथैव तैजसध्यानादिति वदता तैजसस्यापि विश्ववदेकोनविंशतिमुखत्वमिति सूचितम् ।

'यत् प्रविविक्तम्' इत्यत्र प्रकर्षेण विविक्तमेकान्तस्थलस्थितमित्यर्थः। 'विविक्त उपगम्य' 'विविक्तसेवी लध्वाशी' इत्यादौ प्रयोगदर्शनात् ॥

## पदार्थदीपिका

एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमभिधायेदानीं प्रणवांशाकारोकारमकारनादप्रतिपाद्यानां विश्वतैजसप्राज्ञतुरीयाणामुपास्तिं अकारः प्रथमा

मात्रा उकारो द्वितीयमात्रा मकारस्तृतीया मात्रा अमात्रश्चतुर्थ इत्यत्र वक्तुमादौ प्रस्तावयति ॥ **सोयमात्मा चतुष्पादिति** ॥

तत्र 'सोऽयमात्मा जीवश्चतुष्पाद्' इति अन्यथाप्रतीतिनिरासाय प्रमाणेनैतद् व्याचष्टे- **चतुर्धेति** ॥ देह इति श्रुतौ शेषोक्तिः । ननु के ते चत्वारः पादाः कानि च तेषां स्थानानि कश्च व्यापारः ? किं विधं च रूपम्? किं च भोग्यम् ? इत्यतो विश्वतैजसप्राज्ञानां स्थानादीनि वक्तुं जागरितस्थान इत्यादिकोपनिषत् प्रवृत्ता । तत्र विश्वस्य स्थानादि-प्रतिपादनपरं जागरितस्थान इत्यादिप्रथमःपाद इत्यन्तं वाक्यमप्रतीत्य-न्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे- **वैश्वानर इत्यादिना** ॥ जागरितस्थानगः दक्षिणाक्षिरूपजागरितस्थनस्थित इत्यर्थः । दक्षिणाक्षिमुखे विश्व इति वक्ष्यमाणत्वात् । वैश्वानरस्य रूपविशेषमाह- **गजेति** ॥ बहिःप्रज्ञ इत्यस्य बहिष्ठं वस्तु प्रज्ञापयतीति तथोक्त इत्यभिप्रेत्य आह- **निर्मातेति** ॥ जीवानां बाह्यसंवित्तेः बाह्यपदार्थ-विषयकज्ञानस्येत्यर्थः । अत्राप्यनुपलब्धिपरिहाराय तदगोचर इत्युक्तम् । गजवक्त्रक इत्युक्तं तत्र विशेषं वक्तुं प्रवृत्तं एकोनविंशतिमुख इत्येतत् । तद्विवृणोति- **अष्टादशेति** ॥ अस्य वैश्वानरस्य मध्यममित्यनन्तरं बुध्या विवेकेन वचनविपरिणामेन मुखमित्यनुवर्तते । सप्ताङ्ग इत्यस्यार्थमाह- **पादाविति** ॥ द्वौ पादौ हस्तिनो गजस्य करः पुरोभागी शुण्ड एकः हस्ताश्चत्वारो बाहवः । स्थूलभुगित्यस्य शुभानशुभांश्च स्थूलान् भोगान् भुंक्त इत्यन्यथाप्रतीतिनिरासार्थमाह- **स्थूलानिति** ॥

भुज्यन्त इति भोगा विषयाः । इन्द्रियैः जीवेन्द्रियैः । 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते' इति गीतावचनात् । वैश्वानरशब्दस्य 'अग्निर्वैश्वानरो वह्निः' इत्यभिधानबलेन

प्रसिद्धाग्निपरत्वप्रतीतिनिरासायार्थमाह- **विश्वमिति** ।। कथमित्यत आह- **सर्वेति** ।। विश्यते ज्ञानेन प्रविश्यते गम्यत इति यावत् । तथाच सर्वैरपि ज्ञायमानत्वहेतुतः विश्वं स्थूलं समुद्दिष्टम् । भोक्तृत्वेन तत्सम्बन्धी भगवान् वैश्वः तस्येदमित्यण् । 'रीङ् क्षये' इति धातोः । न रीयते न क्षीयते अनाशात् अनाशनिमित्ततः नरः । वैश्वश्चासौ नरश्च वैश्वानर इत्युदाहृतो विश्वाख्यो भगवानित्यर्थः । अत्र वैश्वानर इति भाष्ये दीर्घस्त्वाधिक्यविवक्षया । 'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्' इति वचनादित्याहुः । वस्तुतस्तु नरे संज्ञायामिति सूत्रेण विश्वशब्दस्य नरशब्दे परे संज्ञायां दीर्घविधानात् वैश्वानर इति युक्तमित्यवगन्तव्यम् । उपनिषदभिप्रेतानां विश्वादीनां उपासकान् दर्शयति- **विनायकस्त्वित्यादिना** ।। विनायको गणपतिः विश्वस्य ध्यानात् गजवक्त्रतां ऐत् । इण् गतौ प्रापेत्यर्थः । तथैव तैजसध्यानाद्गजवक्त्रतामैदिति सम्बन्धः । 'तं यथा यथोपासते' इत्यादिश्रुतेरित्यर्थः । त्रिध्यानात् त्रयाणां विश्वतैजसप्राज्ञानां ध्यानात् । चतुर्णां विश्वतैजसप्राज्ञतुरीयाणां ध्यानात् । उपसंहरति- **एवंभूतगुण इति** ।। विनायकादीनां गजवक्त्रतादिप्रदगुणोपेत इत्यर्थः ।

तैजसस्थानादिप्रतिपादनाय 'स्वप्नस्थान' इत्यारभ्य 'द्वितीयः पादः' इत्यन्तं वाक्यं प्रवृत्तम् । तत्र प्रविविक्तभुक्त्वमन्तःप्रज्ञत्वं च कीदृश-मित्यतस्तदुभयं प्रमाणेन दर्शयति- **जाग्रदिति** ।। स्वप्नावस्थागतं यद्वस्तु तत् जाग्रत्कालीनपदार्थानुभवजन्यवासनोपादानकत्वात् प्रविविक्तम् । जाग्रद्दृष्टपदार्थापेक्षयात्यन्तविलक्षणम् । तज्ज्ञानकारणत्वादन्तःप्रज्ञः । तथा च प्रविविक्तं बाह्यपदार्थाद्विविक्तं स्वाप्नपदार्थजातं भुंक्ते स्वयं तदनुभवजन्यसारभोगवान् भवति । जीवं भोजयति चेति प्रविविक्तभुक् ।

तादृशपदार्थमन्तः देहान्तः मनसा करणेन जीवं प्रज्ञापयति स्वयंच जानातीत्यन्तःप्रज्ञ इत्यर्थ उक्तो भवतीति ज्ञातव्यम् ॥ ३-४ ॥

## उपनिषत्

(सुषुप्तौ सुखदः प्राज्ञः)

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥**

## भाष्यम्

सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः ।
न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना ॥
कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् ।
चित्तस्थो दर्शयेद् यस्मात् तैजसः स्वप्नकृद्धरिः ॥
न बाह्यं ज्ञापयेद् यस्मात् प्राज्ञस्तेन जनार्दनः ।
एकीभावं व्रजेतां च तेन विश्वश्च तैजसः ॥
एकीभूतस्त्वतः प्राज्ञो घनो जीवस्तमोवृतः ।
तन्मात्रस्य सकालस्य घनप्रज्ञः प्रदर्शनात् ॥'

इति प्रकाशिकायाम् ॥

आनन्दमयः पूर्णानन्दः । चेतोमुखः ज्ञानस्वरूपमुखः । प्रज्ञानघन इति विपरीतसमासः । घनप्रज्ञ इति वक्ष्यमाणत्वात् । विषयभोगं विनाऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः ॥ आनन्दमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वेश्वरत्वादि चतुष्टयेऽपि समम् । अन्यत्रातिदेशार्थमेकत्राऽनन्दमयत्वं चेतोमुखत्वं चोक्तम् ॥ ५ ॥

## उपनिषत्

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी । एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

## भाष्यम्

एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः–

'परमात्मा चतूरूपः सर्वप्राणिशरीरगः ।
विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ॥
तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु ।
चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः ॥
मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः ।
तथाऽपि मुखशब्दोऽयं पूर्णत्वं सूचयेद् विभोः ।
ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन् स्वतः ॥'

इति मार्कण्डेये ॥

'पूर्णानन्दस्वरूपस्य क्रीडा भोगो नचान्यथा ।
यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन ॥'

इति ब्रह्मतर्के ॥ ६ ॥

## उपनिषत्

(ब्रह्मदृष्टमन्त्रसंवादः)

अत्रैते श्लोका भवन्ति–

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ ७ ॥ १ ॥

## भाष्यम्

प्रमाणस्य प्रमाणं च बलवद् विद्यते मुने ।
ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ।
अत्र श्लोका भवन्तीति चकारैव पृथक्पृथक् ॥'
इति गारुडे । खण्डचतुष्टये ॥ ७ ॥

## उपनिषत्

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ ८ ॥ २ ॥

विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ९ ॥ ३ ॥

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ॥ १० ॥ ४॥

त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ११ ॥ ५ ॥

प्रभवः सर्वभावानां सतामिति विनिश्चयः ।
सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ १२ ॥ ६ ॥

## भाष्यम्

प्रभवः सर्वभावानां विष्णुरेव न संशयः ।
इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् ॥
सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः ।

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

सुषुप्तस्थान इत्यादि 'यत्रेत्यस्मात्प्रथमं योज्यम् । कथं भूतं सुषुप्तस्थानमित्यतो लक्षणोक्त्या तन्निरूपयति- **यत्र सुप्त इत्यादिना** ॥ यत्र यस्यामवस्थायां सुप्तो मनआदीन्द्रियाणामुपरतत्वादविद्यावृतत्वात् स्वरूपस्य न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । बाह्यस्वाप्नार्थादर्शने सति स्वस्वरूपादिदर्शनं यत्र सा सुषुप्तिरित्यर्थः । न केवलमानन्दमयः किन्तु आनन्दभुग्च ॥ ५ ॥

**भाष्यार्थः -**

सुप्त्यवस्थां गतस्य कामराहित्ये दर्शनाभावे च हेतुसूचकं सुषुप्त इति पदं द्वेधा व्याचष्टे- **सुषुप्तमिति** ॥ योजना तु सुषुप्तन्तु तमो ज्ञेयम् । तथा च तदावृत्तः सुप्तः सुखरूपत्वात्सुर्हरिः तं प्राप्तः सुप्तः तं प्राप्य न कामयेदित्यादिका । 'स्थूलं विश्वं समुदिष्टम्' तत्सम्बन्धी च वैश्व इति विश्वशब्दनिर्वचनस्य कृतप्रायत्वात्तैजसप्राज्ञशब्दौ निर्वक्ति- **चित्तेति** ॥ तैजसे चित्ते स्थितः तैजसः तैजसमनोवासनारूपान् दर्शयेदितिवा तैजसः। ईषदपि बाह्यं न ज्ञापयतीति प्राज्ञ इत्यर्थः । केनैकीभूत इति न ज्ञायतेऽतो व्याकरोति- **एकीभावमिति** ॥

प्रज्ञानघनः निबिडज्ञान इति प्रतीतिं निवारयन् व्याचष्टे- **घनो जीव इति** ॥ आनन्दमय इति पदमानन्दविकारित्वप्रतीतिं निवारयन् व्याचष्टे- **आनन्देति** ॥ 'स्वरूपार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति वचनादिति भावः । चेतोमुख इति पदं चित्तमुखत्वप्रतीतिं निवारयन् व्याचष्टे- **चेत इति** ॥ ननु प्रज्ञानघन इति मूलपाठः । तत्कथं धनं प्रज्ञापयतीति घनप्रज्ञ इति व्याख्यानमित्यत आह- **प्रज्ञानेति** ॥ कुत

एतदवगतमित्यत आह- **घनप्रज्ञ इति** ॥ विश्वतैजसयोरप्यानन्दभुक्त्वात् कथमानन्दभुक्प्राज्ञ इति विशेषोक्तिरित्यत आह- **विषयेति** ॥ 'एष सर्वेश्वरः' इत्याद्युक्तानि विशेषणानि प्राज्ञस्यैवेति प्रतीतिमुक्तविशेषण-द्वयपूर्वकं निवारयति- **आनन्दमयेति** ॥ ननु आनन्दमयत्वचेतो-मुखत्वविशेषणयोः प्राज्ञनिष्ठत्वेनोक्तयोः कथं चतुर्णामपि विशेषणत्व-मित्यत आह- **अन्यत्रेति** ॥ न तु निरासार्थमिति वाक्यशेषः ॥ ५ ॥

**खण्डार्थः -**

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य नान्तःप्रज्ञमित्यादिना तुरीयस्य महिमानं विवक्षुश्चतुर्णां महिमानं युगपदाह- **एष सर्वेश्वर इत्यादिना** ॥ एष योनिः सर्वस्येत्युक्तं विशदयन्नाह - **प्रभवाप्ययौ हि भूतानामिति** ॥ यस्माद् भवत इति शेषः ॥ ६ ॥

**भाष्यार्थः -**

उक्तविशेषणानां चतुर्णामपि समानत्वे कथं योजनेत्यतस्तां दर्शयति- **एष इति** ॥ ननु भवतु सर्वेश्वरत्वादि चतुष्टयेऽपि समम् । नत्वानन्द-मयत्वचेतोमुखत्वे । तयोः प्राज्ञनिष्ठत्वेनोक्तत्वादिति शङ्कां प्रमाणेन वारयति- **परमात्मेति** ॥ मुखस्यैव ज्ञानस्वरूपत्वप्रतीतिं निवारयन्नाह- **मुखशब्द इति** ॥ मुखशब्दस्तु सर्वस्यापि देहस्योपलक्षणो मुखवाचकः ।

ननु मुखवाचकमुखशब्देनोपलक्षणे किं निमित्तमित्यत आह- **तथापीति** ॥ अस्य योजना अयं मुखशब्दो यद्यपि स्वतो मुखवाची, तथापि विभोर्ज्ञानस्य पूर्णत्वं सूचयेत् कुतः ? मुख्यवाचित्वात् । तथा च चेतसा ज्ञानेन मुखो मुख्यः पूर्ण इति । ननु स्थूलभुक् प्रविविक्तभुगिति भोग उक्तः तेन भोगेनातिशयभावे अपरिपूर्णत्वं तदभावे स्थूलादि-भोगायोगः इत्यतोऽतिशयाभावेऽपि घटयन्नाह- **पूर्णेति** ॥ भोगःक्रीडा

अन्यथाविशेषको न च । विशेषासम्पादको व्यापारः कुत्र दृष्टः ? येन भगवतो भोगो नाम क्रीडेति प्रतीम इत्यत आह - **यथेति** ॥ ६ ॥

**खण्डार्थः-**

उक्तार्थेषु मन्त्रानपि वक्तुमाह- **अत्रैत इति** ॥ विश्वो बहिःप्रज्ञः तैजसोन्तःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्यत्र मन्त्रं पठति- **बहिरिति** ॥ ७ ॥

**भाष्यार्थः -**

ननु स्वोक्तार्थे अत्र श्लोका भवन्तीति मन्त्रोदाहरणमयुक्तम् स्ववचनस्य प्रमाणत्वे तद्वैयर्थ्यादप्रामाण्ये प्रमाणभूतमन्त्रसंवादकरणायोगात् । मैवम् ॥ स्ववचनस्य प्रमाणत्वेऽपि दाढर्याय तदुदाहरणोपपत्तेरित्याह- **प्रमाणस्येति** ॥ मन्त्रान् पृथक् पृथक्चकार उदाहरदित्युक्तं तत्कुत्र कुत्रेति जिज्ञासायामाह- **खण्डचतुष्टय इति** ॥ ७ ॥

**खण्डार्थः -**

जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्युक्तार्थे मन्त्रं पठति- **दक्षिणेति** ॥ ८ ॥

स्थूलभुक् प्रविविक्तभुगानन्दभुगित्युक्तार्थे मन्त्रं पठति- **विश्वेति** ॥९॥

अत्रेव मन्त्रान्तरं पठति- **स्थूलमिति** ॥ स्थूलं कर्तृ विश्वं तर्पयत इत्यन्वयः । आनन्दमानन्दः ॥ १० ॥

यदुक्तं विश्वादिस्वरूपं तत्स्थानं तद्भोज्यं तत्सर्वथा ज्ञेयमित्याशयवान् तज्ज्ञातुः फलमाह- **त्रिष्विति** ॥ ११ ॥

एष योनिः सर्वस्येत्यत्र मन्त्रं पठति- **प्रभव इति** ॥ प्रभावयत्युत्पादयतीति प्रभवः । सर्वभावप्रभवत्वमेव विशदयन्नाह- **सर्वमिति** ॥ चेतोंशून् ज्ञानरश्मीन् जीवानित्यर्थः ॥ १२ ॥

**भाष्यार्थः -**

प्रभवः सर्वभावानामित्यादौ विशेष्यानुक्तेर्व्याचष्टे **-प्रभव इति** ॥ विष्णुश्चेत्प्रभवः तर्हि प्राणशब्दायोग इत्यत आह- **सर्वस्येति** ॥ ८-१२ ॥

## प्रकाशिका

यत्र सुप्त इत्युपनिषद्वाक्यस्यायमर्थः । यत्र सुप्त्याख्यतृतीयस्थाने प्राज्ञं प्राप्य सुप्त अज्ञानावृतो जीव इत्यर्थः । तत् सुषुप्तं सुषुप्ताख्याज्ञानावृत-जीवावस्थानरूपं स्थानम् । तस्मिन् सुषुप्तस्थाने, सुप्त्यवस्थायामिति यावत्, एकीभूतः । विश्वतैजसाभ्यामेकीभूत इति ।

'स्वात्मतमो विना' इत्यत्र स्वात्मा च तमश्चेति द्वन्द्वैकवद्भावः । इदं चोपलक्षणम् । स्वरूपभूतसुखस्याप्यनुभवादित्यपि ज्ञेयम् । 'चित्तस्थो दर्शयेत् तस्माद्' इत्यत्र चित्तस्थः स्वप्नावस्थाप्रेरको देवो दर्शयेत् वासना-मयकरितुरगाद्यनेकपदार्थान् सृष्ट्वा अनन्तजीवदेहेषु प्रतिदिनं दर्शयेत् । तस्मात्तैजसः तैजसपदवाच्यसामर्थ्यविशेषसम्बन्धित्वात्तैजस इत्युच्यते । मनसो वैकारिकत्वेन तैजसत्वासम्भवादुक्तव्युत्पत्तिरेवाऽश्रयणीया । यथास्थितप्रज्ञानघनत्वस्य त्रिष्वपि साम्यात् प्राज्ञमात्रविशेषणत्वं कथमित्यत आह- **घनो जीव इति** ॥ आनन्दभुगिति शब्दस्य यथाश्रुतार्थ-कथने त्रिष्वपि साम्याद्विशेषमाह- **विषयभोगं विनेति** ॥ बाह्यविषय-भोगाख्यसुखं विनेत्यर्थः । इदं च प्राज्ञस्यैवोचितम् । सुप्तिकाले स्वाप्न-विषयबाह्यविषयजसुखाभावस्यैवोचितत्वादिति भावः । मुखशब्दस्य सर्वाङ्गोपलक्षकत्वेऽपि ज्ञानरूपजीवेऽपि साम्यान्मुखशब्दो मुख्यवाची-त्याह- **पूर्णत्वमिति** ॥ यद्यप्यानन्दमयत्वचेतोमुखत्वसर्वज्ञत्वादिकं प्राज्ञस्यैवेति प्रतीयते ।

'आनन्दमयश्चेतोमुखः प्राज्ञः' इति प्राज्ञविशेषणतया स्पष्टमुक्तत्वात् । एष इत्यव्यवहितपरामर्शेन प्राज्ञविशेषणताया एव प्रतीयमानत्वात् । तथापि 'आमन्दमयोऽभ्यासात्' इति सूत्रेणाऽनन्दमयाधिकरणे आनन्दमयात्मकत्वज्ञानात्मकत्वादीनाम् 'अथातो ब्रह्मजिज्ञासा' इत्यत्रोक्तब्रह्मशब्देन प्रकृतमूलरूपविषयताया एव निर्णीतत्वात् 'एष योनिः सर्वस्य' इति सर्वकर्तृत्वेनोक्तमूलरूपे तदुपयुक्तसर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वानामप्यावश्यकत्वात् षण्णामपि विशेषणानां न प्राज्ञमात्रविशेषणता । मूलरूपगुणानां च सहस्रधा विभक्तगङ्गाप्रवाहेष्वनुगतमूलगङ्गानुगुणभूतपावित्र्यस्येव सर्वावतारेष्वपि वक्तव्यत्वात् । अत एष इति परामर्शो दूरस्थविश्वादीनामपि वाच्यः । एकत्रोक्तपूर्णानन्दत्वपूर्णप्रज्ञत्वयोरपि सवर्त्रानुषङ्गः कार्यः । तर्ह्येकत्र विशिष्योक्तिः किमर्थेति चेत्, सत्यम् । 'इयं माता तव वन्द्या' इत्येकत्रोक्तवन्दनस्योपलक्षणतया मातृमात्रेऽप्यनुषङ्गवदेकत्रोक्तयोरप्यनयोस्तज्जातीयेष्वप्यनुषङ्गसम्भवात्, अनन्तावतारेषु पृथगुक्तौ वाक्यगौरवाच्चैकत्रोक्तिरिति ब्रूमः । तदिदमुक्तमाचार्यैः- **'अन्यत्रातिदेशार्थम्'** इत्यादि ।

'प्रभवाप्ययौ हि भूतानाम्' इत्यत्र भूतानां प्रभवाप्ययौ मूलरूपाद्भगवतो भवतः । हीत्यनेन 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिप्रसिद्धिं सूचयति । स्वरूपस्थानभोगकथनार्थं क्रमेण मन्त्रत्रयमिति ज्ञेयम् ॥ ५-१२ ॥

## पदार्थदीपिका

प्राज्ञस्य स्थानादिप्रतिपादनाय सुषुप्तस्थान इत्यादिकोपनिषत् । तत्र सुषुप्तस्थानं कीदृशमिति शङ्कायां लक्षणोक्त्या तं निरूपयितुं यत्र सुप्त

इत्यादिवाक्यं प्रवृत्तम् । तत्र सुषुप्त्यवस्थां गतस्य कामराहित्ये स्वप्न-दर्शनाभावे च हेतुसूचकं सुप्त इति पदं प्रमाणेनैव व्याचष्टे- **सुषुप्तं त्विति** ।। भावे क्तः । सुप्तिरेव सुषुप्तम् । तमोऽज्ञानं अज्ञानकार्यमिति यावत् । हरिं प्राज्ञनामकं प्राप्य स्थितः पुमान् । तदावृतः तेन तमसाऽवृतः यतोऽतो जीवः किमपि न कामयेत् । नैव पश्येत् कमपि पदार्थं स्वप्नं चेति शेषः ।

ननु स्वरूपादिज्ञानं तावदवश्यमङ्गीकर्तव्यम् । एतावन्तं कालं सुख-महमस्वाप्समित्युत्तरकालपरामर्शात् । अतो न पश्येदित्येतदयुक्तमित्यत आह ।। **स्वात्मेति** ।। स्वात्मसहितं तमः, स्वात्मतमः कालं च विनेति सम्बन्धः ।

उपलक्षणमेतत् । वक्ष्यमाणरीत्या सुषुप्त्यवस्थां सुखं च विनेत्यपि द्रष्टव्यम् । **तस्येति** ।। तमः कार्यसुषुप्त्याख्यस्थानस्येत्यर्थः । विश्वं स्थूलमित्यादिना विश्वशब्दस्य निरुक्तत्वात्तैजसप्राज्ञशब्दौ निर्वक्ति- **चित्तस्थ इत्यादिना** ।। 'मनस्यन्तस्तु तैजसः' इति वचनात् तैजसः चित्ते स्थितः सन् स्वाप्नपदार्थं दर्शयेद्यतोऽतस्तैजसेत्यर्थः । अत्र चित्तस्थस्य तैजसत्वं नाम तेजोवत्त्वमेव । न तु तैजसाहङ्कारकार्यत्वम् । चित्तशब्दोक्तस्य मनसो वैकारिकाहङ्कारकार्यत्वादिति द्रष्टव्यम् ।

**न बाह्यमिति** ।। तथा च प्रकर्षेण न ज्ञापयतीति प्राज्ञ इति व्युत्पत्तिर्द्रष्टव्या । एकीभूत इत्येतदप्रतीतेर्व्याचष्टे- **एकीभावमिति** ।। सुषुप्त्यवस्थायां विश्वः तैजसश्चेत्युभौ तेन प्राज्ञेन एकीभावं व्रजेतां यतोऽतः प्राज्ञ एकीभूत इत्युच्यत इति योज्यम् । प्रज्ञानघनो ज्ञाननिबिड इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **घनो जीव इति** ।। तमसाऽज्ञानेनाऽवृतो जीवो घन इत्युच्यते । सकालस्येत्युपलक्षणम् । सुषुप्त्यव-

स्थस्य ससुखस्येत्यपि द्रष्टव्यम् । तथा च कालावस्थासुखसहितस्य तन्मात्रस्याज्ञानावृतजीवमात्रस्य प्रदर्शनात्प्रज्ञानघन इत्यर्थः । अनेन प्रज्ञानघन एवेत्येवकारस्य बुद्ध्या विविक्तेन घनपदेन सम्बन्धः । तथा च कालावस्थासुखसहितमज्ञानयुक्तं घनं जीवमेव प्रज्ञापयतीति प्रज्ञानघन एवेत्यर्थो द्रष्टव्यः । आनन्दमय इत्यत्र मयटो विकारार्थत्वप्रतीतिं वारयन् व्याचष्टे- **आनन्दमयइति** ।। तथा च मयट प्राचुर्यार्थे । प्राचुर्यं च पूर्णत्वमित्युक्तं भवति । चेतोमुख इत्यत्र 'चित्तं तु चेतोहृदयम्' इत्यभिधानात् चेतःशब्दोऽन्तःकरणपरइति प्रतीतिनिरासाय व्याचष्टे- **चेतोमुख इति** ।।

ननु घनं प्रज्ञापयतीति घनप्रज्ञान इति भाव्यम्, प्रज्ञानघन इति कथमित्यत आह- **प्रज्ञानघन इति** ।। अग्न्याहितादित्वाद्घनशब्दस्य परनिपात इति भावः । तत्र ज्ञापकमाह- **घनप्रज्ञ इतीति** ।। ननु विश्वतैजसयोः अप्यानन्दभुक्त्वादानन्दभुगिति प्राज्ञस्यैव को विशेषः कथ्यत इत्यत आह- **विषयभोगं विनेति** ।। विश्वतैजसयोस्तु बाह्यान्तर्विषयभोगेनानन्दोक्तेरिति भावः । **आनन्दमात्रेति** ।। विषय-भोगानभिव्यक्तकेवलस्वरूपानन्देत्यर्थः । सुषुप्तस्थान एकीभूत इत्यादि-वाक्योक्तमानन्दमयत्वचेतोमुखत्वरूपं विशेषणद्वयं इतरविशेषणवन्न प्राज्ञमात्रनिष्ठमिति वदन् 'एषसर्वेश्वर' इत्यादिनोक्तान्यपि विशेषणानि न सन्निहितप्राज्ञमात्रनिष्ठानि, किन्तु विश्वादिचतुष्टयसाधारणानीत्याह- **आनन्दमयेति** ।। आनन्दमयचेतोमुखेत्यत्र भावप्रधानो निर्देशः । ननु 'एष सर्वेश्वरः' इत्यादिवाक्योक्तविशेषणानां सर्वसाधारण्यसम्भवेऽपि प्राज्ञमात्रनिष्ठत्वेनोक्तयोरानन्दमयत्वचेतोमुखत्वयोः कथं सर्वसाधा-रण्यमित्यत आह- **अन्यत्रेति** ।। विश्वादित्रयेत्यर्थः । एकत्र प्राज्ञे ।

ननु 'एष सर्वेश्वरः' इत्यादिवाक्योक्तानामपि विशेषणानां **कथं** विश्वादिरूपसाधारण्यम् । एष इति पदेन प्राज्ञस्तृतीय इत्यव्यवहित-प्राज्ञस्यैव परामर्शादित्यत आह- **एष इति** ॥ तथा चैष इत्यस्य पूर्व-प्रकृतरूपचतुष्टयपरामर्शकत्वेन प्राज्ञमात्रपरामर्शकत्वाऽनङ्गीकारादिति भावः । आनन्दमयत्वादिविशेषणानां रूपचतुष्टयेऽपि साम्ये प्रमाणमाह- **परमात्मेति** ॥ तुरीयस्यापि नासिकामूलमारभ्य द्वादशाङ्गुलान्ते मस्तकमध्ये व्यवस्थितत्वोक्त्या सर्वप्राणिशरीरगतत्वं मन्तव्यम् । चेतोमुखत्वे हेतुः- **पूर्णेति** । स्वरूपतः स्वरूपत्वतः । अत्र चेतोमुख इति मुखस्यैव ज्ञानस्वरूपत्वं प्रतीयतेऽतस्तां निवारयति-**मुखशब्दस्त्विति** ॥ लक्षणाबीजसम्बन्धस्तु एकदेशैकदेशिभावादिर्द्रष्टव्यः । तथा च दशामात्रं दत्तमित्यादाविवैकदेशेनैकदेशिनः सर्वस्यापि देहस्य लक्षणा कार्येति भावः । यद्वा चेतोमुख इत्यत्र मुखो मुख्यः । उत्तम इति यावत् । उत्तमत्वं चात्र पूर्णत्वमभिप्रेतम् । तथा च चेतसा ज्ञानेन मुखः उत्तमः पूर्ण इत्यर्थान्तरमभिप्रेत्याह- **तथापीत्यादिना** ॥ अयमर्थः । अपि यद्यपि । अयं मुखशब्दः स्वतः मुखवाची सन् भवति । तथापि विभोर्ज्ञानस्य पूर्णत्वं सूचयेत् । कुतः मुखशब्दस्य मुख्यवाचित्वात् । 'मणिर्मुखं प्रधानं च' इत्युत्तमस्य वचोभवेदिति वचनात् । उत्तमत्वं च पूर्णत्वमेवाभिप्रेतम् । अत एव पूर्णत्वं वदेदित्यनुक्त्वा सूचयेदित्युक्तमिति ।

ननु स्थूलभुक् प्रविविक्तभुगिति विश्वतैजसयोर्विषयभोग उक्तः । स तु न युक्तः । तथात्वे भगवदानन्दस्य विषयभोगाधीनत्वप्राप्त्या पूर्णानन्दत्वभङ्गापत्तेः । यदि पूर्णानन्दत्वाङ्गीकारस्तर्हि विषयभोगायोग इत्याशङ्कां ब्रह्मतर्कवाक्येन परिहरति- **पूर्णानन्देति** ॥ पूर्णानन्दस्वरूप-स्यापि हरेः स्थूलादिविषयभोगः क्रीडैव न चान्यथा । अविद्यमानाति-

शयितानन्दजनको नैवेत्यर्थः । अत्र दृष्टान्तमाह- **यथेति** ॥ एवं विषयभोगेन भगवदानन्दस्य विशेषो नास्तीति भावः ।

नन्वेतदुपनिषद्द्रष्ट्रा सलिलेश्वरेण स्वोक्तार्थे अत्रैते श्लोका भवन्तीति ब्रह्मदृष्टमन्त्राः प्रमाणत्वेनोदाहियन्ते तदयुक्तम् । सलिलेश्वरोक्तं तावत्प्रमाणमप्रमाणं वा । आद्ये मन्त्रोदाहरणं व्यर्थम् । द्वितीये अप्रमाणभूतेऽर्थे प्रमाणभूतमन्त्रोदाहरणायोगादित्याशङ्कां पुराणवाक्येन परिहरति- **प्रमाणस्येति** ॥ प्रमाणस्यापि सम्वादभूतं प्रमाणं विद्यते चेत्तर्हि तत्प्रमाणं बलवदेव भवति । अत्रार्थे एतदुपनिषदुक्तं प्रमेयं दृष्टान्त इत्याह- **ब्रह्मदृष्टानिति** ॥ प्रमाणशेषोक्तं पृथक् पृथगित्येतदप्रतीतेः स्वयं व्याख्याति- **खण्डचतुष्टयेऽपीति** ॥

एष योनिः सर्वस्येत्यत्र प्रमाणत्वेन प्रवृत्तं **प्रभव इति** । ननु उत्तरार्धे प्राण इत्युक्तत्वात्कथं विष्णुरेवेत्युक्तमित्यत आह- **सर्वस्य हीति** ॥ ५-१२ ॥

## उपनिषत्

(सृष्टिः विष्णोरिच्छामात्रेण भवति)

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ १३ ॥ ७ ॥**
**इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥१४ ॥ ८ ॥**

## भाष्यम्

तां सृष्टिं बहुधा प्राहुर्ज्ञानिनोऽज्ञानिनस्तथा ॥
विष्णुर्विकृतिमायाति महदादिस्वरूपिणीम् ।

तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः ।
स्वप्नमायासरूपां च केचिदज्ञा जना विदुः ॥
अविकारस्य चिन्मात्रस्वेच्छयैवाखिलं जगत् ।
उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः ॥
पूर्णशक्तेः कुतो माया सार्वज्ञ्यात् स्वप्नवत् कुतः ।
सर्वदोषव्यतीतस्य विकारः कुत इष्यते ॥
तस्मादेवाविकारस्य विष्णोरिच्छावशादिदम् ।
यथार्थमेव सम्भूतमिति वेदवचोऽखिलम् ॥
केचित् कालत एवैतां सृष्टिमाहुरकोविदाः ।
केचिद् रुद्राद् ब्रह्मणश्च प्रधानादिति चापरे ॥
विमूढाः सर्व एवैते यतो नारायणः परः ।
सर्वकर्ता सर्वशक्तिरेक एव नचापरः ।
प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः ॥

## उपनिषत्

(निरपेक्ष एव विष्णुः सृष्टिं विधास्यति)

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहेति ॥ १५ ॥ ९ ॥

॥ इति प्रथमः खण्डः ॥

## भाष्यम्

तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः ।
अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः ।
सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः ॥'
इति हरिवंशेषु ॥

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

भगवान् जगत्कारणं सन्निमित्तकारणमिति निरूपयिष्यंस्तेषां स्वरूपनिरूपणेनैव दुष्टत्वं मन्वानः पूर्वपक्षान्निरूपयति- **विभूतिमिति** ॥ महदादित्वेन ब्रह्मादित्वेन च विविधभवनमिति यावत् ॥ १३ ॥

**भाष्यार्थः-**

विभूतिं प्रसवमित्यादिना बहुधा सृष्टिर्निरूपिता । तत्र कः स्वपक्ष इति न ज्ञायतेऽतो विवेचयंस्तद्वाक्यजातं सर्वं व्याचष्टे- **तामित्यादिना** ॥ बहुधेत्युक्तमेव विशदयति- **विष्णुरिति** ॥ १३ ॥

**खण्डार्थः-**

सिद्धान्तं निरूपयति- **इच्छेति** ॥ इच्छामात्रं सृष्टिरिति सामानाधिकरण्येनाऽनायासेनाऽविलम्बेन सृष्टिर्भवतीति सूचयति । सिद्धान्तज्ञानकातरं प्रति सिद्धान्तं निरूप्य पुनरपि पूर्वपक्षं निरूपयति-**कालादिति** ॥ कालचिन्तका आभासतः कालविदः ॥ १४ ॥

**भाष्यार्थः -**

ननु भगवतश्चिन्मात्रस्वेच्छया जगदुत्पद्यत इत्युक्तं निमित्तकारणत्वं चेत्पक्षः तर्हि तदितरपक्षाणां किं दूषणमित्यत आह- **पूर्णशक्तेरिति** ॥ तत्वप्रदर्शने अशक्तस्य हि तत्प्रदर्शने मायोपादेया । अपूर्णशक्तेः कुतो माया ? अज्ञानां हि स्वप्नोऽस्तु, अस्य तु सार्वज्ञात्सर्वपदार्थज्ञानभावात् अज्ञानाऽभावात्तत्सृष्टा सृष्टिः कुतो मायावत्स्वप्नवच्च । तस्मान्मायादिपक्षाणां दुष्टत्वात् । कालात्प्रसूतिमिति वाक्यं व्याकुर्वन्स्तदुपलक्षितपक्षांश्चाह- **केचिदिति** ॥ सर्वकर्तृत्वं कुत इत्यत उक्तम्-**सर्वशक्तिरिति** ॥

प्रधानादेर्जगत्कर्तृत्वाभावः कुत इत्यत आह - **प्रधानेति** ।। तद्वशत्वं च प्रधानादेर्द्रव्यं कर्मचेत्यादिना सिद्धमिति भावः ।। १४ ।।

**खण्डार्थः -**

भगवतो जगत्सृष्टौ प्रयोजनसदसद्भावजिज्ञासायां सिद्धान्तं विवक्षुः पूर्वपक्षावाह- **भोगेति** ।। प्रलये सर्वाभावाद् भोगाभावेनालस्येन च भोगार्थं क्रीडार्थं च सृष्टिरिति मन्यन्ते । क्रीडा च भवन्ती स्वभाव एवेति सिद्धान्तमाह- **देवस्येति** ।। १५ ।।

**।। इति श्रीमाण्डूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां, खण्डार्थे च प्रथमः खण्डः ।।**

## प्रकाशिका

प्रभवः सर्वभावानामिति प्रस्तावितस्वाभिमतसृष्टिं विविच्य दर्शयितुं पूर्वपक्षानाह - **विभूतिमित्यादिना** ।। विभूतिं विविधप्रपञ्चाकारेण भवनं, महदादिजगदुपादानत्वमिति यावत् । अन्ये तत्त्वप्रमातुर्मत्तोऽन्ये । मन्त्रद्रष्टृ-ब्रह्मणः यदि स्वाभिमतेयं सृष्टिः स्यात्तर्हि मन्य इति ब्रूयान्न त्वन्य इति । ततो ज्ञायते पूर्वपक्षोऽयमिति । एवमुत्तरवाक्येऽपि द्रष्टव्यम् । विकल्पितेति विरुद्धतया स्वकपोलादेव कल्पितत्वस्य विकल्पपदमहिम्नैव लाभाच्च पूर्वपक्षत्वं ज्ञायते । अतो मायावाद्युक्तं ब्रह्मणो जगदुपादानत्वं जगतो मिथ्यात्वं च पूर्वपक्ष एवेति प्राग्भवे मध्वरूपस्य मन्त्रद्रष्टृब्रह्मणो हृदयम् । अनायासेन स्वतन्त्रसाधनान्तरं विना, स्वसंकल्पोत्तरकाले स्वेच्छयैव जगत्सृष्टिकरणादिच्छामात्रमित्युक्तम् । अस्ति ह्यतिसमर्थकार्वादिभिः लीलयैव कृतप्रासादादिषु अस्येयं लीलैवेत्यादिकार्यकारणयोरभेदव्यपदेशः तथाऽत्रापि । कथमन्यथा बाह्यजगन्निष्ठसृष्टिरूपोत्पत्तेरन्तःकरणतया प्रागेव विद्यमानभगवदिच्छया सहैक्यम् ? सृष्टौ विनिश्चिताः विशेषेण निश्चितं

निश्चयो येषां ते इति विनिश्चितपदेनैव सिद्धान्तत्वं सूचितम् । क्रीडार्थं त्वित्येतत्पर्यन्तं पूर्वपक्ष एव । श्रुतौ भोगार्थं क्रीडार्थम् । द्वयोरपि पूर्वपक्षतयोक्तत्वात् कः सिद्धान्तः इत्यत आह- **स्वभाव इति** ॥ 'सा च क्रीडा स्वभावोऽस्य' इति वदतः क्रीडार्थं न सृष्टिः, किं तु क्रीडाऽप्युन्मत्तनर्तनवत् स्वभाव एवेत्यभिसन्धिः । अत एव श्रुतिः 'स्वभावोऽयम्' इत्याह । यथा वसन्तकाले कोकिलगानस्य न राजादिरञ्जनं फलं, नापि स्वस्यापूर्वसुखोत्पत्तिः फलम् । कण्ठशोषणरूपत्वात् । किन्तु चूतांकुरास्वादनजनितसुखोद्रेकेणैव । तथा भगवतोऽपि क्रीडाऽपि स्वाभाविक्येवेति भावः। इयांस्तु विशेषः, कोकिलस्य कण्ठशोषणेनेषदायासोऽपि सम्भावितः । भगवति तु सोऽपि नास्तीति । अत एव 'देवस्य' इत्युक्तम् । मोदेनैव हि दीव्यन् हि 'देवः' इत्युच्यते । तदुक्तं सूत्रकृता- 'लोकवत्तु लीलाकैवल्यम्' इति । सूत्रे तुशब्देन लोकवदायासाऽभावं भगवति विशिनष्टि । दृश्यन्ते हि मोदाऽभावेऽपि स्वभावादेव वायोः पवनम् । जडत्वात्तस्य मोदो न चेदाप्तकामत्वाद्भगवतोऽपि सुतरां स नास्ति । अत एव 'आप्तकामस्य' इत्याह श्रुतिः ॥ १३-१९ ॥

## पदार्थदीपिका

'सर्वं जनयति' इत्युक्तं विष्णोर्जगदुत्पत्तिनिमित्तकारणत्वमेव स्पष्टयन् वादिनां पूर्वपक्षाननुवदितुं 'विभूतिं प्रसवम्' इत्यादिको ग्रन्थः प्रवृत्तः । तत्र विभूतिं प्रसवमित्येतद्व्याचष्टे- **विष्णुरिति** ॥ तत्तद्विविधभूतिः, तत्तत्पदार्थाकारेण विविधभवनम् । अपण्डितैः भास्करैः । 'स्वप्नमायासरूप' इत्येतद् व्याचष्टे- **स्वप्नेति** ॥ स्वप्नसरूपां स्वप्नसृष्टिसरूपाम् । मायासरूपां ऐन्द्रजालविद्याम् अज्ञाः जनाः मायिनः । 'अनादिकालतोवृत्ताः समया हि प्रवाहतः' इत्युक्तत्वान्नात्र कश्चित्क्षुद्रोपद्रवः ।

एवं पूर्वपक्षद्वयमभिधाय सिद्धान्तज्ञानकातरं प्रति सिद्धान्तं निरूपयितुं प्रवृत्तमिच्छामात्रमित्यर्धर्चं व्याचष्टे- **अविकारस्येति** ।। हरेरिति शेषः । पूर्वपक्षस्वरूपव्याक्रियैव निराक्रियेत्याशयेन पूर्वपक्षानुवादमात्रस्यैव कृतत्वात्तदभिप्रेतं दूषणं दर्शयति- **पूर्णशक्तेरिति** ।। 'अक्षमाः सत्यसृष्टौ हि मायासृष्टिं वितन्वते । अनन्ताचिन्त्यविभवः कथं तामीहते हरिः' (भाग.ता.) इति वचनादित्यर्थः । **सार्वज्ञादिति** ।। स्वप्नस्याज्ञानकार्यत्वाद् भगवतश्च सार्वज्ञान्न स्वप्नवत्सृष्टिः । इदञ्च दूषणं स्वप्नमायासरूपेत्यनूदितमायिपक्षस्येति द्रष्टव्यम् । विभूतिं प्रसवमित्युक्तभास्करपक्षं दूषयति- **सर्वदोषेति** ।। भगवत एव महदाद्याकारेण परिणामाङ्गीकारे शुनकगर्दभादिपदार्थाकारेणापि विकारप्राप्त्या दूषणापत्तेरिति भावः । एवं पूर्वपक्षद्वये दूषणमभिधाय प्रतिपादितस्य स्वपक्षस्य प्रामाणिकत्वं वदन्नुपसम्हरति- **तस्मादिति** ।। वेदवचः 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यःसमाभ्यः' (ईश. मं. ८) इत्यादिवेदवचः । एवं सिद्धान्तज्ञानकातरं प्रति सिद्धान्तं निरूप्य पुनः पूर्वपक्षं प्रतिपादयितुं प्रवृत्तं कालात्प्रसूतिमिति वाक्यं व्याकुर्वन् तदभिप्रेतपूर्वपक्षान्तराण्यपि दर्शयति- **केचिदित्यादिना** ।। मिथ्याज्ञानमूलत्वादेतानि मतान्यग्राह्याणीत्याशयेनाह- **विमूढा इति** ।। यत एते सर्वेऽपि वादिनो विमूढाः मोहवन्तोऽतस्तन्मतानि मिथ्याज्ञानमूलकानीत्याशयः । कुतस्ते विमूढा इत्यत आह- **यत इति** ।। प्रधानादीनामस्वातन्त्र्यान्न जगत्कारणत्वमित्याशयेनाह- **प्रधानेति** ।। प्रधानादेः 'द्रव्यं कर्म च कालश्च' (ब्र.सू.अनु. १.१.१ श्लो. १३) इत्यादिना नारायणवशत्वं प्रमितमिति भावः ।

ननु भगवत इच्छापूर्वकं स्रष्टृत्वमुक्तं, तदयुक्तम् । प्रयोजनापेक्षया स्रष्टृत्वेऽपूर्णत्वापत्तेस्तदनपेक्षया स्रष्टृत्वे मन्दत्वापत्तेरित्याशङ्कायां सिद्धान्तं विवक्षुरत्रापि पूर्वपक्षं वक्तुं भोगार्थं सृष्टिरित्यादिवाक्यं प्रवृत्तम् । तद्व्याचष्टे-

**तस्यापीति** ।। अविद्यमाननैपुणाः केचिद्वादिनो विष्णोः सृष्टिं विष्णुकर्तृकां सृष्टिमतृप्तस्यैव विष्णोर्भोगार्थमाहुरित्यन्वयः । केचिद्रामानुजाः । प्रलये एकस्यैव विष्णोः सत्वेन तस्याप्यालस्यप्राप्त्या तत्परिहाराय क्रीडार्थं सृष्टिमाहुः । क्रीडायाः आलस्यपरिहारार्थतायाः लोके दर्शनादिति योज्यम् । एवं पूर्वपक्षावभिधाय 'लोकवत्तु लीलाकैवल्यम्' इति सिद्धान्तं वक्तुं 'देवस्यैषः स्वभावोऽयम्' इति वाक्यं प्रवृत्तम् । तद्व्याचष्टे- **तु विपश्चित इति** ।। विपश्चितस्त्विवति सम्बन्धः । आहुरिति वर्तते । एषोऽयमित्यस्यार्थः- **सा च क्रीडेति** । जगत्सर्जनादिरूपा क्रीडा व्यापार इत्यर्थः । भोगार्थं क्रीडार्थं सृष्टिरिति मतद्वयनिराकरणाय प्रवृत्तस्याप्तकामस्य का स्पृहेत्यस्यार्थः- **कुत इति** । विभोरतृप्त्याऽजातभोगार्थं स्पृहा । आलस्यपरिहारार्थं जातक्रीडार्थं वा कुतः । न कुतोऽपीत्यर्थः । ।। १३-१५ ।।

**।। इति श्रीमाण्डूकभाष्यार्थे प्रथमः खण्डः ।।**

**ततश्चायं खण्डार्थः-**

**ओ३म् ।। ओमित्येतदक्षरम् । इदं सर्वम् । तस्योपव्याख्यानं भूतं भवद् भविष्यदिति । सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।। १ ।।**

मण्डूकरूपिणा वरुणेन विश्वादिचतूरूपी नारायणः स्तूयते । ओमित्यादिकया समग्रोपनिषदा । ओमितिप्रणवप्रतिपाद्यं यत्तदेतदक्षरं नाशरहितं ब्रह्मैव । तदिदं प्रणवप्रतिपाद्यं ब्रह्म गुणपूर्णत्वात्सर्वमित्युच्यते । अत्रोङ्कारवाच्यतयोक्तमक्षरं न प्रसिद्धाकाराद्यक्षरम् । किन्तु यत्पूर्णं परब्रह्मरूपाक्षरं तदेवोङ्कारवाच्यमिति प्रणवस्याभिधेयमुक्त्वा तस्य भगवति प्रवृत्तौ निमित्तमसाधारणलक्षणं कथ्यते- **तस्येत्यादिना** ।। तस्य भगवतः उप समीपे वाचकत्वेन स्थितस्योङ्कारस्य विशेषेणाख्यानं

व्याख्यानं प्रवृत्तिनिमित्तं कथ्यत इत्यर्थः । तस्योपपन्नं व्याख्यानं क्रियत इति वा । अक्षरं भूतं भवद्भविष्यदिति व्याख्यानमित्यन्वयः । अत्र कालत्रयसम्बन्धित्वं नार्थः । तस्य जीवादिसाधारण्यात् । यच्चान्यत् त्रिकालतीतमित्यनुवादासम्भवाच्च । अतः कालत्रयेऽप्येकरूपत्व-मेवाभिप्रेतम् ॥ १ ॥

**सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म ॥ २ ॥**

सर्वमित्यत्रोक्तं पूर्णत्वमन्यत्रातिव्याप्तं किं न स्यादिदं सर्वमिति पूर्वं निरवधारणमुक्तत्वात् इत्याशङ्कायां नेत्याह- **सर्वमोङ्कार एवेति** ॥ ओंकारवाच्यं ब्रह्मैव सर्वं पूर्णमित्युक्त्याऽन्यस्य पूर्णत्वं निवार्यतेऽतो नातिप्रसङ्ग इति भावः । एवं भूतं भवत्यादिनोक्तं त्रिकालातीतत्वं अन्यस्यापि किं न स्यात् । पूर्वं निरवधारणमुक्तत्वादित्यतो नेत्याह- यच्चान्यत् त्रिकालातीतं **तदप्योङ्कार एवेति** ॥ ओंकारवाच्यभगवत एव त्रिकालातीतत्वमित्युक्त्याऽन्यस्य त्रिकालातीतत्त्वं निवार्यतेऽतो नातिप्रसङ्ग इति भावः । ननु चेतनप्रकृत्यादेरपि त्रिकालातीतत्वात् पुनरतिव्याप्तिरित्यत उक्तम्- **अन्यदिति** ॥ तथा च प्रकृत्यन्यत्वे सति कालत्रयकृतविकारशून्यत्वमेवेह प्रवृत्तिनिमित्तभूतं लक्षणतयाभिप्रेतम् । अतोऽव्याकृताकाशकालवर्णानां प्रकृत्यभिमन्यमानानां व्यावर्तितत्वान्न कुत्राप्यतिप्रसङ्ग इति भावः । देहाभिमानकृतोच्चनीचत्वादिरूपविकार-सद्भावान्न जीवेष्वतिव्याप्तिः । मुक्तानामपि पूर्वं संसारावस्थायां काल-त्रयकृतविकारसद्भावेन कालत्रयकृतविकारशून्यत्वाभावान्न तेष्वति-व्याप्तिरित्यपि द्रष्टव्यम् ।

ननु भगवत एव पूर्णत्वमुक्तम् किं तत्र प्रमाणमित्यतस्तत्सूचयन्नाह- **सर्वं ह्येतदिति** ॥ एतद्ब्रह्मोङ्कारप्रतिपाद्यमक्षराख्यं परं ब्रह्म सर्वं

गुणपूर्णमित्येतत् हि 'पूर्णमद' इत्यादि श्रुतिप्रसिद्धमित्यर्थः । ननु श्रियो ब्रह्मादिजीवानां चास्वातन्त्र्यदर्शनात्तत्र स्थित्वा तेषामादानादिकर्ता कश्चन वक्तव्यः । तथा च तस्यापि पूर्णत्वत्रिकालातीतत्वयोरवश्यं स्वीकर्तव्यत्वादवधारणमयुक्तमित्यतः सोऽपि भगवानेवेत्याह- **अयमात्मा ब्रह्मेति** ॥ श्र्यादिषु स्थित्वा योऽयमात्मा 'यच्चाप्नोति यदादत्ते' इति वचनादादानादिकर्ता प्रतीयतेऽनुमानेन स ह्योङ्कारवाच्यो विष्णुरेवेत्यर्थः ॥ २ ॥

**सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ॥ ३ ॥**

एवं समस्तप्रणवप्रतिपाद्यभगवदुपास्तिमभिधायेदानीं प्रणवांशाकारोकारमकारनादप्रतिपाद्यानां विश्वतैजसप्राज्ञतुरीयाणामुपास्तिं अकारः प्रथममात्रेत्यत्र वक्तुमादौ प्रस्तावयति- **सोयमात्येति** ॥ यः श्रीब्रह्मादीनामादानादिकर्तृत्वेनोक्तः सोऽयमात्मोङ्कारवाच्यो देहस्थो भगवान् चतुष्पात् चत्वारः पादा अंशाः यस्यासौ चतुष्पादित्यर्थः । ननु के ते चत्वारः पादाः कानि च तेषां स्थानानि कश्च तेषां व्यापारः किं विधश्च रूपं किञ्च तेषां भोग्यमित्यतो नान्तःप्रज्ञमित्यादिना तुरीयस्य वक्तुं विश्वतैजसप्राज्ञानां स्थानादीनि तावदाह- **जागरितस्थान इत्यादिना तृतीयःपाद इत्यन्तेन** ॥ तत्र विश्वस्य स्थानादिकं दर्शयति- **जागरितस्थान इत्यादिना** ॥ जागरितं स्थानं दक्षिणाक्ष्यादिरूपं यस्यासौ तथोक्तः । बहिःप्रज्ञः बहिष्ठं वस्तु प्रज्ञापयति बाह्यपदार्थविषयकसंवित्तिनिर्मातेति यावत् । सप्ताङ्गः द्वौ पादौ चत्वारो हस्ता हस्तिकर इति सप्ताङ्गवान् । एकोनविंशतिमुखः तत्राष्टादशमुखानि पुमाकाराणि मध्यमं तु गजाकारमिति शेषः । स्थूलभुक् स्थूलान् बाह्यान् शुभान्

विषयान् जीवेन्द्रियद्वारा भुङ्क्ते इत्यर्थः ।। वैश्वानरः विश्यते ज्ञानेन प्रविश्यत इति व्युत्पत्त्या ज्ञानविषयीभूतस्थूलं विश्वशब्दोक्तं भोक्तृत्वेन तत्सम्बन्धी वैश्वः, अनाशान्नरः वैश्वश्चासौ नरश्चेति वैश्वानरः । विश्व इति यावत् प्रथमःपादःप्रथमांशः ।। ३ ।।

**स्वप्नस्थानोऽनतःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ।। ४ ।।**

एवं विश्वस्य स्थानादिकं प्रतिपाद्य तैजसस्य प्रतिपादयति- **स्वप्न-स्थान इत्यादिना** ।। स्वप्नमनोरूपं स्थानं यस्यासौ तथोक्तः । अन्तःप्रज्ञः अन्तस्थितसंस्कारमयपदार्थान् प्रकर्षेण ज्ञापयतीत्यर्थः । सप्ताङ्ग एकोनविंशतिमुख इति पूर्ववद्व्याख्येयम् । प्रविविक्तभुक् जाग्रत्पदार्था-नुभवजन्यवासनोपादानकत्वेन तद्रूपत्वात्स्वप्नस्थितं वस्तु जाग्रत्पदार्थ-विलक्षणत्वात्प्रविविक्तमुच्यते । तद्भुङ्क्ते तदनुभवजन्यभोगवानित्यर्थः । तैजसो द्वितीयः पादो द्वितीयोंऽशः ।। ४ ।।

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।। ५ ।।**

एवं तैजसस्य स्थानान्युक्त्वा प्राज्ञस्यापि दर्शयितुमुत्तरो ग्रन्थः । तत्र प्राज्ञस्य सुषुप्तस्थान इति सुषुप्तं स्थानं कथ्यते । तत्सुषुप्तं स्थानं कीदृशमित्याशङ्कायां लक्षणोक्त्याऽदौ तन्निरूपयति- **यत्रेति** ।। यत्र यस्यामेवावस्थायां सुप्तः अज्ञानावृतः मन आदीन्द्रियाणां उपरतत्वा-ज्जीवस्वरूपकालाज्ञानसुषुप्त्यवस्थासुखव्यतिरिक्तं कञ्चन पदार्थं न पश्यति, कञ्चन कामं काम्यं च न कामयते, न च स्वप्नं पश्यति तत्सुषुप्तं, भावे क्तः । सुषुप्तिरिति यावत् । सुषुप्तं हृदयाकाशरूपं स्थानं यस्यासौ

तथोक्तः । एकीभूतः प्रत्यहं विश्वतैजसाभ्यामेकीभावस्यापद्यमान-त्वेनैकीभूत इत्युच्यते । प्रज्ञानघन एव अत्राग्न्याहितादिवद्घनप्रज्ञान इति विपरीतसमासः । एवकारस्य बुद्ध्या विवेकेन घनशब्देनान्वयः । तथा च घनं अज्ञानयुक्तम् उपलक्षणमेतत् । कालसुषुप्त्यवस्थासुखयुक्तं जीव-स्वरूपमेव प्रज्ञापयतीति प्रज्ञानघनः । आनन्दमयः पूर्णानन्दस्वरूपः । आनन्दभुक् विषयभोगं विनाप्यभिव्यक्तकेवलस्वरूपभूतानन्द-भुक्त्वादानन्दभुक् । तेन विश्वतैजसयोः व्यावृत्तिः । तयोः स्थूलान्तर-विषयभोगेनानन्दोक्तेः । हीत्येतदुभयं विशेषानन्तशक्तिभ्यां उपपन्नमिति प्रसिद्धिं सूचयति । चेतोमुखः अत्र मुखशब्दः सर्वदेहोपलक्षकः । ज्ञानरूपं मुखं शरीरं यस्यासौ तथोक्तः । यद्वा मुखो मुख्यः । उत्तम इति यावत् । 'मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेत्' इति वचनादुत्तमत्वं च इह पूर्णत्वमभिप्रेतम् । तथा च चेतसा ज्ञानेन मुखः पूर्ण इत्यर्थः । एतादृशः प्राज्ञः तृतीयः पादः तृतीयोंशः । आनन्दमयत्वं चेतोमुखत्वं च यत्प्राज्ञस्य कथितं तदितररूपत्रयेऽपि बोद्धव्यम् ॥ ५ ॥

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी । एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥**

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य नान्तःप्रज्ञमित्यादिना तुरीयमहिमानं पृथग्वक्तुं चतुर्णामपि महिमानं युगपदादावाह- **एष इत्यादिना** ॥ एष चतूरूपो भगवान् सर्वेषामीश्वरः । एषः सर्वज्ञः सर्वान्तर्यामी । एषः सर्वस्य योनिः कारणम् । एतदेव विशदयति भूतानां प्रभवाप्ययौ हि यस्मात् । चतूरूपोपेताद्धरेः सकाशाद्भवत इति ॥ ६ ॥

**अत्रैते श्लोका भवन्ति–**

**बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।**
**घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ ७ ॥ १ ॥**

सलिलेश्वरः स्वोक्तदार्ढ्याय ब्रह्मदृष्टान् मन्त्रान् प्रमाणत्वेन वक्तुं प्रतिजानीते- **अत्रैत इति** ।। अत्र मदुक्ते जागरितस्थान इत्याद्यर्थे । एते वक्ष्यमाणा ब्रह्मदृष्टा मन्त्राः । प्रमाणतया भवन्तीत्यर्थः । विश्वो बहिःप्रज्ञः तैजसोन्तःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्यत्र मन्त्रं पठति- **बहिरिति** ।। बहिःप्रज्ञ इत्याद्युक्तरीत्या स्पष्टार्थम् । एक एव भगवान् विश्वादिरूपेण त्रिधा बहिःप्रज्ञत्वादिप्रकारत्रयोपेतत्वेन च स्मृत इत्यर्थः ।। ७ ।।

**दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।**
**आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ।। ८ ।। २ ।।**

जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्युक्तार्थे मन्त्रं पठति- **दक्षिणेति** ।। हृदि हृदयस्थे आकाशे त्रिधा स्थानत्रयवत्त्वेन देहे व्यवस्थित इत्यर्थः ।। ८ ।।

**विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् ।**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ।। ९ ।। ३ ।।**

स्थूलभुक्प्रविविक्तभुगानन्दभुगित्युक्तार्थे मन्त्रं पठति- **विश्व इति** ।। स्थूलभुगित्याद्युक्तार्थम् । त्रिधा प्रकारत्रयेण भोगं विश्वादीनाम् ।। ९ ।।

**स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।**
**आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ।। १० ।। ४ ।।**

तत्रैव मन्त्रान्तरं पठति- **स्थूलमिति** ।। स्थूलं विश्वं तर्पयते । तैजसं प्राज्ञमित्युभयत्र तर्पयत इत्यनुवर्तते । आनन्दमानन्दः । तृप्तिं विश्वादीनाम् ।। १० ।।

**त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।**
**वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ।। ११ ।। ५ ।।**

जागरितादिस्थानेषु विश्वादिरूपो भोक्ता स्थूलादिरूपं तद्भोज्यं चेत्युभयं सर्वथा ज्ञेयमित्याशयवान् तद्वेत्तुः फलमाह- **त्रिष्विति** ।। 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानादत्र धामशब्दो गृहापरपर्यायस्थानवाची । तथा च त्रिषु दक्षिणाक्षिमुखइत्यादिनोक्तेषु जागरितादिषु धामसु स्थानेषु यो भोक्ता 'विश्वो हि स्थूलभुग्' इत्यादिना प्रकीर्तितो विश्वादिः तस्य यत् स्थूलादिकं भोज्यं 'स्थूलं तर्पयते' इत्यादिना कीर्तितं एतदुभयं यो वेद स भुञ्जानोऽभ्यवहारादिकं कुर्वाणोऽपि न लिप्यते । अहं भोक्ता ममेदं भोज्यमित्यभिमानरहितो भवति । विश्वादिरूपस्य हरेरेव भोक्तृत्वज्ञानादित्यर्थः ।। ११ ।।

**प्रभवः सर्वभावानां सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक्** ।। १२ ।। ६ ।।

'एष योनिः सर्वस्य' इत्यत्र मन्त्रं पठति- **प्रभव इति** ।। चतूरूपो हरिरेव सर्वभावानां चेतनाचेतनपदार्थानां प्रभवः उत्पादक इति निश्चयरूपं ज्ञानं सतामेव । असतां तु अन्यथेति भावः । एतदेव विवृणोति- **सर्वमिति** ।। सर्वस्य प्रणेतृत्वात्प्राणः । पुरि शेतेऽसौ पुरुषो विश्वादिचतूरूपो हरिः सर्वमचेतनं स्वरूपेण जनयति । चेतोंशून् ज्ञानरश्मियुक्तान् चेतनान् जीवान् पृथग्जडवैलक्षण्येन । देहद्वारा जनयतीत्यर्थः ।। १२ ।।

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता** ।। १३ ।। ७ ।।

भगवान्नमृदादिवदुपादानकारणं किन्नाम ? निमित्तमेवेति जनयतीत्यनेन सूचितम् । तदेव 'इच्छामात्रं प्रभोस्सृष्टिः' इत्यनेन स्पष्टयिष्यन् आदौ वादिनां पक्षान् तेषां स्वरूपव्याक्रियैव निराक्रियेति मन्यमानोऽनुवदति-

**विभूतिमित्यादिना** ॥ केचित्सृष्टिचिन्तकाः सृष्टिस्वरूपनिरूपणे दक्षत्वाभिमानवन्तो भास्कराः । विष्णोर्या विभूतिः महदादिरूपेण विविधभवनरूपा तामेव प्रसवं जगदुत्पत्तिमाहुः । अयं पक्षः अविकारतया श्रुत्यादिप्रसिद्धस्येश्वरस्यैवैतादृशविविधभवनाङ्गीकारे हीनत्वादिदोषप्राप्त्याऽयुक्त इति हृदयम् । अन्यैः प्रच्छन्नबौद्धैर्मायिभिरेषा सृष्टिः 'स्वप्नमायासरूपा', स्वाप्नपदार्थसृष्टिसदृशी ऐन्द्रजालिकमायासदृशी वा न यथार्थेति विकल्पिता निश्चितेत्यर्थः । अयमपि पक्षः 'पूर्णशक्तेः कुतो माया सार्वज्ञात्स्वप्नवत्कुतः' । 'याथातथ्यतोऽर्थान् व्यदधात्' (ईश. मं. ८) 'अक्षमाः सत्यसृष्टौ हि माया सृष्टिं वितन्वते । अनन्ताचिन्त्यविभवः कथन्तामीहते हरिः' (भाग.ता. १.१.१) 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र.सू. १.२.२९) इत्यादिश्रुतिस्मृतिसूत्रविरुद्धत्वादुपेक्ष्यः ॥ १३ ॥

**इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥१४ ॥ ८ ॥**

सिद्धान्तं निरूपयति- **इच्छेति** ॥ प्रभोः अविकरिणो मायातीतस्य हरेः सकाशाद्या सृष्टिः अखिलस्यापि जगतः सा इच्छामात्रं इच्छामात्राधीनेति सृष्टिविषये यथार्थनिश्चयवन्तो ब्रह्मादयः प्राहुः । अनेन ब्रह्मणो जगज्जन्मादिकर्तृत्वमेव सिद्धान्त इत्युक्तं भवति । एवं सिद्धान्तज्ञानकातरं प्रति पूर्वपक्षमध्ये सिद्धान्तमभिधाय पुनः पूर्वपक्षान्निरूपयति- **कालादित्यादिना** ॥ कालस्यैव सर्वोत्तमत्वध्यातारो भूतानां कालादेवोत्पत्तिं मन्यन्ते । उपलक्षणमेतत् । रुद्रचिन्तकाः ब्रह्मचिन्तकाः प्रधानचिन्तकाः भूतानां प्रसूतिं रुद्रादेरेव मन्यन्त इत्यपि द्रष्टव्यम् । एते पक्षा अयुक्ता एव, कालप्रधानयोर्जडत्वेन कतृत्वायोगात् । रुद्रस्य 'पत्युरसामञ्जस्यात्' (ब्र.सू. २.२.३७)

इत्युक्तन्यायेन दोषित्वावगमात् । ब्रह्मणोऽपि 'एको नारायण आसीन्न ब्रह्मा' इत्यादिना प्रलयेऽभावावगमेन जगत्कतृत्वायोगेन ते वादिनो मूढा इति द्रष्टव्यम् । अतो नारायण एव सर्वकर्तेति पक्षः श्रेयानित्याशयः ॥१४॥

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।**
**देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहेति ॥ १५ ॥ ९ ॥**

ननु भगवतः इच्छामात्रेणैव यत्स्रष्टृत्वमुक्तं तदयुक्तम् । प्रयोजनापेक्षया स्रष्टृत्वेऽपूर्णत्वापत्तेः । तदनपेक्षया स्रष्टृत्वे मूर्खत्वापत्तेरित्यतोऽत्रापि सिद्धान्तं विवक्षुः, पूर्वपक्षावाह- **भोगार्थमिति** ॥ अतृप्तस्यैव विष्णोर्भोगार्थं, भोगाख्यप्रयोजनाय सृष्टिरित्यन्ये प्राहुः । प्रलये सर्वजगदभावेनैकस्यैव सतः ईश्वरस्यालस्यप्राप्तेस्तत्परिहाराय क्रीडार्थं सृष्टिरित्यपरे रामानुजाः मन्यन्त इत्यर्थः । क्रीडायाः आलस्यपरिहारार्थतायाः प्रसिद्धेरिति भावः । तत्रापि सिद्धान्तमाह- **देवस्येति** ॥ देवस्यैषोऽयं जतत्सर्जनादिरूपोव्यापारः क्रीडारूपत्वात्स्वभाव एव न तेन प्रयोजनापेक्षेति भावः । यथोक्तं 'लोकवत्तु लीलाकैवल्यम्' इति । ननु भोगार्थं क्रीडार्थं वा सृष्टिः कस्मान्न स्यादित्यत आह- **आप्तकामस्येति** ॥ आप्तकामस्य पूर्णकामस्य हरेः अतृप्तिप्रयुक्ता भोगार्थं स्पृहा आलस्यपरिहारार्थं वा जातक्रीडार्थं च स्पृहा इच्छा का ? न कापीत्यर्थः । तथा च भगवत्सृष्टेः स्वप्रयोजनाभाऽवेऽपि परप्रयोजनापेक्षत्वमस्त्येवेति भावः । यथोक्तं 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति' (म.ता.नि. १.५) इति । व्याख्यातं चैतद्वाक्यं सुधायाम्- 'तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञापनार्थेत्युक्तं भवति' इति ॥ १५ ॥

**॥ इति माण्डूकखण्डार्थे प्रथमः खण्डः ॥**

## उपनिषत्

(नादप्रतिपाद्यः तुर्यरूपी विष्णुः)

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्यय-सारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः ॥ १ ॥

## भाष्यम्

'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।
मुक्तानां प्राप्यरूपोऽसौ व्यवहारे न दृश्यते ॥
सम्यक् समाहितानां तु प्राप्तानां षोडशीं कलाम् ।
अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम् ॥
अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च ।
बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च ।
यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता ॥
एतत् सर्वं तुरीयेण रूपेण न करोत्यजः ।
सर्वज्ञानप्रदश्चापि मुक्तस्यैव तुरीयकः ॥' इति ब्रह्माण्डे ॥

'अमुक्तस्य त्वदृश्यत्वात् षोडशीं वा कलामृते ।
तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः ।
विना मुक्तिं यतस्तेनाव्यवहार्य इतीरितः ।
जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम् ।
अलक्षणस्तद्राहित्यादचिन्त्यस्तत एव च ।
तत एव ह्यनिर्देश्यश्चिदानन्दैकलक्षणः ।
मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः ।

एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः ।
तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः ।
प्रत्ययो ज्ञानरूपत्वात् सार आनन्दरूपतः ।
प्रपञ्चो विस्तृतेविष्णुः शम आनन्दरूपतः ॥
उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः ॥
प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद्यतः ।
प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान् प्रभुः ।
निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः ॥
अन्यथाप्रत्ययो द्वैतं शमयेत्तं यतो हरिः ।
अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषोत्तमः ॥' इति माहात्म्ये ।
'अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपता ।
इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते ॥' इति सङ्कल्पे ॥

'स आत्मा स विज्ञेयः' इति सोऽयमात्मा चतुष्पादिति चतुर्धा विभक्त उच्यते उपसंहारार्थम् । 'सोऽयमात्माऽध्यक्षरम्' इति पृथगारम्भात् ।

'विश्वादिरूपो यस्त्वात्मा स विज्ञेयो मुमुक्षुभिः ।
निर्विशेषोऽपि भगवान्श्चतुर्द्धा समुदीरितः' इति प्रत्यये ॥ १ ॥

## उपनिषत्

(ब्रह्मदृष्टमन्त्रसंवादनिरूपणम्)

अत्रैते श्लोकाः भवन्ति–

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ २ ॥ १ ॥

## भाष्यम्

सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः ।

'हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः ।
देवः स सर्वजीवानां गम्यत्वात्समुदीरितः ॥
भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः ।
ईशानामपि मुक्तानामीशानः सोऽननाच्छ्रुतः ॥' इति प्रत्याहारे ॥

## उपनिषत्

(विश्व-तैजस-प्राज्ञ-तुर्यस्वरूपम्)

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥ ३ ॥ २ ॥**

## भाष्यम्

'कार्यकारणबन्धस्य तदधीनत्वतो विभुः ।
विश्वादिरूपो भगवान् बद्ध इत्युच्यते श्रुतौ ।
कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः' इति च ॥

स बद्धः स दुःखी स बन्धयति स दुःखयतीति । स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति । सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इति कौषारवश्रुतिः ॥

'विष्णोर्गुणोक्तिपरता मम नित्यं सुरेश्वराः ।
तदर्थमन्यद् वचनमतस्तस्य विरोधि यत् ॥
तन्ममार्थो न हि क्वापि साऽहं तत्सरणात् सदा ।
सरस्वतीति सम्प्रोक्ता तस्माज्ज्ञेया गुणा हरेः ॥'

इति महोपनिषदि ॥

## उपनिषत्

**नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥ ४ ॥ ३ ॥**

## भाष्यम्

'नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना ॥
सुप्त्यवस्थां सुखं वाऽपि विना नान्यत् प्रदर्शयेत् ।
सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः ॥' इति प्रत्यये ॥

'स्वतन्त्रे कर्तृशब्दः स्यात् प्राज्ञस्यावेदनं यथा ।
सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम् ॥' इति ब्रह्मतर्के ॥

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

एवं विश्वादीनां त्रयाणां स्वरूपं निरूप्य तुरीयस्य स्वरूपं निरूपयति- **नान्तःप्रज्ञमित्यादिना** ॥ १ ॥

**भाष्यार्थः-**

तुरीयस्य तु मूले स्थानानुक्तेस्तदुक्तिपूर्वं नान्तःप्रज्ञ इत्यादिवाक्यं अप्रतीतेर्न प्रज्ञं नाप्रज्ञमिति विरोधप्रतीतेश्च व्याचष्टे-**विष्णुरित्यादिना** ॥ नासिकामूलमारभ्य द्वादशाङ्गलान्ते मस्तकमध्य इति केचित् । मस्तक-मध्यमारभ्योपरि द्वादशाङ्गुलप्रदेश इत्यन्ये । अदृष्ट इत्यत्र सर्वथादृष्ट इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **मुक्तानामिति** ॥ सम्सारव्यवहारे यथा विश्वादयो नुमितिदृश्या न तथा दृश्यते । तर्हि तुरीयो मुक्तानां सर्वथा दृश्य इत्यत उक्तं सम्यक् समाहितानां अपरोक्षदृशामिति । तेषामपि सर्वदा दृश्यते किं नेत्युक्तं कापीति । कचिद्दर्शनकारणमाह- **प्राप्तानामिति** ॥ षोडशीं कलां प्राप्तानां पञ्चदशकलानुसन्धानं विना जीवस्वरूपं जानतामिति । नान्तःप्रज्ञं न बहिःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नोभयतःप्रज्ञं नाप्रज्ञमिति षडपि पदानि क्रमेण व्याचष्टे- **अन्तरित्या-**

**दिना** ॥ पूर्वं विश्वादिवत्संसारव्यवहारेऽनुमित्यदृश्यत्वाददृष्टमिति व्याख्यान इदानीममुक्तस्य साक्षाद्दृगविषयत्वाददृष्टमिति सापवाद-मर्थान्तरमाह- **अमुक्तस्येति** ॥ षोडशीं कलामृते अमुक्तस्यादृष्टत्वाद्वा तुरीयोऽदृष्ट इत्युक्त इति योजना । तद्विषयवाग्व्यवहारदर्शनात् कथमव्यवहार्यस्तुरीय इत्यतस्तद्व्याचष्टे- **ग्रहणादेरिति** ॥ लक्षणराहित्य-प्रतीतिं निवारयन् लक्षणपदं व्याकुर्वन् अचिन्त्यत्वादौ कारणञ्चाह- **जाग्रदिति** ॥ योजना तु लक्षणमनुमापकं हि । तत्किमत्र जाग्रदादि-प्रवृत्तिः । तद्राहित्यादलक्षणः । तत एव तत्प्रतीत्यभावादेवाचिन्त्यः । तत एवाचिन्त्यत्वादेवानिर्देश्यो निर्देष्टुमशक्यः शब्दागोचर इति यावत् ।

ननु लक्षणरहितत्वादलक्षण इति किं न स्यात् इत्यत आह- **चिदानन्देति** ॥ लक्षणान्तरमाह- **मुक्तस्येति** ॥ अप्रतीतेरैकात्म्यप्रत्यय-सारपदं व्याचष्टे- **एक इति** ॥ अनेनैकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति विग्रह उक्तो भवति । प्रपञ्चस्योपशमः संहारकृदित्यन्यथाप्रतीतेर्व्याचष्टे- **प्रपञ्च इति** ॥ तर्हि सार इत्यनेन पुनरुक्तिरित्यत उपशब्दार्थकथनपूर्वकं परिहरति- **उत्कृष्टेति** ॥ उपशब्दः उपशमशब्दः । 'उच्छम इतीरणात्' इति चेन्न । उच्छब्दार्थत्वादुपशब्दस्य प्रपञ्चोपशममित्यस्यार्थमाह- **प्रपञ्चमिति** ॥ सारादिशब्दार्थत्वेनैकार्थत्वप्रतीतिं निवारयञ्छिव-शब्दार्थमाह- **निर्दुःखेति** ॥ न विद्यते द्वैतं भिन्नं यस्मात्तदद्वैतमित्य-न्यथाप्रतीतिं निवारयन् व्याचष्टे- **अन्यथेति** ॥ वस्त्वपेक्षयान्यथाप्रत्ययो द्वैतमिति कथं शब्दलभ्यमित्यतस्तद् व्युत्पाद्य दर्शयति- **अपेक्ष्येति** ॥ योजना तु वस्तुयाथार्थ्यं वस्तुतत्वमपेक्ष्य यान्यस्वरूपता सा द्वित्वं द्वीत्युच्यते । द्वितीयेन प्रकारेणेतं ज्ञातं द्वीतम् । अत्र ज्ञानार्थः क इत्यत उक्तमिण् गताविति । तथा च तज्ज्ञानं द्वितीयप्रकारेण ज्ञातस्य ज्ञानं द्वैतमिति । 'स आत्मा स विज्ञेयः' इति तुरीयस्यैव विज्ञेयत्वमुच्यत इति

प्रतीतिं वारयति- **स आत्मेति** ॥ किमर्थमत्रोच्यते स इत्यत आह- **उपसंहारार्थमिति** ॥ चतुष्पादोपसंहारार्थमित्यर्थः ।

ननूपसंहारार्थमिति कथमुच्यते, 'सोऽयमात्माध्यक्षरम्' इत्यादिनापि निरूप्यमाणत्वादित्यत आह- **सोऽयमिति** ॥ पृथगारम्भादकारादि-वाच्यत्वनिरूपणार्थारम्भात् । ननु स आत्मा स विज्ञेय इति तुरीयस्यैव विज्ञेयत्वमुच्यत इत्येवार्थः किं न स्यादित्यत आह- **विश्वेति** ॥ इन्द्रार्जुनादिवद्रूपेषु निर्विशेषोऽपि ॥ १ ॥

**खण्डार्थः-**

उक्तार्थं श्लोकैः संवादयन् आह- **अत्रेति** ॥ प्रपञ्चोपशममिति सर्वारिष्ट-निवृत्तिकारणं तुरीयमित्युक्तम् । तत्र मन्त्रं पठति- **निवृत्तेरिति** ॥ २ ॥

**भाष्यार्थः -**

निवृत्तेः सर्वदुःखानामित्यस्यान्वयाप्रतीतेरपेक्षितं दर्शयति- **सर्वेति** ॥ तुरीयः सर्वदुःखनिवृत्तिकारणमित्येतत् कुतः केन निमित्तेन देवश्चेत्यत आह- **हरिरिति** ॥ दीव्यते गम्यत इति व्युत्पत्तिः । ननु मूले जीववाचकं नास्ति तत्कथं जीवगम्यत्वाद्देव इति कश्चेशानशब्दार्थ इत्यत आह- **भावा इति** ॥ २ ॥

**खण्डार्थः -**

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञमिति यत्तुरीयस्य विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तं तत्र मन्त्रं पठति- **कार्येति** ॥ कार्यकारणे अविद्याभ्रमौ ॥ ३ ॥

**भाष्यार्थः -**

कार्यकारणबद्धावित्यादि विश्वादीनामविद्या तत्कार्यबद्धत्वपरत्व-

प्रतीतिं निवारयन् व्याचष्टे- **कार्येति** ।। बद्धत्वमेवार्थः किं न स्यदित्यत आह- **कुत इति** ।। चिदात्मनः जडामिश्रितकेवलचिन्मात्रत्वान्न बद्धत्व-मित्यर्थः । बन्धकत्वात् बद्ध इत्येतच्छ्रुत्या च समर्थयते- **सबद्ध इति** ।। इतोऽपि बन्धकत्वात् बद्ध इत्येवाथः अन्यथा श्रुत्यभिप्रायविरोध इत्याशयवान्छ्रुत्यभिप्रायप्रतिपादिकां स्मृतिं पठति- **विष्णोरिति** ।। कथमेतत् ब्रह्मादिगुणवचनादित्यत उक्तम्- **तदर्थमिति** ।। तव विष्णोर्गुणोक्तिपरताऽस्तीति कुत इत्यतः स्वनामनिरुक्त्या समर्थयते- **साऽहमिति** ।। गुणाः गुणा एव ।। ३ ।।

**खण्डार्थः -**

न प्रज्ञानघनं नाप्रज्ञमित्युक्ते प्राज्ञाद्वैधर्म्ये मन्त्रं पठति- **नात्मान-मिति** ।। ४ ।।

**भाष्यार्थः -**

नात्मानं न परांश्चेत्येतत्प्राज्ञस्यात्मादिज्ञानाभावार्थत्वप्रतीतिं निवारयन् व्याचष्टे- **नात्मानमिति** ।। किञ्चन न संवेदयेत् इत्यस्यापवादमाह- **जीवेति** ।। 'तुर्यं तत्सर्वदृक् सदा' इत्येतत्तुरीयस्य सार्वज्ञप्रतिपादकत्वप्रतीतिं निवारयन्व्याचष्टे- **सर्वमिति** ।। ननु भवतूक्त-प्रमाणबलात् बन्धकत्वादिना बद्धत्वादिकं अमुख्यार्थे मुख्यप्रयोगे किं कारणमित्यतः स्वातन्त्र्यमित्याह - **स्वतन्त्र इति** ।। कर्तृशब्दः मुख्यशब्दः ।। ४ ।।

## प्रकाशिका

'न प्रज्ञं' विश्वादिवद्बहिरन्तरुभयतो वा जीवं न प्रज्ञापयतीत्यतः प्रज्ञं नेत्युच्यते ।। 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेनातिशयेन मुक्तान् प्रज्ञापयतीत्यतस्सर्वथाऽप्रज्ञमपि नेति नाप्रज्ञ-

मित्युच्यते । एवं च भिन्नविषयत्वान्न पदयोर्मिथो विरोध इति ज्ञेयम् । अलक्षणं जाग्रत्प्रवर्तकत्वादिलक्षणरहितम् । अत एवाऽचिन्त्यं संसारिभिरचिन्त्यम् । अव्यपदेश्यं जगत्प्रवर्तकत्वादिना विश्वादिवत् व्यवहारायोग्यम् । सर्वथा व्यपदेशागोचरो नेत्याह- **मुक्तस्येति** ॥ एकः प्रधानः । आत्मा परिपूर्णः । एकश्चासावात्मा चैकात्मा । प्रधानस्सन् परिपूर्ण इत्यर्थः । तस्य भावः ऐकात्म्यम् । एकत्वे सति पूर्णत्व-स्वभाववानित्यर्थः ।

ओंकारार्थनिरूपणपरेऽस्मिन् ग्रन्थे जीवस्य न प्रतिपाद्यता । 'एष सर्वेश्वरः' इत्यादिना सर्वेश्वरत्वादेरुक्तत्वाच्च । एवं च विश्वादयोऽपि भगवदवतारा एव । अत एव, जीवस्य स्वस्यैव विश्वाद्यवस्थायामैकात्म्य-प्रत्ययसारत्वं नास्ति, किन्तु तुरीयावस्थायामेवेत्यैक्यवादिनां दुराशाया अपि नात्राऽवकाशः । अस्माकं तु तुरीये प्रोक्तं सर्वेश्वरत्वे सति पूर्णत्वाख्यमैकात्म्यं ज्ञानरूपत्वाख्यं प्रत्ययत्वमानन्दरूपत्वाख्यं सारत्वं च सकलभगवदवतारेष्वपि समम् । तस्मादेकत्रोक्तेरन्यत्र नास्तीति नाऽभिप्रायः । किन्त्वेकस्मिन् अन्नपात्रे पक्वीभूततण्डुलानां मध्ये एकतण्डुलस्य पाके स्पर्शेन गृहीतेऽन्यत्रापि पाकानुमानवत् सर्वावतारेष्व-पीद्दग्रूपतानुमानार्थं तुरीये ऐकात्म्यप्रत्ययसारत्वाद्युक्तिरिति ज्ञेयम् ।

अद्वैतमन्यथाप्रत्ययाख्यद्वैतरहितम् । ऐक्यप्रतिपादकत्वे अद्वैतपद-स्यैकात्म्यप्रत्ययसारमित्यनेन पुनरुक्तता स्यात् । किं चैकस्मिन् देहे जीवस्याप्येकत्वेन कथं विश्वादिभेदेन चतूरूपत्वम् । अवस्थाविशेषेण चतुष्ट्वे चतुर्लक्षोत्तराशीतिलक्षयोनिषु परिवर्तमानस्यैकस्यैव जीवस्य चतुर्लक्षो-त्तराशीतिलक्षरूपता च स्यात् । तत्र सर्वत्रैकस्यैव परिवर्तमानत्वेनैकतायां कथमेकस्यैवात्रापि चतुष्ट्वम् ? अतो यत्किञ्चिदेतत् ।

कान्तिगतिमतीनां श्रुत्युक्तत्वाद्देवो गम्यत इति भावेनाऽह- **सर्वजीवानां गम्यत्वादिति**। सर्वदुःखानां निवृत्तेः प्रभुरित्येतावतैव पूर्तेः पुनरीशानपदस्य वैयर्थ्यं स्यादित्यत आह- **ईशानामपि मुक्तानामिति**। अननात् अन चेष्टायामिति धातोः प्रेरणादित्यर्थः। बन्धसम्बन्धी बद्ध इत्युच्यते। सम्बन्धश्चऽधाराऽधेयभावो जीवे, हरौ स्वस्वामिभावः। अतः शब्द-शक्त्यैवायमर्थः सिद्ध इति ज्ञेयम्।

एवं भगवति योग्यार्थसम्भवेऽपि यो हरौ द्वेषाद्धर्यवताराणां विश्वादीनामेव बद्धत्वमाशास्ते तं 'एष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्य' इति विश्वादीनां महामाहात्म्यं प्रतिपादयन्ती श्रुतिरेवाऽभासीकृत्य, नरके पातयित्वा वायुदूतैर्बद्धान् करिष्यति। अतोऽस्माभिः पृथक् न प्रयतितव्यम्।

तत्सरणात्सदेति वदता सृ गताविति धातोः सरस्सरणमनुसरणम्, तद्वती सरस्वतीति व्युत्पत्तिः सूचिता। सरोवाचकसरःशब्दवदयमपि शब्द इति ज्ञेयम्। **अयोग्यजीवेषु स्वरूपभूतसुखाऽभावेन दुःखाभाव एव सुखभ्रान्तिरिति सूचनाय सुखं वाऽपीत्युक्तम्**। सर्वदृक् सदेत्यत्र मुक्तौ मुक्तानां सर्वं दर्शयतीति सर्वदृक्। तर्हि कर्तृशब्दः कथमित्यत आह- **स्वतन्त्रे इति**॥ प्राज्ञस्यावेदनं यथेत्यस्य जीवगतावेदनं प्रति प्राज्ञस्य कारयितृत्वात् यथा प्राज्ञः किञ्चन न संवेत्तीत्यकर्तृप्रयोगः तथाऽत्रापीति भावः॥ १-४॥

## पदार्थदीपिका

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य तुरीयस्य तन्निरूपयति- **नान्तःप्रज्ञमित्यादिना**॥ तत्र जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान

इति विश्वादीनां स्थानोक्तिवत् तुरीयस्य स्थानानुक्तेस्तद्दर्शयति- **विष्णुरिति** ।। द्वादशान्त इत्यस्य मस्तकमारभ्योपरि गगने द्वादशाङ्गुल-प्रदेश इत्यर्थ इत्याहुः ।। वस्तुतस्तु नासिकामारभ्योपरि द्वादशाङ्गुलान्ते मस्तकमध्य इत्यर्थः । 'परमात्मा चतूरूपः सर्वप्राणिशरीरगः' इति पूर्वमुक्तत्वादिति ध्येयम् । तुरीयस्य कार्यं वदन्नदृष्टमित्येतत् सर्वथाऽदृष्टमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **मुक्तानामिति** ।। तथा च तुरीयो मोक्षद इत्युक्तं भवति । व्यवहारे व्यवहारदशायां संसार इति यावत् । तथा च मुक्तैरदृष्टमित्यर्थ उक्तो भवति ।

ननु सर्वथाऽदृष्टमित्येवार्थः किं न स्यादित्याशङ्कायां नेत्याह- **सम्यगिति** ।। प्राणाच्छ्रद्धामित्यादिना षट्प्रश्नोक्ताः षोडशकलाः तत्र मुख्यप्राणः षोडशसङ्ख्यापूरिका कला । तथाच सम्यक् भगवति समाहितमनसां ध्यानवतां षोडशीं कलां मुख्यप्राणं प्राप्तानां तत्परमानुग्रहवतामिति यावत् । अत एवापरोक्षदृशां अपरोक्षज्ञानस्य तदनुग्रहैकसाध्यत्वात् । कर्तरि चेयं षष्ठी । तैर्जीवन्मुक्तैः । पद्यत इति पदं स्वप्राप्यं तुरीयं दृश्यत इत्यर्थः । तैरपि न सर्वदा दृश्यते । किन्तु प्रारब्धकर्मप्रतिबन्धाभावदशायामेवेत्याशयेनोक्तम्- **कापीति** ।। काल-विशेष एवेत्यर्थः ।। पायुगुह्ययोरैक्येन दशेन्द्रियपञ्चमहाभूताख्यं पञ्चदशकलाख्यदेहानुसन्धानं विना या षोडशी कला जीवरूपा तां प्राप्तानां देहाद्भेदेन स्वस्वरूपानुसन्धानवतां स्फुटतरविवेकज्ञानवतां अत एवापरोक्षदृशामित्यप्याचार्या व्याचक्षते । नान्तःप्रज्ञमित्यादि-वाक्येऽन्तःप्रज्ञ बहिःप्रज्ञ प्रज्ञानघन प्रज्ञशब्दानां चतुर्णामर्थमाह- **अन्तरिति** ।। उभयतःप्रज्ञशब्दार्थमाह- **बहिरिति** ।। जानन् पश्यंश्च भवति जीव इति शेषः । एतदवस्थाप्रेरकौ विश्वतैजसाविति सम्प्रदाय-विदः । नञामर्थमाह-**एतत्सर्वमिति** ।। नाप्रज्ञं इत्यस्यार्थमाह- **सर्वेति** ।।

स्वयोग्यतानुसारेण पूर्णज्ञानप्रद इत्यर्थः । तथा च चरमदेहमुत्सृज्य गच्छतामप्रज्ञो ज्ञानाप्रदो न भवतीति नाप्रज्ञ इत्युच्यत इत्यर्थो द्रष्टव्यः । अदृष्टमित्यस्यार्थं प्रमाणान्तरेण दर्शयति- **अमुक्तस्य त्विति** ।। कर्तरि षष्ठी । तुशब्दो विशेषार्थः । वाशब्दोऽवाधारणे । तथा च विशेषेण षोडशीं कलामृते मुख्यप्राणानुग्रहमन्तरेण अपरोक्षज्ञानाभावेन जीवन्मुक्तत्वाभावत् । तेनादृश्यत्वादेवेत्यर्थः । देहादिना स्फुटतरविवेकरूपस्य षोडशकलाख्य जीवस्वरूपानुसन्धानरूपापरोक्षज्ञानस्य तदनुग्रहैकसाध्यत्वात् अपरोक्षज्ञानस्याभावेनामुक्तस्येत्यर्थ इत्यप्यार्याः ।

अव्यवहार्यमित्यस्यार्थमाह- **ग्रहणादेरिति** ।। उपादानादिरूपव्यवहारस्येत्यर्थः ।। **विना मुक्तिमिति** ।। मुक्तौ तु भगवद्ग्रहणादिकं भक्तस्यास्तीति भावः। तथा चाग्राह्यत्वमव्यवहार्यशब्दार्थ इति द्रष्टव्यम् । अलक्षणमित्यस्यार्थमाह- **जाग्रदादीति** ।। आदिपदेन स्वप्नसुषुप्तिसङ्ग्रहः। अलक्षणमचिन्त्यमित्यनयोर्हेतुहेतुमद्भाव इत्याह- **अचिन्त्य इति** ।। तत एव अनुमापकधर्मराहित्यादेव । अनुमित्याख्यचिन्ताऽविषय इत्यर्थः । अचिन्त्यमव्यपदेश्यमित्यनयोरपि हेतुहेतुमद्भाव इत्याह- **तत एवेति** ।। अचिन्त्यत्वादेवेत्यर्थः । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति भावः ।

नन्वलक्षणमित्यस्य सर्वथा लक्षणरहितमित्येवार्थः किन्नस्यादित्यत आह- **चिदानन्देति** ।। मुक्तस्य सर्वव्यापारहेतुत्वाख्यलक्षणसद्भावाच्च न सर्वथा लक्षणराहित्यं तदर्थ इत्याशयेनाह- **मुक्तस्येति** ।। 'ऐकात्म्यप्रत्ययसारम्' इत्यत्र ऐकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति विग्रहमभिप्रेत्यैकात्म्यादिपदानामर्थमाह- **एक इत्यादिना** ।। तदेव प्रधानपूर्णत्वमेव । प्रपञ्चोपशममित्यत्र प्रपञ्चश्चासावुपशमश्चेति विग्रह-

मभिप्रेत्य प्रपञ्चोपशमशब्दयोरर्थमाह- **प्रपञ्च इति** ।। प्रपञ्चशब्दस्य विस्तारवाचित्वाद्विस्तृतेरित्युक्तम् । देशतः कालतः गुणतश्चेत्यर्थः । शम आनन्दरूपत इत्यस्मात्पूर्वं उच्छब्दापरपर्याय उपशब्द उत्कृष्टवाचीति पूरणीयम् । एवं उपशमशब्दयोः अर्थमुक्त्वा वाक्यार्थमाह- **उत्कृष्टानन्द-रूपत्वादिति** ।। तथा च सारपदेनागतार्थतेति द्रष्टव्यम् । उत्कृष्टत्वं चात्रापरिच्छिन्नत्वं विवक्षितम् । न निर्दुःखत्वम् । तेन न शिवशब्देन गतार्थतेति मन्तव्यम् । उपशब्द इति नामैकदेशग्रहणे नामग्रहणम् । भीमो भीमसेन इतिवत् । तथा च उपशमशब्दवाच्य इत्यर्थः । प्रपञ्चस्य देहबन्धरूपस्योपशमो नाशो यस्माद्भवति असौ प्रपञ्चोपशम इत्यर्थान्तरमप्याह- **प्रपञ्चमिति** ।। **तेनापीति** ।। अनेन निर्वचनेना-पीत्यर्थः ।

सारोपशमशब्दागतार्थतया शिवशब्दार्थमाह- **निर्दुःखेति** ।। शिवशब्दः शिवशब्दवाच्यः श्रुतौ श्रुत इत्यर्थः ।। न विद्यते द्वैतं भिन्नं यस्मात्तदद्वैत-मित्यन्यथाप्रतीतिनिरासायाद्वैतशब्दार्थमाह- **अन्यथा प्रत्यय इति** ।। वस्तुगतयाथार्थ्यापेक्षयेति शेषः । शमयेत् मुक्तिदानेन ज्ञानदानेन वेति । अन्यथा प्रत्ययस्य कथं द्वैतशब्दवाच्यत्वमित्यतः प्रमाणान्तरेण तद्दर्शयति- **अपेक्ष्येति** ।। वस्तुयाथार्थ्यमपेक्ष्य याऽन्यस्वरूपता सा द्वित्वम् । वस्तु-याथार्थ्यमपेक्ष्य द्वितीयः प्रकार इत्यर्थः । तद्द्वीत्युच्यत इति ग्राह्यम् । इण्गताविति धातोर्भावे क्तप्रत्यये इतशब्देन ज्ञानमुच्यत इत्यपि ग्राह्यम् । एवं पदार्थमुक्त्वा वाक्यार्थमाह- **तज्ज्ञानमिति** ।। तथा च वस्तुगत-याथार्थ्यापेक्षया द्वितीयेन प्रकारेण ज्ञातं द्वीतम् । स्वार्थे चाण्प्रत्यये द्वीतमेव द्वैतमुच्यत इत्यर्थः । स आत्मा स विज्ञेय इति तुरीयस्यैव आत्मत्वादिकमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **स आत्मेति** ।। 'सोऽयमात्मा चतुष्पात्' इति विश्वादिरूपेण चतुर्धाविभक्त एव स आत्मा

स विज्ञेय इत्युच्यते । तत्किमर्थमित्यत उक्तम्- **उपसंहारार्थमिति** ।। चतुष्पात्स्वरूपनिरूपणोपसंहारार्थमित्यर्थः ।

ननूपसंहारार्थमित्ययुक्तम् । 'सोऽयमात्माध्यक्षरम्' इत्यादिना पुनस्तत्स्वरूपनिरूपणस्य क्रियमाणत्वेन तत्समाप्त्यनन्तरमुपसंहारस्य कर्तुमुचितत्वादित्यत आह- **सोऽयमिति** ।। विश्वादीनां प्रणवांशाकारादि-प्रतिपाद्यत्वं वक्तुं सोऽयमित्यादेः प्रकरणान्तरारम्भार्थत्वान्न पूर्वप्रकरणेनैक-वाक्यता । अत उपसंहारार्थमित्युक्तं युक्तमिति भावः । 'स आत्मा स विज्ञेय' इत्युक्तमात्मत्वादिकं विश्वादिरूपचतुष्टयसाधारणम्, न तु तुरीयस्यैवेत्यत्र प्रमाणमाह- **विश्वादिरूप इति** ।। निर्विशेषोऽपि इन्द्रार्जुनादिवद्विशेषरहितोऽपि । केवलं विशेषबलेन चतुर्धा समुदीरित इत्यर्थः । निर्विशेषोऽपि निर्भेदोऽपीति वा ।

नान्तःप्रज्ञमित्यादिनोक्तार्थे प्रमाणत्वेन सलिलेश्वरोदाहृतश्लोकेष्वादौ प्रपञ्चोपशममित्यस्मिन्नर्थे सम्मतितयोदाहृते निवृत्तेरिति श्लोके पदानां व्यवहितत्वात् प्रभुशब्दार्थं वदन्नेवान्वयं दर्शयति- **सर्वदुःखानामिति** ।। कारणभूत इति प्रभुशब्दार्थकथनम् । ननु तुरीयस्य सर्वदुःखनिवृत्तिकारणत्वं कुत इत्यत आह- **हरिरिति** ।। मोक्षदत्वात्सर्वदुःखनिवृत्तिकारणत्वमिति भावः । सर्वभावानां देव इत्यस्यार्थमाह- **देव इति** ।। सर्वभावानामि-त्यस्यार्थः- **जीवानामिति** ।। कर्तरि षष्ठी ।। **गम्यत्वादिति** ।। देव इत्यस्य 'दिवु क्रीडाविजिगीषाद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति धातु-व्याख्यानादिति भावः । तथा च 'दिवु धातोर्घञर्थे क विधानम्' इति वार्तिकेन कर्मणि कप्रत्यये ककारलोपे कित्वेऽपि च्छान्दसत्वाद् गुणे च सति निष्पन्नो देवशब्दो गम्यत्ववाचीति ज्ञातव्यम् । सर्वभावानामित्यस्य सर्व-

जीवानामित्यर्थ उक्तः तत्र जीवानां कथं भावशब्दवाच्यत्वमित्यत आह- **भावा जीवा इति** ।। भवन्ति देहसम्बन्धेनोत्पद्यन्ते । ईशान इत्यस्यार्थमाह- **ईशानामपीति** ।। ईशानां मुक्तानामननात् । 'अन चेष्टायाम्' इति धातोश्चेष्टकत्वादीशानः श्रुत इति योजना ।

'नान्तःप्रज्ञं न बहिःप्रज्ञं न प्रज्ञानघनम्' इति तुरीयस्य यद्विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तं तत्र सम्मतितयोदाहृते 'कार्यकारणबद्धौ तौ' इति मन्त्रे विश्वादीनां त्रयाणां बद्धत्वमुच्यते । तदयुक्तम् । सर्वमानविरोधादित्यतो बद्धत्वोक्तेरभिप्रायं प्रमाणेन दर्शयति- **कार्यकारणबन्धस्येति** ।। जीवनिष्ठकार्यकारणबन्धस्येत्यर्थः । खण्डार्थकथनसमये इदं प्रपञ्चयिष्यामः । तदधीनत्वत इत्यनेन तदधीनत्वादर्थवदिति न्यायं सूचयति । उक्तं चानुव्याख्याने । 'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते' (ब्र.सू. अनु. १.४.२, श्लो. १) इति । श्रुतौ कार्यकारणबद्धाविति श्रुतौ । प्रतीत एवार्थः किं न स्यादित्यत आह- **कुत इति** ।। 'बन्धेशस्य' बन्धदातृतया तत्स्वामिनः । बन्धयतीति बद्ध इति कर्तृव्युत्पत्त्यापि बद्धादिशब्दवाच्यत्वं हरेरिति भावेन श्रुतिं पठति- **स बद्ध इत्यादिना** ।। उक्तञ्च न्यायविवरणे- 'प्रसिद्धत्वात्कर्तृव्युत्पत्तेः' इति ।। किञ्च यदि हरेर्बद्धत्वमेव श्रुत्यर्थः तर्हि श्रुतीनां यद्भगवद्गुणोत्कर्षे महातात्पर्यं तद्विरुद्ध्येत । ननु गुणोत्कर्षे एव महातात्पर्यं श्रुतीनां कुत इति चेत्तत्राह- **विष्णोरिति** ।। सुरान् प्रति वेदाभिमानिसरस्वतीवाक्यमिदम् । अतो ममेति युक्तम् । गुणोक्तिपरता गुणोक्तौ तात्पर्यवत्त्वमित्यर्थः । हे सुरेश्वराः ।

ननु कथमेतत् वैष्णवानां ब्रह्मादीनामपि महिम्नः प्रतिपादनादित्यत

आह- **तदर्थमिति** ।। यदा वैष्णवानां ब्रह्मादीनामित्थं महिमा तदा किं वाच्यं विष्णुरपारमहिम इत्येवंरूपेण विष्णोर्गुणोत्कर्षप्रतिपादनार्थमित्यर्थः । अन्यद्वचनं भगवदितरेषां गुणोत्कर्षप्रतिपादकं वचनम् । यथोक्तम् । 'चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यते' इति । तस्य गुणोत्कर्षस्य । मम सम्मतः । सरस्वतीति मन्नामनिर्वचनपर्यालोचनयापि मम विष्णोर्गुणोत्कर्ष एव महातात्पर्यमित्याशयेनाह- **सेति** ।। **तत्सरणादिति** ।। तस्य भगवद्गुणोत्कर्षविरोध्यर्थस्य सरणात् अपसारणात् अहं सरस्वतीत्यर्थः । यद्वा सृगताविति धातोस्तां विष्णुगुणोत्कर्षोक्तिं प्रत्येव मम सदा गमनादहं सरस्वतीत्यर्थः ।

ननु सरःसरणं अस्या अस्तीत्यर्थे सरस्शब्दात् मतुप्प्रत्यये सरस्मतीति स्यादिति चेदुच्यते । 'मादुपधायाश्च मतोर्वोयवादिभ्यः' इत्यनेन मतुपो मकारस्य वकाराङ्गीकारात् । तथाच सरस्शब्दात्तदस्यास्तीत्यर्थे मतुप्प्रत्यये उप् इत्यस्य लोपे मकारस्य वकारे सरस्वदिति जाते स्त्रीत्वविवक्षायां ङीपि सरस्वतीति युक्तमित्यवगन्तव्यम् । सम्प्रोक्ता यस्मादिति शेषः । 'गुणाः' गुणा एव वेदप्रतिपाद्यत्वेन ज्ञेयाः ।

'न प्रज्ञानघनम्' इत्युक्ते प्राज्ञाद्वैधर्म्ये सम्मतितयोदाहृतं नात्मानमिति मन्त्रं प्राज्ञःकिञ्चन सम्वेत्तीत्यस्यापवादप्रदर्शनपूर्वकं प्रमाणेनैव व्याचष्टे- **नात्मानमिति** ।। स्वस्वरूपमित्यर्थः । परान् वक्ष्यमाणजीवकालादिव्यतिरिक्तान् पदार्थान् । संवेदयेदित्यनेन संवेत्तीत्येतत् णिजन्ततया व्याख्येयमिति सूचयति । जीवकालाभ्यां सहितं तमः जीवकालतमः प्रदर्शयेत् । सुप्ताविति शेषः । नाप्रज्ञमित्युक्ते सर्वज्ञानप्रदत्वे सम्मतितयोदाहृतं तुर्यं तत्सर्वदृक्सदेति मन्त्रं व्याचष्टे- **सर्वं त्विति** ।। स्वस्वरूपादिकं सर्वं योग्यमित्यर्थः । दर्शयेदिति वचनेन सर्वदृगित्येतदपि णिजन्तमित्युक्तं भवति ।

ननु बन्धके बद्धशब्दः तथाऽसंवेदयितरि न संवेत्तीति कर्तृशब्दः । तथा सर्वप्रदर्शयितरि सर्वदृगिति च कर्तृशब्दः कस्मात्प्रयुज्यते । अनुशासनाभावादित्यत आह- **स्वतन्त्र इति** ॥ 'स्वतन्त्रः स कर्ता' इति वचनात् क्रियायां यः स्वतन्त्रः तस्मिन् कर्तृशब्दः स्यात् कर्तेति मुख्यः कर्तृशब्दप्रयोगः स्यात् । अत्रैतदुपनिषदुक्तमेवोदाहरणं दर्शयति- **प्राज्ञस्येति** ॥ यथाऽसंवेदयितुः प्राज्ञस्य न संवेत्तीत्यसंवेदनक्रियां प्रति मुख्यतः कर्तृत्वं कथ्यते । इतरेषामसंवेदनरूपक्रियाप्रदाने प्राज्ञस्यैव स्वातन्त्र्यात् । तथा च सर्वप्रदर्शके तुरीये सर्वदृगिति सर्वविषयकदर्शनक्रियां प्रति मुख्यतः कर्तृत्वमुच्यते । इतरेषां दर्शनक्रियाप्रदाने तुरीयस्यैव स्वतन्त्रत्वादित्यर्थः । तथा च ब्रह्मतर्कवाक्ये 'स्वतन्त्रे कर्तृशब्दः स्यात्' इति स्वोक्तार्थे दृष्टान्तत्वेनैतद्वाक्योक्तप्रमेयस्योपादानात्संवेत्ति सर्वदृगितिपदद्वयं णिजन्तत्वेनैव व्याख्येयमिति भावः । एवं बन्धनरूपक्रियायां ईश्वरस्यैव स्वतन्त्रत्वेन बन्धस्य तदधीनत्वात् तदधीनत्वादर्थवदिति न्यायेन बद्धशब्दप्रयोगोऽपि युक्त इत्यवगन्तव्यम् ॥ १-४ ॥

## उपनिषत्

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ ५ ॥ ४ ॥**

## भाष्यम्

'निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा ।
यथा भृत्ययुतः स्वामी न ह्यज्ञानं परात्मनः ॥' इति च ॥
'अभेदमपि तद् ब्रह्म बहुरूपं विशेषतः ।
करोति न करोतीति व्यवहार्यं स्वशक्तितः ॥' इति च ॥

न संवेदयतीत्यस्वीकारे 'तुर्यं तत् सर्वदृक् सदा', 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति च विरुद्धम् । द्वैताग्रहणकारणत्वं तुल्यमित्यर्थः ॥

'द्वैतं न ग्राहयेत् तुर्यो न च प्राज्ञः कथञ्चन ।
द्वैतग्रहणबीजं तु निद्रा प्राज्ञं समाश्रिता ॥'

इति प्रकटश्रुतिः ॥ ५ ॥

## उपनिषत्

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ ६ ॥ ५ ॥

अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ७ ॥ ६ ॥

## भाष्यम्

विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते ॥

## उपनिषत्

(भगवत्प्रसादेनापरोक्षधीः)

अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥ ८ ॥ ७ ॥

## भाष्यम्

'अनादिमायया विष्णोरिच्छया स्वापितो यदा ।
तया प्रबोधमायाति तदा विष्णुं प्रपश्यति ॥'

इति प्रकाशिकायाम् ॥ ८ ॥

## उपनिषत्

(बन्धः न स्वाभाविकः)

प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ९ ॥ ८ ॥

## भाष्यम्

'तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।
वस्तुतोऽसौ नचैवास्ति परमस्य वशे यतः ॥
तन्वादिकस्तथाऽप्येष ह्यभिमानात् प्रदृश्यते ।
अतः स विद्यत इति त्वङ्गीकारो भवेद् यदि ।
तथापि भगवज्ज्ञानात् स निवर्तेदसंशयम् ॥' इति ब्रह्मतर्के ॥

अद्वैतमनन्यथाज्ञातं परब्रह्मादिवस्तु । द्वैतं द्विधा ज्ञातमन्यथा ज्ञातमज्ञैः । परमार्थतः परमेश्वरात् । तस्यैव मायामात्रं तदिच्छया निर्मितम् । तदन्यथाज्ञानम् । तस्मात् तदिच्छयैव निवर्तते ॥

'परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा ।
तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा ॥
जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च ।
परमार्थात् पराद् विष्णोर्जातमिच्छावशादनु ॥
मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम् ।
उत्तमत्वात् परार्थोऽसौ भगवान् विष्णुरव्ययः ॥' इति च ॥

## उपनिषत्

(भगवति विज्ञाते मिथ्याज्ञानं निवर्तते)

विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ॥ १० ॥ ९ ॥

॥ इति द्वितीयः खण्डः ॥

## भाष्यम्

अनन्यथा इतमवगतमद्वैतम् । द्वैतं वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञानमित्यर्थः ॥

अतो विकल्पः शरीरादिसम्बन्धः केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते । अयं सतां वादः– ज्ञाते सति ब्रह्मणि द्वैतमन्यथाज्ञानं निवर्तत इति ॥

'विकल्पो देहबन्धादिः केनचित् कारणेन तु ।
कल्पितोऽपि निवर्तेत गुरुवाक्यादसंशयम् ॥
एष एवं सतां वादो ज्ञाते ब्रह्मणि तत्वतः ।
निवर्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ ॥' इति च ॥

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

अद्वैतमित्युक्ते प्राज्ञतुरीययोः साधर्म्ये मन्त्रं पठति ॥ **द्वैतस्येति** ॥ द्वैतस्य देहादिविषये स्वातन्त्र्यस्याग्रहणं तदग्रहणाहेतुत्वं प्राज्ञतुरीययोः समम् । नात्मानमित्यत्र प्राज्ञात्तुरीयस्य वैधर्म्यमुक्तम् । प्रकारान्तरेण वैधर्म्यमाह- **बीजेति** ॥ बीजनिद्रा मूलाविद्या ॥ ५ ॥

प्रकारान्तरेण विश्वादीनां साधर्म्यवैधर्म्ये निरूपयन् स्तेभ्यस्तुरीयस्य वैधर्म्यमाह- **स्वप्नेति** ॥ स्वप्नो भ्रमः । निद्रा अविद्या । अस्वप्ननिद्रया स्वप्नं विना निद्रया । अत्र विश्वादीनां कार्यकारणबद्धत्वादिकं जाग्रदाद्यवस्था-पन्नजीवबन्धकत्वादिति द्रष्टव्यम् ॥ ६ ॥

**भाष्यार्थः-**

'बीजनिद्रायुत' इत्यादि प्राज्ञादीनामविद्यादिवशत्वार्थप्रतीतिं निवारयन्

व्याचष्टे- **निद्रेति** ॥ प्राज्ञः किञ्चन न संवेदयेत्तुरीयः सर्वं संवेदयेदित्युक्त्या प्राप्तविरुद्धधर्माधिकरणत्वेन तयोः प्राप्तां भेदशङ्कां निवारयति - **अभेद-मिति** ॥ 'सर्वदृक्' इति 'सर्वं तु दर्शयेत्' इति व्याख्यातम् । यथास्थिताङ्गीकारे बाधकं चाह- **न संवेदयतीति** ॥ 'तुर्यं तत्सर्वदृक्' इति ज्ञानमुक्त्वा प्राज्ञतुरीययोरग्रहणं ज्ञानराहित्यं तुल्य-मित्युक्तं तद्विरुद्धमित्यर्थः । अस्तु सर्वदृक्सर्वप्रदर्शक इति । 'द्वैतस्याग्रहणं तुल्यम्' इत्यस्य कोऽर्थ इत्यत आह- **द्वैतेति** ॥ उक्तमर्थं प्रमाणेन दृढयति- **द्वैतमिति** ॥ 'बीजनिद्रायुत' इत्येतन्निद्रा-युतास्त्विति व्याख्यातमपि स्पष्टं व्याचष्टे - **द्वैतेति** ॥ ५ ॥

**खण्डार्थः-**

एवं विश्वादिकार्याकारित्वेनातिविलक्षणस्य तुरीयस्य 'स आत्मा स विज्ञेयः' इत्युक्ते दर्शनप्राप्ती कदा भवत इति जिज्ञासायामाह- **अन्यथेति** ॥ अन्यथा गृह्णतः अहं ममेत्यादिभ्रामकयुक्तस्य स्वप्नः स्वप्नदर्शित्वादिभ्रमो भवति तत्वमजानतो निद्रा मूलाविद्या भवति । तयोर्विपर्यासे आवर्तने क्षीणे सति तुरीयं पदमश्नुते प्राप्नोति ॥ ७ ॥

**भाष्यार्थः -**

अन्यथागृह्णतः स्वप्न इत्येतदर्थाप्रतीतेर्व्याचष्टे- **विपरीतेति** ॥ ६-७ ॥

**खण्डार्थः -**

तयोर्विपर्यासक्षयस्ततस्तद्दर्शनादि च किं कालाद्भवति, नैवम् । किं तर्हि भगवत्प्रसादादित्याह- **अनादीति** ॥ ८ ॥

**भाष्यार्थः -**

अनादिमायया अनाद्यज्ञानेनेत्यन्यथाप्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे- **अनादीति** ॥ ८ ॥

खण्डार्थः -

ननु अहंममेदमित्यादिस्वस्वामिभावसम्बधरूपो बन्धलक्षणो द्वितीयः प्रपञ्चो यदि जीवस्वभावः, तर्हि कथमसौ भगवत्प्रसादादपि निवर्तेत, मैवम् । भगवदिच्छाधीनत्वात्तस्य भगवत्प्रसादात्तदपगमे तन्निवृत्त्युपपत्ते-रित्याह - **प्रपञ्च इति** ॥ ९ ॥

भाष्यार्थः-

जगतो ज्ञाननिवर्त्यत्वपरत्वप्रतीतिं निवारयत्प्रपञ्चो यदीति वाक्यं व्याख्यातुमपेक्षितपूर्वभाविप्रमेयमाह- **तन्वेति** ॥ वस्तुतोऽसौ स्वस्वामि-सम्बन्धः । 'अभिमानात्' अज्ञानात् तद्व्याख्याति- **अत इत्यादिना** ॥ अतः अज्ञानेन दर्शनात् । सदेहादौ स्वस्वामिसम्बन्धः विद्यत इत्यङ्गी-कारो यदि भवेत्तथापि स भगवज्ज्ञानान्निवर्तेदिति योजना । स्ववाक्येन समग्रं वाक्यं योजयितुं जीवस्य प्रपञ्चाभिधेयदेहादावन्यथाज्ञानं किं निमित्तकम् । यद्भगवत्प्रसादान्निवर्तेतेत्यतः प्राप्तद्वितीयार्धगतपदाना-मर्थमाह- **अद्वैतमित्यादिना** ॥ अनन्यथाज्ञातं महद्भिरिति शेषः । योजयति- **तदिति** ॥ तस्मात् तदिच्छानिर्मितत्वात् तदन्यथाज्ञानं तदिच्छयैव निवर्तते । एवं च सति समग्रवाक्ययोजना । जीवानां देहादौ यः स्वस्वामिसम्बन्धः । स स्वातन्त्र्येण नास्त्येव । यद्युक्तरूपप्रपञ्चो विद्येत विद्यत इत्यङ्गीक्रियते । तर्ह्यपि स परमार्थतो भगवत्प्रसादादिति यावत्, निवर्तेत । यद्युक्तरूपप्रपञ्चो जीवानां यथार्थस्तर्हि कथं स निवर्तेतेत्यत उक्तमिदम्- **द्वैतमिति** । महद्भिर्द्वितीयेन प्रकारेणाज्ञातं ब्रह्मादिवस्तु अद्वैतम् । इदं अज्ञैर्द्वितीयेन प्रकारेण ज्ञातं द्वैतम् । वस्त्वपेक्षया द्वितीयप्रकारेण ज्ञाने किं निमित्तमित्यतः उक्तम्- **माया-मात्रमिति** ॥ जीवानां देहादौ भगवदिच्छया जातमन्यथाज्ञानमस्वाभा-

व्याचष्टे- **निद्रेति** ॥ प्राज्ञः किञ्चन न संवेदयेत्तुरीयः सर्वं संवेदयेदित्युक्त्या प्राप्तविरुद्धधर्माधिकरणत्वेन तयोः प्राप्तां भेदशङ्कां निवारयति - **अभेदमिति** ॥ 'सर्वदृक्' इति 'सर्वं तु दर्शयेत्' इति व्याख्यातम्। यथास्थिताङ्गीकारे बाधकं चाह- **न संवेदयतीति** ॥ 'तुर्यं तत्सर्वदृक्' इति ज्ञानमुक्त्वा प्राज्ञतुरीययोरग्रहणं ज्ञानराहित्यं तुल्य-मित्युक्तं तद्विरुद्धमित्यर्थः । अस्तु सर्वदृक्सर्वप्रदर्शक इति । 'द्वैतस्याग्रहणं तुल्यम्' इत्यस्य कोऽर्थ इत्यत आह- **द्वैतेति** ॥ उक्तमर्थं प्रमाणेन दृढयति- **द्वैतमिति** ॥ 'बीजनिद्रायुत' इत्येतन्निद्रायुतास्त्विति व्याख्यातमपि स्पष्टं व्याचष्टे - **द्वैतेति** ॥ ५ ॥

**खण्डार्थः-**

एवं विश्वादिकार्याकारित्वेनातिविलक्षणस्य तुरीयस्य 'स आत्मा स विज्ञेयः' इत्युक्ते दर्शनप्राप्ती कदा भवत इति जिज्ञासायामाह- **अन्यथेति** ॥ अन्यथा गृह्णतः अहं ममेत्यादिभ्रामकयुक्तस्य स्वप्नः स्वप्नदर्शित्वादिभ्रमो भवति तत्वमजानतो निद्रा मूलाविद्या भवति । तयोर्विपर्यासे आवर्तने क्षीणे सति तुरीयं पदमश्नुते प्राप्नोति ॥ ७ ॥

**भाष्यार्थः -**

अन्यथागृह्णतः स्वप्न इत्येतदर्थाप्रतीतेर्व्याचष्टे- **विपरीतेति** ॥ ६-७ ॥

**खण्डार्थः -**

तयोर्विपर्यासक्षयस्ततस्तद्दर्शनादि च किं कालाद्भवति, नैवम् । किं तर्हि भगवत्प्रसादादित्याह- **अनादीति** ॥ ८ ॥

**भाष्यार्थः -**

अनादिमायया अनाद्यज्ञानेनेत्यन्यथाप्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे- **अनादीति** ॥ ८ ॥

**खण्डार्थः -**

ननु अहंममेदमित्यादिस्वस्वामिभावसम्बधरूपो बन्धलक्षणो द्वितीयः प्रपञ्चो यदि जीवस्वभावः, तर्हि कथमसौ भगवत्प्रसादादपि निवर्तेत, मैवम् । भगवदिच्छाधीनत्वात्तस्य भगवत्प्रसादात्तदपगमे तन्निवृत्त्युपपत्ते-रित्याह - **प्रपञ्च इति** ॥ ९ ॥

**भाष्यार्थः-**

जगतो ज्ञाननिवर्त्यत्वपरत्वप्रतीतिं निवारयत्प्रपञ्चो यदीति वाक्यं व्याख्यातुमपेक्षितपूर्वभाविप्रमेयमाह- **तन्वेति** ॥ वस्तुतोऽसौ स्वस्वामि-सम्बन्धः । 'अभिमानात्' अज्ञानात् तद्व्याख्याति- **अत इत्यादिना** ॥ अतः अज्ञानेन दर्शनात् । सदेहादौ स्वस्वामिसम्बन्धः विद्यत इत्यङ्गी-कारो यदि भवेत्तथापि स भगवज्ज्ञानान्निवर्तेदिति योजना । स्ववाक्येन समग्रं वाक्यं योजयितुं जीवस्य प्रपञ्चाभिधेयदेहादावन्यथाज्ञानं किं निमित्तकम् । यद्भगवत्प्रसादान्निवर्तेतेत्यतः प्राप्तद्वितीयार्धगतपदाना-मर्थमाह- **अद्वैतमित्यादिना** ॥ अनन्यथाज्ञातं महद्भिरिति शेषः । योजयति- **तदिति** ॥ तस्मात् तदिच्छानिर्मितत्वात् तदन्यथाज्ञानं तदिच्छयैव निवर्तते । एवं च सति समग्रवाक्ययोजना । जीवानां देहादौ यः स्वस्वामिसम्बन्धः । स स्वातन्त्र्येण नास्त्येव । यद्युक्तरूपप्रपञ्चो विद्येत विद्यत इत्यङ्गीक्रियते । तर्ह्यपि स परमार्थतो भगवत्प्रसादादिति यावत्, निवर्तेत । यद्युक्तरूपप्रपञ्चो जीवानां यथार्थस्तर्हि कथं स निवर्तेतेत्यत उक्तमिदम्- **द्वैतमिति** । महद्भिर्द्वितीयेन प्रकारेणाज्ञातं ब्रह्मादिवस्तु अद्वैतम् । इदं अज्ञैर्द्वितीयेन प्रकारेण ज्ञातं द्वैतम् । वस्त्वपेक्षया द्वितीयप्रकारेण ज्ञाने किं निमित्तमित्यतः उक्तम्- **माया-मात्रमिति** ॥ जीवानां देहादौ भगवदिच्छया जातमन्यथाज्ञानमस्वाभा-

विकत्वान्निवर्तत इत्याकूतार्थः । स्पष्टेन च प्रमाणेन तद्वाक्यं व्याचष्टे- **परेणेत्यादिना** ।। परमार्थादित्युक्तं विवरीतुमुक्तमुत्तमत्वादुत्तमार्थत्वात् परार्थ इति । अनेन प्रमाणेन द्वितीयार्धार्थ उक्तो भवति । तन्मिथ्याज्ञानं भगवज्ज्ञानान्निवर्तत इति प्रथमार्धार्थोऽवगन्तव्यः । अद्वैतमनन्यथाज्ञातं द्वैतं द्विधाज्ञातं अन्यथाज्ञातमिति व्याख्यातम् । तत्कथं शब्दत आगत-मित्यतस्तद् व्युत्पाद्य दर्शयति- **अनन्यथेति** ।। द्विधा इतमिति शेषः । तात्पर्यार्थमाह- **अन्यथा ज्ञातमित्यर्थ इति** ।। ९ ।।

**खण्डार्थः-**

पूर्ववाक्यार्थमेव विशदयन्नाह- **विकल्प इति** ।। भगवदिच्छाधीनत्वे-नास्वाभाविकत्वादहं ममेत्यादिस्वस्वमिभावसम्बन्धरूपो विकल्पो यदि केनचित् स्वाभाविक इति कल्पितस्तर्ह्यसावुपदेशान्निवर्तेत । भगवान् आचार्य एव वाक्यद्वयं प्रमाणस्ववचनाभ्यां सम्यग्व्याकरिष्यति ।। १० ।।

**भाष्यार्थः-**

विकल्प इति वाक्यं पूर्ववाक्यानतिभिन्नार्थत्वेन वैयर्थ्यमुपसंहारार्थ-तया परिहरन् व्याचष्टे- **अत इति** ।। जीवानां देहादौ स्वातन्त्र्येण स्व-स्वामिभावस्यातात्विकत्वादित्यर्थः । कः सतां विदुषां वाद इत्यत आह- **ज्ञाते सतीति** ।। तद्वाक्यं प्रमाणेन स्पष्टं व्याचष्टे- **विकल्प इति** ।। १० ।।

**।। इति श्रीमाण्डूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां,**
**खण्डार्थे च द्वितीयः खण्डः ।।**

**प्रकाशिका**

'बीजनिद्रायुतः' इत्यत्र प्राज्ञ एव भ्रमबीजभूतनिद्रायुत इति प्रतीयते ।

अत आह भाष्यकारः- 'निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा' इति ॥ 'न संवेदयतीत्यनङ्गीकारे' इत्यत्र न संवेत्तीति शब्दस्य न संवेदयतीत्यर्थानङ्गीकारे । उपलक्षणं चैतत् । सर्वदृक् शब्दस्य सर्वदर्शकत्वार्थानङ्गीकारे चेत्यपि द्रष्टव्यम् । 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति सर्वदृक्त्वेनोक्ततुरीये पुनर्द्वैताग्रहणाख्यादर्शनकथनं विरुद्धमित्यर्थः । तर्हि भवतामपि सर्वं दर्शयति, द्वैतं न दर्शयतीति कथं न विरोध इति चेन्न । अस्माभिर्मुक्तौ तुरीयो देवः सर्वं दर्शयतीत्यर्थाङ्गीकारादिदानीं सर्वं न दर्शयतीत्यर्थाङ्गीकारेणाविरोधात् । मुक्तौ च द्वैतपदोक्तभ्रमस्यैवाभावात् विद्यमानं सर्वं दर्शयतीत्यर्थस्य नितरामविरोधः । न हि शशविषाणं न दर्शयतीत्येतावता सर्वदर्शयितृत्वस्य विरोधं कोऽपि शङ्कते । परस्य तु संसार एवोभयोः कथनाद्दुष्परिहारो विरोध इति भावः ।

'प्राज्ञं समाश्रिता' सुप्त्यवस्थाप्रवर्तकप्राज्ञाधीनेत्यर्थः । 'अन्यथा गृह्णत' इति हेतुगर्भविशेषणबलात् स्वप्ने वासनामयत्वेन सूक्ष्मघटेषु स्थूलघटत्वभ्रमः प्राग् भवतीति सिद्ध्यति । एवमन्यथा गृह्णतः स्वप्नद्रष्टुः स्वप्ने जाग्रद्दृष्टपदार्थ एवायमिति भ्रमान्तरं च जायते । 'नीञ् प्रापणे' इति धातोः गत्यर्थानां च ज्ञानार्थत्वात् स्वपतः वस्तुतत्त्वमजानत; नः योऽनुभवः स स्वप्न इति व्युत्पत्त्या भ्रमान्तरं च भवतीति भावेनाऽह भाष्यकारो - **विपरीतज्ञानादिति ॥** इदं च स्वप्नस्य नियमेन भ्रमद्वयहेतुत्वादेतद्विमोचने महान् प्रयत्नः कर्तव्य इति सूचनार्थम् । 'अनादिमायया सुप्तः' इत्यस्य यथाश्रुतार्थाङ्गीकारे जगतो मायाकल्पितत्वभ्रमः स्यादतः प्रमाणेनैव तां श्रुतिं व्याख्याति - **अनादिमायया विष्णोरिच्छयेति ॥**

पञ्चभूतात्मकदेहमधिकृत्य जीवस्य यः स्वीयत्वस्वस्वामित्वाख्यसम्बन्धः सः प्रपञ्चपदेनोच्यत इति भावेनाऽह- **तन्वा स्वस्वामिसम्बन्धः इति ॥**

सः प्रपञ्चः यदि विद्येत वस्तुतो मम वशे विद्येतेति कस्यचिद्दुराग्रहोऽपि यदि विद्येतेति विद्येतेतिपदस्याऽवृत्त्या योजनामभिप्रेत्याऽऽह- **अतस्स विद्यत इतीति** ॥ विद्यत इति वदता आद्यो लिङ् 'व्यत्ययो बहुलम्' इति वचनाल्लडर्थो वेति सूचितम् । तथा सति विद्येत भवेदित्यर्थः सम्पन्नः । स निवर्तेत भगवदपरोक्षज्ञानानन्तरं तत्प्रसादापरपर्यायतदिच्छया निवर्तेत । न संशयः, तत्र संशयो न । तत्र हेतुसूचनायाऽऽह- **मायामात्रमिति** ॥ यतः प्रपञ्चः मायामात्रं केवलभगवदिच्छया निर्मितत्वात् मायामात्रम् । केवलं माया, कार्यकारणयोरभेदव्यपदेशस्य 'लाङ्गलेन जीवनम्' इत्यादौ बहुलमुपलम्भात् । अतः परमार्थतः, सर्वोत्तमभगवत्प्रसादादित्यर्थः, निवर्तेतेति पूर्वेणान्वयः । तर्हीदानीमेव भगवदपरोक्षमानमभिमाननिवृत्तिश्च कुतो न जायत इत्यत आह- **इदं द्वैतमद्वैतमिति** ॥ अद्वैतं योगिभिः द्वैतं द्वितीयप्रकारतया ज्ञातं नेति व्युत्पत्याऽद्वैतपदवाच्यमिदं देहाभिमान-कारणीभूतं परं ब्रह्म द्वैतमधुना जीवैर्द्विप्रकारतया ज्ञातं वस्तुतत्वापेक्षया वैपरीत्येन ज्ञातमित्यर्थः । अत ईशनियतार्थभगवदपरोक्षज्ञानाभावान्न निवर्तत इति नञ आवृत्त्या योजना । यदा त्विदं भगवत्स्वरूपं जीवानां श्रवणमननादिना अद्वैतमनन्यथा ज्ञातं भवति तदा भगवदिच्छया निवर्तेत, न संशय इति पदावृत्त्या योजना । इममेवार्थं सप्रमाणकमाह- **अद्वैत-मित्यादिना** ॥ श्रुतिरपि स्वोक्तपूर्वार्थमेव विशदयन्ती कदा निवर्तत इत्यस्यापि स्पष्टमुत्तरमाह - **विकल्प इति** ॥ अस्माभिस्तु श्रुतेस्तात्पर्य-वसितमर्थमादाय मन्दानामप्युकाराय प्रागेकवाक्यतया योजना कृता । विकल्पः विरुद्धः कल्पः कल्पनारूपो देहादावहम्मतारूपः सम्बन्धः यदि केनचिदज्ञानादिना कल्पितो निष्पादितः तर्हि उपदेशाद्गुरूपदेशानन्तरं निवर्तेत । तत्कोऽसौ गुरूपदेश इत्यत आह - **अयं वाद इति** ॥ ब्रह्मणि

ज्ञाते सति श्रवणादिना परोक्षीकृते सति द्वैतं ब्रह्मविषयकमन्यथाज्ञानं न विद्यते। तत्त्वतो ज्ञाते वस्तुनि पुनर्भ्रमायोगात्। याथातथ्येन स्वमाहात्म्य-द्रष्टरि पुरुषे ब्रह्मणः कृपावश्यम्भावात्। ज्ञाते ब्रह्मण्यपरोक्षीकृते सति देहादिविषयेऽपि स्वीयत्वभ्रमो विनिवर्तेत। अयं सतां वादः गुरूणामुप-देशः। एतादृशगुरूपदेशात् स्वभ्रमनिवर्तकब्रह्मापरोक्षज्ञानाय गुरूपदेशादेव श्रवणादिकं कुर्वतो भगवदपरोक्षज्ञाने सति तदिच्छया देहादौ या स्वातन्त्र्य-भ्रमनिवृत्तिः सा सर्वस्याप्यादिकारणत्वाद् गुरूपदेशादेव भवतीति भावः। एतद्वाक्यार्थमपि सप्रमाणकमाह- **अनन्यथा इतमित्यादिना** ॥९-१०॥

## पदार्थदीपिका

'नात्मानम्' इत्यादिना प्राज्ञतुरीययोर्वैधर्म्यं उक्त्वा प्रकारान्तरेणापि वैधर्म्यं प्रतिपादयितुं प्रवृत्ते 'बीजनिद्रा' इति मन्त्रे प्राज्ञस्य मूलाज्ञानयुक्तत्वं प्रतीयते। तामपाकुर्वन्निद्रायुतत्वोक्तेरभिप्रायं प्रमाणे-नैव दर्शयति- **निद्रायुता इति** ॥ प्राज्ञस्योक्तं निद्रायुतत्वं विश्वतैजस-योरपि साधारणमित्याशयेन 'विश्वाद्याः' इत्युक्तम्। सा निद्रा। **भृत्ययुत इति** ॥ भृत्यस्य तदधीनत्वात् भृत्ययुतः स्वामीत्युच्यते यथेत्यर्थः। 'प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक्सदा' इति विरुद्ध-धर्मप्रतिपादनेन प्रसक्तां भेदशङ्कां निराकरोति- **अभेदमपीति** ॥ अभेदेऽपि भेदकार्यकारिरूपाद्विशेषतोऽभेदमपि अभिन्नमपि तद्ब्रह्म बहुरूपमिति सम्बन्धः।

ननु रूपाणामभेदे एतत्सर्वं तुरीयेण रूपेण न करोति विश्वादिरूपेण करोतीति कथं व्यवहार इत्यतः सोऽपि विशेषशक्तित एवेत्याह- **करोति न करोतीति** ॥ स्वशक्तितः स्वाभिन्नविशेषशक्तित इत्यर्थः। अघटित-घटनासामर्थ्यादिति वा। 'तुर्यं तत्सर्वदृक्' इति वाक्ये सर्वदृगित्येतत् सर्वं

दर्शयेदिति व्याख्यातम् । णिजन्ततामनङ्गीकृत्य व्याख्याने बाधकमाह- **संवेदयतीति** ।। सर्वदृगित्यस्य संवेदयतीत्यर्थास्वीकार इत्यर्थः । 'विद् ज्ञाने' 'दृशिर् प्रेक्षणे' इति धात्वोरेकार्थत्वात् दर्शयतीत्यस्वीकार इति वक्तव्ये संवेदयतीत्यस्वीकार इत्युक्तमिति ज्ञातव्यम् । तुरीयं सर्वदृगिति तुरीयस्य सार्वज्ञमुक्त्वाऽग्रहणं तुल्यमिति तुरीयस्याज्ञानोक्तेर्विरुद्धत्वं स्यात् । ज्ञानाज्ञानयोरेकत्र विरुद्धत्वादतो दर्शयेदित्येव व्याख्येयमित्यर्थः । दर्शयतीत्यस्वीकार इत्यपि क्वचित्पाठः ।

ननु प्राज्ञतुरीययोर्द्वैताग्रहणं वा कथमुच्यते । तयोरज्ञानाभावादित्यतस्तद्वाक्यं व्याचष्टे- **द्वैतग्रहणेति** ।। प्राज्ञतुरीययोर्द्वैतस्य देहादिविषयस्वातन्त्र्यस्य यद्ग्रहणं तद्विषयकं यज्ज्ञानं भ्रमरूपं तदकारणत्वं तुल्यमित्यर्थः । प्राज्ञं तुरीयं च प्राप्तानां देहादिविषयस्वातन्त्र्यभ्रमो न भवतीति तदकारणत्वमुभयोरिति भावः । द्वैतस्याग्रहणं तुल्यमित्येतद् द्वैतग्रहणाकरणत्वं तुल्यमित्यर्थ इति व्याख्यातम् । तत्र प्रमाणं चाह- **द्वैतमिति** ।। नग्राहयेदित्युक्त्या द्वैतग्रहणाकारणत्वमिति व्याख्येयमिति सूचितं भवति । बीजनिद्रायुतः प्राज्ञ इत्येतत्प्रमापयति- **द्वैतग्रहणेति** ।। प्राज्ञं समाश्रिता प्राज्ञाधीनेत्यर्थः ।

नन्वेतादृशस्य तुरीयस्य प्राप्तिः कदेत्याशङ्कापरिहाराय 'अन्यथा गृह्णत' इति मन्त्रः प्रवृत्तः । तस्यायमर्थः । तत्वं स्वतन्त्रतत्वं भगवन्तमजानतः पुंसो या निद्रा अविद्याऽस्ति तया अन्यथागृह्णतः अहं ममेत्यादिजाग्रत्कालीनस्वातन्त्र्यभ्रमयुक्तस्य स्वप्नः स्वप्नदर्शित्वं भ्रमो भवति । जाग्रदवस्थायां स्वातन्त्र्यादिविषयकभ्रमजन्यसंस्कारेण जाग्रत्कालीनमिदमिति स्वप्नरूपो भ्रमो भवतीति । तदेतत्तात्पर्यमाह- **विपरीतज्ञानादिति** ।।

नन्वनाद्यविद्याबद्धस्य जीवस्य जाग्रत्स्वप्नयोर्भ्रमयोर्विपर्यासक्षय एव कथं स्यात् इत्याशङ्कायां यदा सद्गुरूपदेशादिना भगवत्प्रबोधोदय-स्तदानीमेवेत्याशयेन प्रवृत्तं अनादिमाययेति वाक्यं मायाशब्दस्या-निर्वचनीयाविद्यापरत्वप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे-**अनादीति** ॥ तया तत्प्रसादेनेति यावत् । प्रबोधं श्रवणादिकम् । आयाति प्राप्नोति गुरूपदेशेन। 'अद्वैतं बुध्यते तदा' इत्यस्यार्थः-**तदा विष्णुं प्रपश्यतीति** ॥

ननु अहं ममेत्यादिस्वस्वामिभावसम्बन्धरूपः प्रपञ्चः यदि जीव-स्वभावः स्यात् तदा भगवत्प्रसादादपि कथमसौ निवर्त्यतेत्याशङ्कायां स न जीवस्वभावः, किन्त्वाभिमानिको भगवदिच्छाधीन एव । अतस्तस्य तज्ज्ञानजनितात्तत्प्रसादान्निवृत्त्युपपत्तिरित्याशयेन प्रवृत्ते प्रपञ्च इति श्लोके आद्यमर्धमन्यथाप्रतीतिनिरासाय व्याचष्टे- **तन्वेत्यादिना** ॥ प्रपञ्च इत्यनूद्य तन्वेत्यादि व्याख्यातम् । शरीरिणोऽस्य जीवस्य । तन्वा देहेन । निरुपितो यः स्वस्वामिभावसम्बन्धोऽसौ वस्तुतो जीवस्वभावतो नैवास्ति । जीवस्य स्वाभाविको न भवतीत्यर्थः । कुत इत्यत आह- **परमस्येति** ॥ तर्ह्यह-मेतत्स्वामी, इदं च 'देहादिकं मदीयम्' इति प्रतीतिः कथमित्यत आह-**तथापीति** ॥ यद्यपि जीवस्यावास्तवो भगवदधीनश्च तथापीत्यर्थः । एषः स्वस्वामिभावसम्बन्धः । अभिमानात् स्वस्मिन् स्वातन्त्र्यारोपादित्यर्थः । अज्ञानादित्यर्थ इत्यप्याहुः । अतः स्वस्वातन्त्र्यारोपेण परिदृश्यमान-त्वादित्यर्थः । अज्ञानेन दर्शनादित्यर्थ इत्यप्याहुः । स्वस्वामिभाव-सम्बन्धाख्यः प्रपञ्चो विद्यतेऽस्वाभाविकतया अभगवद्वशतया चास्तीत्यङ्गीकारो यदि भवेदित्यर्थः । निवर्तेतेत्यत्र कस्मादिति न ज्ञायतेऽतो भगवज्ज्ञानादिति पूरितम् । 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वचनान्निवर्तेतेति युक्तमिति ज्ञातव्यम् ।

भगवज्ज्ञानादपि कथं तन्निवृत्तिरित्यतो भगवदिच्छाधीनत्वात्तस्य तदिच्छयैव निवृत्तिर्युक्तेत्याशयेन प्रवृत्तं मायामात्रामित्यर्धं स्ववाक्येन व्याचष्टे- **अद्वैतमित्यादिना** ॥ महद्भिरिति शेषः । अन्यथा वस्तु-स्वरूपापेक्षया द्वितीयेन प्रकारेण महद्भिर्न ज्ञातं यत्परब्रह्मादिवस्तु तदद्वैतमित्यर्थः । अद्वैतं द्वैतमित्यन्वयमभिप्रेत्य द्वैतमित्यस्यार्थमाह- **तदिति** ॥ अद्वैतशब्दोक्तं परब्रह्मादिवस्त्वित्यर्थः । यस्मादिति शेषः । द्विधा वस्तुतत्वापेक्षया । अज्ञैः असज्जनैः ॥ **अन्यथाज्ञातमिति** ॥ भगवन्निष्ठस्वामित्वस्य स्वस्मिन्नेव ज्ञानेन भगवत्यज्ञानादन्यथाऽस्वामि-त्वेन ज्ञातमित्यर्थः ॥ तेषां अन्यथाज्ञाने निमित्तं वक्तुं प्रवृत्तं परमार्थतः- **मायामात्रमिति** । तत्र परमार्थत इति यथास्थितपदार्थं तावदाह- **परमेश्वरादिति** ॥ परमार्थतो मायामात्रमित्यन्वयमङ्गीकृत्य तसेः सार्व-विभक्तिकत्वात् षष्ठ्यर्थे तसिरिति भावेन व्याचष्टे- **तस्यैवेत्यादिना** ॥ तस्मादिति श्रुतौ शेषोक्तिः । तथा च यन्महद्भिरनन्यथाज्ञातत्वादद्वैतं ब्रह्म तद् द्वैतं अज्ञैरन्यथाज्ञातं तच्चान्यथाज्ञानं परमार्थतः परमेश्वरस्य मायामात्रं इच्छानिर्मितं यस्मात्तस्मात्तदिच्छयैव निवर्तत इत्यर्थः । मायामात्रमित्यादिवाक्यं स्ववाक्येन व्याख्यातम्, तत्र प्रमाणं च आह- **परेणेति** ॥ महद्भिरिति शेषः । यस्मात्कारणात् यत्प्रसिद्धं भगवत्स्वरूपं परेण ब्रह्मणा प्रसन्नेन तत्प्रसादादिति यावत् । द्विधा वस्तुतत्वापेक्षया अन्यथा महद्भिर्न ज्ञातम्, प्रत्युताञ्जसैव ज्ञातम् । तस्मात्परं ब्रह्माद्वैतमुच्यते । तदेव जीवेनाज्ञेनासज्जनेनान्यथाज्ञातं द्वैतमुदिष्टम् । तन्मिथ्याज्ञानं परमार्थात् पञ्चमी षष्ठ्यर्थे, परमार्थस्य विष्णोरिच्छा-वशादन्वेव जातम्, अतस्तदिच्छयैव निवर्तत इति शेषः । मायामात्र-मित्येतदनिर्वचनीयाविद्यानिर्मितमित्यन्यथाप्रतीतिनिरासाय तदिच्छा-निर्मितमिति प्राग्व्याख्यातम् । तत्र प्रमाणमाह- **मायेतीति** ॥ परमार्थत

इत्येतत्परमेश्वरादिति प्राग्व्याख्यातम् । तत्र परमेश्वरस्य परमार्थशब्द-वाच्यत्वं कुत इत्यत आह- **उत्तमत्वादिति** ॥ अद्वैतमनन्यथाज्ञातमिति प्राग्व्याख्यातम् । तत्कथमद्वैतशब्दाल्लभ्यत इत्यत आह- **अनन्यथेति** ॥ अन्यथा वस्तुतत्वापेक्षया प्रकारान्तरेणेति द्वीत्यस्यार्थः । इतमित्यनू-द्यावगतमिति व्याख्यातम् । अन्यथेतं न भवतीत्यनन्यथेतं तदेव चाद्वैत-शब्दवाच्यमित्यर्थः । द्वैतं द्विधा ज्ञातमिति प्राग्व्याख्यातम् । तत्कथं द्वैतशब्दाल्लभ्यत इत्यत आह- **द्वैतमिति** ॥ द्वीत्यस्यार्थो द्विधेति । वस्तुतत्वापेक्षया द्विधा प्रकारान्तरं ह्यन्यथेत्युच्यते । अन्यथेत्येतदा-वर्तनीयम् । तथाचान्यथा प्रकारान्तरेण ज्ञातं यत् तत् द्वैतमुच्यते इत्यर्थ इति योज्यम् । यद्वा द्विधा हीत्यनन्तरं ज्ञातमिति शेषः । वस्तु-स्वरूपापेक्षया द्विधा हि ज्ञातं द्वैतम् । तात्पर्यार्थमाह- **अन्यथा-ज्ञातमित्यर्थ इति** ॥ इति वाक्यभेदेन व्याख्येयम् ।

'विकल्पो विनिवर्तेत' इति वाक्यं पूर्ववाक्यादनतिभिन्नार्थत्वात् पुनरुक्तमित्याशङ्क्योपसंहारार्थत्वान्न पुनरुक्तमित्यभिप्रेत्य अत इत्यध्या-हारेण व्याचष्टे- **अत इति** ॥ शरीरादिसम्बन्धः तन्निरूपितः स्वस्वामि-भावसम्बन्धः अपिशब्देन 'यदि शब्दस्त्ववस्तुत्वे ह्यस्वातन्त्र्ये च भण्यते' इत्येकादशस्कन्धतात्पर्योक्तस्यावस्तुत्वरूपार्थस्य यदिशब्दव्याख्यानस्य सङ्ग्रहः । तथा च कल्पितत्वादेव यदि अवस्त्वित्यर्थः । अस्वाभाविक इति यावत् । उपदेशात् भगवदुपदेशरूपात् गुरुवाक्यादपरोक्षज्ञानद्वारा निवर्तत इत्यर्थः । निवर्तत इत्यनन्तरमानन्दाविर्भावरूपां मुक्तिं चैतीति सिद्धमिति वाक्यशेषो द्रष्टव्यः ।

नन्वयमुपसंहारोऽनुपपन्नः । अज्ञानाकल्पितस्य विकल्पस्य भगवज्ज्ञानान्निवृत्यनन्तरमानन्दाविर्भावरूपां मुक्तिमेतीत्यस्यार्थस्या-

प्रामाणिकत्वादित्याशङ्कापरिहाराय प्रवृत्तं अयं वाद इत्यादिवाक्यं व्याचष्टे- **अयमिति** ।। इत्ययं सतां वाद इत्यन्वयः ।। व्याख्यातार्थे प्रमाणञ्चाह- **विकल्प इति** ।। देहादिनिरूपितः स्वस्वामिभावसम्बन्धो देहसम्बन्धः । केनचित्कारणेन अज्ञानादिना । गुरुवाक्यात् भगवदुपदेशात् । तत आनन्दमेत्यसाविति श्रुतौ शेषोक्तिरित्यवगन्तव्यम् । अत्र लिङ्गादीनां वस्तुस्थितिकथनपरत्वमेवाभिप्रेतं न प्रसङ्गार्थत्वमित्यवगन्तव्यम् । ननु तत्वनिर्णयादौ प्रसङ्गार्थतया श्लोकद्वयं स्वयमेव व्याख्याय वस्तुस्थिति-कथनपरतया परकृतव्याख्याने लिङ्गादीनां वैयर्थ्यमभिधायात्रपुनर्वस्तु-स्थितिकथनपरतया व्याख्याने कथं न स्ववचनविरोध इति चेदयमभिप्रायो भाष्यकारस्य । सर्वथा तर्कपरमेवेदं श्लोकद्वयं न वस्तुस्थितिकथनपरम् । वस्तुस्थितिकथनपरत्वश्रद्धायामपि न त्वदुक्तरीत्या वस्तुस्थितिकथनपरं अप्रामाणिकत्वात्किन्तु अस्मदुक्तरीत्यैव प्रामाणिकत्वादिति ।। ९-१० ।।

**।। इति माण्डूकभाष्यार्थे द्वितीयः खण्डः ।।**

**ततश्चायं खण्डार्थः -**

**नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्ट-मव्यहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः ।। १ ।।**

एवं विश्वादीनां त्रयाणां महिमानं निरूप्य तुरीयस्य तन्निरूपयति - **नान्तःप्रज्ञमित्यादिना** ।। विश्वादिवत्तुरीयस्य स्थानानुक्तेर्नासिकामूल-मारभ्य द्वादशाङ्गुलान्ते मस्तकमध्ये तिष्ठतीति स्थानं द्रष्टव्यम् । मस्तक-मारभ्योपरि द्वादशाङ्गुलिपरिमिताकाशप्रदेशे तिष्ठतीति तुरीयस्य स्थानं द्रष्टव्यमित्यप्याहुः । नान्तःप्रज्ञं देहान्तस्थिता ये स्वाप्नपदार्थाः । तान् न प्रज्ञापयतीति नान्तःप्रज्ञः तम् । स्वप्नावस्थाया अकर्तारमित्यर्थः । न

बहिःप्रज्ञं बहिस्थिता ये पदार्था जाग्रत्कालीनाः तान् न प्रज्ञापयतीति न बहिःप्रज्ञः तम् । जाग्रदवस्थाया अकर्तारमित्यर्थः । नोभयतःप्रज्ञं बहिःशब्दादिकं जानाति अन्तःस्वप्नश्च पश्यति, कस्याश्चिदवस्थायां तामुभयज्ञानशब्दवाच्यावस्थां च न प्रज्ञापयतीति नोभयतःप्रज्ञः तम् । एतदवस्थाप्रवर्तकौ च विश्वतैजसाविति संप्रदायविदः । न प्रज्ञानघनं घनस्याज्ञानावृतस्य जीवस्य सुप्त्यवस्थाकालसुखानाञ्च प्रज्ञापनं यस्मान्न भवत्यसौ नप्रज्ञानघनः तम् । सुप्त्यवस्थायाः अकर्तारमित्यर्थः । न प्रज्ञं प्रज्ञाशब्दोक्तासंप्रज्ञातसमाध्यवस्थाज्ञानं यस्मान्नभवत्यसौ नप्रज्ञः तम् । असंप्रज्ञातसमाध्यवस्थाया अकर्तारमित्यर्थः । नाप्रज्ञं चरमदेहमुत्सृज्य मुक्तिं गच्छतां ज्ञानाप्रदो न भवतीति नाप्रज्ञः तम् । अदृष्टं मुख्य-प्राणानुग्रहाभावेनामुक्तो यस्तेनादृश्यमानत्वाददृष्टः तम् । अव्यवहार्यं मुक्तिं विना संसारे ग्रहणापरपर्यायव्यवहाराद्यविषयत्वादव्यवहार्यः तम् अग्राह्यमित्यर्थः । अलक्षणं विश्वादित्रयवत् जाग्रदाद्यवस्थाप्रवर्तकत्व-रूपानुमापकधर्मशून्यत्वादलक्षणः तम् । अचिन्त्यं अनुमापकधर्मशून्य-त्वादेवानुमितिरूपचिन्ताविषयो न भवतीत्यचिन्त्यः तम् । अव्यपदेश्यं व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादचिन्त्यत्वादेव व्यपदेष्टुमशक्य-त्वादव्यपदेश्यः तम् । ऐकात्म्यप्रत्ययसारं प्रधानत्वादेकः पूर्णत्वादात्मा । प्रधानं पूर्णं यस्मात् भगवत्स्वरूपं तस्मादेवैकात्म्यम् । ज्ञानरूपत्वात् प्रत्ययः । आनन्दरूपत्वात्सारः । ऐकात्म्यं चासौ प्रत्ययश्चासौ सारश्चेति तथोक्तः तम् । प्रपञ्चोपशमं गुणादिभिर्विस्तृतत्वात्प्रपञ्चः उशब्द (उच्छब्द) वदुपशब्दोऽप्युत्कृष्टवाची । शमशब्दश्चानन्दरूपत्ववाची । तथा चोत्कृष्टानन्दरूपत्वादुपशमः, प्रपञ्चश्चासावुपशमश्च प्रपञ्चोपशमः तम् । यद्वा प्रपञ्चस्य देहसम्बन्धरूपस्य उपशमो नाशो यस्माद्भवत्यसौ प्रपञ्चोपशमः तम् । शिवं निर्दुःखसुखरूपत्वात् शिवः तम् । अद्वैतं वस्तु

स्वरूपापेक्षयाऽन्यथाप्रत्ययो द्वैतं तच्छमयतीत्यद्वैतः तं । अन्यथा-प्रत्ययाकारणमित्यर्थः । इदं च विशेषणं प्राज्ञेऽपि द्रष्टव्यम् । तादृशं तुरीयं ज्ञानिनश्चतुर्थं मन्यन्ते । सोऽयमात्मा चतुष्पात्' इत्युक्तमुपसंहरति- **स इति** ॥ स विश्वादिरूपेण चतुष्पादात्मा आदानादिकर्ता स एव सर्वैर्मुमुक्षुभिर्विशेषेण न ज्ञेय इत्यर्थः ॥ १ ॥

**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।**
**अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः** ॥ २ ॥ १ ॥

अस्मिन्नप्यर्थे सलिलेश्वरो ब्रह्मदृष्टान्मन्त्रान् संवादयन्नाह-**अत्रैत इति** ॥ प्रपञ्चोपशममिति तुरीयस्य सर्वानिष्टनिवृत्तिकारणत्वमुक्तम् । तत्र तावन्मन्त्रं पठति- **निवृत्तेरिति** ॥ अव्ययस्तुरीयः सर्वदुःखानां निवृत्तेः प्रभुः समर्थः कारणभूतः मोक्षदत्वात् । ईशानां मुक्तानामनश्वेष्टक ईशानः । अद्वैत-मित्युक्तार्थे मन्त्रं पठति- **अद्वैत इति** ॥ विभुस्तुरीयः । सर्वभावानां भवन्ति देहयोगेनोत्पद्यन्त इति भावा जीवाः तेषां कर्तरि षष्ठी । तैः मुक्तिं गमिष्यद्भिर्देवो गम्यःस्मृतः । मन्त्रेऽधिकमेतत् ॥ २ ॥

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः** ॥ ३ ॥ २ ॥

'नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनम्' इति तुरीयस्य यद्विश्वादिभ्यस्त्रिभ्यो वैधर्म्यमुक्तं तत्र मन्त्रं पठति- **कार्येति** ॥ अत्र विश्वादीनां बद्धत्वोक्तिरन्यगतबन्धस्य तदधीनत्वात् 'तदधीनत्वादर्थवत्' (ब्र.सू. १.४.३) इति न्यायेन वा 'ब्न्धयतीति बद्ध' इति कर्तृव्युत्पत्त्या वेति ज्ञातव्यम् । न तु बद्धत्वम् । सर्वमानविरुद्धत्वात् । कार्यं भ्रमः कारणमविद्या । विश्वतैजसौ कार्यकारणरूपद्विविधबन्धवन्तौ । प्राज्ञः कारणरूपैकबन्धवान् । कार्यकारणाकारेण द्वावपि बन्धौ तुरीये न स्त

इत्यर्थः । ननु विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञतुरीयाभ्यां भेदेऽपि परस्परं व्यावर्तकधर्माभावेन कथं भेद इति चेत् उच्यते । अविद्यारूप-कारणबद्धत्वस्योभयत्राविशिष्टत्वेऽपि कार्यबद्धत्वे वैलक्षण्यसद्भावात् । तथाहि । अविद्या तत्कार्यस्वातन्त्र्यादिविषयकजाग्रत्कालीनभ्रमरूपोभय-बन्धप्रदो विश्वः । अविद्यातत्कार्यजाग्रत्कालीनभ्रमकार्यस्वाप्नभ्रमरूपोभय-बन्धप्रदस्तैजसः । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वं कथमिति शङ्क्यम् । 'अदृष्टे चाश्रुतेऽभावे न भाव उपजायते' (ब्र.सू.अनु. ३.२.३ श्लो. ९) इति वचनेन संस्कारद्वारा तत्कारणकत्वस्य सत्त्वात् । मूलाविद्या-रूपकारणमात्रबन्धप्रदः प्राज्ञ इति तत्वप्रकाशिकाभावबोधयोरुक्तरीत्याऽ-वगन्तव्यम् । 'द्वौ तु तुर्ये न सिध्यतः' इत्यनेन तुरीयस्य सर्वथाऽबन्धकत्व-मुक्तम् । तेनार्थात्सर्वज्ञानप्रदत्वं तस्येति सूचितं भवति । तथा च नाप्रज्ञमित्युक्तार्थेऽप्ययमन्त्रः प्रमाणमिति ज्ञातव्यम् ॥ ३ ॥

**नाऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा** ॥ ४ ॥ ३ ॥

'न प्रज्ञानघनम्' इत्युक्ते प्राज्ञाद्वैधर्म्ये मन्त्रान्तरं पठति- **नेति** ॥ प्राज्ञः आत्मानं स्वस्वरूपं परान् जीवाज्ञानसुप्त्यवस्थाकालसुखेभ्योऽन्यान् पदार्थान् सत्यानृतशब्दलक्षितं तत्कार्यं पुण्यं पापञ्च न संवेत्ति । णिजन्त-मेतत्, न संवेदयतीत्यर्थः । इतरेषामसंवेदनरूपक्रियाप्रदाने प्राज्ञस्यैव स्वतन्त्रत्वात् । 'न संवेत्ति' इति श्रुतौ उक्तं 'स्वतन्त्रे कर्तृशब्दःस्यात्' इति वचनादित्यवगन्तव्यम् ॥ **तुर्यमिति** ॥ सर्वदृगित्येतदपि णिजन्तम् । तथा च तुरीयं रूपं आत्मानं परान् ज्ञानोत्तरकृतपुण्यं चैतत्सर्वं मुक्तौ दर्शयतीति सर्वदृगित्यर्थः । अनेन नाप्रज्ञमित्युक्तं सर्वज्ञानप्रदत्वं च प्रमापितं भवतीति ज्ञातव्यम् ॥ ४ ॥

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ ५ ॥ ४ ॥**

'शिवमद्वैतम्' इति तुरीयस्योक्तमद्वैतमिति विशेषणं 'सुषुप्तस्थाने' इत्यादौ प्राज्ञस्वरूपकथनपरे वाक्ये प्राज्ञस्याप्यभिप्रेतम् । अतः प्राज्ञतुरीययोरद्वैतत्वं समानमित्यत्र मन्त्रं पठति- **द्वैतस्येति** ॥ प्राज्ञतुरीययोरुभयोर्देहादिविषयस्वातन्त्र्यभ्रमरूपद्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः । प्राज्ञं तुरीयं च प्राप्तानां देहादिविषयस्वातन्त्र्यभ्रमो न भवतीति तदकारणत्वमुभयोरपीति भावः । नात्मानमित्यादिना प्राज्ञतुरीययोर्वैधर्म्यमुक्त्वा द्वैतस्येति साम्यं चोक्त्वा पुनर्वैधर्म्यं प्रकारान्तरेणाह- **बीजेति** ॥ मूलाविद्यायुतः प्राज्ञः, तस्याः तदधीनत्वेन प्राज्ञस्य तत्प्रवर्तकत्वात्तद्युक्तत्वं युक्तम् । भृत्ययुतः स्वामीत्यादाविवेति द्रष्टव्यम् । सा च मूलाविद्या तुरीये न विद्यते । तत्प्रवर्तको न भवतीत्यर्थः ॥ ५ ॥

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।**
**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ ६ ॥ ५ ॥**

विश्वतैजसयोर्द्विविधबन्धवत्त्वेन साम्यं प्राज्ञस्यैकबन्धवत्त्वेन ताभ्यां वैलक्षण्यं सर्वथा बन्धशून्यत्वेन तुरीयस्य त्रिभ्यो वैधर्म्यं 'कार्यकारणबद्धौ' इत्यनेनोक्तम् । तत्रैव मन्त्रान्तरं पठति- **स्वप्नेति** ॥ स्वप्नः कार्यरूपो भ्रमः । निद्रा अविद्या । आद्यौ विश्वतैजसौ स्वप्ननिद्रायुतौ । उक्तरीत्या कार्यकारणबद्धौ' इत्यर्थः । प्राज्ञस्त्वस्वप्ननिद्रया स्वप्नशब्दोक्तकार्यभ्रमं विना निद्रया अविद्यया युतः । कारणमात्रबद्ध इत्यर्थः । निश्चिताः यथार्थनिश्चयवन्तः । तुरीये निद्रां स्वप्नञ्च नैव पश्यन्ति सर्वथा कार्यकारणबन्धशून्यत्वेनैव तं पश्यन्तीत्यर्थः ॥ ६ ॥

**अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः ।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ७ ॥ ६ ॥**

नन्वेतादृशस्य तुरीयस्य प्राप्तिः कदेत्याशङ्कापरिहाराय आह- **अन्यथेति** ॥ तत्त्वं स्वतन्त्रतत्त्वं भगवन्तं अजानतः पुंसो या निद्राऽविद्याऽस्ति तयाऽन्यथागृह्णतोऽहं ममेत्यादि जाग्रत्कालीनस्वातन्त्र्यभ्रमयुक्तस्य स्वप्नः स्वप्नदर्शित्वभ्रमो भवति । जाग्रदवस्थायां स्वातन्त्र्यादिविषयभ्रमजन्यसंस्कारेण जाग्रत्कालीनमिदमिति स्वप्नरूपो भ्रमो भवति । एवंरूपे तयोर्विपर्यासे जाग्रत्स्वप्नभ्रमयोर्विपरिवर्तने क्षीणे सति पद्यत इति पदं तुरीयं अश्नुते प्राप्नोतीत्यर्थः ॥ ७ ॥

**अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥ ८ ॥ ७ ॥**

नन्वनाद्यविद्याबद्धस्य जाग्रत्स्वप्नभ्रमयोर्विपर्यासक्षय एव कथं स्यादित्यतो यदा सद्गुरूपदेशादिना भगवत्प्रबोधोदयस्तदैवेत्याशयेनाह- **अनादीति** ॥ अनादेर्विष्णोरनादिभूतया मायया इच्छया तदधीनया प्रकृत्या च सुप्तः स्वापितो जीवो यदा ईश्वरेच्छयैव सद्गुरूपदेशेन प्रबुध्यते प्रबोधमायाति श्रवणादिमान् भवतीति यावत् । तदा अजं जनिरहितम् । अनिद्रं अज्ञानरहितम् । अस्वप्नं स्वप्नाद्युपलक्षित जाग्रदाद्यवस्थाऽतीतम् । अद्वैतं अन्यथाज्ञानशून्यं भगवन्तम् । बुध्यतेऽपरोक्षतो जानातीत्यर्थः । अनन्तरं विपर्यासक्षयो भवतीति भावः ॥ ८ ॥

**प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ९ ॥ ८ ॥**

नन्वहं ममेत्यादिस्वस्वामिभावसम्बन्धरूपप्रपञ्चो यदि जीवस्वभावः

स्यात् तदा भगवत्प्रसादादपि कथमसौ निवर्तेतेत्याशङ्कायां स न जीवस्वभावः। किन्त्वाभिमानिको भगवदिच्छाधीन एव। अतस्तज्ज्ञान-जनितात्तत्प्रसादान्निवृत्त्युपपत्तिरित्याशयेनाह- **प्रपञ्च इति** ॥ देहादि-निरूपितः स्वस्वामिभावरूपः प्रपञ्चो जीवस्याभिमानाद्विद्येत अस्वाभाविकतया भगवद्वशत्वेन च विद्यत इत्यङ्गीकारो यदि भवेत्तथापि भगवज्ज्ञानान्निवर्तेतैव। नात्र संशय इत्यर्थः'। ननु भगवज्ज्ञानादपि कथं तन्निवृत्तिरित्यतो भगवदिच्छाधीनत्वात्तस्य तदिच्छयैव निवृत्तिर्युक्तेत्या-शयेनाह- **मायामात्रमिति** ॥ यत् महद्भिरनन्यथाज्ञातत्वादद्वैतं ब्रह्म तदिदं द्वैतं अज्ञैरन्यथाज्ञातम्। तच्चान्यथाज्ञानं परमार्थतः, तसेः सार्व-विभक्तिकत्वात् पञ्चमी षष्ठ्यर्थे, परमार्थस्योत्तमार्थस्य परमेश्वरस्य मायामात्रमिच्छानिर्मितं यस्मात्तस्मात्तदिच्छयैव निवर्तत इत्यर्थः ॥ ९ ॥

**विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित्।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति** ॥ १० ॥ ९ ॥

उपसंहरति- **विकल्प इति** ॥ अत्रात इत्युपस्कर्तव्यम्। केनचित्कल्पितो यदि विकल्प इत्यन्वयः। तथा चातः केनचिदज्ञानादिना कारणेन कल्पित-त्वादेव। यदि 'यदिशब्दस्त्ववस्तुत्वे' इत्येकादशस्कन्धतात्पर्ये। अत्रत्य-यदिशब्दस्यावस्तुत्वार्थत्वेन व्याख्यातत्वादवस्तुभूतो विकल्पः शरीरादि-निरूपितः स्वस्वामिभावसम्बन्धः। उपदेशात् गुरुकृतात् भगवदुपदेशाच्छ्रव-णादिरूपात्तज्ज्ञानादपरोक्षज्ञानद्वारा निवर्तत इत्यर्थः। तदनन्तरमानन्दा-विर्भावरूपां मुक्तिं चेतीति सिद्धमिति वाक्यशेषो द्रष्टव्यः। तत आनन्द-मेत्यसावित्युक्तत्वात्। अत्र लिङादेर्वस्तुस्थितिकथनपरत्वमेवाभिप्रेतं न प्रसङ्गार्थत्वमित्यवगन्तव्यम्। नन्वयमुपसंहारोऽनुपपन्नः। अज्ञानादिकल्पितस्य विकल्पस्य भगवज्ज्ञानान्निवृत्त्यनन्तरमानन्दाविर्भावरूपां मुक्तिमेतीत्यस्यार्थ-

स्याप्रामाणिकत्वादित्याशङ्कापरिहाराय आह- **अयं वाद इति** ।। ब्रह्मणि ज्ञाते सति । द्वैतं स्वस्वामिभावसम्बन्धज्ञानरूपमन्यथाज्ञानं न विद्यते निवर्तते। तदनन्तरमानन्दाविर्भावरूपां मुक्तिमेतीत्ययं सतां वादः सिद्धान्तः। अतो नात्राप्रामाणिकत्वशङ्का कार्येति भावः ।। १० ।।

।। इतिमाण्डूकखण्डार्थे द्वितीयखण्डः ।।

## ।। अथ तृतीयः खणडः ।।

## उपनिषत्

(विश्वादिरूपाणां प्रणवांशप्रतिपाद्यत्वनिरूपणम्)

**सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा ।। आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ।। १ ।।**

## भाष्यम्

**अधिकं सर्वत अविनाशि चेत्यध्यक्षरम् । अधिका एव मात्रा अंशा यस्य तदधिमात्रम्। अ इत्यनेनाभिधानेनाऽक्रियत इत्यकारः। तत्र पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः । अकार इतयादिकं विधेयम् ।। प्राज्ञस्तैजसश्चादिरस्येत्यादिमान्। सुप्तेरुत्थाने प्राज्ञाद् विभक्तो भवति विश्वः। स्वप्नादुत्थाने तैजसात् । आदिश्चास्योपासकस्य भवति ।।**

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

एवं चतुरो विश्वादीन्निरूप्य तेषां प्रणवांशाकारादिप्रतिपाद्यत्वादि वक्तुमुक्तमनुवदति- **सोऽयमात्माध्यक्षरमोङ्कार इति** ।। यद्वक्तुमुक्तमनूदितं

तद्वक्तुं प्रस्तावयति- **अधिमात्रमिति** ॥ अधिका मात्रा यस्य तदधिमात्रमित्युक्ता मात्रा का इत्यत आह- **पादा मात्रा इति** ॥ पादाश्च क इत्यतोऽकारादिप्रतिपाद्या विश्वादयस्त इत्याह **अकार इति** ॥ अत्र नादप्रतिपाद्यस्तुरीयोऽपि ग्राह्यः। 'सोऽयमात्मा चतुष्पात्' इत्युक्तत्वात् । कः प्रथमः पादः के च द्वितीयतृतीयचतुर्थाः ? किञ्चाकारादीनां विश्वादिषु प्रवृत्तिनिमित्तं किञ्च तद्युक्ततया तद्धेतुःफलमित्यतः क्रमेण सर्वमाह - **जागरितस्थान इत्यादिना** ॥ १ ॥

**भाष्यार्थः -**

अध्यक्षरमधिमात्रमिति पदद्वयमन्यथाप्रतीतेः व्याचष्टे- **अधिकमित्यादिना** ॥ अकार उकार मकार इत्येतद्ब्रह्मणोऽकाराद्यात्मकत्वार्थप्रतीतिं निवारयन् उपलक्षणत्वेन व्याचष्टे- **अ इति** ॥ जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रेत्यादौ कोऽनुवादः किं विधेयमिति न ज्ञायते, तद्दर्शयति- **तत्रेत्यादिना** ॥ आप्तेरादिमत्त्वादित्यत्राप्तेः सर्वविषयानयनादिति सुलभोऽर्थः । आदिमत्त्वं नाम किमित्यतस्तद् व्याचष्टे- **प्राज्ञ इति** ॥ तैजसप्रज्ञादिमत्त्वं विश्वस्य कथमित्यतस्तद्दर्शयति- **सुप्तेरिति** ॥ तैजसाद्विभक्तो भवतीत्यनुवर्तते । उपासक आदिश्च भवतीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **आदिश्चेति** ॥१॥

## प्रकाशिका

'आप्तेरादिमत्वाद्वा' इत्यत्र आप्लृ व्याप्ताविति धातोरौणादिके प्रत्यये कृते टिलोपे च सति अन्तर्णीतणिजर्थतायां च विषयानापयति जीवस्येति सः (अः) अशब्दवाच्यः । आप्तः तैजसात् प्राज्ञाद्वा बहिः प्राप्तश्च अकारवाच्य इति भावः ।

# पदार्थदीपिका

एवं चतुरो विश्वादीन्निरूप्य तेषामेव चतुर्णां प्रणवांशाकारोकारमकारनादप्रतिपाद्यत्वरूपं महिमानं वक्तुमुत्तरखण्डद्वयम् । तत्राद्यखण्डं विश्वादीनां त्रयाणां प्रणवांशाकारादित्रयप्रतिपाद्यत्वं वक्तुं अनूद्यते- **सोयमात्माध्यक्षरमोंकार इति** ।। तत्राध्यक्षरपदमन्यथाप्रतीतिनिरासाय व्याचष्टे- **अधिकमिति** ।। अधिकत्वस्यावधिसापेक्षत्वात्सर्वत इत्युक्तम् । यदर्थमुक्तमनूदितं तत्प्रस्तावयितुं प्रवृत्तम् । **अधिमात्रमित्यादि ।** तत्राधिमात्रशब्दार्थमाह- **अधिका इति** ।। पूर्णाइत्यर्थः । अकार इत्यादौ अकारद्यभेद एवोच्यत इत्यन्यथाप्रतीतिनिरासायाह- **अ इत्यनेनेति** ।। आक्रियते व्यवह्रियते । 'वैश्वानरोऽकारः प्रथमा मात्रा' इत्यत्र यथास्थितवाक्यवृत्तावसिद्धस्यानुवादः सिद्धस्य बोधनमित्यापद्यते तच्चायुक्तम् । 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयते' इति न्यायविरोधापत्तेरतो व्याचष्टे- **तत्रेत्यादिना** ।। तत्र विश्वादिचतुर्षु पूर्वोक्तः जागरितस्थान इत्युक्तः । इत्याद्यनुवाद इत्यत्रेत्यादिपदेन स्वप्नस्थानस्तैजसो द्वितीयामात्रेत्यस्य, सुषुप्तस्थानः प्राज्ञस्तृतीयामात्रेत्यस्य च सङ्ग्रहः । द्वितीयादिपदेन उकारमकार इत्यस्य ग्रहणम् । विश्वस्याकारवाच्यत्वे निमित्तद्वयं कथ्यते आप्तेरादिमत्त्वाद्वेति ।। तत्र विश्वस्यादिमत्त्वमप्रतीतेर्व्याचष्टे- **प्राज्ञ इत्यादिना** ।। अस्य विश्वस्य । ननु विश्वं प्रति प्राज्ञतैजसयोः कथं कारणत्वापरपर्यायरूपमादिमत्वमित्यतस्तदुपपादयति- **सुप्तेरित्यादिना** ।। सुषुप्त्यवस्थापन्न एव जीवस्ताडनादिना कदाचित्सहसैव जागर्तीत्यनुभवसिद्धम् । तदभिप्रायेण सुप्तेरित्याद्युक्तम् । स्वप्नं पश्यन्नेव कदाचिज्जागर्तीत्यप्यनुभवसिद्धम् । तदभिप्रायेण **स्वप्नादीत्यादि** । आप्त्यादिमत्त्वाभ्यां निमित्ताभ्यां अकारवाच्यतया विश्ववेत्तुः फलप्रतिपादके आप्नोतीत्यादिवाक्ये आदिश्च भवतीत्येतत् उपासकः

स्वयमादिर्भवतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **आदिश्चेति** ।। विश्व इति वर्तते । मुक्तिकारणमित्यर्थः ।। १ ।।

## उपनिषत्

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद् वा । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ।। २ ।।**

## भाष्यम्

**शरीराभिमानादुत्थाप्य कर्षतीत्युत्कर्षः । निद्रा विषयानुभवश्चानेन क्रियत इत्युभयत्वम् ।। समानः सवेषां मध्यस्थो भवति ।। २ ।।**

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः**- देहादात्मानमुत्कर्षतीति वा ।। २ ।।

**भाष्यार्थः** -

तैजसस्योक्तमुत्कर्षत्वमुभयत्वं च किमित्यत आह- **शरीरेति** ।। अप्रतीतेः समानश्चेति पदं व्याचष्टे- **समान इति** ।। २ ।।

## प्रकाशिका

'निद्रा विषयानुभवश्चानेन' इत्यत्र स्वप्नदशायामपि निद्रायाः सत्त्वात् प्राज्ञसाम्यम् । बाह्यविषयानुभवाद् विश्वसाम्यमित्युभयत्वमित्यर्थः ।

## पदार्थदीपिका

तैजस्य उकारवाच्यत्वे निमित्तद्वयकथनायोत्कर्षादुभयत्वाद्वेत्येतद्वाक्यं प्रवृत्तम् । तत्र तैजसस्योत्कर्षत्वमुभयत्वं च कीदृशमित्यतो विवृणोति - **शरीरेति** ।। तैजसो जीवं बाह्यशरीराभिमानादुत्थाप्योद्धृत्य

अभिमानं नाशयित्वेति यावत् । स्वप्नस्थाने देहान्तर्वासनामयपदार्थानुभवाय कर्षतीत्यर्थः - **विषयेति** ।। स्वप्नविषयेत्यर्थः । प्रवृत्तिनिमित्तद्वयेन उकारवाच्यत्वं तैजसस्य वेत्तुः फलप्रतिपादनाय प्रवृत्तम्- **उत्कर्षति हेत्यादि** ।। तत्र समान इत्येतद् व्याचष्टे - **समान इति** ।। सर्वेषां मुक्तानां स्नेहाद्दोषाभावाच्चेति शेषः ।। २ ।।

## उपनिषत्

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति हवा इदं सर्वमपीतिश्च भवति य एवं वेद ।। ३ ।।**

## भाष्यम्

मितेरन्तर्गमनात् ।।

'अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतम् ।
येंऽशास्तस्य तु सर्वेऽपि पूर्ण्णाः प्रत्येकशो विभोः ।।
अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
श्रुतः स विष्णुरोङ्कार ओमित्याक्रियते यतः ।।
आद्यस्तदंशो ह्याप्तिः स्याद् विषयानापयेद् यतः ।
जीवस्य तु यतः प्राज्ञात् तैजसाद् वा समुत्थितिः ।।
अविभागोऽपि भगवानादिमांस्तेन कीर्तितः ।
तस्मादुत्पद्यते मुक्तस्तज्ज्ञान्यानन्दलक्षणः ।।
आप्नोति विषयान् सर्वान् निद्राया विषयस्य च ।
उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः ।।
देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् ।।

आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् ।
मध्यस्थश्च भवेत् स्नेहाद् दोषाभावाच्च सर्वशः ॥
स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता ।
जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद् यतः ॥
प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगम् ।
व्याप्त्यान्तर्गमयेत् सर्वं दुःखाद्यं च विलापयेत् ॥
अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।
अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् ।
अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत्'

इति ब्रह्मतर्के ॥

## श्रीव्यासतीर्थविरचिता टीका

**भाष्यार्थः-**

मितेरपीतेरित्येतदप्रतीतेः व्याचष्टे- **मितेरिति** ॥ अपीतेर्लयकृत्त्वाच्चेत्यपि ग्राह्यम् । सोयमात्माध्यक्षरमित्यादि स्पष्टप्रमाणेन व्याचष्टे- **अधिकत्वादित्यादिना** ॥ तस्यांशाः पूर्णाश्चेदध्यंशमिति स्यात् नत्वधिमात्रमित्यत उक्तम्- **मात्राइति** ॥ आदिश्च भवतीत्यस्यार्थः- **तस्मादिति** ॥ आप्नोति हवै हवै सर्वान्कामान् इत्यस्यार्थः-**आप्नोतीति** ॥ उभयत्वाद्वेत्यस्यार्थमाह- **निद्राया इत्यादिना** ॥ उत्कर्षादित्यस्यार्थमाह- **देहेत्यादिना** ॥ उत्कर्षति हवै ज्ञानसन्ततिं समानश्च भवतीत्यस्यार्थमाह- **तज्ज्ञानीत्यादिना** ॥ तज्ज्ञानिनः सर्वमोक्षिणां मध्यस्थत्वं च दोषाभावात्स्नेहाच्च । मितेरपीतेर्वा मिनोतिहवा इदं सर्वमपीतिश्च भवतीत्यादेरर्थमाह - **सर्वश इत्यादिना** ॥ सर्वशः सर्वम् । मानं मितिः ॥ ननु मुक्तो जीवो व्याप्त्यान्तर्गमयेत्सर्वमित्युक्तमयुक्तं जीवस्याणुत्वादित्यतः प्रकाशव्याप्त्या तद्घटयन्नाह - **अणूनामपीति** ॥ ३ ॥

## प्रकाशिका

'माङ् माने' इति धातोः, 'मृङ् प्राणत्यागे' इति धातोश्च धुप्रत्यये कृते मु इत्येव शब्दस्वरूपमुर्वरितं भवति। मितिश्च धान्यादीनां स्वान्तः प्रापके मान इव जीवस्य स्वान्तः प्रापणमेव। देहाभिमानादीनां नाशकत्वात् मुशब्दवाच्य इति भावेनोक्तम्- **मितेरपीतेर्वेति** ॥ तत्र मितिः केत्यत उक्तं भाष्ये- **मितेरन्तगर्मनादिति** ॥ अपीतिश्च भवतीत्यपीतिः सकल-दोषाणां नाशः। मिनोतीत्यस्य स्वावरमुक्तान् स्वान्तः प्रापयतीत्यर्थः। 'उत्तेरेषूत्तरेष्वेवं यावद्वायुं प्रविश्य' इति वचनात्। अधिकाः पूर्णाः मात्राः अंशा यस्येति तदधिमात्रमिति व्युत्पत्तिमभिप्रेत्याऽऽह- **अंशा इति** ॥ तस्मादुत्पद्यते मुक्त इत्यनेनोपासकस्याप्त्यादिमत्त्वं फलं सूचितम्। आप्नोति विषयानित्यनेनाऽऽप्तिरूपफलं चोक्तम्। 'तं यथा यथोपासते तथैव भवति' इति हि श्रुतिः। 'उत्कर्षति ह वै ज्ञानसन्ततिम्' इत्यत्र ज्ञानसन्तीतिं जीवं देहादुत्कर्षतीत्यर्थः। 'तज्ज्ञानलयकृद्यतः' इत्यत्र ज्ञानं बाह्यविषयकज्ञानम् ॥ ३ ॥

## पदार्थदीपिका

प्राज्ञस्य मकारवाच्यत्वे निमित्तद्वयकथनाय प्रवृत्ते 'मितेरपीतर्वा' इति वाक्ये मितेरित्येतद्व्याचष्टे- **मितेरिति** ॥ अन्तर्गमनात् स्वालिङ्गनप्रदानेन स्वान्तर्जीवस्य गमयितृत्वादित्यर्थः। एवं स्ववाक्येन कानिचिद्वाक्यानि व्याख्याय खण्डं ब्रह्मतर्कवाक्येन व्याचष्टे- **अधिक-त्वाच्चेत्यादिना** ॥ अधीत्यस्याधिकत्वादिति नित्यत्वादित्यक्षरशब्दस्य येंऽशा इत्यधिमात्रमित्यस्य व्याख्यानम्। मात्रा अंशा इत्यनेन पादा मात्रा इत्येतद् व्याख्यातं भवति। आप्तेरित्येतद्व्याचष्टे- **आद्य इति** ॥ आद्यः तदंशः तस्योङ्कारस्य य आद्योंऽशः अकारः स आप्तिः आप्तिवाची

स्यात् । तथा समग्रोङ्कारवाच्यस्य तस्य भगवतो य आद्योंऽशः अकारवाच्यो विश्वः सोऽपि जीवस्य विषयानापयेद्यतस्तस्मादाप्तिः । तच्छब्दवाच्यः स्यादिति योज्यम् । आदिमत्वाद्वेत्येतत् व्याचष्टे- **यत इति** ।। अविभागोऽपि स्वतो भेदशून्योऽपि भगवान् विश्वः । आदिश्च भवतीत्यस्यार्थमाह- **तस्मादिति** ।। तज्ज्ञानी विश्वज्ञानी विश्वोपासकः मुक्त उत्पद्यते । तस्य तात्पर्यम्- **आनन्देति** ।। आनन्दस्वरूपः तदुपासनेनानन्दाविर्भावरूपा मुक्तिर्भवतीति यावत् । 'आप्नोति ह वै सर्वान् कामान्' इत्येतद्व्याचष्टे - **आप्नोतीति** ।। काम्यन्त इति कामा इति व्युत्पत्तिमभिप्रेत्य विषयानित्युक्तम् । उत्कर्षादुभयत्वाद्वेत्यत्र पदद्वयं व्युत्क्रमेण व्याख्याति- ।। **निद्राया इति** ।। मनो व्यतिरिक्त- सर्वेन्द्रियोपरमरूपाया इत्यर्थः । विषयस्य विषयानुभवस्य इत्युभयोः । कर्षति जीवं तैजसः । स्वप्नमण्डले स्वप्नस्थाने देहान्तरित्यर्थः । वासना- मयपदार्थानुभवायेति शेषः । यतः कर्षति ततः । 'उत्कर्षति ह वै ज्ञानसन्ततिम्' इत्यस्यार्थमाह- **तज्ज्ञानीति** ।। स्वात्मानं देहादुत्कृष्य स्थितः तैजसज्ञानि मुक्तौ ज्ञानिमिनित्यतां प्राप्नोतीति योज्यम् । समानश्च भवतीत्येतद् व्याचष्टे- **सर्वमोक्षिणामिति** ।। अत्रापि देहादुत्कृष्य मोचयित्वा स्थितोऽयं मुक्तः सर्वमोक्षिणां मध्यस्थो भवेत् । अत्र निमित्तद्वयम् । **स्नेहादित्यादि** ।। तैजसे अस्योपासकस्य स्नेहात् भक्तेः सत्वात्तथोपासके तस्मिन् तैजसाख्यभगवतः स्नेहात् प्रीति- सद्भावादित्यर्थः । यद्वा मुक्तानां परस्परं स्नेहवत्त्वादित्यर्थः । दोषाभावात्सर्वशः साकल्येन रागादिदोषाभावादित्यर्थः । यथोक्तम् । 'अक्षरधियान्त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' (ब्र.सू. ३.३.३४) इति ।

मितेरित्येतद् व्याचष्टे- **स्वात्मनीत्यादिना** ।। सर्वश इत्यस्यात्रापि

सम्बन्धः । सर्वशः सर्वमज्ञानावृतं जीवमात्मन्यन्तर्गमयतीत्यर्थः । मितिशब्दात्कथमयमर्थो लभ्येतेत्यत आह- **मानमिति** ॥ मितिरित्यर्थः । अन्तर्गतं स्वान्तर्गतम्- **तज्ज्ञानेति** ॥ तस्य जीवस्य यद्बाह्यपदार्थविषयकं ज्ञानं तस्य लयकृद्यतोऽत इति शेषः । 'मिनोति ह वा इदं सर्वम्' इति वाक्यं व्याचष्टे- **तज्ज्ञोऽपीति** ॥ प्राज्ञज्ञानीत्यर्थः । अपीतिश्च भवतीत्येतद् व्याचष्टे- **दुःखाद्यं त्विति** ॥

ननु 'व्याप्त्यन्तर्गमयेत्' इत्यनेन विमुक्तिगो जीवः सर्वं जगत् व्याप्त्या स्वान्तर्गमयेदित्युक्तं, तदयुक्तम् । जीवस्याणुत्वादित्यतो नात्र स्वरूपतो व्याप्तिर्विवक्षिता किन्तु प्रकाशत एवेत्याह- **अणूनामपीति** ॥ तथा च सर्वं जगत् प्रकाशापरपर्यायज्ञानव्याप्त्यान्तर्गमयतीत्यर्थः । ज्ञानेन सर्वं विषयीकरोतीति यावत् । 'व्याप्त्याऽन्तर्गमयेत्सर्वम्' इत्युक्त्या ब्रह्माण्डाद् बहिरपि विद्यमानसर्वपदार्थविषयकज्ञानप्रसक्तौ सत्यां सर्वशब्दः संकुचितवृत्तिरित्याशयेनाह- **अण्डमात्र इति** ॥ देवेतरेषामित्यर्थः । बहिः अण्डात् । अण्डमात्रे प्रकाशो व्यापको भवेद्यतोऽतो मुक्तौ जीवेषु जीवज्ञानेषु । जगतोऽन्तर्गमनमिति 'मिनोति ह वा इदं सर्वम्' इति वाक्योक्तमुपपन्नं भवेदित्यर्थः ॥ ३ ॥

## उपनिषत्

(उक्तेऽर्थे ब्रह्मदृष्टश्लोकनिरूपणम्)

**अत्रैते श्लोका भवन्ति-**

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ ४ ॥ १ ॥**

## भाष्यम्

**मात्रासम्प्रतिपत्तौ अंशध्याने । आदिमत्त्वं विश्वस्य विद्यते । तदुपासकस्यापि भवतीत्यादिसामान्यम् ॥**

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः-**

चतुर्थं पादममात्रश्चतुर्थ इति वक्ष्यति ॥ एवमकाराद्यर्थयुक्तत्वेन विश्वाद्युपासकानामभीष्टकामावाप्त्यादिकं फलमुक्तम् । तत्तथैवेति भावेन तत्र मन्त्रान् प्रमाणयन्नाह- **अत्रैत इति** ॥ मन्त्रान् पठति- **विश्वस्येत्यादिना** ॥ आदिसामान्यमादित्वेन साम्यम् ॥ ४ ॥

**भाष्यार्थः -**

'मात्राः सम्प्रतिपत्तौ' इत्येतदप्रतीतेर्व्याचष्टे- **मात्रेति** ॥ विश्वस्यादित्वविवक्षायामादिसामान्यमित्युक्तमुपासकस्य भवदादिसामान्यं किमिति न ज्ञायतेऽतस्तदाह- **आदिमत्त्वमिति** ॥ सुप्तेरुत्थान इत्यादिनोक्तप्रकारेणादिमत्त्वं विश्वस्य विद्यत इति योज्यम् ॥ ४ ॥

## प्रकाशिका

'आदिसामान्यमुत्कटम्' इत्यत्र उत्कटमुत्कृष्टम्, आदिसामान्यमादिमत्त्वेन साम्यम् । इयांस्तु विशेषः- विश्वस्य प्राज्ञतैजसाख्यादिमत्त्वम् । उपासकस्य तु स्वोपास्यविश्वाख्यादिमत्त्वम् । मुक्तौ परमानन्दप्रापकत्वादुपास्यविश्वाख्यादिमत्त्वं यदुपासकस्य तदुत्कटमुत्कृष्टमित्युक्तमिति । अंशध्यान इत्यस्य विश्वाख्यांशध्यान इत्यर्थः ।

## पदार्थदीपिका

अत्रापि सलिलेश्वरः स्वोक्तार्थे संवादितया ब्रह्मदृष्टान् मन्त्रानुदाहरति- **अत्रैत इत्यादिना** ॥ तत्र मात्रा सम्प्रतिपत्तावित्यस्याप्रतीतेरर्थमाह- **मात्रा**

**सम्प्रतिपत्तावंशध्यान इति** ।। 'आदिसामान्यमुत्कटम्' इत्येतदप्रतीतेः व्याकरोति- **आदिमत्त्वमिति** ।। सुप्तेरुत्थाने प्राज्ञरूपादिमत्त्वं स्वप्नादुत्थाने तैजसरूपादिमत्त्वं विश्वस्यास्ति । तदादिमत्त्वम् । उपासकस्य विश्वोपासकस्यापि भवतीति मुक्त्यर्थं विश्वरूपादिमत्त्वमस्तीत्येवमादिसामान्यम् । आदिमत्त्वेन विश्वतदुपासकयोः साम्यं शब्दतो द्रष्टव्यमित्यर्थः ।। ४ ।।

## उपनिषत्

**तैजसस्योत्वविज्ञान उत्कर्षो विद्यते ध्रुवम् ।**
**मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ।। ५ ।। २ ।।**

**मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ।। ६ ।। ३ ।।**

**त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितः ।**
**स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ।। ७ ।। ४ ।।**

**अकारो नयते विश्वमुकारश्चापि तैजसम् ।**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिः ।। ८ ।। ५ ।।**

**।। इति तृतीयः खण्डः ।।**

## भाष्यम्

अमात्रेऽप्यगतिर्न विद्यते । प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम् । तुरीयस्य तन्न विद्यत इत्यमात्रः । विश्वादीनां व्यवहारकारणत्वं विद्यते तुरीयस्य तन्न विद्यत इत्यतो गम्यत्वमपि नास्तीत्याशङ्कां निवर्तयति– अगतिर्न विद्यत इति । 'आत्मानं संविशति' इति गतिवचनात् ।।

'आदिमत्त्वेन सामान्यमुपास्येन भवेदिति ।
उपासकस्य सञ्ज्ञानन् सर्ववन्द्यो भवेत् पुमान् ॥
सामान्यत्रयमप्येतत् तुल्यं मुक्तिगतत्वतः ।
अमात्रत्वं तुरीयस्य त्वविभागाद् दिने दिने ।
जाग्रदादेरकर्ताऽपि गम्योऽसौ ज्ञानिनां भवेत् ॥' इति च ॥

'आदिमत्त्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः ।
अमात्रत्वं तुरीयस्याप्यविभागो दिने दिने ॥'

इत्यात्मसंहितायाम् ॥

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

मकारभावे मकारवाच्यत्वभावानायाम् । यदकाराद्यभिधेयविश्वाद्युपासकानां सर्वकामावाप्त्यादिकं फलमुक्तं तत्तथैव । तथैवेति वेत्तुरपि फलोक्तेरित्याशयवात् तत्र मन्त्रं पठति- **त्रिष्विति** ॥ त्रिषु धामासु त्रिषु रूपेषु पूजितेषु पूजकस्य यत्तुल्यमविकारित्वेन साम्यं फलं यो वेत्ति स सर्वलोकानां पूज्य इत्यादि योज्यम् ॥ ७ ॥

विश्वाद्युपासकानामभीष्टकामावाप्तिः फलमुक्तं साम्प्रतं तत्प्राप्तिश्च फलमाह- **अकार इत्यादिना** ॥ अकारोऽकारवाच्यो विश्वो विश्वं स्वं प्रत्युपासकं नयत इत्यादि योजना द्रष्टव्या । तुरीयोपासकस्यतु कथमित्यतस्तस्यापि तत्प्राप्तिरस्तीत्याह- **नामात्र इति** ॥ ८ ॥

**भाष्यार्थः-**

'अमात्रे गतिर्न विद्यते' इति प्रतीतिं निवारयन् तद् व्याचष्टे- **अमात्र इति** ॥ तुरीयस्यामात्रत्वं नाम किमित्यतस्तदाह- **प्रतिदिवसमिति** ॥ 'नामात्रे विद्यते गतिः' इत्येतदप्रतीतेर्व्याख्याय तन्निवर्त्यामाशङ्कां

दर्शयन्नवतारयति- **विश्वादीनामिति** ॥ व्यवहारकारणत्वाद्गम्यत्वञ्च विद्यत इति दोषतया ग्राह्यम् । तुरीयस्य गम्यत्वं कुतः सिद्धम् ? येन तदाशङ्कानिवर्तकं तत्प्रतीम इत्यत आह- **आत्मानमिति** ॥ त्रिषु धामस्वित्युक्तं फलमुपासकस्येति प्रतीतिं निवारयन् तद्व्याचष्टे- **आदिमत्त्वेनेति** ॥ सामान्यं तु तुल्यमित्यन्यथाप्रतीतिमपेक्षितपूरणेन वारयन्नाह- **सामान्यत्रयमिति** ॥ 'आप्नोति ह वै सर्वान् कामानादिश्च भवति । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति । मिनोति ह वा सर्वमपीतिश्च भवति' इत्युक्तं सामान्यत्रयं मुक्तिगतत्वतस्तुल्यमविकारत इत्यर्थः । प्रतिवासरमविभागादमात्रस्तुरीयो गम्यश्चेत्युक्तमर्थं प्रमाणेन दृढयति- **अमात्रत्वमिति** ॥ आदिमत्त्वादिसामान्यं तुल्यमित्यत्राविभागादमात्रत्वमित्यत्र च प्रमाणान्तरं पठति- **आदीति** ॥ ५-८ ॥

**॥ इति श्रीमाण्डूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां,**
**खण्डार्थे च तृतीयः खण्डः ॥**

## प्रकाशिका

विश्वादीनां प्रतिदिनमन्योन्यप्राप्त्या मात्रासम्बन्धवत्त्वात् समात्रत्वम्, तुरीयस्य तु तदभावादमात्रत्वमिति भावेनोक्तम्- **तुरीयस्य तन्न विद्यत इति** ॥ न विद्यते अन्या मात्रा यस्य सः अमात्रः । विश्वादीनां व्यवहारकारणत्वं जीवस्यापेक्षितावस्थात्रयाख्यव्यवहारकारणत्वं विद्यते । तेन तस्यां तस्यामवस्थायां जीवेन गम्यत्वमप्यस्ति । तुरीयस्य तद्व्यवहारकारणत्वं नास्तीत्यतो गम्यत्वं जीवगम्यत्वमपि नास्तीत्याशङ्केति भावः । अमात्रे तुरीये अगतिर्नास्ति । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेन मुक्तगम्यत्वरूपाऽतिशयिता गतिरेवास्तीत्यतस्तुरीयस्य गम्यत्वं नास्तीति शङ्का न कार्येत्युत्तरवाक्यार्थः ।

'आत्मानं संविशति' इत्यनेन 'आत्मैव संविशत्यात्मनाऽत्मानम्' इति वाक्यं सङ्गृह्णाति। अस्यार्थः - य एवं तुरीयमहिमानं वेद स उपासकः आत्मैव केवलं जीव एव, न तु संसारिवत् पाञ्चभौतिकदेहाद्युपाधिविशिष्ट इति। आत्मना मुक्तिप्रापकतुरीयाख्यपरमात्मकृपयाऽऽत्मानं मुक्तस्थाने स्थितं तं तुरीयमेव संविशति। न चाऽत्मानमित्यनेन तुरीयस्यासङ्ग्रह इति वाच्यम्। तत्स्वरूपवेत्तुः तत्प्रवेशस्यैव फलतया वक्तव्यत्वात्। आत्मानं स्वात्मानमेव संविशतीत्यर्थस्त्वेकस्मिन् कर्तृकर्मविरोधान्न परेण वक्तुं शक्यः। तुरीयोपासनया स्वप्राप्तेरसङ्गतत्वात्, अफलत्वाच्च। वक्ष्यति चैतद्भाष्यकारः - **आत्मैव भूत्वेत्यादिना**॥ त्रिषु धामसु विश्वादीनामुपासकस्य 'आप्नोति ह वै सर्वान् कामान्', 'उत्कर्षति ह वै ज्ञानसन्ततिम्', इति 'मिनोति ह वा इदं सर्वम्' इति च यत्सामान्यमुपास्य देवैः सह यत्साम्यमुक्तमेतत्त्रितयमपि तुल्यं मुक्तिगतत्वेन समम्। त्रितयं च कदाऽप्युच्छेदरहितत्वेन सममित्यर्थः। मोक्षोपभोग्यतः मोक्षोपभोग्याव्यवहार्यत्वादिकं यत्तुरीय उक्तं तस्याप्यत्रोपासके साम्यमिति भावः॥ ५-८॥

## पदार्थदीपिका

'नामात्र' इति वाक्यं अमात्रेति गतिर्न विद्यते इत्यन्यथाप्रतीतिवारणायाकारप्रश्लेषेण पदच्छेदं दर्शयन् व्याख्याति- **अमात्रेऽपीति**॥ कर्मणि क्तिन्। भावप्रधानश्च निर्देशः। तथा च यथा विश्वादिरूपत्रयेऽगतिरगम्यता न विद्यते। तथाऽमात्रे तुरीयेप्यगतिर्न विद्यते। सोऽपि ज्ञानिप्राप्य एवेत्यर्थः। तुरीयस्य कथममात्रत्वमित्यत आह- **प्रतिदिवसमिति**॥ तदिति सामान्येन विभागैकीभावयोः परामर्शः। यथा विश्वादीनां मध्ये विश्वतैजसयोः प्राज्ञेनैकीभावविभागौ विद्येते यथा

विश्वस्य प्राज्ञतैजसाभ्याम् । तथा तुरीयस्य तौ न स्त इत्यमात्र उच्यत इत्यर्थः । अस्त्वेवं नामात्र इति वाक्यव्याख्यानम् । तथाऽपि किमर्थमेतद्वाक्यं प्रवृत्तमित्यतस्तदवतारयति- **विश्वादीनामित्यादिना** ॥ व्यवहारः प्रवृत्तिः- **इत्यत इति** ॥ इत्येतस्माद्धेतोरित्यर्थः । तथा च विश्वादीनां जाग्रदादिप्रवृत्तिरूपव्यवहारकारणत्वं विद्यते । तत एतत्प्रयुक्तं तत्तदवस्थायां जीवेन साम्यं चास्ति । तुरीयस्य तु गम्यत्वप्रयोजकस्य जाग्रदादिप्रवृत्तिरूपव्यवहारकारणस्याभावात्तत्प्रयुक्तं गम्यत्वमपि नास्तीत्याशङ्कां अनेन वाक्येन निवर्तयतीत्यर्थः- **अगतिर्न विद्यत इतीति** ॥ तथा च जाग्रदादिप्रवृत्तेरकर्ताऽपि तुरीयो गम्य इत्यङ्गीकारान्न तस्यागम्यत्वप्रयोजकत्वमिति भावः ।

ननु भवेदेतद्वाक्यस्योक्तरीत्याऽकारप्रश्लेषेण व्याख्यानं तुरीयस्यागम्यत्वशङ्कानिवर्तकम् । यदि 'अकारो नयते विश्वम्' इत्यादिवत्तुरीयस्यापि गम्यत्वप्रतिपादकं निरवकाशं किञ्चिद्वाक्यं स्यात् तदेव नास्तीति चेत् तत्राह- **आत्मानमिति** ॥ गतिवचनात् गम्यत्ववचनादित्यर्थः । तथा चात्मानं संविशतीति तुरीयप्रकरणे आत्मशब्दोक्तस्य तुरीयस्य संविशतीति स्पष्टं गम्यत्वोक्तेः । तदनुसारेणेदमपि वाक्यमकारप्रष्लेषेण व्याख्यातं तदुक्तशङ्कानिवर्तकं भविष्यत्येवेति भावः । त्रिषु धामस्विति वाक्यं प्रमाणेनैव व्याचष्टे- **आदिमत्त्वेनेति** ॥ उपासकस्यादिमत्त्वेन निमित्तेनाकारादिवाच्यतया विश्वाद्युपासकस्योपास्येन विश्वादिनाऽऽदिमत्त्वेन सामान्यं भवेदिति सञ्जानन् पुमान् सर्ववन्द्यो भवेदित्यर्थः । सामान्यं तुल्यमित्यन्यथाप्रतीतिवारणाय प्रमाणेनैव विवृणोति- **सामान्यत्रयमपीति** ॥ 'आप्नोति ह वै सर्वान् कामानादिश्च भवति' इत्यनेनोक्तं आदिसामान्यमाप्तिसामान्यमित्येकम् । 'उत्कर्षति

ह वै ज्ञानसन्ततिं समानश्च भवति' इति वाक्येनोक्तं उत्कर्षसामान्यमुभयसामान्यमित्यपरम् । 'मिनोति ह वै इदं सर्वमपीतिश्च भवति' इत्यनेनोक्तं मानसामान्यलयसामान्यमित्यन्यदित्येवं सामान्यत्रयमपि तुल्यम् । एकप्रकारतयाऽविकारीत्यर्थः । कुत इत्यत उक्तम्- **मुक्तिगतत्वत इति** ।। न हि मुक्तिगतं विकारीति भावः । प्रतिदिवसमेकीभावविभागयोरभावात्तुरीयोऽमात्रो ज्ञानगम्यश्चेत्येतत् प्रमाणशेषेण दृढयति- **अमात्रत्वमिति** ।। जाग्रदादिप्रवृत्तिकारणत्वं गम्यत्वप्रयोजकं न भवतीत्येतदपि प्रमाणयति- **जाग्रदादेरिति** ।। आदिमत्त्वादिसामान्यं मुक्तिगतत्वतस्तुल्यमित्यत्र तुरीयस्योक्तरीत्याऽमात्रत्वे च प्रमाणान्तरं पठति- **आदिमत्त्वादीति** ।। ।। **मोक्षोपभोग्यत** इति ।। मोक्षोपभोग्यत्वतः मोक्षपर्यवसायित्वादिति यावदित्यर्थः ।। ५-८ ।।

**।। इति माण्डूकभाष्यार्थे तृतीयः खण्डः ।।**

**ततश्चायं खण्डार्थः -**

**सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति । जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा ।। आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ।। १ ।।**

एवं चतुरो विश्वादीन्निरूप्य तेषामेव चतुर्णां प्रणवांशाकारोकारमकारनादप्रतिपाद्यत्वरूपमहिमानमाह **खण्डद्वयेन** । तत्रादौ विश्वादीनां त्रयाणां प्रणवांशाकारोकारमकारत्रयप्रतिपाद्यत्वं वक्तुं उक्तमनुवदति- **सोऽयमात्मेति** ।। सोऽयं विश्वादिचतूरूप आत्मा अध्यक्षरं सर्वतोऽधिकत्वादधि अविनाशित्वादक्षरमोमित्याक्रियत इत्योङ्कारः । यद्वक्तुमुक्त-

मनूदितं तन्निरूपयितुं प्रस्तावयति- **अधिमात्रमिति** ।। अधि अधिकाः पूर्णाः मात्राः यस्यासावधिमात्रः । कास्ता मात्रा इत्यत आह - **पादा मात्रा इति** ।। पादाः अंशाः मात्रा मात्राशब्दवाच्या इत्यर्थः । ते पादा अपि क इत्यत आह- **अकार इत्यादिना** ।। अत्र नादोऽपि ग्राह्यः । तत्राकारवाच्यः क इत्यत आह- **जागरितेति** ।। यो जागरितस्थानो वैश्वानरो भगवतः प्रथमा मात्रा प्रथमोंऽशो विश्वः स अकारः अकार-वाच्यः । विश्वे अकारप्रवृत्तौ निमित्तद्वयमाह- **आप्तेरादिमत्त्वाद्वेति** ।। आप्तेर्जीवस्य विषयानापयति प्रापयतीत्याप्तिस्तन्निमित्तात् । आदिमत्त्वाद्वा । सुप्त्यवस्थातो जाग्रदवस्थायां प्रत्यागमने विश्वस्य प्राज्ञाद् विभज्यमानत्वेन प्राज्ञरूपादिमत्त्वम् । स्वप्नादुत्थाने तैजसाद्विभज्यमानत्वेन तैजसरूपादिमत्त्वमस्तीत्येवं आदिमत्त्वाद्वा अ इत्युच्यत इत्यर्थः । आप्त्यादिमत्त्वरूपनिमित्तद्वयेनाकारवाच्यतया विश्ववेत्तुः फलमाह- **आप्नोतीति** ।। य एवं निमित्तद्वयेन विश्वस्याकारवाच्यत्वं वेद स सर्वान् कामान् काम्यान् विषयान् विश्वानुग्रहेण प्राप्नोति मुक्तौ ।। अस्योपासकस्य भगवान् विश्व आदिश्च मुक्तेः कारणश्च भवतीत्यर्थः ।। १ ।।

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद् वा । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ।। २ ।।**

उकारवाच्यः क इत्यत आह- **स्वप्नस्थान इति** ।। यः स्वप्नस्थानस्तैजसो द्वितीया मात्रा स उकारः उकारवाच्य इति । तत्र उकारशब्दप्रवृत्तौ निमित्तद्वयमाह- **उत्कर्षादुभयत्वाद्वेति** ।। शरीराभिमानादुत्थाप्योद्धृत्य स्वप्नमण्डलं प्रति वासनामयपदार्थानुभवाय कर्षतीत्युत्कर्षस्तस्मात् । बाह्यव्यापारोपरतिरूपनिद्रायाः स्वाप्नविषयानुभवस्य च हेतुत्वादुभयत्वं,

तस्माद्वा उकारवाच्य इत्यर्थः । एवं निमित्तद्वयेन तैजसस्योकारवाच्यत्ववेत्तुः फलमाह- **उत्कर्षतीत्यादिना** ॥ एवं निमित्तद्वयेन तैजसस्योकारवाच्यत्वं यो वेद स ज्ञानसन्ततिमुत्कर्षति ज्ञानसन्तत्योत्कृष्टो भवति । मुक्तिं प्राप्य नित्यज्ञानो भवतीति ह वै प्रसिद्धमित्यर्थः । समानश्च भवति स्नेहाद्दोषाभावाच्च सर्वमुक्तानां मध्यस्थो भवति । अस्यैवं उकारवाच्यतया तैजसवेत्तुः कुलेऽब्रह्मवित्पुत्रो न भवति ज्ञानिपुत्रको भवतीत्यर्थः ॥ २ ॥

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा ।**
**मिनोति हवा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ३ ॥**

मकारवाच्यः क इत्यत आह- **सुषुप्तस्थान इति** ॥ यः सुषुप्तस्थानः प्राज्ञो भगवतस्तृतीया मात्रा स मकारो मकारवाच्य इति । प्राज्ञे मकारप्रवृत्तौ निमित्तद्वयमाह- **मितेरपीतेर्वेति** ॥ मितिरन्तर्गतिः । तथा च सुप्तौ जीवमात्मन्यन्तर्गमयतीति हेतोः । तथाऽपीतेः सुप्तौ बाह्यज्ञानलयकर्तृत्वाद्वा मकारवाच्य इत्यर्थः । 'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते' इति वचनात् । एवं निमित्तद्वयेन प्राज्ञस्य मकारवाच्यत्ववेत्तुः- **फलमाह मिनोति ह वा इत्यादिना** । एवं निमित्तद्वयेन प्राज्ञस्य मकारवाच्यत्वं यो वेद स इदं सर्वं जगन्मिनोति । अत्यणूनामपि जीवानां प्रकाशतो व्याप्तेः सत्त्वात्प्रकाशस्यान्तर्गमयति । अण्डमात्रस्थितं पदार्थजातं जानातीति यावत् । अपीतिर्दुःखादेः संसारस्य विलापकश्च भवतीत्यर्थः ॥ ३ ॥

**अत्रैते श्लोका भवन्ति–**

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ ४ ॥ १ ॥**

'जागरितस्थान' इत्यादिनोक्तार्थे विश्वासजननाय सलिलेश्वरो ब्रह्मदृष्टान् मन्त्रान् संवादयन्नाह- **अत्रैत इति** ॥ तत्र जागरितस्थान इत्याद्यर्थे मन्त्रं पठति- **विश्वस्येति** ॥ विश्व अकारवाच्य इत्येवं विश्वस्य अत्वविवक्षां उक्तरीत्या अकारवाच्यत्वविवक्षां कृत्वेति यावत् । मात्रासम्प्रतिपत्तौ मात्रायाः विश्वलक्षणभगवदंशस्य सम्प्रतिपत्तौ ध्याने क्रियमाणे सति । अस्य ध्यातुरुत्कटं विस्पष्टं यथा भवति तथाऽऽदिसामान्यं उक्तरीत्या विश्वस्य प्राज्ञतैजसरूपादिमत्त्वं विद्यते । तदुपासकस्यापि भवतीत्येवमादिमत्त्वेन साम्यं भवति । शब्दसाम्यमेवात्र द्रष्टव्यम् । तथाऽऽप्तिसामान्यम् । उक्तरीत्याऽऽप्तिमत्त्वेनापि साम्यं स्यात् भवतीत्यर्थः ॥ ४ ॥

**तैजसस्योत्वविज्ञान उत्कर्षो विद्यते ध्रुवम् ।**
**मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥ ५ ॥ २ ॥**

स्वप्नस्थान इत्याद्यर्थे मन्त्रं पठति- **तैजसस्येति** ॥ तैजसस्योकारवाच्यत्वविज्ञाने उक्तरीत्या उकारवाच्यत्वविवक्षां कृत्वा मात्रासम्प्रतिपत्तौ तैजसलक्षणभगवदंशध्याने अस्योपासकस्य स्फुटमुत्कर्षः ज्ञानोत्कर्षरूपं फलं विद्यते । तथाविधं भगवन्निष्ठोभयत्वसदृशं उभयत्वञ्च विद्यते । निद्रास्वाप्नविषयानुभवश्च भगवता क्रियत इति तस्योभयत्वम् । अस्याप्युपासकस्य बाह्येन्द्रियोपरमरूपा निद्रा मुक्तौ भवति । बाह्येन्द्रियाणि जडानि सर्वाण्यपि नश्यन्तीति यावत् । स्वरूपेन्द्रियेण विषयानुभवश्च भवतीत्युभयत्वं विद्यते भवतीत्यर्थः ॥ ५ ॥

**मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।**
**मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥ ६ ॥ ३ ॥**

सुषुप्तस्थान इत्याद्यर्थे मन्त्रं पठति- **मकारेति** ॥ प्राज्ञस्य मकारभावे

मकारवाच्यत्वे उक्तरीत्या मकारवाच्यत्वविवक्षां कृत्वा मात्रासम्प्रतिपत्तौ प्राज्ञरूपभगवदंशध्यानेऽस्योत्कटं मानसामान्यम् उक्तरीत्या स्वान्तर्गमयितृत्वेन साम्यं उक्तरीत्या लयकर्तृत्वेन साम्यं च भवतीत्यर्थः ॥ ६ ॥

**त्रिषु धामसु यत् तुल्यं सामान्यं वेत्ति निश्चितः ।**
**स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ ६ ॥ ४ ॥**

यत् अकाराद्यभिधेयविश्वाद्युपासकानां सर्वकामावाप्त्यादिफलमुक्तं तत्सत्यमेव । कुत इति चेत् अकाराद्यभिधेयविश्वाद्युपासकाः सर्वकामाप्त्यादिमन्त इति वेत्तुरपि फलोक्तेः । न हि तस्य मिथ्यात्वे तद्वेत्तुः फलं भविष्यतीत्याशयेनाह- **त्रिष्विति** ॥ यो निश्चितो निश्चयरूपज्ञानवानधिकारी । त्रिषु धामसु 'तेजः स्वरूपं च गृहं प्राज्ञैर्धर्मेति गीयते' इति वचनात् विश्वादिस्वरूपेषु अकारादिवाच्यतयोपासकेनोपासितेषु सत्सूपजायमानं यदुपासकस्योपास्येन आप्त्यादिमत्त्वरूपं सामान्यं साम्यं तत्तुल्यं मोक्षपर्यवसायित्वादविकारीति वेत्ति । स सर्वभावानां कर्तरि षष्ठी । सर्वभावैः सर्वजीवैः पूज्यो वन्द्यश्च भवति । महामुनिश्च भवीतीत्यर्थः ॥ ७ ॥

**अकारो नयते विश्वमुकारश्चापि तैजसम् ।**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिः ॥ ८ ॥ ५ ॥**

विश्वाद्युपासकानां सर्वकामावाप्त्यादिफलमित्युक्तम् । तत्प्राप्तिरूपफलान्तरं चास्तीत्याह- **अकारइत्यादिना** ॥ अकारः अकारवाच्यो विश्वः तथा ध्यातः विश्वं स्वं प्रति उपासकं नयतीत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । विश्वादीनां जाग्रदादिप्रवर्तकत्वेन तत्तदवस्थायां जीवेन

गम्यत्ववत्तुरीयस्य तदभावात् तत्प्रयुक्तं गम्यत्वमपि नास्तीत्याशङ्कां परिहरति- **नामात्र इति** ॥

विश्वादिवत्प्रत्यहमेकीभावविभागयोरभावेनामात्रो यस्तुरीयस्तस्मिन्नगतिः कर्मणि क्तिन्, भावप्रधानश्च निर्देशः अगम्यता नास्तीति सोऽपि ज्ञानिप्राप्य एव । आत्मानं संविशतीति तस्यापि गम्यत्ववचनादित्यर्थः । तथा च न जाग्रदादिप्रवृत्तिकारणत्वं गम्यत्वे प्रयोजकमिति भावः ॥ ८ ॥

॥ इति माण्डूकखण्डार्थे तृतीयः खण्डः ॥

## ॥ अथ चतुर्थ खण्डः ॥

### उपनिषत्

(तुरीयोपासकस्य फलम्)

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत**
**ओङ्कार आत्मैव संविशत्यात्मनाऽत्मानं य एवं वेद ॥ १ ॥**

### भाष्यम्

**आत्मैव भूत्वाऽन्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः । अव्यवहार्यत्वादिकमत्र साम्यमिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम् ।**

### श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

तुरीयस्य 'नान्तःप्रज्ञम्' इत्याद्युक्तं तदनुवादेनावधारयन् नादप्रतिपाद्यत्वमाह - **अमात्र इति** ॥ ओंकारः प्रणवैकदेशनादप्रतिपाद्य इत्यर्थः । नादप्रतिपाद्यत्वेन तुरीयोपासकस्य फलमाह - **आत्मेति** ॥ १ ॥

**भाष्यार्थः -**

'आत्मैव संविशति' इत्यादिवाक्यमप्रतीतेर्व्याचष्टे- **आत्मैवेति** ॥ 'अदृष्टमव्यवहार्यम्' इत्यादिना पूर्वमेवाव्यवहार्यत्वादेरुक्तत्वात् पुनश्चतुर्थोऽव्यवहार्य इत्याद्युक्तिर्व्यर्थेति शङ्कां प्रयोजनोक्त्या परिहरति- **अव्यवहार्यत्वादिकमिति** ॥ अत्रोपासके अद्वैत ओंकार इत्यत्र तुरीयस्य समग्रप्रणवप्रतिपाद्यत्वप्रतीतिं निवारयंस्तदुपासकस्यात्मैव संविशत्यात्मनाऽऽत्मानमित्युक्तं तत्प्रवेशं प्रमाणेन दृढयति - **तुरीयमिति** ॥ तत्सदृशात्मवानित्युक्तं तत्सादृश्यं सर्वप्रकारेणेति प्रतीतिं निवारयन्नाह - **ज्ञानेति** ॥१॥

## प्रकाशिका

य एवं वेद सोऽपि सांसारिकव्यवहारागोचरः सन्देहाभिमाननिमित्तकप्रपञ्चोपशमवान् शिवः शोभनः अद्वैतः भ्रमरहितश्च सन्नित्येतावानर्थः य एवं वेदेत्युक्तिबलाल्लभ्यते । अतः पुनरारम्भ इत्यर्थः । पूर्वं तु उपासकस्याप्रस्तावात्तुरीयस्यैव महिमेति सिध्यति । अत्र तु उपासकफलप्रस्तावादुपास्यगतमव्यवहार्यत्वादिकमपि स्वयोग्यं फलं बलादायाति । 'तं यथा यथोपासते तथैव भवति' इति हि श्रुतिः । तदिदमाह पुराणकारः- 'तत्सदृशात्मवान्' इति, 'ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः क्वचित्' इति च ।

## पदार्थदीपिका

तुरीयस्य नादप्रतिपाद्यत्वं वक्तुमयं खण्डः प्रवृत्तः । तत्र नादप्रतिपाद्यत्वेन तुरीयज्ञानिफलप्रतिपादकं आत्मैवेत्यादिवाक्यं अभेदप्रतीतिनिरासाय सम्यग्व्याचष्टे- **आत्मैवेत्यादिना** ॥ पारतन्त्र्यादिविशिष्टस्वरूपानुभवमपरित्यज्येत्यर्थः । एवकारलब्धार्थं दर्शयति- **अन्याभिमानमिति** ॥ देहाद्यभिमानमित्यर्थः । आत्मनेत्यस्यार्थः

परमात्मनैवेति । प्रसन्नेन तुरीयेणेत्यर्थः । तत्प्रसादादिति यावत् । परमात्मानं तुरीयम् । नन्वदृष्टमव्यवहार्यमित्यादिना पूर्वं तुरीयस्याव्यवहार्यत्वादेः प्रतिपादनादत्र पुनरव्यवहार्यत्वादिकं तुरीयस्य कस्मादुच्यत इत्यतस्तदभिप्रायमाह- **अव्यवहार्यत्वादिकमिति** ॥ अत्र तुरीयोपासके । विश्वाद्युपासके तत्साम्यस्येव तुरीयोपासकेऽपि तत्साम्यस्यावश्यं वक्तव्यत्वादव्यवहार्यत्वादिधर्मेण तत्साम्यमिति दर्शयितुं पुनरत्राव्यवहार्यत्वादिकमुक्तमित्यर्थः ।

## उपनिषत्

(अन्यत्त्यागेन ब्रह्मज्ञानं सम्पाद्यमित्यत्र ब्रह्मदृष्टमन्त्रनिरूपणम्)

**अत्रैते श्लोका भवन्ति–**

**ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।**
**ओङ्कारं पादशो ज्ञात्वा न किञ्चदपि चिन्तयेत् ॥ २ ॥ १ ॥**

**युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।**
**प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ३ ॥ २ ॥**

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः ।**
**अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ ४ ॥ ३ ॥**

**सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।**
**एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ ५ ॥ ४ ॥**

**प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।**
**सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ ६ ॥ ५ ॥**

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो
जन इति ॥ ७ ॥ ६ ॥

॥ इति चतुर्थः खण्डः ॥

## ॥ समाप्ता चेयं माण्डूकोपनिषत् ॥

### भाष्यम्

'तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम् ।
तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान् ॥
ज्ञानानन्दौ च शक्तिश्च तथाऽपि न समाः क्वचित् ।
विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा ॥
चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि ।
जाग्रदादिप्रणयनात् स एव ब्रह्म बृंहणात् ॥
ओमित्याक्रियमाणत्वादोङ्कारः स प्रकीर्तितः ।
आदिमत्त्वादयो ह्यर्था ओमित्यस्य श्रुतौ श्रुताः ॥
अपूर्वः कारणाभावान्नाशाभावादनन्तकः(रः ?) ।
पराधीनस्थित्यभावादनन्तर उदाहृतः ।
सर्वगत्वादबाह्यश्च तं ज्ञात्वा प्रविमुच्यते ॥' इति च ॥
'परत्वमपरत्वं च विष्णोरेकस्य वै यदा ।
श्रूयते न तु सामर्थ्यभेदस्तत्र कथञ्चन ।
अवतारस्य पूर्णत्वात् पौर्वापर्यमुदाहृतम् ॥' इति ब्रह्मतर्के ।

पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यादेरर्थः ॥

एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।
यस्तं वन्दे सदानन्दं विष्णुं विश्वादिरूपिणम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं माण्डूकोपनिषद्भाष्यं समाप्तम् ॥**

## श्रीव्यासतीर्थविरचिता टीका

**खण्डार्थः -**

प्रणवावयवाकारादिप्रतिपाद्यभगवद्रूपज्ञानमन्यस्मरणत्यागेनापादनीय-मित्यादौ मन्त्रान् प्रमाणयन्नाह- **अत्रैव इति** ॥ मन्त्रं पठति- **ओङ्कार-मिति** ॥ पादशः पादैः ॥ २ ॥

संसारभयतितीर्षुणोंकारो भगवान् सर्वथा ध्येय इत्यत्र मन्त्रं पठति- **युञ्जीतेति** ॥ ३ ॥

**भाष्यार्थः -**

'युञ्जीत प्रणवे चेतः' इत्यादौ बहुवारमावर्त्यमानः क इति न ज्ञायते तदाह- **चतूरूपस्येति** ॥ प्रणवाभिधेयश्चतूरूपो विष्णुर्भवतु । किं कुर्वन् तथोच्यते इत्यत आह-**जाग्रदिति** ॥ प्रकृष्टं नयतीति प्रणव इत्यर्थः ॥ २-३ ॥

**खण्डार्थः -**

विश्वादिरूपाणां परस्परं मूलरूपेण च न ज्ञानादिगुणैरपकर्षो ज्ञातव्य इत्याह- **प्रणव इति** ॥ अपरमपरः प्रणवो ब्रह्म हि परं परश्च प्रणवो ब्रह्मेति स्मृतः । ब्रह्मेत्युक्तं पूर्णत्वं विशदयन्नाह- **अपूर्व इति** ॥ उक्ताः पूर्णत्वगुणाः नोपचरिता इति भावेन तथा वेत्तुः फलमाह- **एवं हीति** ॥ व्यश्नुते प्राप्नोति । तदनन्तरं तज्ज्ञानानन्तरम् । अनन्तरः अबाह्य इति

तस्यान्तर्बहिरन्यन्नास्तीत्युक्तम् । न केवलमेतावदपि तर्हि स्वयं सर्वस्यान्तर्बहिश्च इत्याह- **प्रणवमिति** ॥ एवं समस्तव्यस्त-प्रणवाभिधेयोपास्तिमुक्त्वा तामनुवदन् तज्ज्ञानिनं स्तुवन्नुपसंहरति- **अमात्र इति ॥ ४-७ ॥**

**भाष्यार्थः -**

'शिवोऽद्वैत ओंकारः' इत्यत्र द्विरावृत्तोंकारपदं ब्रह्मपदं च व्याचष्टे- **ओमिति** ॥ प्रणवावयवाकारोकारमकारवाच्यविश्वादीनामाप्त्यादि-मत्त्वादयो येऽकाराद्यर्थाः ते तथैवेत्यत्र प्रमाणान्तरमाह- **आदिमत्त्वादय इति** ॥ ओमित्यस्यावयवानामिति ग्राह्यम् । पूर्वो न भवतीति नविद्यतेऽन्तरोन्ऽतस्थो यस्येति, न विद्यते परं अन्यद्भिन्नं यस्मादिति प्रतीतिं निवारयन् अपूर्वोऽनन्तरोऽबाह्य इति पदानि व्याचष्टे- **अपूर्व इत्यादिना** ॥ 'प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः' इत्यस्यावताराणां सामर्थ्यतः परत्वापरत्वप्रतिपादकत्वप्रतीतिं निवारयन्नाह- **परत्वमिति** ॥ पूर्वत्वात्पश्चिमत्वाच्चेति ग्राह्यम् । अन्यथाप्रतीतिं परिहृत्येदानीमर्थमाह - **पूर्वेति** ॥ यत्प्रसादाद्यत्प्रीत्यै माण्डूकोपनिषद्भाष्यमुपक्रम्य समापितं तमेव तदुक्तगुणैरुपश्लोकयन् प्रणामेन समापयति- **एकोऽपीति** ॥ निर्विशेषोऽपीन्द्रार्जुनादिवद्विशेषरहितोऽपि विश्वादिचतूरूपेण चतुर्धा सन् जाग्रदादिचतुर्धा व्यवहारभागित्यशेषमतिमङ्गलम् ॥ ४-७ ॥

**यः सर्वजीवनेत्रादौ स्थित्वाऽवस्थाः प्रवर्तयन् ।**
**मोक्षदश्च रमानाथं वन्दे तं मध्ववल्लभम् ॥**

**॥ इति श्रीमाण्डूकभाष्यटीकायां व्यासतीर्थमुनिविरचितायां, खण्डार्थे च चतुर्थः खण्डः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

## प्रकाशिका

अत्र विश्वादिषु पूर्वस्यैव ब्रह्मत्वं न त्वपरस्येति शङ्कां श्रुतिरेव वारयति- **प्रणवो ह्यपरं ब्रह्मेति ॥** परं पूर्वरूपं च ब्रह्म। अपरमपररूपं च ब्रह्म। तत्र ज्ञानानन्दादिगुणानां सर्वत्र साम्यादिति हेतुसूचनाय हिशब्दः । तर्हि पूर्वापरभावः कथमिति चेन्न। मत्स्यकूर्मादिरूपाणामिव विशेषबलेनैवोपपत्तेरित्यपि हिशब्देनैव सूचितम् । अपूर्वः पूर्वशब्दवाच्यकारणरहितः । अनन्तरः अन्तं नाशं राति ददातीत्यन्तरो मृत्युस्तद्रहितोऽनन्तरः। तथा स्वकृतकर्माधीनतया देहान्तर्गतजीववदन्तरो न भवतीत्यनन्तरः। न विद्यते बाह्यं यस्मात् सोऽबाह्यः, सर्वगत इत्यर्थः । न विद्यते परमुत्तमं यस्मात् सोऽपरः सर्वोत्तमः। अव्ययः वृद्धिह्रासरहितः। आदिः आदौ विद्यमानः। मध्यं मध्ये विद्यमानं ब्रह्म प्रणव एव। अन्तः नियामकतया सर्वेषां हृदि विद्यमानः सर्वस्यान्ते विद्यमानो वाऽन्तः।। तत् प्रणवाख्यं ब्रह्म अनन्तरं ज्ञानानन्तरं व्यश्नुते विशेषेण प्राप्नोति। सर्वगतस्य व्याप्तिः संसारावस्थायामप्यस्तीत्यतो वीत्युपसर्गः ।

अस्यामुपनिषदि चतूरूपतया प्रतिपाद्यमानो विष्ण्वाख्यो जगदीश्वर एव न तु जीवादिरिति भावेन श्रुतिः स्वाभिप्रायं स्वयमेवोद्घाटयति- **प्रणवं हीति ॥** प्रणवं हीश्वरं सर्वेश्वरं विद्यात्। सर्वस्य मुक्तामुक्तात्मकसकलजीवसमुदायस्य हृदि स्थितं हृदये स्थितम् । सर्वव्यापिनं सकलचेतनाचेतनात्मकप्रपञ्चव्यापिनं च विद्यात्। अमात्रः भिन्नांशरहितः, इयत्तारहितो वा । अनन्तमात्रः अभिन्नमत्स्यकूर्माद्यनन्तावताराख्यांशसहितः । द्वैतस्योपशमः भ्रमस्योपशमः । अनन्तमात्र इत्यत्र मन्दमतिभिराशङ्कितस्वगतभेदरहितो वा। 'नेह नानाऽस्ति किञ्चन' इति हि श्रुतिः। इममेवार्थमाह भाष्यकारः- **अपूर्वः कारणाभावादित्यादिना ॥**

वारं वारं तत्र तत्र कथिताद्वैतशब्दस्य पराभिलषितभेदमात्रराहित्यरूपार्थो न ममाभिप्रेत इति श्रुतिः स्वयमेव बाधकानि वदन्त्युपसंहारव्याजेन परस्य दुराशामपि दूरयितुं सर्वेश्वरत्वसर्वजीवहृन्मध्यगतत्वसर्वव्यापित्वाख्य-भेदकविशेषणवत्तया परमात्मानं विशिनष्टीति सर्वमतिमङ्गलम् ।

आचार्यैः प्रमाणवचनैर्व्याख्यातत्वान्नैतच्छ्रुत्यर्थे प्रेक्षावतां शङ्कावकाशः। तथाऽपि 'मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी' इतिवत् स्वमतदुराग्रहेण वदन्तं प्रति च हृदिस्थमध्वकृपयैव सकलश्रुतिवाक्यानामप्येकवाक्यतयैव सर्वेषां विदुषां मनोनुरञ्जकमर्थं ब्रूमः- तथा हि 'एष सर्वेश्वर एष सर्वज्ञ एष सर्वान्तर्याम्येष योनिः सर्वस्य' इति श्रुतौ प्रथमं तावदनीश्वरजीवेभ्योऽ-त्यन्तभेदे सर्वेश्वरत्वाख्यो हेतुरुक्तो भवति । तथा च 'विमतः परमात्मा जीवादत्यन्तभिन्नो भवितुमर्हति सर्वेश्वरत्वात् । यो जीवादत्यन्तभिन्नो न, न स सर्वेश्वरोऽपि । यथा देवदत्तः ।' अथवा ईश्वरस्य सर्वेश्वरत्वं 'एष सर्वेश्वरः' इति श्रुत्यैव सिद्धम् । जीवानामनीश्वरत्वं स्वस्वानुभवसिद्धम् । अर्थात्श्रुत्यादिसिद्धम् । एवं च सति 'ईश्वरजीवौ परस्परमभिन्नौ न, विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत्' इत्यन्वय्यनुमानमुक्तं भवति । किं च 'एष सर्वेश्वरः' इति भगवतः सर्वेश्वरत्वं वदन्ती श्रुतिः सर्वस्य जगतो मिथ्यात्वे स्वोक्तसर्वेश्वरत्वस्यैव भङ्गप्रसङ्गाज्जगतः सत्यतामभिप्रैतीति सिद्धम् । तथा च 'ईश्वरो जगतो मिथ्यात्वं न सहते, विश्वसत्यतायाः स्वसर्वेश्वरत्वोपयोगित्वात्,यद्यदीश्वरत्वोपयोगि स न तन्मिथ्यात्वं सहते । यथा राजा राष्ट्रस्येति । कथमन्यथा वराहरूपी भगवान् रसातलगतां रसामुद्दधारेत्यपि श्रुतिरेवासूचयत् ।

तथा भेदजगत्सत्यत्वसाधकतयोक्तानुमानद्वयेऽनुकूलतर्ककथनाय सर्वज्ञत्वादिविशेषणत्रयमुक्तम् । तथा हि- यदीश्वरस्य तदधीन-

तयोक्तजगतश्च भेदो न स्यात्तर्ह्येष परमेश्वरः सर्वज्ञः कथं स्यात् । भवति च भगवान् सर्वज्ञः । अतोऽल्पजगतो भिन्नश्च । एवं सर्वस्याभावे कथमेष सर्वज्ञः स्यात् । किन्तु सर्वाऽभावज्ञ एव स्यात् । भवति च सर्वज्ञः । अतस्तत्त्वेनेश्वरप्रमाविषयीभूतं सर्वं जगच्च सत्यमिति भेदे जगत्सत्यत्वे चानुकूलतर्कद्वयमुक्तं भवति । यदि चेश्वरजगतोर्भेदो न स्यात्तर्हीश्वरः सर्वान्तर्यामी कथं स्यात् । भवति च सर्वान्तर्यामी । 'एष त आत्माऽन्तर्यामी' इति श्रुतेः । 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' (ब्र.सू. १.२.१८) इति सूत्राच्च । सर्वस्यान्तर्नियमयति यः स हि सर्वान्तर्यामी । एवं राजभृत्ययोरिव नियामकनियम्ययोः कथं भेदो न स्यादिति । सर्वाभावे च कथं तदन्तर्यामी स्यात् । न हि वन्ध्यासुतस्य कोऽप्यन्तर्यामी दृष्टः । अतोऽत्रापि पूर्ववदनुकूलतर्कद्वयमुक्तं भवति । तथा यदीश्वरजगतोः भेदो न स्यात्तर्ह्येष सर्वस्य योनिः कथं स्यात् । भवति सर्वस्य योनिः । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । 'जन्माद्यस्य यतः' (ब्र.सू. १.२.२) इति सूत्रात् । 'जन्माद्यस्य यतोऽन्वयादितरतः' इति भागवतोक्तेश्च । एवं च कुलालघटयोरिव स्रष्टृसृज्ययोः कथं भेदो न स्यात् । एवं सर्वस्याभावे कथं सर्वस्य योनिः स्यात् । न हि शशविषाणस्य कारणं क्वापि श्रूयत इति ।

प्राथमिकविशेषणसिद्धानुमानसाधितभेदं जगत्सत्यत्वं चानुकूलतर्कैः साधयित्वोपनिषत् स्वयमेव परपक्षे बाधकतर्कांश्चाऽह- **'प्रपञ्चो यदि विद्येत'** इति ॥ अस्याः श्रुतेः परेषां मनसि परिवर्तमानोऽर्थस्तावत् कपोणिगुडायित एव । यदि विद्येत तर्हि निवर्तेतेति तर्कमूलव्याप्तेः ब्रह्मणि व्यभिचारात् । न च निवर्तते तस्मान्न विद्यत इति विपर्ययपर्यवसानं च ब्रह्मण्येव व्यभिचारात् स्वप्रक्रिययैव विरुद्धम् । तस्मात्तर्कानुकूल-

व्याप्तिघटनाय 'न संशयः' इत्यत्र वक्ष्यमाणनञावृत्त्या यदि प्रपञ्चो न विद्येत यदीदं प्रपञ्चान्तर्गतं द्वैतं मायामात्रं स्यात्तर्ह्युभयमपि निवर्तेत । अत्र संशयो न । मिथ्याभूतस्य शुक्तिरजतादेः मायाकल्पितकरितुरगादेश्च निवृत्तिदर्शनात् । न च निवर्तते । तस्मात्प्रपञ्चो न विद्यत इति न । द्वैतं च मायामात्रं न । अनादिकालमारभ्य प्रवाहतोऽनुवर्तमानमहीमहीधरादि-प्रपञ्चस्य, वर्णाश्रमादिरूपेण गुरुशिष्यमातापितृभार्याभर्त्रादिरूपेण गज-तुरगपशुपक्ष्यादिरूपेण चानुवर्तमानस्य चानन्तजीवनिष्ठद्वैतस्य च, पृथिव्यप्तेजोवाय्वादिरूपेण अनुवर्तमानजडनिष्ठद्वैतस्य च सकलशिष्ट-व्यवहारोपयोगितया श्रुतिस्मृतिसिद्धस्यानिवृत्तेरेव प्रमितत्वात् । ज्ञानाङ्ग-यज्ञादिविहितक्रियासाधनव्रीहियवधनघृतदध्यादिजडप्रपञ्चाभावे साक्षाज्ज्ञानोपयोगिश्रवणादेः कारणभूतश्रुतिस्मृत्यादिजडप्रपञ्चाभावे वक्तृ-श्रोत्रादीनां जीवनहेतुभूतधनधान्यादिरूपजडप्रपञ्चाभावेऽपि चित्रफल-हेतूनामेतेषां परस्परं द्वैताभावे वक्तृश्रोत्रादिरूपजीवद्वैताभावे च सर्वापेक्षित-मोक्षस्यैवानुदयप्रसङ्गात् । एवं च चिरकालानुवृत्तस्यास्य ब्रह्मण इव न भाविनी निवृत्तिरपि शङ्कितुं शक्यते ।

**'न त्वेवाहं जातुनासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥'**

इति गीतायां साक्षाद्भगवत इवाहं च नाऽसमिति न, त्वं च नासीरिति न, इमे जनाधिपा नासन्निति नेति विचित्रानन्तजीवानां तन्निष्ठद्वैतस्य च स्वसमानयोगक्षेमतया अनादित्वमुक्त्वा 'अतः परं वयं सर्वे न भविष्याम इति च नैव' इति स्वसमानयोगक्षेमतया भाव्यनन्तजीवपरम्परायास्तन्निष्ठ-भाविद्वैतानां चानवच्छिन्नभविष्यत्कालेऽपि निवृत्त्यभावस्यैवैवकारेणाव-धारितत्वात् प्रपञ्चनिवृत्तिस्तन्निष्ठद्वैतनिवृत्तिश्च न मनसाऽपि स्मर्तुं

शक्या । चशब्देन मुक्तावपि प्रपञ्चानिवृत्तिं समुच्चिनोति । 'न त्वेवाहं' इत्यत्र विद्यमानतुशब्दस्याहन्त्विति सम्बन्धः । तेन च स्वस्य देहपरम्परां विनैकेनैव देहेनानाद्यनन्तकालेष्ववस्थानाख्यविशेषं सूचयति । 'वयं सर्वे भविष्यामः' इत्येवोक्ते चिरकालस्थायित्वेनापीयमुक्तिरिति परस्य दुराशा स्यात् । तामप्युन्मूलयितुं 'न भविष्याम इति च नैव' इति नञ्द्वयेन 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायादनवच्छिन्नभविष्यत्कालेऽपि स्वात्मवत् प्रपञ्चस्य द्वैतस्यातिशयं सङ्गृह्णाति । तेन परैराशास्यमानभाविनिर्धर्मत्वशङ्काख्यवृक्षस्यापि मूलच्छेद एवाभूदिति ज्ञेयम् । अतोऽस्ति च धूमस्तस्मादग्निरप्यस्तीतिवद् विपर्ययपर्यवसानस्यैव प्रमितत्वात् परेषामतिकर्कशोऽयं तर्क इत्यनुसन्धेयम् ।

एवं चाद्वैतं परमार्थतो विद्येत तर्हि न निवर्तेत । यथास्थितनिवर्तेतेति क्रियया योगे विद्यमानस्य ब्रह्मणो निवृत्त्यदर्शनेन व्याप्त्यसम्भवान्नञनुषङ्गेनाऽपादकानुसार्यापाद्यमुन्नेयम् । इयं व्याप्तिः परस्यापि सिद्धा । निवर्तते चाद्वैतम् । गुरूपदेशाद् ब्रह्मणि ज्ञाते सत्यद्वैतं न विद्यते । अयं सतां वाद इति श्रुत्यैवाद्वैतनिवृत्तेर्वक्ष्यमाणत्वात् । युक्तं चैतत् । इहाद्वैतनिवृत्त्यभावे उक्तरीत्या सर्वव्यवहारविलोपप्रसङ्गात् । मुक्तावद्वैतनिवृत्त्यभावे च 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तैत्ति. २.३) इति, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति, 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छां. १२.३) इत्यादिश्रुत्युक्तनानाजीवानां नानाविषयभोगानां चाभावप्रसङ्गेन मुक्तेरेवामुक्तित्वप्रसङ्गात् । अत एव 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति श्रुतिश्च अव्ययानामनेकार्थत्वाद् यदि अस्य जीवस्य सर्वमात्मैवाभूत्तर्हि केन कं पश्येदिति तर्कमुखेनाद्वैतनिवृत्तिमेव प्रसाधयति । अन्यथा श्रुत्योः परस्परविरोधप्रसङ्गात् । अतोऽत्रापि निवर्तते चाद्वैतं तस्मान्न विद्यत इति

विपर्ययपर्यवसानमावश्यकम् । एवमेकवाक्यतया तर्कत्रयानिरूपणे प्रायपाठविरोधः । वाक्यभेदश्च प्रसज्येत । एवं चानुपमर्दितपदसम्पदैव प्रागुक्तानुमानद्वयेऽनुकूलतर्कत्रयवत् परपक्षे बाधकत्रयस्यापि सिद्धेः श्रुतेरपीदमेवाभिमतम् । अन्यथा स्वस्या एवाऽभावप्रसङ्गात् । उक्तरीत्या मुक्तिपर्यन्तसकलपदार्थानामप्यभावापत्त्या श्रुतिः स्वव्याघातिनी परधातिनी च स्यात् । तथाऽस्मदुक्तरीत्या सकलजीवजगत्पोषकान्ने सिद्धे सति कः प्रेक्षावानप्रतीतसकलजगन्नाशकविषसम्पृक्तान्ने मतिं दद्यात् ।

एवमुत्तरवाक्येऽपि विकल्पो भेदो यदि केनचिदज्ञानादिना कल्पितः स्यात् तर्हि निवर्तेत । न च निवर्तते । तस्मात् कल्पितो नेति पूर्वोक्तभेदस्थिरीकरणाय पुनस्तर्कान्तरमुच्यते । इदं च द्वैतं मायामात्रमिति न मयोच्यते, किन्तु मायाकल्पितमिति परकीयदुराशाखण्डनार्थम् । वस्तुतस्त्विदमस्य लीलामात्रमित्युक्ते लीलया निर्मितमित्यर्थस्यैव लोके बहुलमुपलम्भात् । तस्मादुक्तयुक्तिभिः पराजितस्य दुराशैवेदम् । तर्हि सर्वैरपि जगतस्सत्यत्वात्तत् कुतो नाङ्गीक्रियत इत्यत उक्तम्- **उपदेशादिति ॥** उत्तमगुरूपदेशाच्छास्त्रार्थे ज्ञाते सत्यद्वैतं न विद्यत इत्ययं वादो बोद्धुं शक्यते । न त्वन्यथा । अतः केचिद्वाक्यार्थज्ञानाकुशला नेदं तत्त्वं जानन्तीति वाक्यद्वयस्यापि योजना ।

अथवा विकल्पो द्वैतं नास्त्यद्वैतमेवास्तीति विरुद्धपक्षद्वयं यदि केनचिद्बौद्धेन मायावादिना वा कल्पितः स्यात् तर्ह्युपदेशात् पूर्वोत्तरविवेकवतस्तर्ककर्कशबुद्धेर्मध्वाख्यसमीचीनगुरूपदेशाद्विनिवर्तेत निवृत्तिं प्राप्नुयादेव । तर्कबाधितस्य सर्वानुभवविरुद्धपक्षस्य चिरकालस्थायित्वायोगात् । इदं च यदि पापं कुर्यात्तर्हि नरकं प्राप्नुयादितिवत् वस्तुस्थितिकथनम् । कोऽसौ गुरूपदेश इत्यत उक्तमयं वाद इत्यादि ।

ज्ञाते पूर्वोत्तराविरुद्धतया श्रुत्यर्थे सम्यक् ज्ञाते सति संसारे मुक्तौ चाद्वैतमेव न विद्यते । अयं वादो व्यासशुकयोगिप्रभृतीनां सतां वादः । ते हि स्वग्रन्थे-

**'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥'**

**'तर्हि न सन्न चासदुभयं न च कालजवः**

**किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ।**

**जनिमसतः सतो मृतिमजात्मनि ये च भिदां**

**विपणमृते स्मरन्त्युपविश ध्वनिमारुवतः ॥'** (भा. १०.९४.२६)

इत्यादिना मुक्तावपि भेदमेव स्थिरीचक्रुः । अत एव श्रुतिः 'स्वप्नमाया सरूपेति सृष्टिरन्यैर्विकल्पिता' इति मायासृष्टिमन्य इति पूर्वपक्षतयोक्त्वा 'इच्छामात्रं प्रभोः सृष्टिः' इति सत्यजगत्सृष्टिं स्वपक्षमाह- **असमर्थो हि मायासृष्टिं कुर्यात् ॥** समर्थस्तु भगवान् कथं मायासृष्टिं कुर्यादिति युक्तिं सूचयितुं तं प्रभुपदेन विशिनष्टि । 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति कदाऽप्यनिवर्त्यत्वे स्वाभाविकत्वयुक्तिमपि सूचयति । 'स्वभावस्यानपायात्' इति हि प्राचां वाचः ।

तर्हि 'प्रपञ्चोपशमः' 'द्वैतस्योपशमः' इत्यादिकं कथमुक्तमिति चेन्न । विश्वतैजसप्राज्ञानां जाग्रत्स्वप्नसुषुप्त्याख्यप्रपञ्चोपयोगित्ववन्मुक्तिदायकस्य तुरीयस्य तन्नास्तीत्यभिप्रेत्य **विष्ण्वादि**षूक्तप्रपञ्चस्योपशमो यस्मादिति प्रपञ्चोपशम इत्युक्तम् । उपस्थितपरित्यागेनानुपस्थितप्रपञ्चपरिग्रहे कारणाभावात् । द्वैतस्योपशम इति तु प्रथमा मात्रेत्यादिना प्रथमत्व-द्वितीयत्वतृतीयत्वचतुर्थत्वोक्त्या प्राप्तस्वगतभेदशङ्का-निवारणार्थमुक्तम् । द्वैतस्य स्वगतभेदस्योपशमो यस्मात्स तथोक्तः । अत्राप्युक्तरीत्या प्रसक्तस्वगतभेदं विहायाप्रसक्तानुपपन्नस्ववाक्यविरुद्धजीवेश्वरभेदग्रहण-स्यानुचितत्वात् ।

अत इयं श्रुतिस्तदुपक्रमे सर्वेश्वरत्वादिभेदसाधकमहिमानमुक्त्वा उपसंहारवाक्येऽपि 'प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् । सर्वव्यापिनमोङ्कारम्' इति भगवन्महिमोक्त्यैव स्वाभिप्रेतार्थरूपरत्नरक्षार्थं सम्पुटीचकारेति सर्वमवदातम् ॥ २-७ ॥

**॥ इति श्रीमत्कविकुलतिलकवादिराजपूज्यचरणविरचिता माण्डूकोपनिषद्भाष्यटिप्पणी समाप्ता ॥**

## पदार्थदीपिका

'अद्वैत ओङ्कार' इत्यत्र तुरीयस्य समग्रोङ्कारप्रतिपाद्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे- **तुरीयमिति** ॥ तथा चात्रोङ्कार-शब्देन तदवयवो नादो ग्राह्यः । नादो नाम वर्णो मन्त्रशास्त्रे प्रसिद्धः । तत्सदृशात्मवानिति तुरीयवत्तदुपासकस्यापि लोकव्यवहारागोचरत्वादव्यव-हार्यत्वादिधर्मैस्तत्सदृशत्ववत् ज्ञानानन्दादिगुणैरपि तत्सदृशत्वं किं न स्यादित्यत आह- **ज्ञानानन्दाविति** ॥ यद्यपि तत्सदृशात्मवानिति सामान्येनोच्यते, तथापि ज्ञानानन्दौ शक्तिश्चेत्येतद्धर्माः विमुक्तस्य जीवस्य क्वचिदपि न भगवज्ज्ञानादिसमा इत्यर्थः । कस्मान्न समा इत्यत आह- **पारतन्त्र्यमिति** ॥ परतन्त्रत्वादित्यर्थः ।

अत्र स्वोक्तार्थे संमतित्वेन सलिलेश्वरो मन्त्रानुदाहरति- **अत्रैत इति** ॥ सलिलेश्वरोदाहृते मन्त्रे ओङ्कारं पादश अवयवशः विद्यादितिवत् 'युञ्जीत प्रणवे चेतः' इत्यादिकं न तुरीयमात्रनिष्ठम् । किन्तु चतूरूपसाधारण-मित्याशयेन तत्प्रमाणेनैव व्याचष्टे- **चतूरूपस्येति** ॥ प्रणवशब्दवाच्यत्वं केन निमित्तेनेत्यत आह- **जाग्रदादीति** ॥

प्रणवो हीत्यत्र ब्रह्मशब्दार्थमाह- **स एवेति** ॥ चतूरूप एवेत्यर्थः ।

ओङ्कारं मत्वा ओंकारो विदित इत्यत्रोंकारशब्दार्थमाह- **ओमितीति** ।। आप्त्यादिमत्त्वनिमित्तैः प्रणवांशाकारादिवाच्यत्वं विश्वादीनां प्रतिपादितं तच्छ्रुत्युक्तत्वान्नाऽनादरणीयमित्याह- **आदिमत्वादय इति** ।। ओमित्यस्य तदवयवभूताकारादेरादिमत्त्वादयो येऽर्था उक्ताः ते श्रुतावपि श्रुता उक्ता इत्यर्थः ।

अपूर्वादिशब्दचतुष्टयस्यार्थमाह- **अपूर्व इत्यादिना** ।। **नाशाभावा-दिति** । तथा च न विद्यन्तेऽन्तरो नाशो यस्येत्यनन्तर इत्यर्थ उक्तो भवति- **पराधीनेति** ।। तथाच न विद्यतेऽपरः स्थितिकर्ताऽस्येत्यनपर इत्यर्थो द्रष्टव्यः- **सर्वगत्वादिति** ।। न विद्यतेऽन्यो जगतो बहिर्यस्मादसावबाह्यः । तत्र हेतुः **सर्वगतत्वादिति** । अनेन सर्वव्यापिनमिति वक्ष्यमाणं सर्वगतत्वमत्र हेतुतया सम्बध्यत इत्युक्तं भवतीति द्रष्टव्यम् ।

एवं हि प्रणवं ज्ञात्वेत्यादेरर्थः- **तं ज्ञात्वेति** । विप्रमुच्यते विशेषेण मुच्यत इत्यर्थः । 'प्रणवो ह्यपरम्' इत्यादौ वासुदेवाद्यवतारविश्वाद्यव-ताराणां सामर्थ्यभेदतः परत्वाऽपरत्वे इति प्रतीतिनिवारणायाह- **परत्व-मिति** ।। तर्हि परत्वादिशब्दार्थः कः प्रतिपत्तव्य इत्यत आह- **अवतार-स्येति** ।। पश्चिमत्वाच्चेत्यपि ग्राह्यम् । पूर्वापरयोर्भाव पौर्वापर्यम् । पूर्वत्व-मपरत्वं चेत्यर्थः । पूर्वत्वं नाम परत्वमित्यवगन्तव्यम् । एवमन्यथाप्रतीतिं प्रमाणेनैव परिहृत्यार्थमाह- **पूर्वावतार इति** ।। वासुदेवाद्यवतार इत्यर्थः । पश्चिमावतारइति विश्वतैजसादिरूपावतार इत्यर्थः ।

**।। इति श्रीमाण्डूकभाष्यार्थे चतुर्थः खण्डः ।।**

ततश्चायं खण्डार्थः -

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत**
**ओङ्कार आत्मैव संविशत्यात्मनाऽत्मानं य एवं वेद ।। १ ।।**

'तं यथा यथोपासते तदेव भवति' इति वचनेन विश्वाद्युपासके तत्साम्यस्येव तुरीयोपासकेऽपि तत्साम्यस्यावश्यं वक्तव्यत्वादव्यवहार्यत्वादिधर्मेण तत्साम्यं विविवक्षितमित्याशयेन 'नान्तःप्रज्ञम्' इत्यादौ तुरीयस्य यदव्यवहार्यत्वादिकमुक्तं तदनुवदन् प्रणवांशनाद-प्रतिपाद्यत्वरूपमहिमानमाह- **अमात्र इत्यादिना** ॥ अव्यवहार्यत्वादिकं प्राग्व्याख्यातम् । तथा च योऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत अमात्रश्चतुर्थस्तुरीयः स ओङ्कारस्तदवयवभूतनादप्रतिपाद्य इत्यर्थः । नादप्रतिपाद्यत्वेन तुरीयोपासकस्य फलमाह- **आत्मेति** ॥ य एवं तुरीयं नादप्रतिपाद्यं वेद स आत्मैव भूत्वा देहाद्यन्याभिमानं त्यक्त्वाऽऽत्मना प्रसन्नेन परमात्मना तुरीयप्रसादादिति यावत् । आत्मानं तुरीयं सम्प्रविशतीत्यर्थः ॥ १ ॥

**अत्रैते श्लोका भवन्ति–**

**ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।**
**ओङ्कारं पादशो ज्ञात्वा न किञ्चदपि चिन्तयेत् ॥ २ ॥ १ ॥**

नादप्रतिपाद्यतुरीयज्ञानी मुक्तौ तमेव सम्प्रविशतीति स्वोक्तार्थे सलिलेश्वरो ब्रह्मदृष्टान् मन्त्रान् प्रमाणयति- **अत्रेति** ॥ तानेवोदाहरति- **ओङ्कारमिति** ॥ पादशः पादैः। कः पादशब्दार्थ इत्यत आह-**पादा इति** ॥ मात्राः अंशाः । तथा चोङ्कारं भगवन्तम् अकारादिभिः पादैः अंशैः प्रतिपाद्यं विद्यात् । तत्रोङ्कारं तुरीयं पादशः नादरूपांशप्रतिपाद्यत्वेन ज्ञात्वा । किञ्चित्सांसारिकं विषयजातं न चिन्तयेत् न चिन्तयति । तमेव प्रविश्यानन्दाविर्भावमेतीति भावः ॥ २ ॥

**युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।**
**प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ३ ॥ २ ॥**

संसारं तितीर्षुणाऽवश्यमोङ्कारप्रतिपाद्यश्चतूरूपो भगवान् ध्यातव्य इत्यत्र मन्त्रं पठति- **युञ्जीतेति** ॥ प्रणवे जाग्रदादिप्रणयनात् प्रणवशब्दवाच्ये चतूरूपे विष्णौ चेतो युञ्जीत । प्रणवस्वरूपमेवाह- **प्रणव इति** ॥ ततः किं फलमित्यत आह- **प्रणव इति** ॥ प्रणवस्य निर्भयत्वादेव तत्र नित्यं मनोयोगयुक्तस्यापि भयं नास्तीत्यर्थः ॥ ३ ॥

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः ।**
**अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ ४ ॥ ३ ॥**

वासुदेवादिभिः पूर्वावतारैः पाश्चात्यावताराणां विश्वादीनां ज्ञानादिगुणेन अपकर्षो न मन्तव्य इत्याह - **प्रणवो ह्यपरमिति** ॥ योऽपरं अपरः पाश्चात्यः प्रणवः तत्प्रतिपाद्यो विश्वादिचतूरूपो भगवान् स ब्रह्म बृंहणात् । परं परः पूर्वकालीनावतारः वासुदेवादिः सोऽपि ब्रह्मेत्येतद्धि 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते' इत्यादिश्रुतिसिद्धमित्यर्थः । तथा च पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एव । नावतारेषु कश्चिद्गुणापकर्ष इत्याशयः । पूर्णत्वसम्भावनाय पुनस्तत्स्वरूपं निरूपयति- **अपूर्व इत्यादिना** ॥ प्रणवः तत्प्रतिपाद्यो विश्वादिचतूरूपो भगवान् अपूर्वः । न विद्यते पूर्वः कारणं यस्यासौ तथोक्तः । अनादिरित्यर्थः । अनन्तरः नविद्यतेऽन्तरो नाशो यस्यासौ तथोक्तः । न विद्यतेऽन्यो जगतोऽन्तरः अन्तःस्थितः यस्मादसौ तथोक्त इत्यप्यर्थो द्रष्टव्यः । 'सर्वस्य हृदये स्थितम्' इति वक्ष्यमाणत्वात् । अबाह्यः न विद्यतेऽन्यो जगद्बाह्यो यस्मादसौ तथोक्तः । अनपरः न विद्यतेऽपरः स्थितिकर्ता यस्येति तथोक्तः । न विद्यते व्ययो गुणादिनाशो यस्यासौ तथोक्तः ॥ ४ ॥

**सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।**
**एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ ५ ॥ ४ ॥**

प्रणवप्रतिपाद्यस्य विश्वादिचतूरूपस्य भगवतोऽपूर्व इत्यादिना सृष्ट्यादिकर्ताऽन्यो नास्तीत्युक्तम् । न केवलमेतावत्, किन्तु स्वयमेव सर्वस्योत्पत्त्यादिकर्तेति वदन् स्तज्ज्ञानिनः फलञ्चाह- **सर्वस्येति** ॥ जगत इत्यर्थः । आदिः कारणं मध्यं स्थितिकर्ता अन्तः संहारकः । ज्ञात्वेति क्त्वाप्रत्ययलब्धानन्तर्यस्यैव प्रकटनमनन्तरमिति । यद्वाऽनन्तरं उक्तरीत्या तच्छब्दावाच्यं तत् ब्रह्म व्यश्नुते अशू व्याप्तौ विशेषेणाप्नोतीति व्याख्येयम् ॥ ५ ॥

**प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम् ।**
**सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ ६ ॥ ५ ॥**

अनन्तरो बाह्य इति पदाभ्यां जगदन्तर्बहिश्च तदन्यो नास्तीत्युक्तम् । न केवलमेतावत्, किन्तु स्वयमेव सर्वान्तर्बहिश्चेति वदंस्तज्ज्ञानिनः फलं चाह- **प्रणवं हीति** ॥ 'सर्वस्य हृदये स्थितम्' इत्यनेनाणुत्वमुक्तम् । 'सर्वव्यापिनम्' इति महत्त्वं चोक्तम् । तयोरविरोधोपपादनाय 'ईश्वरं हि' इति । अघटितघटकशक्तिसम्पन्नतया प्रमाणसिद्धमित्यर्थः ॥ ६ ॥

**अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।**
**ओङ्कारो विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो**
**जन इति ॥ ७ ॥ ६ ॥**

एवं प्रणवप्रतिपाद्यविश्वादिचतूरूपभगवज्ज्ञानिनं स्तुवन्नुपनिषदं समापयति- **अमात्र इति** ॥ अमात्रो भिन्नांशरहितः अनन्तमात्रः पुनरनन्तांशः द्वैतस्योपशमो मिथ्याज्ञानस्योपशमकर्तेति तत्वप्रकाशिकोक्तरीत्या व्याख्येयम् । निर्दुःखसुखरूपत्वाच्छिवः । ओमित्याक्रियमाणत्वादोङ्कारो विश्वादिचतूरूपो हरिः । येन अधिकारिणा विदितः

सम्यक्श्रवणादिना ज्ञातः स एव मुनिरपरोक्षज्ञानी भवति । इतरो जनस्तु न मुनिरित्यर्थः । उपनिषदर्थस्य सर्वस्यावधारणार्थमन्ते द्विरुक्तिः । 'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिके पि वा । विचारो यंत्र सज्येत पूर्वोक्तस्यावधारणे' इति भगवत्पादैरभिहितत्वादित्यवगन्तव्यम् ॥ ७ ॥

**॥ माण्डूकखण्डार्थे चतुर्थः खण्डः ॥**

एवं समापितभाष्यो भगवानाचार्योऽन्तेऽपि एतदुपनिषत्प्रतिपाद्यं विश्वादिचतूरूपं विष्णुं प्रणमति - **एकोऽपीति** ॥ ऐक्येऽपीन्द्रार्जुनादिवद्विशेषो न मन्तव्य इत्याशयेन निर्विशेषोऽपीत्युक्तम् । चतुर्धा व्यवहारभाक् विश्वादिरूपेणेति शेषः । एकस्यापि चतुर्धा व्यवहारभाक्त्वमभेदे भेदकार्यकारिणा विशेषेणोपपन्नमित्याशयः । विश्वादि च तद्रूपञ्च विश्वादिरूपं तदस्यास्तीति विश्वादिरूपी तमिति कर्माधारयादिनिः । तेन बहुव्रीहिणैव मत्वर्थलाभादिनेर्वैयर्थ्यमिति शङ्कानवकाश इति ध्येयम् । चिदानन्दं ज्ञानानन्दादिस्वरूपम् । इदञ्च 'प्रत्ययसारं' 'प्रपञ्चोपशमम्' इत्यनेनोक्तमित्यवगन्तव्यम् । विष्णुं वन्दे अभिवादयामि स्तौमि चेत्यशेषमतिमङ्गलम् ॥

**माण्डूकोपनिषद्भाष्यं विवृतं गुर्वनुग्रहात् ।**
**तेनेष्टदोऽस्तु मत्पूज्यो भगवान् बादरायणः ॥**
**यैरहं शुकवत्सम्यक् शिक्षितोऽस्मि कृपालुभिः ।**
**तान्वन्दे यादवाचार्यान् वेदेशमुनिसेवकान् ॥**

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिता माण्डूकोपनिषद्भाष्यविवृतिः पदार्थदीपिकाख्या सम्पूर्णा ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

# श्रीराघवेन्द्रयतिविरचितमाण्डूकोपनिषत्-खण्डार्थः

**समस्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय विश्वादिचतुरात्मने ॥**

अस्या उपनिषदो मण्डूकरूपी वरुणः ऋषिः । चतूरूपी हरिर्देवता । केषाश्चिच्छन्दोबद्धानामक्षरगणनयाऽनुष्टुप्छन्दस्त्वं ज्ञेयम् । मुमुक्षोरधिकारिणोऽखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तये समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपासनां वक्तुं प्रवृत्तेयमुपनिषत् । आदौ समस्तप्रवणवप्रतिपाद्यं तावदाह- 'ओम्' इत्यादिना 'अयमात्मा ब्रह्म' इत्यन्तेन ।

**ओमित्येतदक्षरमिदं सर्वम् ।**
**तस्योपव्याख्यानं भूतं भवद् भविष्यदिति ॥ १ ॥**

एतदिति श्रवणाद् यदित्यन्वेति । **ओमिति** । उक्तमिति शेषः । ओतं जगदस्मिन्निति व्युत्पत्त्या ओमित्युक्तं यद् ब्रह्म एतदक्षरमुच्यते । इदमक्षरं सर्वं गुणपूर्णम् । केन निमित्तेनोङ्कारवाच्यं ब्रह्माक्षरमित्युच्यत इत्यतो न क्षरति कालत्रयेऽपीति व्युत्पत्त्या कालत्रयेऽप्येकप्रकारतया नित्यत्वहेतुनेति भावेन प्रतिज्ञापूर्वकं प्रवृत्तिनिमित्तमाह - **तस्येति** ॥ विशिष्याऽख्यायतेऽनेनेति व्याख्यानं, प्रवृत्तिनिमित्तम् । ओमित्यक्षरप्रतिपाद्यस्याक्षरशब्दार्थत्व उपपन्नं व्याख्यानमुच्यत इत्यर्थः । तत्किमित्यत आह- **भूतमिति** ॥ ओमित्युक्तं ब्रह्म, भूतम् अतीतकाले विद्यमानं, भवद्वर्तमानकाले सत्, भविष्यत् आगामिकालेऽपि सत्, शश्वदेकप्रकारमिति यावत् । अतोऽक्षरमुच्यत इत्यर्थः । इतिशब्दस्योपव्याख्यानमिति पूर्वेणान्वयः ॥ १ ॥

यदक्षरस्य सर्वमित्यनेन पूर्णत्वमुक्तं तदन्यस्याप्यस्ति किमित्यतो नेत्याह- **सर्वमिति** ॥

**सर्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव।**

ओमित्याक्रियते प्रतिपाद्यत इत्योङ्कारः, कृञः कर्मणि घञ्प्रत्ययः। अचो ञ्णितीति वृद्धिः। 'घणञबन्ताः पुंसि' इति पुल्लिङ्गता। ओमित्युच्यमानमक्षरमेव सर्वं पूर्णं, न त्वन्यदित्यर्थः। भूतमित्यादिनोक्तं शश्वदेकप्रकारत्वरूपकालत्रयातीतत्वमक्षरपदप्रवृत्तिनिमित्तमपि नान्यस्येत्याह- **यच्चान्यदिति**॥ कालत्रयकृतविकारहीनरूपं त्रिकालातीतं च यदन्यत् चित्प्रकृतिरूपमस्ति तदप्योङ्कार एव। ओमित्युच्यमानाक्षराख्यं ब्रह्मैव। न ततोऽन्यत् तादृशमस्तीत्यर्थः। श्रीतत्त्वे शश्वदेकप्रकारत्वरूपं कालत्रयातीतत्वमीशप्रसादायत्तं न स्वत इति भावः। यद्वा, यत् कालत्रयातीतं तदप्योङ्कार एव। अन्यच्च श्रीतत्वश्च। तदुभयान्यत्काल-त्रयातीतं नेत्येवकारार्थः।

**सर्वं ह्येतद् ब्रह्म। अयमात्मा ब्रह्म॥ २॥**

सर्वमोङ्कार एवेत्यत्रोंपदवाच्यब्रह्मणः पूर्णत्वमुक्तम्। तत् कुत इत्याशंकां प्रमाणसूचनेन निराह - **सर्वं ह्येतद् ब्रह्मेति**। एतदोंपदवाच्यमक्षराख्यं ब्रह्म सर्वं पूर्णं हि, 'परमं यो महद् ब्रह्म', 'तदेव ब्रह्म परमं कवीनाम्', 'पूर्णमदः पूर्णमिदम्', इत्यादिषु प्रसिद्धमित्यर्थः। ननु जीवानां हिताहित-क्रियास्वस्वातन्त्र्यानुभवेन तेष्वपि कश्चिदस्ति नियन्तेत्यनुमितस्यापि गुणपूर्त्यादिरपेक्षणीयत्वात् कथम्? ओं पदवाच्यस्यैव पूर्णत्वादीत्यतोऽयमेव तत्रापि नियन्ता नान्य इत्याह - **अयमिति**॥ श्रीब्रह्मादिष्वादानादिकर्तृतया स्थितो य आत्माऽयं ब्रह्म प्रागुक्तमोंपदवाच्यं ब्रह्मैव, न त्वन्यः कश्चिदित्यर्थः। येन तस्यैव पूर्णत्वादीत्येतन्न स्यादिति भावः। इति समस्तप्रणवप्रतिपाद्योक्तिः॥ २॥

एवं समस्तप्रणवप्रतिपाद्यमुपासनार्थं निरूप्येदानीं तदेकदेशैरकारोकार-मकारनादैः प्रतिपाद्यानां विश्वादिभगवद्रूपाणामुपासनमकारोकारमकार इत्यादिना तृतीयखण्डे वक्तुं तानि रूपाण्याह- **सोऽयमिति** ॥

**सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः ।**
**सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः ॥ ३ ॥**

सः समस्तोंपदवाच्योऽक्षरनामाऽयं श्रीब्रह्मादिषु नियामकतया स्थित आत्मा चतुष्पात्, चत्वारः पादाः अंशाः स्वरूपभूता यस्य स चतुष्पात्, पादपदस्य सङ्ख्या सुपूर्वस्येत्यन्तलोपः । सर्वजीवनियामकतया तत्तद्देहेषु चतूरूपतया तिष्ठतीत्यर्थः । कानि तेषां स्थानानि, कश्च व्यापारः, कीदृशानि तानि रूपाणि, किं तेषां भोग्यं, कानि नामानीत्येतस्तत्सर्वं क्रमेणाऽऽह - **जागरितेति** ॥ यत्र स्थित्वा जागर्ति तच्चक्षुर्जागरितम् । अधिकरणे क्तप्रत्ययः । तदेव स्थानं यस्य स जागरितस्थानः चक्षुःस्थान इत्यर्थः । **बहिःप्रज्ञः** । बहिश्शब्दो बाह्यार्थपरः । बहिर्बाह्यार्थान् प्रज्ञापयतीति बहिःप्रज्ञः । जानातेरन्तर्णीतण्यर्थाद् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । 'आतो लोप इटि च' इत्याकारलोपः । सप्ताङ्गः, चत्वारो हस्ताः द्वौ पादौ गजमुखत्वाद् गजहस्त एक इति सप्ताङ्गः । एकोनविंशतिमुखः नवोत्तरदशमुखः । मध्यममुखं गजमुखाकारं, पार्श्वद्वये तु नव नव मुखानि पुरुषमुखाकाराणीति विवेकः । स्थूलभुक्, स्थूलान् शुभभोगान् भुङ्क्त इति स्थूलभुक् । वैश्वानरः, विश्यते गम्यते सर्वैर्ज्ञायत इति विशतेः कर्मणि वप्रत्ययः । अनेकार्थत्वाद् धातूनां विशतिरत्र गत्यर्थस्सन् ज्ञानपरः । विश्वं सर्वैर्ज्ञेयं स्थूलं वस्तूच्यते । भोक्तृतया तत्सम्बन्धी वैश्वः। न रीयते न क्षीयते इति नरः। रीङ् क्षये । डप्रत्ययः । वैश्वश्चासौ नरश्च । 'नरे च संज्ञायाम्' इति सूत्रेण, भाष्योक्तनिरुक्तिबलाद् वा दीर्घः वैश्वानरः।

प्रथमः पादः । आत्मन इति विपरिणामेनात्रोत्तरत्र चानुषङ्गः । सर्वदेहेष्वादानादिकर्तृत्वेन स्थितस्याऽत्मनः प्रथमं रूपमित्यर्थः ॥ ३ ॥

**स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः ।**
**प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥**

**स्वप्नस्थानः** । यत्र स्थित्वा जीवः स्वाप्नपदार्थान् पश्यति स स्वप्नः । तदेव स्थानं यस्य स स्वप्नस्थानः, कण्ठदेशस्थ इत्यर्थः । **अन्तःप्रज्ञः** । अन्तश्शब्दोऽत्र बाह्यार्थज्ञानजन्यवासनापरिणामरूपार्थपरः । तान् अन्तःस्थितान् वासनामयार्थान् प्रज्ञापयति जानाति चेत्यन्तःप्रज्ञः । प्रज्ञ इति जानातेः कः । सप्ताङ्ग एकोनविंशतिमुख इति प्राग्वत् । **प्रविविक्तभुक्** । वासनामयतया बाह्यार्थेभ्यो विविक्तान् स्वाप्नार्थान् भुङ्क्ते भोजयति चेति प्रविविक्तभुक् । तेजोमयचित्तस्थतया चित्तसम्बन्धित्वेन तैजसनामा आत्मनो द्वितीयः पादः द्वितीयं रूपमित्यर्थः ॥ ४ ॥

तृतीयपादस्य स्थानं वक्तुं स्थानस्वरूपं तावदाह - **यत्रेति** ॥

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥**

यत्र देशे सुप्तः अज्ञानावृतः, सुं सुखरूपं भगवन्तं प्राप्त इति वा, 'प्राज्ञेनाऽत्मना सम्परिष्वक्तः इत्यादेः, कञ्चन कमपि कामं काम्यमानमर्थं न कामयते, कञ्चन स्वप्नं स्वाप्नपदार्थं च न पश्यति, उपलक्षणमेतत्, स्वात्मकालाज्ञानानि विना किमपि न पश्यतीत्यर्थः । तत्स्थानं सुषुप्तमित्युच्यते । सुषुप्तमेव स्थानं यस्य स सुषुप्तस्थानः, हृत्कर्णिकाऽग्रस्थ इति यावत् । एकीभूतः वैश्वानरतैजसाभ्यां संश्लेषविशेषरूपैकीभावं प्राप्तः। प्रज्ञानघनः । अविद्यावृतो जीवो धन इत्युच्यते, सुषुप्तिवेलायाम् ।

जीवस्वरूपमज्ञानं, तदुपलक्षितं कालं चेति त्रयं प्रज्ञापयति जीवस्येति प्रज्ञानघनः। प्रपूर्वादन्तर्णीतण्यर्थाद् 'ज्ञा अवबोधने' इति धातोः 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् कर्मणि ल्युटि, अनादेशे प्रज्ञानः। प्रज्ञापितो घनो जीवो येन सः प्रज्ञानघन इति विग्रहः। यद्वा, घनप्रज्ञ इति वक्ष्यमाणत्वादिहापि प्रज्ञानघन इत्यस्य घनप्रज्ञान इति विपरीतसमासो ध्येयः। तथात्वेऽन्तर्णीतण्यर्थात् कर्तरि ल्युट्।

आनन्दमयः आनन्दप्रचुरः, पूर्णानन्द इति यावत्। 'यतो वाचो निवर्तन्ते' इत्यादौ प्रसिद्धमिति हेरर्थः। आनन्दभुक्, विषयभोगान् विनैवाऽऽनन्दं भुङ्क्ते भोजयति चेत्यानन्दभुक्। अत्र स्थूलभुक्त्वं प्रविविक्तभुक्त्वमानन्दभुक्त्वं च नित्यपूर्णानन्दानुभवरूपस्य क्रीडारूपं ध्येयम्। चेतोमुखः ज्ञानस्वरूपमुखः। मुख इत्युपलक्षणम्। ज्ञानरूपसर्वावयव इत्यर्थः। एतदानन्दमयत्वचेतोमुखत्वरूपविशेषणद्वयं प्रागुक्तरूपद्वये नान्तःप्रज्ञमिति वक्ष्यमाणचतुर्थरूपे च ध्येयम्। प्राज्ञः प्रकर्षेण न ज्ञापयतीति प्राज्ञः। जीवस्वरूपकालाज्ञानातिरिक्तं बाह्यं स्वाप्नं वा किमपि न ज्ञापयतीति प्राज्ञनामक इत्यर्थः। प्रपूर्वान्नञुप-पदादन्तर्णीतण्यर्थादातश्चोपसर्ग इति कप्रत्ययः। आत्मनस्तृतीयः पादः तृतीयं रूपम्॥ ५॥

एवं रूपत्रयं निरूप्य चतुर्थपादं 'नान्तःप्रज्ञम्' इत्यादिना निरूपयिष्यन् वैश्वानरादिरूपाणामुक्तस्थानव्यापाराद्यर्थेषु श्लोकान् विवक्षुः मध्ये वक्ष्यमाणचतुर्थरूपेण सह चतुर्णां रूपाणां महिमानमाह- **एष इति**॥

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी।**
**एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्॥ ६॥**

एष उक्तवक्ष्यमाणचतूरूप आत्मा। एष इत्यस्याभ्यासस्तात्पर्यार्थः।

अन्तर्यामी अन्तर्नियन्ता । सर्वस्य योनिः कारणमित्यस्य विवरणम्- **प्रभवाप्ययौ हि भूतानामिति ।** हि यस्मात् प्रभवाप्ययौ, प्रभवाप्ययहेतुरत इत्यर्थः ॥ ६ ॥

उपनिषत् स्वयं प्रमाणत्वेऽपि दाढर्याय स्वोक्तार्थे ब्रह्मदृष्टान् मन्त्रानुदाहरति- **अत्रैते श्लोका भवन्तीति ॥**

**अत्रैते श्लोका भवन्ति -**

**बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।**
**घनःप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ ७ ॥**

संवादिन इति शेषः । वैश्वानरो बहिःप्रज्ञः तैजसोऽन्तःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्युक्तार्थे मन्त्रमाह - **बहिरिति ॥** विश्वो वैश्वानरः । पदानामर्थः पूर्ववद् ध्येयः । स्मृतः इति । मन्त्रद्रष्ट्रा ब्रह्मणा स्मृत इत्यर्थः ॥ ७ ॥

जागरितस्थनः स्वप्नस्थानः सुषुप्तस्थानः इत्युक्तार्थे मन्त्रमाह- **दक्षिणाक्षीति ।**

**दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।**
**आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ ८ ॥**

मुखे अग्रभागे । अन्तरित्यस्य विवरणम्- **मनसीति ॥** आकाशे च हृदि हृदयाकाशे, हृत्कर्णिकाऽग्रस्थाकाश इत्यर्थः ॥ ८ ॥

स्थूलभुगित्याद्युक्तार्थे मन्त्रमाह - **विश्वो हीति ॥**

**विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् ।**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ९ ॥**

निबोधतेति मन्त्रद्रष्ट्रा ब्रह्मणा स्वोपदेश्यान् प्रत्युच्यते । एवं विजानथेत्यपि ध्येयम् ॥ ९ ॥

उक्त एवार्थे मन्त्रान्तरं पठति- **स्थूलमिति ।**

**स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।**
**आनन्दं च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ॥ १० ॥**

स्थूलं भोग्यं वस्तु कर्तृ । विश्वं कर्म । एवमग्रेऽपि । नित्यतृप्तस्य स्थूलादिना तृप्तिः क्रीडारूपा ध्येया । आनन्दमानन्दः लिङ्गव्यत्ययात् । विजानथ विजानीथ । विकरणव्यत्ययात् ॥ १० ॥

विश्वादिरूपत्रयस्वरूपं तत्स्थानेषु तद्भोज्यस्वरूपं जानतः फलमाह- **त्रिष्विति ॥**

**त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।**
**वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ११ ॥**

त्रिषु धामसु अक्षिमनोहृदयाकाशरूपेषु यद्भोज्यं स्थूलादि, यश्च भोक्ता विश्वादित्रिरूपात्मा, एतदुभयं भोक्तृभोज्यलक्षणमुभयं यस्तु योऽधिकारी वेद जानाति स ज्ञानी विषयान् भुञ्जानः अनुभवन्नपि तत्कृतलेपं न प्राप्नोति । तत्कृतोच्चत्वादिविकारं न प्राप्नोतीत्यर्थः ॥ ११ ॥

एष योनिस्सर्वस्येत्युक्तार्थे मन्त्रमाह– **प्रभव इति ॥**

**प्रभवस्सर्वभावानां सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ १२ ॥**

प्रभवत्युत्पद्यतेऽनेनेति प्रभवः । सर्वभावानामशेषवस्तूनां यथायोगम् उत्पत्तिहेतुश्चतूरूप आत्मेति योज्यम् । इति सतां विनिश्चय इत्युक्त्याऽसतामन्यथा निश्चय इति लभ्यते । तदग्रे विवरिष्यते । सर्वप्रभवत्वं व्यनक्ति- **सर्वं जनयति प्राण इति ।** सर्वस्य प्रणेतृत्वहेतुना प्राणनामा । सर्वं जनयतीत्युक्त्या न परिणामित्वादिरूपं सर्वप्रभवत्वमित्युक्तं भवति । पुरुषः

पूर्णषड्गुणत्वादिना पुरुषनामा प्रागुक्तचतुरूपात्मा हरिः चेतोंऽशून् ज्ञानाख्यरश्मियुक्तान्, जीवानिति यावत्, पृथग् देवदानवमानवादिभेदेन जनयतीत्यर्थः ॥ १२ ॥

सतामिति विनिश्चय इत्यत्रासतां वैपरीत्येन निश्चय इत्यर्थात् प्राप्तम् । तदुभयं व्यनक्ति- **विभूतिमित्यादिना ।**

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ १३ ॥**

सृष्टिचिन्तकाः सृष्टिविषयविचारवन्तोऽन्ये ब्रह्मपरिणामवादिनोऽसन्तः प्रसवं सृष्टिं विभूतिं जीवजडात्मना विविधतया भवनं ब्रह्मणो मन्यन्ते । सृष्टिचिन्तका इत्यनेन यथावद् ब्रह्मस्वरूपानभिज्ञा इति सूचितम् । अन्यैर्ब्रह्मविवर्तः प्रपञ्च इति वादिभिः सृष्टिर्विकल्पिता विविधतया कल्पिता । कथम् ? **स्वप्नमायासरूपेति** । स्वाप्नपदार्थः सुप्तात्मविवर्तो यथा तत्सरूपा ब्रह्मविवर्तरूपा । मायासरूपा, मायापदेन मायाविनिर्मित गन्धर्वनगरादिग्रहः । तत्सरूपा मिथ्याभूतेत्येवं विकल्पितेत्यर्थः ॥ १३ ॥

परिणामविवर्तयोरभावे कथं हरेः सृष्टिरित्यतः सतां निश्चयप्रकारमाह- **इच्छेति ॥**

**इच्छामात्रं प्रभोस्सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ १४ ॥**

केवलमिच्छा इच्छामात्रम् । अनायासेनाविलम्बेनाविकारित्वेन च प्रभोः पूर्णशक्तेः सृष्टिः प्रभुकर्तृका विश्वविषयिणी सृष्टिरिति सृष्टिविषये विनिश्चिता विनिश्चयवन्तो ब्रह्मादयः सन्त इत्यर्थः । कर्तरि क्तः । प्रकर्षेण भवति शश्वदेकप्रकारेण वर्तत इति, प्रभवति समर्थो वर्तत इति, प्रकर्षेण भवत्यनुभवति अखिलमिति, प्रभुपदस्य व्युत्पत्तित्रयेण निर्विकारत्व

पूर्णशक्तित्वसर्वज्ञत्वरूपार्थत्रयपरत्वात् प्रभुपदेनैव परिणामवादस्य विवर्तवादस्य मायासरूपत्ववादस्य च निरासो ध्येयः।

सत्यसृष्टावशक्तस्यैव मायिकसर्जनात्, सर्वज्ञसृष्टस्य च स्वाप्नार्थसरूपत्वायोगादिति। पुनर्मतान्तराण्याह - **कालादिति**॥ कालचिन्तकाः कालमेव परं मन्वानाः भूतानां प्रसूतिमुत्पत्तिं कालात् मन्यन्ते। उपलक्षणमेतत्। विरिञ्चिचिन्तकाः विरिञ्चात्, रुद्रचिन्तकाः रुद्रात् प्रसूतिं मन्यन्त इत्येवं मतान्तराण्यप्यत्र ध्येयानि। तेषां निरासः प्रभुपदेनैव ज्ञेयः। हरेरेकस्यैव पूर्णशक्त्यादिमत्त्वेनान्येषां तदभावादिति। अत एवेच्छामात्रमित्यर्धस्य मध्ये निवेशः॥ १४॥

तर्हि पूर्णस्य सृष्टिः किमर्थेत्यतो लोकानुग्रहार्थं स्वभाव इति वक्तुं मतान्तराण्याह- **भोगार्थमिति**॥

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।**
**देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहेति॥ १९॥**

॥ **प्रथमः खण्डः** ॥

हरेरतृप्तस्यैव भोगार्थं सृष्टिरित्यन्ये मन्यन्ते। अपरे तु महाराजस्य कन्दुकादाविव क्रीडार्थं विश्वसृष्टिरिति मन्यन्त इत्यर्थः। स्वमतमाह श्रुतिः। **देवस्येति**। देवस्यायं सृष्ट्यादिविषय एष इच्छा, इच्छापूर्वको व्यापार इति यावत्, इषु इच्छायां घञ्। स्वभाव एव न प्रयोजनाय, कुतः? आप्तकामस्य पूर्णकामस्य हरेः का स्पृहा? प्रयोजनाशा का? न काऽपीत्यर्थः। इतिशब्दो रूपत्रयनिरूपणसमाप्तौ॥ १९॥

॥ **इति प्रथमः खण्डः** ॥

चतुर्थपादमात्मन आह- **नान्तःप्रज्ञमिति**॥

**नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञमदृष्ट-मव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः ॥ १ ॥**

अन्तः प्रज्ञापयतीत्यन्तःप्रज्ञः स्वाप्नार्थप्रदर्शकः, स नेत्यर्थः। न बहिः-प्रज्ञः जाग्रदर्थप्रदर्शको न भवति। **नोभयतःप्रज्ञम्**। बाह्यं शब्दादिकं जानन् स्वाप्नार्थांश्च यदा पश्यति साऽपि काचिद्दशा उभयत इत्यनेन गृह्यते। उभयतः बाह्याभ्यन्तररूपार्थान् प्रज्ञापयतीत्युभयतःप्रज्ञः स नेति नोभयतःप्रज्ञम्। नप्रज्ञानघनम्, प्राग्वद्विपरीतसमासः घनप्रज्ञानमिति। घनमज्ञानावृतं सुप्तजीवस्वरूपं तदज्ञानं वा न प्रज्ञापयति प्राज्ञवदिति नघनप्रज्ञानम्। नघनप्रज्ञानमेव नप्रज्ञानघनम्। नप्रज्ञं, प्रकर्षेण ज्ञापयति मानसवासनामयं ध्येयं वस्त्विति प्रज्ञं, तन्नेति नप्रज्ञम्। विश्वतैजसप्राज्ञाख्यरूपत्रयव्यापारान्, बाह्याभ्यन्तरपदार्थस्वरूपज्ञापन-सुप्तस्वरूपज्ञापनरूपान् किञ्चिद्बाह्यकिञ्चित् स्वप्नोभयज्ञापनरूपव्यापारं, समाधिस्थस्य निरन्तरज्ञानसन्तत्युत्पादनरूपव्यापारं चाकुर्वदित्यर्थः। नोभयतःप्रज्ञं नप्रज्ञमित्यत्र किंरूपकर्तृकं व्यापारद्वयमस्य नेत्युच्यत इति विचारणीयम्। तर्हि किं निर्व्यापारमेव चतुर्थं रूपम्? नेत्याह- **नाप्रज्ञ-मिति** ॥ अप्रज्ञापकं नेति नाप्रज्ञं, प्रज्ञापकमेव। मुक्तानां स्वस्वयोग्य-सर्वज्ञानप्रदानरूपव्यापारकर्तेत्यर्थः। अदृष्टं, विश्वादिरूपत्रयं बाह्याभ्यन्तर-पदार्थज्ञापनतद्व्यवहाररूपकार्यलिङ्गेनानुमेयं, न तथा चतुर्थं रूपं दृष्ट-मित्यदृष्टमिति वा, अमुक्तदृष्ट्यगोचरत्वाद्वा अदृष्टमित्यर्थः। अव्यवहार्य-मग्राह्यमिति। मुक्तिं विना तद्रूपविषयकग्रहणव्यवहारयोरभावादव्यवहार्य-मग्राह्यमित्युच्यते। अलक्षणं लक्षणमनुमापकं, जाग्रदादिप्रवृत्तिरूपानुमापक-राहित्यादलक्षणम्। अत एवाचिन्त्यम्। अचिन्त्यशक्तित्वादेवाव्यपदेश्यं व्यपदेष्टुमशक्यम्। ऐकात्म्यप्रत्ययसारम्, एकः प्रधानः। आत्मा पूर्णः।

एकश्चासावात्मा च (पूर्णश्च) एकात्मा । एकात्मैवैकात्म्यं, स्वार्थे ष्यञ्प्रत्ययः । प्रत्ययो ज्ञानरूपः । सार आनन्दरूप इत्यैकात्म्यप्रत्ययसारम् । प्रपञ्चोपशमम्, पचि विस्तारे, प्रपञ्चो विस्तृतः, व्याप्त इति यावत् । उपशमः उपशब्दोऽत्रोत्कृष्टवाची । शमः सुखम् । उत्कृष्टानन्दरूपम् । प्रपञ्चश्चासावुपशमश्च प्रपञ्चोपशमः तम् । सारमित्युक्त्या प्रतीतजीवसाम्यनिरासायोपशममित्युक्तिः । यद्वा, देहसम्बन्धाद्यनिष्टप्रपञ्चमुपशमयति निवर्तयतीति प्रपञ्चोपशममिति । निर्दुःखसुखरूपत्वाच्छिवम् । अद्वैतं, द्वीति भावप्रधानं, द्वित्वेन वस्तुतत्वापेक्षयाऽन्यात्मकत्वादिरूपद्वितीयेन प्रकारेणेतम्, इण् गतौ, ज्ञातं वस्तु द्वीतम् । द्वीतस्येदं द्वैतम् मिथ्याज्ञानम् । न विद्यते द्वैतं मिथ्याज्ञानं यस्मात् तदद्वैतम् । अहंममतादिमिथ्याध्यवसायनिवर्तकम् । एतादृशमात्मनः चतुर्थपादं मन्यन्ते ब्रह्मादय इत्यर्थः । एतस्य स्थानं तु 'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः' इति भाष्यदिशा ध्येयम् । सोऽयमात्मा चतुष्पादिति प्रतिज्ञातं विश्वतैजसप्राज्ञतुरीयाख्यरूपचतुष्टयं सपरिकरं निरूप्य रूपत्रयविषये मन्त्रानुदाहृत्य चतुर्थविषये मन्त्रानुदाहरिष्यन्निदानीं चतूरूप आत्माऽवश्यं ज्ञातव्य इति वदन्नुपसंहरति-**स आत्मेति** ॥ य इति शेषः । स चतूरूपो य आत्मा स विज्ञेयः विविधतया विशेषेण मुमुक्षुभिर्ज्ञेय इति । १ ॥

चतुर्थरूपस्योक्तं माहात्म्यं संवादयितुमाह - **अत्रैत इति** ॥

**अत्रैते श्लोका भवन्ति ।**
**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।**
**अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ २ ॥**

तुरीयस्योक्तार्थ एते वक्ष्यमाणा ब्रह्मदृष्टाः श्लोकाः संवादिनो

भवन्तीत्यर्थः । प्रपञ्चोपशममित्यादिनोक्ते सर्वानिष्टनिवर्तकत्वादिरूपेऽर्थे श्लोकमाह - **निवृत्तेरिति** ॥ सर्वदुःखानां निवृत्तेः कारणमिति शेषः । ईशानः ईशान् मुक्ताननति प्रेरयतीतीशानः । प्रभुः स्वामी । अव्ययः शश्वदेकप्रकारः । अद्वैतः मिथ्याज्ञाननिवर्तकः । सर्वभावानां सर्वजीवानाम् । विष्णोः भवन्ति जायन्त इति वा । 'भुक् शुद्धिचिन्तयोः' - इति कविकल्पद्रुमोक्त्या चिन्तार्थस्य वा भवतेर्णप्रत्यये भाव इति सिद्ध्या भावाश्चेतना इति लाभात्, तेषां जीवानां देवः प्राप्यः । गत्यर्थाद्दीव्यतेः कर्मणि घञ्प्रत्ययः । तुर्यस्तुरीयश्चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति चतुश्शब्दस्याऽऽद्याक्षरलोपे यत्प्रत्यये तुर्य इति सिद्धेः । विभुः समर्थः। स्मृतः, मन्त्रद्रष्ट्रा ब्रह्मणेति योज्यम् ॥ २ ॥

'नान्तःप्रज्ञं न बहिःप्रज्ञम्' इति यत्तुरीयस्य विश्वादिरूपत्रयवैधर्म्यमुक्तं तत्र मन्त्रमाह- **कार्येति** ॥

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥ ३ ॥**

अज्ञानकार्यभूतोऽहंममतादिभ्रमः । तद्रूपजाग्रद्बद्धः, तत्कारणाविद्याबद्धः, जीवनिष्ठतादृशभ्रमरूपजाग्रत्कारणबन्धस्वामी विश्व इत्यर्थः । तैजसस्तु अविद्याकार्यभूतोक्तरूपस्वाप्नपदार्थभ्रमेण तत्कारणाज्ञानेन च बद्धः, जीवनिष्ठतादृशबन्धस्वामीत्यर्थः । प्राज्ञस्तु तत्कारणाज्ञानरूपसुप्तिबद्धः सुप्तिबन्धस्वामी । तथा च सूत्रम्- 'तदधीनत्वादर्थवत्' (ब्र.सू.१-४-३) इति । तुर्ये चतुर्थे रूपे द्वौ कार्यकारणबन्धनियमनव्यापारौ वा कारणमात्रबन्धनियमनव्यापारौ वा द्वावपि न सिद्ध्यतः न स्त इत्यर्थः ॥३॥

नप्रज्ञानघनं नाप्रज्ञमित्युक्तप्राज्ञवैधर्म्ये मन्त्रमाह-**नाऽऽत्मानमिति** ॥

**नाऽऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥ ४ ॥**

आत्मानं प्राज्ञः स्वस्वरूपं न संवेत्ति न संवेदयेत् । न परान् न सत्यं नापि चानृतं संवेदयेदित्यन्वयः । जीवस्वरूपसुखकालाज्ञानानि विनाऽन्यत् किमपि न संवेदयेदित्यर्थः । तुरीयस्तु सर्वदृक् , सर्वं दर्शयतीति सर्वदृक्, मुक्तौ तत्तद्योग्यं सर्वं प्रदर्शयतीत्यर्थः । यद्वा, सर्वं पश्यतीत्येव सर्वदृक् । सर्वप्रदर्शक इति वक्तव्येऽप्येवमुक्तिः स्वातन्त्र्याभिप्रायेण ॥ ४ ॥

शिवमद्वैतमिति तुरीयस्य यन्मिथ्याज्ञाननिवर्तकत्वमुक्तं तत् प्राज्ञस्यापि सममिति वदन्स्ततस्तुरीयस्य वैलक्षण्यान्तरमाह - **द्वैतस्येति ॥**

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ ५ ॥**

द्वैतस्य देहगेहादौ स्वातन्त्र्यस्याग्रहणं ग्रहणाहेतुत्वं, देहादौ स्वातन्त्र्यभ्रमाजनकत्वं प्राज्ञतुर्ययोस्तुल्यं समम् ! **बीजेति** । देहगेहादौ स्वातन्त्र्यबुद्धिबीजभूता मूलाविद्या बीजनिद्रा । तया युतः तद्युक्तत्वप्रदः प्राज्ञः । सा च बीजनिद्राऽपीत्यर्थः ॥ ५ ॥

प्रकारान्तरेण विश्वादेः साधर्म्यवैधर्म्ये आह - **स्वप्ननिद्रेति ॥**

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।**
**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ ६ ॥**

उपलक्षणम् । जाग्रत्स्वप्नभ्रमाभ्यां तद्धेतुनिद्राशब्दिताऽविद्यया च युतौ बद्धौ तदुभयबन्धनियामकावाद्यौ विश्वतैजसौ । प्राज्ञस्तु अस्वप्ननिद्रया द्विविधभ्रमविनाकृतकेवलाविद्यया युक्तस्तन्मात्रबन्धस्वामीत्यर्थः ।

निश्चिताः सम्यक्निश्चयवन्तः । न निद्रां निद्राकृतबन्धस्वामित्वम् । स्वप्नं द्विविधभ्रमहेतुत्वं नैव तुर्ये रूपे पश्यन्ति जानन्तीत्यर्थः ॥ ६ ॥

एवंविधतुरीयरूपस्य दर्शनप्राप्ती कदा भवेतामित्यत आह- **अन्यथेति** ॥

**अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ७ ॥**

अन्यथा गृह्णतः देहगेहादौ भगवदधीने स्वाधीनतां जानतः स्वप्नो भवति । स्वप्नपदेन मिथ्याज्ञानरूपभ्रमपरम्परागृहः । तत्त्वं भगवतः स्वातन्त्र्यादिरूपं तत्त्वमजानतो निद्रा मूलाविद्याबन्धो भवति । तयोर्निद्राभ्रमयोर्विपर्यास आवर्तने क्षीणे सति तुरीयं पदं चतुर्थरूपमश्नुते । साक्षात्कारद्वारा प्राप्नोतीत्यर्थः ॥ ७ ॥

निद्राभ्रमयोरावर्तनक्षयः केन स्यात् ? यस्य क्षयेण भगवदपरोक्षधीरित्यतो भगवत्प्रसादेनैवेत्याह- **अनादीति** ॥

**अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥ ८ ॥**

मायाशब्देन भगवदिच्छा तदधीनाऽविद्या च गृह्यते । अनादीति तन्त्रम् । अनादेर्विष्णोः अनादिमायया सुप्तः स्वापितः संसारे निवेशितो जीवो यदाऽनादिमायया भगवदिच्छया भगवत्प्रसादेन प्रबुद्ध्यते, भगवानेव स्वतन्त्रोऽन्यत्सर्वं तदधीनमित्यादितत्त्वज्ञानवान् भवति तदा अजं जननादिदोषरहितमनिद्रमस्वप्नं विश्वादिरूपत्रयव्यापाराप्रवर्तकम्, अद्वैतं मिथ्याज्ञाननिर्वतकम्, उपलक्षणं, सर्वानिष्टनिवर्तकं भगवन्तं बुद्ध्यते साक्षत्करोतीत्यर्थः ॥ ८ ॥

ननु देहगेहादौ स्वस्वामिभावसम्बन्धादिरूपबन्धस्य जीवस्वरूपस्येव स्वाभाविकत्वेन निवृत्त्ययोगात् 'विपर्यासे तयोः क्षीणे' इत्युक्तिः कथमित्यतो नायं स्वाभाविक इत्याह - **प्रपञ्च इति ॥**

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ९ ॥**

देहगेहादौ स्वस्वामिसबन्धादिरूपो बन्धः प्रपञ्चः स्वातन्त्र्येण नास्त्येव। यदि पराधीनोऽपि विद्येत विद्यत इत्यङ्गीक्रियेत तर्ह्यपि परमार्थतः परमश्चासावर्थश्च परमार्थः, उत्तमोऽर्थो भगवान्, तस्मात्, परमार्थतः परमेश्वरप्रसादादिति यावत्, निवर्तेत निवर्तत एव न संशयः। अनादितोऽनुवृत्तस्य देहादौ स्वीयत्वज्ञानरूपभ्रमस्य कथं निवृत्तिरित्यत आह- **मायेत्यादिना ॥** अद्वैतं, महद्भिर्यथावत्तया ज्ञातं ब्रह्मादि वस्तुजातमद्वैतम् । अज्ञैर्द्वैतं द्वितीयेन प्रकारेण ज्ञातं तद्वैपरीत्येन ज्ञातम् । तच्च मिथ्याज्ञानं, तेषां मायामात्रं मायया भगवदिच्छया मात्रं निर्मितं जातमित्यर्थः। तथा च तादृशमिथ्याज्ञानस्यानादितोऽनुवृत्तस्यापीश्वरेच्छया जातत्वेनास्वाभाविकत्वात् तत्प्रसादेन तन्निवृत्तिर्युक्तेति भावः ॥ ९ ॥

उक्तमेव पूर्ववाक्यार्थं विशदयन्नुपसंहरति - **विकल्प इति ॥**

**विकल्पो विनिवर्तेति कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ॥ १० ॥**

**॥ द्वितीयः खण्डः ॥**

देहगेहादौ स्वीयताभिमानादिनानात्मकबन्धरूपो विकल्पः उक्तरीत्या स्वाभाविको यदि केनचिदज्ञानादिना कारणेन स्वाभाविकत्वेन कल्पितः, तर्ह्यपि उपदेशात् महतामुपदेशबलान्निवर्तेत निवर्तत एव। कः सतां वादः?

यदुपदेशान्नानाविधस्वातन्त्र्यादिभ्रमनिवृत्तिरित्यत आह- **ज्ञात इति** ॥ ब्रह्मणि यथावत्तया ज्ञाते सति द्वैतं, शिवमद्वैतमित्यत्रोक्तव्युत्पत्त्या मिथ्याज्ञानं न विद्यते, निवर्तत इत्ययं सतां वाद इत्यर्थः । इतिशब्दस्य इत्येते श्लोका भवन्तीति पूर्वेणान्वयः । **तत्त्वनिर्णयतट्टीकयोरनुव्याख्यान-सुधयोश्चैतत् श्लोकद्वयं भेदपञ्चकस्य सत्यत्वानादित्वयोरुपपादनपरतया व्याख्यातम्** ॥ १० ॥

॥ **इति द्वितीयः खण्डः** ॥

एवं समग्रोङ्कारप्रतिपाद्यस्याऽऽत्मनो विश्वादिरूपचतुष्टयं निरूप्य तेषां रूपाणामकारादिप्रणवांशप्रतिपाद्यत्वादिमाहात्म्यं वक्तुम् उक्तमनुवदति- **सोऽयमात्माऽध्याक्षरमोंकार इति** ।

**सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति । जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्त्वाद् वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद** ॥ १ ॥

ओमित्याक्रियमाणतयोंकारशब्दितः सोऽयं चतुरात्मकत्वेनोक्त आत्माध्यक्षरम् । अधि सर्वतोऽधिकं च तदक्षरमविनाशि चेत्यध्यक्षरम् । शब्दस्वाभाव्यान्नपुंसकता । कीदृशमक्षरमित्यत आह-**अधिमात्रमिति** ॥ अधिका मात्रा अंशा यस्य तदक्षरमधिमात्रम् । मात्राः का इत्यत आह- **पादा मात्रा इति** ॥ पद्यन्त इति पादाः विश्वादिरूपाणि । पादाः क इत्यत अकारादिप्रतिपाद्या विश्वादय इत्याह- **अकार इति** ॥ अ इत्याक्रियते आहूयते प्रतिपाद्यत इत्यकारो विश्वः । एवमुक्तदिशा उकारस्तैजसः । मकारः प्राज्ञः । उपलक्षणमिदम् । नादबोध्यस्तुरीयोऽपि नाद इति शेषोक्त्या ग्राह्यः । अवर्णप्रतिपाद्यं रूपं स्थानोक्त्या निर्दिशति- **जागरितेति** ॥ अकारः अ इत्याक्रियमाणः प्रथमा मात्रा समग्रप्रणव-

प्रतिपाद्यस्याक्षरनाम्नः आत्मनः प्रथमोंऽश इत्यर्थः । अत्र जागरितस्थानः प्रथमा मात्रा वैश्वानर इत्यनूद्य अकार इत्यवर्णप्रतिपाद्यत्वं विधीयत इति न पौनरुक्त्यमिति बोध्यम् । एवमग्रेऽपि । वैश्वानरस्यावर्णवाच्यत्वे निमित्तद्वयमाह- **आप्तेरादिमत्त्वाद्वेति** ॥ तत्तज्जीवयोग्यभोग्यविषयान् भोगान् आपयति प्रापयति विश्व इति 'अ' इत्युच्यते विश्व इत्यर्थः । 'आप्लृ व्याप्तौ' अन्तर्णीतण्यर्थाड्डप्रत्यये अ इति रूपमिति भावः । प्राज्ञस्तैजसश्चाऽदी अस्येति आदिमान्, तस्माद्वा अ इत्युच्यत इत्यर्थः। सुषुप्तौ स्वप्ने च प्राज्ञतैजसाभ्यामेकीभूतो विश्वः सुप्तेरुत्थाने प्राज्ञात्, स्वपनादुत्थाने तैजसाद्विविक्तस्सन् दक्षिणाक्षिस्थानमायातीति तयोरादितया विश्वस्य तदादित्त्वमिति भावः । एतन्निमित्तद्वययुक्तत्वेनावर्णवाच्यत्वं विश्वस्य जानतः फलमाह- **आप्नोति ह वा इति** ॥ योऽधिकारी एवमकारवाच्यत्वं विश्वस्य वेद, अस्येति शेषः, अस्य वेदितुः स विश्वः सर्वान् स्वयोग्यान् सर्वान् कामान् काम्यमानानाप्नोति प्रापयति, अन्तर्णीतणिच् । 'आदिश्च' विश्व एवं वेदितुरादिश्च भवति, आविर्भूतस्वरूपतया मुक्तरूपेण तत उत्पद्यते तज्ज्ञानीति तस्यायमादिः कारणं भवतीत्यर्थः । यद्वाऽऽदिश्चेत्यत्रैवास्येति शेषः । आप्नोतीत्यत्र तु स ज्ञानीति शेषो ध्येयः ॥ १ ॥

को द्वितीयः पादः ? य उकार इत्युक्त इत्यत आह- **स्वप्नस्थान इति** ॥

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद् वा । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति । नास्याब्रह्मवित् कुले भवति । य एवं वेद ॥ २ ॥**

स्वप्नस्थानो द्वितीया मात्रा आत्मनो द्वितीयोंऽशः । तैजस उकारः उ इत्याक्रियमाणत्वादुकार इत्युक्तः । उवर्णवाच्यत्वे निमित्तद्वयमाह-

**उत्कर्षादुभयत्वाद्वेति** ।। जाग्रद्दशायां विद्यमानदेहाभिमानादुत्थाप्य देहाभिमानं त्याजयित्वा स्वप्नमण्डले जीवं कर्षतीत्युत्कर्षणाद्धेतोर्वा, बाह्याज्ञप्तिरूपनिद्रां वासनामयविषयानुभवं च प्रयच्छतीत्युभयत्वाद्, उभयहेतुत्वाद्वा निमित्ताद् उ इत्युच्यते तैजस इत्यर्थः । तथा वेदितुः फलमाह- **उत्कर्षति ह वा इति** ।। योऽधिकारी एवं निमित्तद्वय-युक्ततयोकारवाच्यतैजसं वेद स ज्ञानी ज्ञानसन्ततिं ज्ञानधारां, ज्ञाननित्यत्वमिति यावत्, आप्नोतीत्यनुषङ्गः । उत्कर्षति देहबन्धादात्मानम् उत्कर्षति उद्धरति । उत्कृष्य च, समानश्च 'मानमन्तर्गतिस्स्मृता' इत्युक्तेः मानसहितः समानः सर्वमोक्षिणाम् अन्तर्गतस्तन्मध्यस्थो भवतीत्यर्थः । दोषाभावात् स्नेहाच्चेति भावः । अस्य ज्ञानिनः कुले अब्रह्मविन्न भवति, ब्रह्मज्ञानिसन्ततिरेव भवतीत्यर्थः ।। २ ।।

कस्तृतीयः पादः ? कथमस्य मकारत्वम् ? किञ्च तज्ज्ञानिनः फलम्? इत्यतस्तत्सर्वं क्रमादाह- **सुषुप्तस्थान इति** ।।

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा ।**
**मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ।। ३ ।।**

सुषुप्तस्थानस्तृतीया मात्रा आत्मनस्तृतीयोंऽशः प्राज्ञः मकारो 'म' इत्याक्रियमाणः । कुतः? **मितेरपीतेर्वा** । स्वात्मनि जीवमन्तर्गमयतीति स्वान्तर्गमनहेतोर्वा, वृत्तिज्ञानस्यापीतेरप्ययशब्दितलयकरणाद्वा 'म' इत्याक्रियत इत्यर्थः । योऽधिकारी एवं निमित्तद्वययुक्तत्वेन मकारवाच्यं प्राज्ञं वेद, स ज्ञानी इदं सर्वं यथायोग्यं जगन्मिनोति स्वान्तर्गमयति । जीवानामणुत्वेऽप्यधिकारिणः सूर्यादेरिव प्रकाशतो व्याप्तिरस्तीति तन्मध्येऽन्तर्गमयति मुक्तः सन्निति भावः । अपीतिश्च भवति अप्ययकृच्च भवति, दुःखाद्यनिष्टस्येत्यर्थः ।। ३ ।।

